स्त्रीपुंसयोस्तु संयोगे यद्यादौ विसृजेत् पुमान् ।
शुक्रं ततः पुमान् वीरो जायते बलवान् दृढः ॥

अथ चेद् वनिता पूर्वं विसृजेद् रक्तसंयुतम् ।
ततो रूपान्विता कन्या जायते दृढसंहता ॥

इति । तत एव च पुंगर्भाः केचिन्मातृसदृशा दृश्यन्ते, स्त्रीगर्भाश्च केचित् पितृसदृशा दृश्यन्त इति केचित् । ननु—

रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ।
अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते ॥

इत्यविशिष्य निर्दिष्टं न तु पुंशुक्राद्गर्भः प्रजायत इत्येवं निर्दिष्टम् । उभयोरपि स्त्रीपुंसयोरवश्यं सप्तधातुकत्वमभ्युपगन्तव्यं न पुंस एव । तदेवं तरुणीनां कुसुमशरशराक्रान्तमानसानां तथाविधेन पुरुषसंयोगेन विना केवलात् स्मृतिदर्शनाच्चलितस्रुतरेतसां किमिति गर्भो न जायते । शुक्रार्तवं हि गर्भकारणम् । तच्च सन्निहितमेवेति केचित् । तान् ब्रूमहे । पुंशुक्राभावात् । पुंशुक्रं हि स्त्रीरेतोरक्तसंयुक्तं न च तत्रास्ति । तदभावाद् गर्भस्यानुत्पत्तिः । तथा च संग्रहेऽध्यगीष्ट—

योषितोऽपि स्रवत्येव शुक्रं पुंसः समागमे ।
गर्भस्य तु न तत् किञ्चित्करोतीति न चिन्त्यते ॥ इति ॥

शुक्रार्तवे पुनः ॥ ५ ॥

**वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता ।**

शुक्रार्तव इत्यादिना यथानेकगर्भत्वं तुल्यकालं स्यात्तथा प्रतिपादयितुमाह—यथास्वमिति । यदा शुक्रमाधिक्येन वर्तमानं पातेन बहुधा भिद्यते

१. अत एव पुमान् मातृसदृशो दृश्यते स्त्री च पितृसदृशा । स्त्रीणां तु शुक्रसद्भावेऽपि गर्भस्य तु न तत् किञ्चित्करोति । उक्तवांश्च—योषितोऽपि..., २. स्यात्तथाह । शुक्रार्तवे मिश्रीभूते वायुना बहुशो भिन्ने बहुधा कृते सति यथास्वं बह्वपत्यता भवति । यथास्वमिति शुक्राधिक्ये संसर्गे पुंगर्भानेकत्वम् आर्तवाधिके स्त्रीगर्भानेकत्वम् । उक्तं च–शुक्रशोणित...। ख॰

तदा पुंगर्भानेकत्वम् । यदा तु स्त्रीरज आधिक्येन वर्तमानं वायुना बहुधा भिद्यते तदा स्त्रीगर्भानेकत्वमिति । सौश्रुते चोक्तम्—

बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ ।
यमावित्यभिधीयेते धर्मेतरपुरस्कृतौ ॥

इति । उक्तं च हिरण्याक्षीये—

शुक्रशोणितसंघाते पवनेन द्विधाकृते ।
यमौ स्यातां त्रिधा वापि चतुर्धा बहुधापि वा ॥

इति । मिथुनोत्पत्तिश्च दृश्यते तत्कथमिति चेत्—यदा खल्वेकेन शुक्रांशेनार्तवांश एकोऽभिभूयेत तदा मिथुनयमौ भवतः । उक्तं च—

मिश्रीभावे विसृष्टस्य रेतसश्चार्तवस्य च ।
आर्तवांशोऽभिभवति शुक्रांशं योनिमाश्रितम् ॥

शुक्रांशेनार्तवांशश्च समं यद्यभिभूयते ।
मिथुनं सूयते नारी तदा गर्भसमन्विता ॥

इति । यथास्वं जात्यनुसारेण बह्वपत्यतेति केचित् । तदनुपपन्नम् । बह्वपत्यताया नियतत्वात्सूकरसारमेयादीनाम् । तत्रान्यदेव कारणान्तरम् ॥

**वियोनिविकृताकारा जायन्ते विकृतैर्मलैः ॥ ६ ॥**

वियोनयः सर्पादयः विकृताकाराः शिरोहीनादयः ॥

एवं गर्भसम्भवमभिधाय गर्भकारणस्य रजसः प्रवृत्तिप्रकारमाह—

**मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ।**
**वत्सराद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ७ ॥**

---

१. इति । सूकरसारमेयादिजातिष्वनेनैव हेतुना सदानेकापत्यता । प्रायशः यथास्वं जात्यनुसारेण बह्वपत्यतेति केचित् । वियोनयः सर्पादयः विकृताकाराः शिरोहीनादयः । ते तथाविधा गर्भा जायन्ते । कथम् । विकृतैर्मलैर्वातादिभिः । आर्तवोत्पत्तिविनाशकालमाह—मासि...। ख.

ननु शुद्ध इत्यादिना पूर्वं शुक्रमेवोद्दिष्टं ततस्तस्यैव निर्देशो न्याय्य इति । उच्यते । बहुवक्तव्यत्वात् । रसजमिति कथमुक्तमिति चेत्—परमतनिरासार्थम् । ............तदुत्पत्तिरिति केचित् । जीवरक्तं रज इति केचिदाहुः । शोणितं च पक्वं चैवमापद्यते रक्तधातू रजश्चेति । तस्माद्रक्तमिति केचित् । रसादाहाररसात् परिणमतो जातं रसजमित्यत्र निर्दिष्टं न तु रसधातोरिति द्योतनाय । अजस्रमिति केषांचित् पाठः । तदयुक्तम् । त्र्यहमित्यनेनैवात्यन्तसंयोगे द्वितीयाप्रयोगेण सिद्धत्वात् सन्ततप्रवृत्तेः पुनरुक्तिर्भवेति ॥

तदेवं रजःप्रवृत्तिक्षयकालमादिश्य गर्भोत्पत्तियोग्यं वयो दर्शयति पूर्णेत्यादिना—

**पूर्णषोडशवर्षा स्त्री पूर्णविंशेन संगता ।**
**शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥ ८ ॥**

**वीर्यवन्तं सुतं सूते, ततो न्यूनाब्दयोः पुनः ।**
**रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥ ९ ॥**

वयोनिमित्तां गर्भानुत्पत्तिमभिधाय वातादीत्यादिना बीजनिमित्तानुत्पत्तिं ब्रूते—

**वातादिकुणपग्रन्थिपूयक्षीणमलाह्वयम् ।**
**बीजासमर्थं रेतोस्रं**

---

१. वतीति । द्वादशाद्वत्सरादूर्ध्वं स्रवति । पञ्चाशतो वत्सरादूर्ध्वं क्षयं याति । गर्भोत्पत्तियोग्यं वयो दर्शयति—पूर्णानि षोडशवर्षाणि यस्याः सा स्त्री पूर्णविंशेन संगता मिथुनीभूता गर्भाशयादौ शुद्धे वातादिभिरदूषिते । मार्गः प्रकृतत्वाद्गर्भस्य । वातस्य शुद्ध(त्वं) पित्तादिभिरनावृतत्वम् । वीर्यवन्तं बलारोग्यादियुक्तं सुतं सूते जनयति । प्रायिकं चैतत् । अर्वागपि साधुगर्भदर्शनात् । ततः पूर्वोक्ताद् वयःपरिमाणान्न्यूनाब्दयोः स्त्रीपुरुषयोर्गर्भो रोगी भवति । अतिशायने मत्वर्थीयः । अधन्योऽशस्तः । न भवत्येव वा । वयोनिमित्तां, २. त्तिमुक्त्वा वाता..., ३. त्पत्तिमाह । ख॰

वातादिसंज्ञं[1] रेतोस्रं[2] वातशुक्रं वातरजः पित्तशुक्रं पित्तरजः कुणपशुक्रं कुणपरजः इत्यादि । मलाह्वयं तु द्विविधं मूत्रपुरीषभेदात् । मूत्रशुक्रं मूत्रार्तवमिति । तद्वत् पुरीषशुक्रं पुरीषार्तवमिति[3] ।

स्वलिङ्गैर्दोषजं वदेत् ॥ १० ॥

रक्तेन कुणपं श्लेष्मवाताभ्यां ग्रन्थिसन्निभम् ।
पूयाभं रक्तपित्ताभ्यां क्षीणं मारुतपित्ततः ॥ ११ ॥
कृच्छ्राण्येतान्यसाध्यं तु त्रिदोषं मूत्रविट्प्रभम् ।

कुर्यादित्यादिना शुक्रार्तवदोषेषु चिकित्सां ब्रूते—

कुर्याद् वातादिभिर्दुष्टे स्वौषधं कुणपे पुनः ॥ १२ ॥
धातकीपुष्पखदिरदाडिमार्जुनसाधितम् ।
पाययेत् सर्पिरथवा विपक्वमसनादिभिः ॥ १३ ॥
पलाशभस्माश्मभिदा ग्रन्थ्याभे, पूयरेतसि ।
परूषकवटादिभ्यां, क्षीणे शुक्रकरी क्रिया ॥ १४ ॥
स्निग्धं वान्तं विरिक्तं च निरूढमनुवासितम् ।
योजयेच्छुक्रदोषार्तं सम्यगुत्तरबस्तिभिः ॥ १५ ॥
संशुद्धो विट्प्रभे सर्पिर्हिङ्गुसेव्यादिसाधितम् ।
पिबेद्,

---

१. वाताद्याह्वयं रे...। २. स्रं बीजासमर्थं गर्भारम्भासमर्थम् । आदिशब्देन पित्त-श्लेष्मणोर्ग्रहणम् । वातादिप्रभृतीनां द्वन्द्वः । एते आह्वयाः संज्ञा यस्य तदेवम् । आह्वय-शब्दो वातादिषु प्रत्येकं योज्यम् । वातसंज्ञं शुक्रम् । एवं पित्तादिषु । एवं वातार्तव-मित्यादि । कुणपगन्धित्वात्कुणपसंज्ञम् । एवं ग्रन्थ्यादीनामन्वर्थसंज्ञा बोध्या । मलाह्वयं द्विधा मूत्रपुरीष... । ३. ति । स्वलिङ्गैः । रूक्षश्यावारुणादीनि वायोः, विस्रगन्धौष्ण्यादीनि पित्तस्य, स्निग्धशीतपिच्छिलादीनि कफस्य, तैर्दोषजरेतोस्रं वदेद् जानीयात् । वैद्य इति शेषः । रक्तेन दुष्टेन कुणपं भवति । वातश्लेष्मभ्यां ग्रन्थिसदृशं भवति । क्षीणं नाम रेतोस्रं मारुतपित्ततो भवति । मारुतपित्ताभ्यां दूषणात् क्षीणतान्वितमित्यर्थः । एतानि वातादि-रेतोस्राणि क्षीणान्तानि कृच्छ्रसाध्यानि । मूत्रविशोः प्रभा यस्य तदेवं रेतोस्रमुभयमपि मल-संज्ञं भवति । त्रिदोषं त्रिदोषदुष्टम् असाध्यं साधयितुमशक्यम् । कुर्यादित्यादिना... । ख.

शुक्रार्तवदोषेषु चिकित्सापि तुल्या प्रायशः । यत्र तु विशेषोक्तिः तत्र विशेषमभिधास्यति[1] । यथा 'पिबेद् ग्रन्थ्यार्तव' इत्यादि[2] । कुणपे पुनरिति । कुणपाह्वये रेतसि । ननु कुणप इति सामान्येनोक्तावपि कथं रेतसीति विशेषो लभ्यते । ब्रूमः । रेतःप्रकरणत्वात् । कथं रेतःप्रकरणत्वं कथ्यत इति चेत् । पूयरेतसीत्युक्तत्वात्, क्षीणे शुक्रकरीत्युक्तत्वाच्च । अपि च कुणपस्य परस्तादुपक्रमः । वक्ष्यति च 'पेयं कुणपपूयास्र' इति । पुनर्ग्रहणमत्र वातादिदुष्टे रेतस्यप्योक्तां क्रियां न कुर्यादिति द्योतयति[3] । विट्प्रभ इति । (विभ्रतसी? विड्रेतसी-) त्यर्थः । हिङ्गुसेव्यादिसाधितमिति । अत्रादिशब्दो व्यवस्थावाचकः । तेन संग्रहोक्तस्य हिङ्गूशीरचित्रकप्रियङ्गुसमङ्गामृणालसिद्धं त्वगेलाचोचचूर्णप्रतीवापमित्यस्य सूचना भवति । हिङ्गुसेव्याग्निसाधितमित्यपरे[4] पठन्ति । नन्वसाध्यस्य मूत्रविट्प्रभस्य कथं चिकित्सोपदिष्टेति । ब्रूमः । किञ्चित्साध्यताप्यस्तीति प्रतिपादयितुं चिकित्सामुपदिदेश शास्त्रकारः । अत एव मूत्रप्रभवस्यासाध्यत्वात् चिकित्सां नोपादिशत् । मूत्रप्रभार्तवविट्प्रभार्तवयोरप्यसाध्यत्वादेवोपक्रमं नाभ्यधात् ।

वाताद्यार्तवेषु स्वौषधं कुर्यादित्युक्तम् । कुणपग्रन्थ्यार्तवेषु विशेषेण वक्ष्यति[5]—

ग्रन्थ्यार्तवे पाठाव्योषवृक्षकजं जलम् ॥ १६ ॥

पेयं कुणपपूयास्रे चन्दनं वक्ष्यते तु यत् ।
गुह्यरोगे च तत्सर्वं कार्यं सोत्तरवस्तिकम् ॥ १७ ॥

---

१. विशेषं द्रक्ष्यति, २. ति 'पिबेद् ग्रन्थ्यार्तव' इत्यादिना । वातादिभिर्दुष्टे शुक्रार्तवे स्वं च तदौषधं च स्वौषधं वाताद्यौषधमित्यर्थः । कुणपे कुणपाख्ये रेतसि । उत्तरत्र 'पेयं कुणपपूयास्र' इति आर्तवस्य पृथङ्निर्देशाद्रजसीति विशेष उपलभ्यते । पुनर्ग्रहण...
३. ति । ग्रन्थ्याभे ग्रन्थिरेतसि पलाशभस्माश्मभिच्च पलाशभस्माश्मभित् । तेन विपक्वं घृतं पाययेत् । परूषकश्च वटश्चादी ययोर्वर्गयोः ताभ्यां विपक्वं घृतम् । 'परूषकं वरे'त्यादि । 'न्यग्रोधपिप्पले'त्यादि । क्षीणे रेतसि शुक्रकरी क्रिया कार्या इति शेषः । विट्प्रभे विड्रेतसि संशुद्धः कृतवमनरेचनः । आदिशब्देन संग्रहोक्तं गृह्यते हिङ्गूशीर...,
४. त्यन्ये प, ५. 'कुणपार्तवादिषु विशेषचिकित्सां निर्दिशति । ग्रन्थ्यार्तवे पाठादिजं इत्यनिवर्तते (?) चन्दनं चन्दनक्वाथं पेयं 'द्रवानुक्तौ जलं पेय'मिति परिभाषया । यद् गुह्यरोगे वक्ष्यते तच्च सर्वं कार्यं सोत्तरवस्तिकम् । उत्तरवस्तिरपि कार्य इत्यर्थः । क्षीणार्तवे ... । ख.

क्षीणार्तवे चिकित्सितमूह्यम् । यथा क्षीणरेतसि शुक्रकरी क्रिया कार्येत्युक्तं तथा क्षीणे रक्ते रक्तकरी कार्येति[1] ।

शुक्रमित्यादिना समर्थं रेतोऽस्रं ब्रूते—

शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहुलं बहु ।
घृतमाक्षिकतैलाभं सद्गर्भायार्तवं पुनः ॥ १८ ॥
लाक्षारसशशास्राभं धौतं यच्च विरज्यते ।

सद्गर्भाय शोभनगर्भार्थं भवति ॥

शुद्धशुक्रेत्यादिना गर्भसंभवात्पूर्वमितिकर्तव्यतामाह—

शुद्धशुक्रार्तवं स्वस्थं संरक्तं मिथुनं मिथः ॥ १९ ॥
स्नेहैः पुंसवनैः स्निग्धं शुद्धं शीलितवस्तिकम् ।
नरं विशेषात् क्षीराज्यैर्मधुरौषधसंस्कृतैः ॥ २० ॥
नारीं तैलेन माँसैश्च[2] पित्तलैः समुपाचरेत् ।

शुद्धशुक्रार्तवादिलक्षणं मिथुनं घृतक्षीरादिभिः तैलमांसादिभिरुपाचरे-

---

१. ति । बीजासमर्थं रेतोऽस्रमभिधाय बीजसमर्थमाह । 'शुक्रार्तव' इति पूर्वं शुक्रस्योपदेशात् प्राधान्याच्च पूर्वमुपन्यासः । शुक्लादिगुणयुक्तं शुक्रम् । तथा घृताभं माक्षिकाभं तैलाभं वा शोभनगर्भार्थं भवति । शुक्रस्य वर्णविशेषेण गर्भस्य वर्णविशेषः । शुक्रे घृताभे च गर्भस्य गौरत्वं माक्षिकाभे श्यावत्वं तैलाभे कृष्णत्वमिति । धौतं यच्च विरज्यते वस्त्रादिलग्नं धौतं सल्लौहित्यं जहातीत्यर्थः । गर्भस्य सम्भवात्पूर्वमितिकर्त..., ख. २. माषैश्चेति मुद्रितपाठः । ३. शुद्धशुक्रार्तवं मिथुनं स्त्रीपुरुषयुगलं क्षीरादिभिः तैलादिभिरुपाचरेदिति संबन्धः । तथा स्वस्थमरोगं मिथः संरक्तं परस्परमनुरागि स्नेहैः पुंसवनैः अभिमतगर्भग्रहणप्रभावैः । स्निग्धं, शुद्धं कृतवमनविरेचनम् । शीलिता अभ्यासेनानुष्ठिता वस्तयो येन तं शीलितवस्तिकम् । न तु सकृदेवानुष्ठितवस्तिकमित्यर्थः ॥ एवमनयोस्तुल्यमभिधाय पृथग्वक्ति—नरं विशेषादतिशयेन क्षीरैः घृतैश्च समुपाचरेदिति संबन्धः । मधुरैरौषधैर्जीवनीयादिभिः संस्कृतैः सिद्धैः । नारीं तैलेन माषैश्च समुपाचरेत् । विशेषादित्यत्राप्यनुवर्तते । माषैश्चेत्यत्र चशब्दो भिन्नक्रमः । अन्यैश्चानूपमांसादिभिरिति । पित्तला हि रक्तवृद्धिहेतवः । उक्तं हि–'आश्रयाश्रयिणां मिथः । यदेकस्य तदन्यस्य वर्धनक्षपणौषधमि'ति । अत एव च तैलं पित्तकृत्त्वादेवोक्तम् । एवं सत्यपि विशिष्टकालमन्तरेण गर्भस्यासंभव इति गर्भाधानयोग्यं कालमाह । अथवा गूढा... । ख.

दिति संबन्धः । तत्र नरं विशेषात् क्षीराज्यैरित्यन्वयः । मांसैश्च पित्तलैरित्यत्र चशब्दो भिन्नक्रमः । पित्तलैश्च समुपाचरेदित्यर्थः । पित्तला हि रक्तवृद्धि-हेतवः । अत एव च तैलं पित्तलत्वादेवोपन्यस्तम् । विशेषादित्यत्राप्यनु-वर्तते । माषैश्चेति पठन्ति केचित् ।

क्षामप्रसन्नेत्यादिना गर्भग्रहणयोग्यकालयुक्ताया स्त्रियो लक्षणमाह—

**क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ॥ २१ ॥**
**स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ।**

क्षामं म्लानं प्रसन्नं प्रसादवद् मुखं यस्याः । क्षामां प्रसन्नवदनां इति वा पाठः । अथवा गूढार्तवाया ऋतुज्ञानार्थमुच्यते[1] क्षामप्रसन्नेति । गर्भाख्य-फलजनकपुष्पयुक्तः काल ऋतुः[2] ।

पद्मं संकोचमायातीत्यादिना ऋतावेव गर्भसम्भव इत्याह[3]—

**पद्मं संकोचमायाति दिनेऽतीते यथा तथा ॥ २२ ॥**
**ऋतावतीते योनिः सा शुक्रं नातः प्रतीच्छति ।**

मासेनेत्यादिना ऋतुकारणस्य रजसः प्रकृतिप्रकारमाह—

**मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ॥ २३ ॥**
**ईषत्कृष्णं विगन्धं च वायुर्योनिमुखान्नुदेत् ।**

---

१. ते इति वा संबन्धः । क्षामेत्यादि । कार्श्यहेतुं विना क्षामं म्लानं तथा प्रसन्नं निर्मलं मुखं यस्यास्तां, श्रोणिश्च पयोधरौ च श्रोणिपयोधरं स्फुरत् कम्पमानं श्रोणिपयोधरं यस्या-स्ताम् । श्रोणिः कटिः । तथा सन्धिपदात्स्रस्ते इवाक्षिणी कुक्षिश्च यस्यास्ताम् । पुंसि कामोऽभिलाषो यस्यास्तामेवंविधां स्त्रियमृतुमतीं ऋतुयुक्तां विद्यात् । अवन्ध्यर्तुमतीं विद्यादि-त्यस्मद्गुरवः । गर्भाख्यफल..., २. तुः । क्षामां प्रसन्नवदनामिति वा पाठः । ऋतावेव..., ३. ह पद्ममित्यादि । सर्वं च हे(तु)मद् ब्रूयादित्यागमः । यथा फुल्लः पद्मो दिनेऽतिक्रान्ते सङ्कोचं मुकुलतामायाति तत्स्वभावात्तस्य । तथा ऋतावतीते योनिः सङ्कुचिता स्यात् । अतः सङ्कुचितत्वात् शुक्रं न प्रतीच्छति न गृह्णाति । शुक्रं गर्भाशयं न प्रापयतीत्यर्थः पद्ममिति नपुंसकं वा । ऋतुकारणस्य रजसो निर्गमनप्रकारमाह मासेनेत्यादि । मासेनाहाररसाद् उपचितं रक्तं ऋतौ धमनीभ्यां वायुर्योनिमुखात्...प्रेरयेत् । विधौ लिङ् । कस्मात् योनिमुखं (?) विवृतं स्यात् । ईषत्कृष्णं प्रकृतिस्थप्रेरक... । ख.

ईषत्कृष्णमिति । प्रकृतिस्थप्रेरकपवनसंम्पर्कादीषत्कृष्णता । ननु कुपित-समीरणप्रेरणसंश्लेषवशादत्यन्तकृष्णता नापि पित्तेन तथाभूतेन युक्तं येन विस्रगन्धः स्यात् । अन्ये त्वीषदुष्णमिति पठन्ति कृष्णतायाः सदोषतां मन्यमानाः । ऊक्तं **हिरण्याक्षीये**—

इन्द्रगोपकसङ्काशं स्निग्धं यदपि गन्धि च ।
अपिच्छिलमशीतं च यच्च वासो न रञ्जयेत् ॥
अदोषलिङ्गसंयुक्तं तद्रजः शुद्धमुच्यते ।

इति । तस्माच्छुद्धं विशिष्टे काले योनिमुखात् प्रवर्तमानं रक्तमार्तवसंज्ञां लभते । तदेव चान्यदा योनिमुखात् प्रवर्तमानं असृग्दरसंज्ञामासादयति । तच्च रक्तं पुष्पसंज्ञं गर्भाख्यस्य फलस्य भविष्यतोऽभिव्यञ्जकत्वात् ।

अत एवाह—

**ततः पुष्पेक्षणादेव कल्याणध्यायिनी त्र्यहम् ॥ २४ ॥**
**मृजालङ्काररहिता दर्भसंस्तरशायिनी ।**
**क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्शनम् ॥ २५ ॥**
**पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ।**

ततः पुष्पेक्षणादिति । क्षैरेय यावकमिति । (स?)क्षीरयुक्तं सिद्धं यवोदनमित्यर्थः । पर्णादिषु भोजनविधानं कांस्यादिपात्रनिवृत्त्यर्थम् । 'न पर्णेन पिबेदि'ति यजुःश्रुत्या पर्णे पानं निषिद्धं न भोजनमित्यविरोधः । ब्रह्म-

१. संसर्गात् । नात्यन्तकृष्णं तत्कोपाभावात् । तथा विगन्धं विगतगन्धं विशेष-गन्धयुक्तं वा । अन्ये त्वीषदुष्ण... । २. नाः ऋतौ यत्कर्तव्यं तदाह तत इत्यादि । पुष्पस्य दर्शनादेवानन्तरं स्त्री त्र्यहं शुभमवश्यं ध्यायन्ती स्यात् । आवश्यके णिनिः । गर्भा-ख्यस्य फलस्य भविष्यतोऽभिव्यञ्जकत्वाद्रक्तं पुष्पसंज्ञम् । तथा मृजा स्नानम् अलङ्कारः कटकादिः पुष्पकलभादि च । ताभ्यां रहिता । दर्भाणां संस्तरः शय्या । तत्र शायिनी । व्रते (इति) णिनिः । तथा त्र्यहं क्षीरसिद्धं यावकं यवोदनं अल्पं पर्णादौ भुञ्जीत । कोष्ठ-शोधनकर्शनं को... शोधनं तदङ्गानां कर्शनं चेति वाच्यम् । रक्तस्य शोधनं मार्गस्य शोधनं चेत्यध्याहार्यं तयोरपि शुद्धिकरत्वात् । पर्णादिषु... । ३. र्थम् । ब्रह्मचारिणी अव्य-वाया, पत्युर्मासं ब्रह्मचर्यविधानाद् गमनदिवसविधानाच्च । सिद्धेऽपि... । ख.

चारिणीत्याह । ब्रह्मचारिणीति न वक्तव्यम् । पत्युर्मासं ब्रह्मचर्यविधानाद् गमनदिवसविधानाच्चेति । उच्यते । तथासिद्धेऽपि ब्रह्मचर्यविधानं अशुद्धदिवसगमनादपत्यव्यापादस्यावश्यंभावित्वज्ञापनार्थम्[1] ।

उक्तं च **हिरण्याक्षीये**—

प्रथ(मस्यां? मायां) यदा रात्रौ गृह्णीते बीजमङ्गना ।
तत्र चेल्लभते गर्भं गर्भः कुक्षौ विपद्यते ॥
आहितस्तु द्वितीयस्यां म्रियते सूतिकागृहे ।
क्रूरकर्मा तृतीयस्यां जायते म्रियतेऽपि वा ॥ इति[2] ॥

**चतुर्थेऽह्नि ततः स्नात्वा शुक्लमाल्याम्बरा शुचिः ॥ २६ ॥**
**इच्छन्ती भर्तृसदृशं पुत्रं पश्येत् पुरः पतिम् ।**

शुचिरिति । शुद्धाया लिङ्गमेवमुक्तं **तन्त्रान्तरे**—

नवे तनुनि सञ्जाते विगते शीर्णशोणिते ।
नारी भवति संशुद्धा....सा सम्पूज्यते ततः ॥

इति । शुचिरिति स्पर्शविषये न गमन इति केचित् । उक्तं च—

शुद्धा भर्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला ।
दैवे कर्मणि (वित्येः? पित्र्ये) वा पञ्चमेऽहनि शुद्ध्यति ॥

इति **स्मृतिः** । चतुर्थेऽहनि स्नाता नारी दैवे कर्मणि विशुद्ध्यति । पञ्चमेऽहनि शुद्ध्यति गमन इति वाक्यशेषः । अह्नीति वचनान्निशायां न शुद्ध्यतीति सिद्ध्यति ।

---

१. र्थम् । प्रथमस्यां... । २. ति । त्र्यहमेवं समाचारः पुराणरजसो निर्गमाय । 'गते पुराणे रजसी'त्यागमात् । ततस्त्र्यहादूर्ध्वं चतुर्थेऽह्नि स्नाता शुचिरन्तर्बहिश्च शुद्धा सती भर्तृसदृशं पुत्रमिच्छन्ती पुरः परिजनदर्शनात्पूर्वं पतिं पश्येत् । तथाहि यादृशं पश्यति तादृशं प्रसूत इति । ऋतुं द्वादशरात्रं षोडशरात्रं मासमार्तवं च मतं चतुर्धात्राभिमतकालमाह । तुशब्दोऽवधारणे । प्रथमदिवसात्प्रभृति द्वादश निशाः ऋतुः तावत्कालमार्तवस्य बहिःप्रवृत्तिदर्शनात् । अत्र द्वादशसु पूर्वास्तिस्रो निशा निन्द्याः । तासु स्त्रिया स्पर्शनगमननिषिद्धत्वात् । तथैकादशी निन्दिता । चशब्दोऽनुक्तायास्त्रयोदश्याः समुच्चयार्थः । तयोः स्पर्शन... ।

**ऋतुस्तु द्वादश निशाः पूर्वास्तिस्रोऽत्र निन्दिताः ॥ २७ ॥**
**एकादशी च युग्मासु स्यात् पुत्रोऽन्यासु कन्यका ।**

ऋतुस्तु द्वादश निशा इति । तुशब्दोऽवधारणे । षोडशरात्रमित्यन्ये । तत्परिहारार्थं तुशब्दः कृतः । अत्र द्वादशसु । तन्त्रान्तरेऽप्युक्तम्—

शुद्धस्नाता चतुर्थ्यां तु जनयेत्पुत्रमुत्तमम् ।
पञ्चम्यां पुत्रिणीं नारीं दशम्यां पुरुषेश्वरम् ॥
एकादश्यां राजपत्नीं द्वादश्यां तु जनेश्वरम् ।

इति । अन्ये त्वेवं वदन्ति । ऋतुस्त्विति तुशब्दो विशेषार्थे । विशिष्टास्तु निशा द्वादशैव गमनस्पर्शनयोग्याः । अविशिष्टा आद्यास्तिस्रः । स्पर्शनगमन-निषिद्धत्वात् । अत्र ऋतुसंज्ञितासु निशासु (षोड ? द्वाद)शसु पूर्वास्तिस्रः सर्वथा गर्हिताः । चतुर्थी निशा स्पर्शने शुद्धा गमने नियन्त्रिता चशब्दात् त्रयोदशी च । तयोः स्पर्शनगमनयोर्न निन्दितत्वं, किन्तु कार्यतो (न ?) निन्दितत्वम् । यथाह—

'एकादशीत्रयोदश्योर्जायते तु नपुंसकम् ।'

इति[1] । पूर्वोक्त एवार्थो वैद्यशास्त्रनिष्णाताभिमतः । (यु)ग्मासु स्यात् पुत्र इति । अत्र केचित् कारणं चाहुः । युग्मासु शुक्रवृद्धिः अन्यासु रजसो वृद्धिरिति । यदि (पु)नराहारादिवशाच्छुक्राधिक्यं अयुग्मासु रजसो न्यूनता च स्यात् तदा पुमान् स्त्र्याकृतिर्दुर्बलो हीनाङ्गो (वा) जायते । तद्वद् युग्मासु[2] रजसोऽधिक-भावः शुक्रस्य (न्यून)ता च तदा स्त्री च पुरुषाकृतिर्दुर्बला हीनाङ्गा वा जायत इति ।

---

१. ति । युग्मासु चतुर्थषष्ठाष्टमदशमद्वाद(शसु?शेषु) पुत्रः स्यात् । तदा हि शुक्रस्य वृद्धिः आर्तवस्याल्पता च स्यात् । अचिन्त्यत्वाद्धेतुभावस्य । अन्यास्वयुग्मासु रजसो वृद्धिः शुक्रस्याल्पता च । अतः कन्यका स्यात् । यदि पुनराहार..., २. ग्मासु

स्त्री अपि । तथा वेदोक्तम् । तथा ब्राह्मणादिवर्णत्रयस्यैवम् । शूद्रायां नमस्कारपरायां मन्त्रवर्जितं विधिं कुर्वीत । तस्या मन्त्रानधिकारात् । (य)थोक्तविध्यनुष्ठानाद् दम्पत्योः सङ्गमो न वन्ध्यो न निष्फलः । अपि तु सफलो गर्भसम्भवहेतुर्भवेत् । नैतावदेव किन्तु अपत्यं च कामतो यथाभिमतं पुमान् स्त्री वा स्यात् । • अत एवाह—हि यस्मात्सन्तः दम्पत्यो

उपाध्यायोऽथ पुत्रीयं कुर्वीत विधिवद् विधिम् ॥ २८ ॥
नमस्कारपरायास्तु शूद्राया मन्त्रवर्जितम् ।
अवन्ध्य एवं संयोगः स्यादपत्यं च कामतः ॥ २९ ॥
सन्तोऽप्याहुरपत्यार्थं दम्पत्योः संगतं रहः ।
दुरपत्यं कुलाङ्गारो गोत्रे जातं महत्यपि ॥ ३० ॥
इच्छेतां यादृशं पुत्रं तद्रूपचरितौ च तौ ।
चिन्तयेतां जनपदांस्तदाचारपरिच्छदौ ॥ ३१ ॥

तद्रूपचरितौ च ताविति । तद्रूपचरितभावनासंयुक्तावित्यर्थः । रूपं वर्णसंस्थानप्रमाणाकृत्यादि । चरितं श्रद्धाश्रुतसत्यार्जवानृशंस्यदानदयादाक्षिण्यस्वभावादि । तदाचारपरिच्छदाविति । मनीषितस्य भाविनोऽपत्यस्याचारसंयुक्तौ परिच्छदसंयुक्तौ च स्यातामित्यर्थः । कुलानुरूपस्य देशानुरूपस्य च कर्तव्यस्य कर्मणोऽनुष्ठानमाचारः । परिच्छदः मनुजगजगवाश्वधनधान्यवस्त्रालङ्काररत्नरथायुधोद्यानवीणावेणुशय्यास्तरणादिः । तदाचारपरिच्छदानिति केषाञ्चित्पाठः ।

---

रहःसङ्गतिं मैथुनम् अपत्यार्थमाहुः । न भोगार्थम् । न चापत्यमात्रार्थमित्याह— दुरपत्यं दुष्टः पुत्रः पुत्री वा महत्यपि गोत्रे उत्कृष्टे कुले जातमपि समस्तकुलविनाशहेतुत्वेन अङ्गारकार्यकरणात्कुलाङ्गार इत्युच्यते । तस्मात्पुत्रीयो विधिरवश्यकर्तव्य इत्यर्थः । तौ दम्पती यादृशं पुत्रमिच्छेताम् । रूपं वर्णसंस्थानप्रमाणादि । चरितं सत्यार्जवदानदयादाक्षिण्यादि । तस्य मनीषितस्य मनीषितसदृशे रूपचरिते येषां तान् जनपदान् चिन्तयेताम् । पुत्रशब्दोऽपत्यमात्रोपलक्षणार्थः । तदाचारपरिच्छदौ । आचारः स्वकुलानुरूपक्रियानुष्ठानम् । परिच्छदो भृत्यवाहनधनवस्त्रादिः । तच्छब्देनाभिलषितापत्यं परामृश्यते । तस्यैवाचारपरिच्छदौ ययोः । तच्छब्देन जनपदाः परामृश्यन्त इत्यन्ये । तदाचारपरिच्छदानित्यन्ये पठन्ति ॥ कर्मान्ते पुत्रीयकर्मावसाने च पुमान् प्राक् स्नातः पूर्वं शय्यामारोहेत् । स्त्री तु वामेन तस्य दक्षिणपार्श्वतः आरोहेत् । मौहूर्तिकाज्ञया इत्यत्रापि योज्यम् । तुरवधारणे । उभयत्रापि पुमान् दक्षिणेनैव पादेन स्त्री वामेनैव इति । तत्र रहःसङ्गमे । पुमानिदं मन्त्रं वक्ष्यमाणं प्रयुञ्जीत । ततो मन्त्रवादानन्तरं सान्त्वयित्वा प्रियवचनैः संवसेतां मिथुनीभवेताम् । तत्र च संवसने योषिदुत्ताना तिष्ठेत् शयीत । अङ्गैः सुसंस्थितैः । तथाशयने हि यस्मात् बीजं सा गृह्णाति । दोषैर्वातादिभिः स्वस्था(नावस्थितैः) सद्भिः । सद्यः तत्क्षणं गृहीतो गर्भो यस्याः सा सद्योगर्भा । तस्या लक्षणं योन्या करणभूतया बीजस्य संग्रहः सम्यग्ग्रहणम् । बीजं योन्या बहिर्न निर्यातीत्यर्थः । तृप्तिः रतौ अनभिलाषता । गुरुत्वं... । ख.

कर्मान्ते च पुमान् सर्पिःक्षीरशाल्योदनाशितः ।
प्राग् दक्षिणेन पादेन शय्यां मौहूर्तिकाज्ञया ॥ ३२ ॥

आरोहेत् स्त्री तु वामेन तस्य दक्षिणपार्श्वतः ।
तैलमाषोत्तराहारा तत्र मन्त्रं प्रयोजयेत् ॥ ३३ ॥

अहिरसि आयुरसि सर्वतः प्रतिष्ठासि धाता त्वां दधातु विधाता त्वां दधातु ब्रह्मवर्चसा भवेति ।

ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाश्विनौ ।
भगोऽथ मित्रावरुणौ वीरं ददतु मे सुतम् ॥

प्रागिति स्त्रीतः । तैलमाषौ पित्तलौ रक्तवृद्धिहेतू ॥

सान्त्वयित्वा ततोऽन्योन्यं संविशेतां मुदान्वितौ ।
उत्ताना तन्मना योषित् तिष्ठेदङ्गैः सुसंस्थितैः ॥ ३४ ॥

तथा हि बीजं गृह्णाति दोषैः स्वस्थानमास्थितैः ।

लिङ्गं तु सद्योगर्भाया योन्या बीजस्य संग्रहः ॥ ३५ ॥

तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रानुबन्धनम् ।
हृदयस्पन्दनं तन्द्रा तृड् ग्लानिर्लोमहर्षणम् ॥ ३६ ॥

गुरुत्वं स्फुरणं च कुक्षौ । योनाविति केचित्[1] ।

अव्यक्तः प्रथमे मासि सप्ताहात् कललीभवेत् ।
गर्भः पुंसवनान्यत्र पूर्वं व्यक्तेः प्रयोजयेत् ॥ ३७ ॥

---

१. चित् । शुक्रास्रयोर्योनिमुखादननुबन्धनं पश्चादप्रवर्तनम् । गर्भस्यावस्थाः प्रदर्शयति—अव्यक्त इत्यादि । गर्भः प्रथमे मासि अव्यक्तः इदं पार्थिवमिदमाप्यमित्यव्यपदेश्यधातुः । सप्ताहात्परं गर्भः कललं भवेद् जलबुद्बुदरूपं स्यात् । सप्ताहादर्वाक् शुक्ररजः-(सत्त्वजीवानां? सत्त्वानां) मूर्च्छनमात्रमेव । अत्र कललीभूते यावत् (स्त्री)पुरुषाद्युत्पत्तिलक्षणा व्यक्तिः न भवति तावत् पुंसवनानि प्रयुञ्जीत । ननु सत्त्वः... । ख.

अव्यक्त इत्यादि । सप्ताहादर्वाग् गर्भः श्लेष्मपिण्डीभूतो भवेत् । सप्ताहादनन्तरं यावन्मासं तावदव्यक्ताकृतिः कललीभवेत् जलबुद्बुदरूपं स्यात् । अत्र कललीभूते यावत्स्त्रीपुरुषाद्युत्पत्तिलक्षणा व्यक्तिर्न भवति तावद् व्यक्तेः प्राक् प्रथमे मासि पुंसवनानि प्रयोजयेत् ॥

ननु सत्त्वः स्वकर्मक्लेशचोदितो गर्भः सम्पद्यत इत्युक्तम् । तत्र यदि प्राक्चितेन कर्मणा स्त्रीगर्भः कर्तुमाक्षिप्तः तदा पुरुषप्रयत्ने सत्यपि पुंगर्भः कर्तुं न शक्यते । तस्मात्पुंसवनमनर्थकमेवेत्याशङ्कयाह—

**बली पुरुषकारो हि दैवमप्यतिवर्तते ।**

बलीत्यादि । हि यस्मात् पुरुषकारो बलवान् दुर्बलं दैवमतिवर्तते । अपिशब्दात्पुरुषकारमपि दुर्बलं दिष्टं बलीयोऽतिक्रम्य वर्तत इति प्रतिपादयति । अत एव प्राक्चितेन कर्मणा बलीयसा क्षिप्तस्य स्त्रीगर्भस्य पुंसवनादिना पौरुषेण कर्मणा शतशः प्रयोजितेन (न) कथञ्चित्पुंगर्भतां कर्तुं पार्यत इति । उक्तं च—

दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते ।
दैवेन चेतरत्कर्म प्रकृष्टेनोपहन्यते ॥

इति[1] । अत्र च पुंसवनादेः सम्यक्प्रयोजितस्य सिद्ध्यसिद्ध्यनुमेयं प्राक्चितस्य कर्मणो हीनबलत्वं प्रबलत्वं (च) ।

**पुष्ये पुरुषकं हैमं राजतं वाथवाऽयसम् ॥ ३८ ॥**

**कृत्वाग्निवर्णं निर्वाप्य क्षीरे तस्याञ्जलिं पिबेत् ।**
**गौरदण्डमपामार्गं जीवकर्षभसैर्यकान् ॥ ३९ ॥**

**पिबेत् पुष्ये जले पिष्टानेकद्वित्रिसमस्तशः ।**
**क्षीरेण श्वेतबृहतीमूलं नासापुटे स्वयम् ॥ ४० ॥**

---

१. ति । अन्यजन्मकृतं कर्म दैवं पौरुषमैहिकम् । अत्र च पुंसवनस्य सिद्ध्यसिद्ध्यनुमेयं दैवस्य दुर्बलप्रबलत्वम् । पुंसवनस्य प्रयोगमाह—पुष्ये पुष्ययुक्ते काले पुरुषकं पुत्तलकं हेमादिकृतं अग्निवर्णं कृत्वा सुध्माततया ततः क्षीरे निर्वाप्य(न्तीतिकृत्य ?) तस्य क्षीरस्याञ्जलिं पलचतुष्टयं पिबेत् । पुरुष इवेत्येतस्मिन्नर्थे 'इवे प्रतिकृतौ' इति कः । ख.

पुत्रार्थं दक्षिणे सिञ्चेद् वामे दुहितृकाङ्क्षया ।
पयसा लक्ष्मणामूलं पुत्रोत्पादस्थितिप्रदम् ॥ ४१ ॥

नासयास्येन वा पीतं वटभृङ्गाष्टकं तथा ।
ओषधीर्जीवनीयाश्च बाह्यान्तरुपयोजयेत् ॥ ४२ ॥

पुत्रोत्पादस्थितिप्रदमिति । नासयास्येन वा पीतं लक्ष्मणामूलं पुत्रोत्पाद-प्रदं पुत्रस्थितिप्रदं च ।

उपचारः प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक् ।
नवनीतघृतक्षीरैः सदा चैनामुपाचरेत् ॥ ४३ ॥

उपचारः प्रियहितैरिति । उपचार उपचरणम् । प्रिया इष्टाः हिताः पथ्याः आहारविहाराः तैः प्रियहितैः । य उपचारो भर्त्रा पत्या कृतो भृत्यैश्च प्रियहितैः । भर्तृभृत्यैरिति केचिद्वदन्ति । सौम्याकृतिभिः मधुरवचन-प्रायैः इच्छानुसारिभिश्चेत्यर्थः ।

अतिव्यवायमायासं भारं प्रावरणं गुरु ।
अकालजागरस्वप्नकठिनोत्कटकासनम् ॥ ४४ ॥

शोकक्रोधभयोद्वेगवेगश्रद्धाविधारणम् ।
उपवासाध्वतीक्ष्णोष्णगुरुविष्टम्भिभोजनम् ॥ ४५ ॥

रक्तं निवसनं श्वभ्रकूपेक्षां मद्यमामिषम् ।
उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत् त्यजेत् ॥ ४६ ॥

---

गौरदण्डमित्यपामार्गविशेषणम्, एकादिषु प्रत्येकं प्रत्ययार्थयोगः । स्वयमेव स्त्री । पयसा नासयास्येन वा पीतं लक्ष्मणाया मूलं पुत्रोत्पादस्थितिप्रदं पुत्रोत्पादप्रदं उत्पन्नपुत्रस्थितिप्रदं च । वटशुङ्गानामष्टकं तथा नासयास्येन वा पीतं पुत्रोत्पादस्थितिप्रदम् । प्रभावस्याचिन्त्यत्वा-दष्टकमिति सङ्ख्यावच्छिन्नत्वम् । ओषधीर्जीवनीया जीवन्तीकाकोल्याद्या दश बाह्यान्तरुपयो-जयेत् । स्नानोद्वर्तनादिना बाह्योपयोगः । आहारपानादिना (अन्तरुपयोगः) । उपचारः उपचरणं... । ख· १. र्थः । श्वभ्रं ᳵ९ा. यच्चाहारविहारं बहुशः प्रसूताः स्त्रियो नेच्छन्ति तच्च त्यजेत् । अष्टमे मासे बस्तिर्योज्यः । कस्मात् त्यजेत् -- एभिर्विज्यैरामोऽस-म्पूर्ण एव गर्भः स्रवेत्पतेत् । एतच्चातिव्यायामादि गर्भिण्या सर्वदा त्याज्यं प्रथमे मास्य-तिशयेनेति द्रष्टव्यम् । अत एव रक्तस्रुतिमित्यादि पृथङ् निर्दिष्टम् । ख.

तथा रक्तस्रुतिं शुद्धिं वस्तिमामासतोऽष्टमात् ।
एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा ॥ ४७ ॥
वातलैश्च भवेद्गर्भः *कुब्जान्धजडवामनः ।
पित्तलैः खलतिः पिङ्गः श्वित्री पाण्डुः कफात्मभिः ॥ ४८ ॥
व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत् ।
द्वितीये मासि कललाद् घनः पेश्यथवार्बुदम् ॥ ४९ ॥
पुंस्त्रीक्लीबाः क्रमात् तेभ्यः, तत्र व्यक्तस्य लक्षणम् ।
क्षामता गरिमा कुक्षौ मूर्च्छा छर्दिररोचकः ॥ ५० ॥
जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ।
अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ॥ ५१ ॥
पादशोफो विदाहोऽन्ये श्रद्धाश्च विविधात्मिकाः ।



मृदुसुखैरिति सिद्धेऽतीक्ष्णैरिति वचनं तीक्ष्णानामत्यन्तनिषेधार्थम् ।

मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत् ॥ ५२ ॥
संबद्धं तेन गर्भिण्या नेष्टं श्रद्धाविधारणम् ।
देयमप्यहितं तस्यै हितोपहितमल्पकम् ॥ ५३ ॥

---

*कुब्जः = കൂനൻ, ജളൻ – പൊട്ടൻ. कफात्मभिः कफकरैः । ख.

अस्याश्च व्याधीन् मृदुभिरकर्कशैः सुखैः सुखोपभोग्यैः शर्करादिभिर्जयेत् । एवमशान्तौ पश्चादतीक्ष्णैर्मरिचादिभिः । अतीक्ष्णैरिति वचनं तीक्ष्णानामत्यन्तनिषेधार्थम् । प्रथमे मासि गर्भस्य कललावस्थोक्ता । द्वितीयादिषु कीदृशः स्यादित्याह — द्वितीये मासि कललाद्घनो गर्भः स्यात् । "नातिदीर्घपरीवृत्तो मांसप्रायो घनो मतः । चतुरश्रा मांसपेशी स्त्रीकरी चतुरङ्गुला ॥ शाल्मलीमुकुलाकारमर्बुदं षण्डजन्मकृत् ।" तेभ्यो घनादिभ्यः । तत्र व्यक्ताव्यक्तयोर्मध्ये व्यक्तस्य लक्षणं क्षामतादि । क्षामता नेत्रस्वरयोः । सदनमङ्गस्य । अन्ये आचार्या विदाहो भवतीत्याहुः । नानाकाराः श्रद्धाः पथ्यापथ्यविषयाः लक्षणं व्यक्तस्य । पश्चादार्तवादर्शनं च गर्भलक्षणमिति बोद्धव्यम् । ख.

श्रद्धाविघाताद् गर्भस्य विकृतिश्च्युतिरेव वा ।
व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम् ॥ ५४ ॥

मूर्धा द्वे सक्थिनी बाहू सर्वसूक्ष्माङ्गजन्म च ।
सममेव हि मूर्धाद्यैर्ज्ञानं च सुखदुःखयोः ॥ ५५ ॥

गर्भस्य नाभौ मातुश्च हृदि नाडी निबध्यते ।
यया स पुष्टिमाप्नोति केदार इव कुल्यया ॥ ५६ ॥

चतुर्थे व्यक्तताङ्गानां चेतनायाश्च पञ्चमे ।
षष्ठे स्नायुसिरारोमबलवर्णनखत्वचाम् ॥ ५७ ॥

सर्वैः सर्वाङ्गसम्पूर्णो भावैः पुष्यति सप्तमे ।
गर्भेणोत्पीडिता दोषास्तस्मिन् हृदयमास्थिताः ॥ ५८ ॥

---

गर्भिण्याश्चापथ्यविषयासु श्रद्धासु किं कृत्यमित्याह — हि यस्मादस्य गर्भस्य हृदयं मातृजम् । उक्तं च — 'मृद्वल मातृजं रक्ते'त्यादि । तच्च गर्भहृदयं मातृहृदयेन संबद्धं संयुक्तम् । ततश्च गर्भिणीहृदयेन सन्तप्तेन गर्भहृदयं सन्तप्यते । परस्परं हृदयस्य संबद्धत्वात् । अत एव च गर्भिण्याः परायत्तहृदयत्वात् स्वभावोचितमभिलाषं विहाय नानाभिलाषता । तेन कारणेन गर्भिण्याः श्रद्धाविमाननं अभिलाषाप्रतिपूरणं नेष्टम् । तदर्थमाह — तस्यै पथ्यसहितमपथ्यमपि अल्पकमतिशयेनाल्पं देयम् । अपिशब्देन किमु तस्यै प्रार्थयमानायै हितं देयमिति गमयति । कस्मादहितमपि दीयत इत्याह — श्रद्धाविघातात्कुपितेन पवनेन गर्भस्य चिरकालोषितस्य च्युतिर्भवेत् । मूर्धादिगात्रपञ्चकं व्यक्तीभवति । सर्वेषां सूक्ष्माणामङ्गानां जन्म उत्पत्तिः अन्यत्र जन्मोत्तरकाल-जेभ्यो दन्तादिभ्यः । समं तुल्यकालम् । चः समुच्चये । तुशब्दस्थाने हिशब्दश्चेद्यस्मादर्थे । ख.

मात्राभ्यवहृताभ्यामन्नपानाभ्यां कथं गर्भो वर्धत इत्याह—केदारस्थः शाल्यादिः केदार-शब्देनोच्यते । मातृहृदयमासितया नाड्या मात्राभ्यवहृताहारसारो गर्भस्य नाभिमुपयाति । तस्य गर्भस्य कायाग्निना पच्यमानो धात्वादिपुष्टिकरः सम्पद्यते । साक्षादन्नपानाननुप्रवेशा-(द्रसस्य कफ)मलत्वाच्च गर्भस्य स्थूलमूत्रपुरीषाद्यसम्भवः । चतुर्थे मास्यङ्गानां सूक्ष्माणाम् । गर्भस्येत्यनुवर्तते । चेतना मनः । सर्वैर्भावैरोजःप्रभृतिभिर्वस्तुभिः सर्वाङ्गसम्पूर्णो गर्भः पोषं याति । अङ्गसम्पूर्ण इत्यनेनैवार्थे लब्धे सर्वग्रहणमधिकार्थद्योतनाय । सप्तमे मासि जातोऽपि जीवतीति । गर्भेणोत्पीडिता दोषा वातादयः । तस्मिन् सप्तमे । पाणिपादांसमूलेषु विविधः सन्तापो विदाहः । ऊरुस्तनो... । ख.

कण्डूं विदाहं कुर्वन्ति गर्भिण्याः किक्किसानि च ।

ऊरुस्तनोदरेषु वलिविशेषा रेखाकाराः कण्डूपूर्विकाः किक्किसानि इत्युच्यन्ते[1] ।

नवनीतं हितं तत्र कोलाम्बुमधुरौषधैः ॥ ५९ ॥
सिद्धमल्पपटुस्नेहं लघु स्वादु च भोजनम् ।
चन्दनोशीरकल्केन लिम्पेदूरुस्तनोदरम् ॥ ६० ॥
श्रेष्ठया चैणहरिणशशशोणितयुक्तया ।
अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्य मर्दयेत् ॥ ६१ ॥
पटोलनिम्बमञ्जिष्ठासुरसैः सेचयेत् पुनः ।
दार्वीमधुकतोयेन मृजां च परिशीलयेत् ॥ ६२ ॥

अश्वघ्नः करवीरः । पटोलादिभिर्मर्दयेत्, सेचयेद्दार्व्यादितोयेन तथा मृजां शुद्धिं स्नानादिकां शीलयेच्च इत्यरुणदत्तः ।

ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात् ।
तेन तौ म्लानमुदितौ तत्र जातो न जीवति ॥ ६३ ॥
शिशुरोजोनवस्थानान्नारी संशयिता भवेत् ।
क्षीरपेया च पेयात्र सघृतान्वासनं हितम् ॥ ६४ ॥

---

१. न्ते । तत्र तेषु कण्ड्वादिषूपशमनार्थं कोलाम्बुना मधुरौषधैर्द्राक्षादिभिश्च सिद्ध-मन्तरुपयोगार्थं बहिःप्रलेपार्थं च हितम् । अल्पपटुस्नेहं भोजनं च तत्र हितम् । लघु मात्रा-स्वभावाभ्याम् । कल्केन जललोलितेनेति शेषः । श्रेष्ठा त्रिफला । अश्वघ्नः कणवीरः । तत्सिद्धतैलेन अङ्गमभ्यज्य पुनः पटोलादिभिर्मर्दयेत् । दार्व्यादिक्काथेन सेचयेत् परिषेकं कुर्यात् । तथा मृजां स्नानं शीलयेत् । मृजां शुद्धिं स्नानादिकमित्यन्ये । ओजः सर्वधातुसारः क्रमात्कदाचिद् मातृतो गर्भं कदाचिद् गर्भतो मातरं मुहुर्मुहुः सञ्चरति रसहारिणीभिर्नाडीभिः । तेन हेतुना तौ म्लानमुदितौ । (यन्त्रेण?) यत्रौजस्तिष्ठति तत्र हर्षः अन्यत्र ग्लानिः । अत्राष्टमे क्षीरपेया पातव्या । मधुरैर्द्राक्षादिभिः साधितं घृतमन्वासनं हितमिति शेषः । ख.

मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ।
शुष्कमूलककोलाम्लकषायेण प्रशस्यते ॥ ६५ ॥
शताह्वाकल्कितो वस्तिः सतैलघृतसैन्धवः ।
तस्मिंस्त्वेकाहयातेऽपि कालः सूतेरतः परम् ॥ ६६ ॥
वर्षाद्विकारकारी स्यात् कुक्षौ वातेन धारितः ।
शस्तश्च नवमे मासि स्निग्धो मांसरसौदनः ॥ ६७ ॥
बहुस्नेहा यवागूर्वा पूर्वोक्तं चानुवासनम् ।
तत एव पिचुं चास्या योनौ नित्यं निधापयेत् ॥ ६८ ॥
वातघ्नपत्रभङ्गाम्भः शीतं स्नानेऽन्वहं हितम् ।
निःस्नेहाङ्गीं न नवमान्मासात्प्रभृति वासयेत् ॥ ६९ ॥

एकाहयातेऽपीति । एकाहेन यातोऽतिक्रान्तोऽन्तरितो यः स मासः एकाहयातः तस्मिन्नष्टमे मासे पुनरेकदिनमतिक्रान्तेऽप्यतः परं प्रसूतेः कालः ।

---

तथा पुराणशकृतः शुद्ध्यै शुष्कमूलादिकषायेण वस्तिर्निरूहः शस्यते । प्रसवकालमाह—तस्मिन्नष्टमे एकाहे यातेऽपि अर्थान्नवममासस्य एकेनाह्ना सह यातेऽतिक्रान्ते । अपिशब्दाद्यातमात्रेऽप्यष्टमेऽतः परं नवमप्रभृति चतुर्मासं प्रसूतेः कालः । वर्षात्परं वातेन कुक्षौ धारितः रुद्धनिष्क्रमणः विकारकारि स्यात् विकारमवश्यं करोति ।

मांसरसयुक्तः ओदनो मांसरसौदनः । पूर्वोक्तमनुवासनं घृतं मधुरैः साधितमिति शस्तम् । तत एवानुवासनस्नेहात् स्निग्धं पिचुं वातजयाय योनौ निधापयेत् ।

वातघ्नानां द्रव्याणां पत्राणि तेषां भङ्गः समूहस्तेन क्वथितमम्भः शीतं शीतीकृतमन्वहं अहरहः स्नाने हितम् ।

गर्भिणीं नवमान्मासात्प्रभृत्यर्थादाप्रसवात् निःस्नेहाङ्गीं न वासयेत् । अपि तु सस्नेहाङ्गीमेव स्थापयेत् कुपितवायोर्नित्यसन्निहितत्वात् । स्नेहरहितमङ्गं यस्याः सा निःस्नेहाङ्गी ।

यैर्लक्षणैः पुंगर्भादिप्रसवोऽनुमीयते तानाह—प्राक् पूर्वं दक्षिणे स्तने स्तन्यं यस्याः प्रादुर्भवति सा पुत्रं सूते । तथा तत्पार्श्वचेष्टिनी पुत्रं सूत इति सर्वत्र योज्यम् । तच्छब्देन दक्षिणं परामृश्यते । पूर्वं दक्षिणपार्श्वेन हस्तेन पादेन वा करणीयेषु चेष्टिनी । तथा पुंलिङ्गोपलक्षितं नाम पुन्नाम । पुन्नाम्नोः पुंलिङ्गनामधेययोः दौर्हृदप्रश्नयो रताभियुक्ता । अशोकचम्पकचूतादयो गजवाजिवराहादयश्च पुन्नामानः, तेषामभिलाषे प्रश्ने च रता । ख.

'अपिशब्दाज्जातमात्रेऽपि नवमे मास्यतः परं प्रसूतेः काल इति गम्यते' (इति) अरुणदत्तोक्तिः ।

प्राग्दक्षिणस्तनस्तन्या पूर्वं तत्पार्श्वचेष्टिनी ।
पुन्नामदौर्हृदप्रश्नरता पुंस्त्वप्रदर्शिनी ॥ ७० ॥
उन्नते दक्षिणे कुक्षौ गर्भे च परिमण्डले ।
पुत्रं सूतेऽन्यथा कन्यां या चेच्छति नृसङ्गतिम् ॥ ७१ ॥

नृत्यवादित्रगान्धर्वगन्धमाल्यप्रिया च या ।

नृत्यवादित्रेति । चत्वारोऽभिनयाः समुदिताः नृत्यमित्युच्यते । यथाह कोहलः —

चत्वारोऽभिनया नृत्यमाङ्गिकाहार्यसात्त्विकाः ।
सवाचिकाः समुदिताः साध्यार्थं व्यञ्जयन्त्यमी[1] ॥

इति । अभिनयोऽर्थव्यञ्जनः । यथोक्तं भरते—

अभिपूर्वस्तु णीञ्धातुरभिमुख्यार्थनिर्णये ।
यस्मात्प्रयोगं नयति तस्मादभिनयः स्मृतः ॥ इति ॥

सहायाभिमुखं प्रयोगं नयतीत्यभिनय इत्यर्थः ।

आतोद्यापरपर्यायं वादित्रं तच्चतुर्विधम् ।
ततं चैवावनद्धं च घनः सुषिर एव च ॥
ततं तन्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम् ।
घनस्तु तालो विज्ञेयः सुषिरो वंश उच्यते ॥ इति ।

पदस्थस्व(र)संघातस्तालेन समितस्तथा ।
प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते ॥

---

तथा पुंस्त्वप्रदर्शिनी पुन्नामधेयान् पुरुषगजवाजिप्रभृतीनशोकादीन् वा स्वप्नान् द्रष्टुं शीलं यस्याः सैवम् । पुंसामनुरूपं स्वप्नं गजारोहणधनुराकर्षणशस्त्राभ्यासादिमिति वा । पुंगर्भस्य दक्षिणपार्श्वाश्रयाद्दक्षिणकुक्षेरुन्नतत्वम् । गर्भे च परिमण्डले वर्तुले सति । अन्यथा प्राग्वामस्तनस्तन्येत्यादि । चत्वारोऽभिनया......... । ख.

१. मी । आतोद्यापर...... । ख.

क्लीबं तत्सङ्करे तत्र मध्यं कुक्षेः समुन्नतम् ॥ ७२ ॥

यमौ पार्श्वद्वयोन्नामात् कुक्षौ द्रोण्यामिव स्थिते ।
प्राक् चैव नवमान्मासात् सूतिकागृहमाश्रयेत् ॥ ७३ ॥

देशे प्रशस्ते सम्भारैः सम्पन्नं साधकेऽहनि ।

सम्भारैः सम्पन्नमिति । सकलैरुपकरणैर्विशल्याद्यौषधैश्च युक्तम् ।

तत्रोदीक्षेत सा सूतिं सूतिकापरिवारिता ॥ ७४ ॥

अद्यश्वःप्रसवे ग्लानिः कुक्ष्यक्षिश्लथता क्लमः ।
अधो गुरुत्वमरुचिः प्रसेको बहुमूत्रता ॥ ७५ ॥

वेदनोरूदरकटीपृष्ठहृद्वस्तिवङ्क्षणे ।
योनिभेदरुजातोदस्फुरणस्रवणानि च ॥ ७६ ॥



आवीनामनुजन्मातस्ततो गर्भोदकस्रुतिः ।

गर्भनिष्क्रमणकालशूलविशेषा आव्यः । (यद्द्रुतविलम्बितभेदेन परिच्छिन्नस्वरतालक्रियाणामेककालपरिच्छिन्नत्वम् ? )

अथोपस्थितगर्भां तां कृतकौतुकमङ्गलाम् ॥ ७७ ॥

---

तदित्यनेन पुत्रकन्याप्रसूतिलक्षणद्वयं परामृश्यते । तस्य सङ्करे सङ्कीर्णतायां; तत्र क्लीबगर्भः । यमौ द्वौ गर्भौ । तत्र लिङ्गं पार्श्वद्वयोन्नामः । अत एव कुक्षौ द्रोण्यामिव स्थिते सति । द्रोणिमध्यवन्मध्यनि... । देशे प्रशस्ते कृतम् । सम्भारैरुपकरणैः सम्पन्नं युक्तम् । साधके शुभनक्षत्रे । तत्र सूतिकागृहे स्थिता सा गर्भिणी सूतिकापरिवारिता बहुशः प्रसूताभिः तत्कालोचितव्यापाराभिः स्त्रीभिः परिवृता ।

आसन्नप्रसवाया लक्षणमाह—अद्येत्यादि । अद्य वा श्वो वा आसन्नः प्रसवः अद्यश्वःप्रसवः तस्मिन् ग्लान्यादयो भवन्ति । ग्लानिर्हर्षक्षयः । कुक्षेरक्ष्णोश्च श्लथता स्थानाच्चलनमिव । क्लमः उपतापः । कुक्षेरधो गुरुत्वम् । तथा योनिभेदादयश्च । अतोऽस्मायोनिभेदाद् अनु पश्चाद् आवीनां जन्म । प्रसवकालशूलविशेषा आव्यः । ततोऽनन्तरं गर्भोदकस्रुतिः । तत्काले योनितो जलस्रुतिः (शरावमात्रो ? ) गर्भोदकसंज्ञः ।

अथ गर्भोदकस्रुतेरनन्तरं तां गर्भिणीं उपस्थितगर्भामभिमुखीभूतगर्भामाविजन्मोदकस्रावाज्ज्ञात्वा सघृतां पेयां पाययेत् । ख.

हस्तस्थपुन्नामफलां स्वभ्यक्तोष्णाम्बुसेचिताम् ।
पाययेत् सघृतां पेयां

बाहौ रक्षार्थं विशिष्टका(लजं ? ले यद्) विशिष्टं वलयं बध्यते तत् कौतुकवाच्यं, कौतुकाख्यं मङ्गलम् । कृतं कौतुकमङ्गलं यस्याः ताम् । हस्तस्थानि पुन्नामफलानि डाडिमादीनि यस्याः ताम् । पुंग्रहणं द्राक्षादिनिवृत्त्यर्थम् । 'पुन्नामा पुन्नागः' इतीन्दुः । तथा स्वभ्यक्तां सुष्ठु अभ्यक्ताम् । उष्णाम्बुसेचितां उष्णोदकेन परिषिक्तां सतीम् । अस्यानन्तरं पाययेत्पेयामिति पठन् उष्णाम्बुसेचनानन्तरं पेयापानं कार्यमिति बोधयति ।

तनौ भूशयने स्थिताम् ॥ ७८ ॥

आभुग्नसक्थिमुत्तानामभ्यक्ताङ्गीं पुनःपुनः ।
अधो नाभेर्विमृद्नीयात् कारयेज्जृम्भचङ्क्रमम् ॥ ७९ ॥

तनावित्यादि । ततो मृदुनि भूशयने स्थितां, न खट्वादिशयने स्थिताम् । तथा चोक्तं संग्रहे—'ततः सुरक्तार्षभचर्मप्रच्छदे मृदुनि भूशयने शयानामुत्तानामाभुग्नसक्थिमहतवाससोऽशङ्कनीयाः प्रियदर्शनाः परिणतवयसः प्रजननकुशलाः प्रगल्भाः कृत्तनखाः स्त्रियः सूनृतादिभिराश्वासयन्त्यः पर्युपासीरन्नि'ति । इन्दुः- 'मृदुनि कार्पासादिकृते शयने शयानामुत्तानामहतवासस्त्वादियुक्ता योषितः सूनृतादिभिराश्वासयन्त्यः पर्युपासीरन्निति संबन्धः । आभुग्नसक्थि सङ्कुचितजानुम् । प्रजनने गर्भनिष्कासने कुशलाः । सूनृताः प्रियवाचः' इति । कुतोऽङ्गात्प्रभृति विशेषेण मृद्नीयात्—नाभेरधो, नोर्ध्वं नाभेरिति । किंभूतां ताम्—आभुग्नसक्थिम् । आसमन्ताद् भुग्ने कुटिले सक्थिनी यस्याः तां तथाविधां मृद्नीयात् । तथा पुनःपुनरभ्यक्ताङ्गीम् । पुनःपुनरभ्यङ्गो वातकोपभयात् । तथा जृम्भचङ्क्रमं च कारयेत् । जृम्भो जृम्भणं चङ्क्रमश्चङ्क्रमणम् ।

---

१. नादन..., २. तां विमृद्नीयाद् न ग. ३. क्थिपृष्ठाम..., ४. तामिर्वाणीमिरा..., ५. तामिरा...इति मुद्रितपाठः ।

किमेवमनुष्ठिते सति भवतीत्याह—

**गर्भः प्रयात्यवागेवं तल्लिङ्गं हृद्विमोक्षतः ।**
**आविश्य जठरं गर्भो वस्तेरुपरि तिष्ठति ॥ ८० ॥**

गर्भ इत्यादि । एवमनयेतिकर्तव्यतयानुष्ठितया गर्भो(ऽवाक्) प्रयाति ऊर्ध्वादधो गच्छति । हृत्स्थानं परित्यज्याधोऽवस्थितिं (कुर्वती? करोती)त्यर्थः । **संग्रहे** तूक्तं—'अथास्यै दद्यात्कुष्ठैलालाङ्गलिकीवचाचव्यचित्रकचिरिविल्वचूर्णमुपघ्रातुं मुहुर्मुहुः । तथा भूर्जप(त्र)शिंशपासर्जरसान्यतमधूपमन्तरान्तरा च । पार्श्वपृष्ठकटीसक्थिदेशान् कोष्णेन तैले(नाभ्यज्यानुसुखम)स्या मृद्गीयात् । एवमवाक् परिवर्तते गर्भः' इति । **इन्दुः**—'अथानन्तरमस्यै कुष्ठादिचूर्णमुपघ्रातुं दद्यान्मुहुर्मुहुः । तथैव भूर्जाद्यन्यतमधूपमुपघ्रातुं (दद्यात् । अ)न्तरा(न्तरा) च आविप्रादुर्भावमनु धूमादिप्रसङ्गे । पार्श्वादिदेशानीषदुष्णेन तैलेनाभ्यज्य सुखं मृद्गीयादिति संबन्धः । एवमनेन (यवागूपानादिना जठरस्थो गर्भः) सुखेनावाक् परिवर्तते, अधोमुखतां यातीत्यर्थः' इति । (अन्ये) मुसलेनोलूखलं धान्यपूर्णमाहननीयमित्याहुः (तत तु न सम्यक् । व्यायमेनेरितो) वायुः प्राणान् हिंस्यादिति । विमर्दनादिक्रियां च गर्भिण्यास्तावत् कारये(द्यावद्गर्भनिष्क्रमणं भवति ।) **हाटको**ऽपि—'एवं कृते सति गर्भोऽवाक् प्रयाती'त्युक्तवान् । आशये गर्भस्य न्यसनप्रकारश्च निर्गमनप्रकारश्च **संग्रहे** कथितः । यथा—'गर्भस्तु मातुः पृष्ठाभिमुखो ललाटे कृताञ्जलिः संकुचितदेहो गर्भकोष्ठेऽवतिष्ठते, जन्मकाले प्रसूतिमारुतयोगात् परिवृत्त्यावाक्शिरा निष्क्रामती'ति । अथ मातृहृदयान्मुक्तो गर्भः केन लक्षणेन ज्ञायत इत्याह—तल्लिङ्गमित्यादि । तल्लिङ्गं तस्याधोगतस्य गर्भस्य लक्षणम् । हृद्विमोक्षतः हृदयस्य स्थानस्य विमोक्षणादनन्तरं स गर्भो जठरमाश्रित्य वस्तेरुपरि तिष्ठति । तस्मादाव्यः प्रसवकालशूलविशेषाः एनां गर्भिणीम् अतित्वरयन्ति अनवरतमुत्पद्यमानत्वात् । **संग्रहे** तस्य लक्षणम्—'विमुच्य हृदयमुदरमाविशति वस्तिशिरोऽवगृह्णाति त्वरयन्त्येनामाव्यः' इति ।

---

१. 'धूममन्त...' इति मुद्रिते ।

**इन्दुः**—"स चावाङ्मुखो गर्भो हृदयमोक्षणादिना लक्षणेन ज्ञायते । मातुः हृदयदेशं परित्यज्य यदा उदरमाविशति गर्भो वस्तिशिरआख्यं वक्ष्यमाण-प्रदेशं नाभेरधो गृह्णाति । आव्यश्चैनां गर्भिणीं निरन्तरप्रादुर्भावेन त्वरयन्ति तदा परिवृत्तमध्यवस्येदि'ति ।

**आव्यो हि त्वरयन्त्येनां खट्वामारोपयेत्ततः ।**

हि यस्मादेनामाव्यस्त्वरयन्ति ततस्तस्मादेनां खट्वामारोपयेद् आरोहयेत् ।

**अथ संपीडिते गर्भे योनिमस्याः प्रसाधयेत् ॥ ८१ ॥**

**मृदु पूर्वं प्रवाहेत बाढमाप्रसवाच्च सा ।**

अथ खट्वारोपणादनन्तरं खट्वास्थितायाः गर्भे संपीडिते समन्तात्पीडिते वायुना योनिमुखाक्रान्ततया अस्या गर्भिण्या योनिम् अभ्यङ्गादिना प्रसाधयेत् प्रसवकालयोग्यत्वमापादयेत् । **इन्दुरपि**—'प्रसाधनं गर्भनिष्क्रमणयोग्यता' इत्याह । 'प्रसाधनम् ഒപ്പറന്നമാഠിരിക്ക' इति **पाठ्ये** । ततः सा (गर्भिण्या योनिमभ्यङ्गादिणी ?) गर्भस्य योनिमुखा(न्ता? क्रा)न्तेः पूर्वं मृदु प्रवाहेत । योनिद्वारमागतं ज्ञात्वा भृशमाप्रसवात् प्रवाहेत । **अरुणेनाप्युक्तम्**—'सा गर्भिणी मृदु कृत्वा पूर्वं प्रवाहेत (तयाच ? यावद्) योनिमुखे नागतो गर्भः । योनिद्वारमागत इति ज्ञात्वा भृशं प्रवाहेत । आप्रसवात् प्रसवं यावत् । तथा चोक्तं **संग्रहे**—'शनैःशनैश्च पूर्वं प्रवाहिष्ठाः निर्गमे बाढं गर्भस्य योनिमुख-प्रतिपत्तौ बाढतरमाप्रसवादि'ति । आ प्रसवादिति 'आङ् मर्यादावचन' इत्याङः कर्मप्रवचनीयत्वे 'पञ्चम्यपाङ्परिभि'रिति पञ्चमी ।

**हर्षयेत् तां मुहुः पुत्रजन्मशब्दजलानिलैः ॥ ८२ ॥**

**प्रत्यायान्ति तथा प्राणाः सूतिक्लेशावसादिताः ।**

ततोऽनन्तरं तां गर्भिणीं हर्षयेत् (समस्त्वं ? सुमनसं) मुहुः कारयेत् । केन । पुत्रजन्मशब्देन प्रसूतासि सुभगे धन्यं पुत्रमित्येवंरूपेणासकृत् स्त्रीभि-रुच्चारितेन । तथा जलेन शीतलेन । तथा अनिलेन । **संग्रहे**—'एनां ब्रूयाच

सुभगे शनैःशनैः प्रवाह(य)स्व सुप्रसन्नस्ते मुखवर्णः पुत्रं जनयिष्यसीति ।
अन्या तु वामकर्णेऽस्या मन्त्रमिमं जपेत् ।

क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः ।
सगर्भां त्वां सदा पान्तु[1] वैशल्यं वा दर्धत्वपि[2] ॥
प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने ।
कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितम् ॥

तथा—

इहामृतं च सोमश्च चित्रभानुश्च भामिनि ।
उच्चैःश्रवाश्च तुरगो मन्दिरे निविशन्तु[3] ते ॥
इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं प्रमुञ्चतु स्त्रि ।
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥

इति । अथ[4] अपरानुशिष्यादनागतायां वेदनायां मा प्रवाहिष्ठाः । अकालप्रवाहणं हि विण्मूत्रादिवेगानामिवोदीरणमनर्थकरमहितं च गर्भस्य श्वासकासशोषकु(ब्जा ? ब्जता)दिकरत्वात् । तथा तेषामेव विधारणमिव वेदनायामप्रवाहणमुपघाताय । ततो यथोक्तं कुरुष्व' इति । अथ किं हर्षाद्युत्पादनेन स्यादित्या(दि ? ह ।) तथा तेन प्रकारेण हर्षादिजननेन सूतौ क्लेशाः (आविष्कृतानि ? आवयस्तत्कृतानि) दुःखानि तैरवसादिता ग्लानिं नीताः (प्राणाः) प्रत्यायान्ति पुनर्नवीभवन्ति । हाटकोऽपि—'तथा कृते सति प्राणाः प्रत्यायान्ति' इत्याह ।

**धूपयेद् गर्भसङ्गे तु योनिं कृष्णाहिकञ्चुकैः ॥ ८३ ॥**

**हिरण्यपुष्पीमूलं च पाणिपादेन धारयेत् ।**
**सुवर्चलां विशल्यां वा जरायुपतनेऽपि च ॥ ८४ ॥**

**कार्यमेतत् तथोत्क्षिप्य बाह्वोरेनां विकम्पयेत् ।**
**कटीमाकोटयेत् पार्ष्ण्यां स्फिजौ गाढं निपीडयेत् ॥ ८५ ॥**
**तालुकण्ठं स्पृशेद्वेण्या मूर्ध्नि दद्याद् स्नुहीपयः ।**

---

१. पातु । २. दधात्व... । ३. निवसन्तु । ४. 'तथा परानु...' इति मुद्रिते ।

भूर्जलाङ्गलिकीतुम्बीसर्पत्वक्कुष्ठसर्षपैः ॥ ८६ ॥
पृथग् द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ।
कुष्ठतालीसकल्कं वा सुरामण्डेन पाययेत् ॥ ८७ ॥

यूषेण वा कुलत्थानां बैल्वजेनासवेन वा ।

गर्भसङ्ग इत्यादि । यदा पुनर्गर्भो (न) निष्कामति तदा तस्मिन् गर्भसङ्गे गर्भस्य सङ्गे सक्तौ कृष्णाहिकञ्चुकैः कृष्णसर्पनिर्मोकैः योनिं धूपयेद् धूपनं योनौ कुर्यात् । धूपयेदिति 'गुपूधूपविच्छिपणी' (व ? त्या)यन्ततो विधौ लिङ् । तथा हिरण्यपुष्प्या मूलं पाणिपादेन च सा गर्भिणी धारयेत् । अथवा सुवर्चलां विशल्यां वा धारयेत् । हिरण्यपुष्पी वाराही । सुवर्चला ഒചന്ദ്രകാന്തിൽ. विशल्या മേന്തോന്നി. अनन्तरं निष्क्रान्ते गर्भे यदा अपरा न निष्कामति तदा तस्मिन् जराय्वपतने जरायोरपराख्यस्यापतने अनिष्क्रान्तौ एतद् गर्भसङ्गोक्तकार्यं विधातव्यम् । तथेत्यादि । न केवलं गर्भसङ्गोक्तं कार्यं यावदेनां गर्भिणीं (अ)पतितजरायुं काचित् स्त्री बाह्वोर्द्वयोरुत्क्षिप्य विकम्पयेत् अवधु(वी ? नी)त । संग्रहे तूक्तम्—'अथ प्रसूतमालाया न चेऽपरा पतति ततो दक्षिणेन पाणिना नाभेरुपरिष्टाद् बलवदुपपीड्य अन्येन पृष्ठत उपसंगृह्य विधुनुयात्' इति । तथा सा स्त्री स्वपादपार्ष्ण्या कटीमाकोटयेत् । पुनःपुनः कट्यां पार्ष्णिं पातयेदित्यर्थः । हाटकोऽपि—'अन्या स्त्री (स्याद ? स्वपाद)पार्ष्ण्या गर्भिण्याः कटीमाहन्यात्' इत्याह । तथा स्फिजौ उभौ गाढं निपीडयेत् । संग्रहे—"पार्ष्ण्या वा श्रोणिमाकोटयेत् । स्फिजौ उपसंगृह्य सुपीडितं पीडयेत्" इति । केचिदेवमाहुः—कटीमाकोटयेदीषत्कुटिलीकुर्यात्, तथा पार्ष्ण्या पार्ष्णिहननेन स्फिजौ गाढं निपीडयेदिति । असद्गुरूणामयं पक्षोऽभिप्रेतः प्रायशः । तथा वेण्या केशरचनाख्यया तालुकण्ठं स्पृशेत् । वेणिः केशरचनाविशेषः । संग्रहे—'वेण्याङ्गुल्या वा केशवेष्टितया तालुकण्ठं स्पृशेत्' इति । तथा मूर्ध्नि मस्तके स्नुहीपयः स्नुहीदुग्धं दद्यात् । तथा भूर्जादिभिः द्रव्यैः पृथक् प्रत्येकं अथवा द्वाभ्यां कृत्वा समस्तै(ताका ? र्वा) योन्यालेपनं धूपनं च कार्यमिति

१. बिल्व इति मुद्रिते ।

शेषः । कुष्ठतालीसपत्रयोः कल्कं वा सुरामण्डेन सुराया उपरिभागेन, तां पाययेत् । तालीसशब्देन तालीसपत्रमुच्यते । अथवा कुलत्थानां यूषेण क्वाथेन पाययेत् । बल्बजेनासवेन बल्बजवारिणा आसुत्य रात्रौ धारि-(तल्ली? तःशी)तकषायो बल्बज आसव उच्यते । बल्बजो धातकी । 'बिल्व-जेनासवेने'ति केचित्पठन्ति । बिल्वं जले आपोथ्य प्रक्षिप्य प्रातर्गालितेन जलेनेत्यर्थः । उक्तं च—

रात्रावध्युषितं तोयं जर्जरीकृत्य भेषजम् ।
प्रातः स आसवो ज्ञेय अनुपानाय देहिनाम् ॥

इति । **हाटकोऽपि**—'बिल्वं वारिणासुत्य कृतः शीतकषायो बिल्वज आसव' इत्याह । **संग्रहे**—'भूर्जपत्रकाचमणिसर्पनिर्मोकैश्च योनिं धूपयेत् । भूर्ज-गुग्गुलुभ्यां वा । शालिमूलसिद्धेन वा सर्पिषा योनिमभ्यज्य कटुकालाबुजालिनी-निम्बसर्पनिर्मोकैर्धूपयेत् । गुळनागरकल्केन वा लिम्पेत् । तदेव वा भक्षयेत् । लाङ्गलीमूलकल्केन वा पाणिपादोदरमालिम्पेत् । महावृक्षक्षीरं वा मूर्धन्यनु-षेचयेत् । कुष्ठतालीसकल्कं बिल्व(बुल्बु? बल्ब)जयूषमैरेयासवसुरामण्डान्यतमेन व्योषतीक्ष्णेन[1] वाम्लेन कुलत्थरसेन वा' इति । तथा चोक्तं—'कुष्ठैलाकल्कं वा सुरामण्डेनापाययेत्[2] । अलर्ककषायं वा सुरोन्मिश्रम् । कुष्ठलाङ्गलीकल्कं वा सुरामूलान्यतरेण । शतपुष्पाकुष्ठवैदरहिङ्गुसिद्धस्य तैलस्य पिचुं ग्राहयेत्' । इति ॥

**शताह्वासर्षपाजाजीशिग्रुतीक्ष्णकचित्रकैः ॥ ८८ ॥**
**सहिङ्गुकुष्ठमदनैर्मूले[3] क्षीरे च सार्षपम् ।**
**तैलं सिद्धं हितं पायौ योन्यां वाप्यनुवासनम् ॥ ८९ ॥**
**शतपुष्पावचाकुष्ठकणासर्षपकल्कितः ।**
**निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ॥ ९० ॥**

---

१. तीक्ष्णोष्णेन वा । २. न मधुकपिप्पलीसम्पाकेन वा पाययेत् । ३. कुष्ठमदन-हिङ्गु इति मुद्रिते ।

**तत्सङ्गे ह्यनिलो हेतुः सा निर्यात्याशु तज्जयात् ।**

शताह्वेत्यादि । शताह्वादिभिर्द्रव्यैः सार्षपं तैलं मूले क्षीरे चोभयस्मिन् सिद्धमनुवासनं हितम् । क । पायौ गुदे, योन्यां वा गर्भनिष्क्रमणद्वारे । तथा शताह्वादिभिर्द्रव्यैः कल्कितो निरूहो वस्तिकल्पोक्तो यौगिकः, सह स्नेहेन लवणेन वर्तमान आशु शीघ्रमेव अपरां जरायुसंज्ञां पातयेदिति । किमर्थं वस्तिप्रणयनमित्यत आह — तत्सङ्ग इत्यादि । यस्मात् तत्सङ्गे अनिलो हेतुः वायुः कारणम् । तज्जयाद् वायुजयात् सा अपरा निर्याति कुक्षितो बहिः निष्क्रामति । पवनविजये च वस्तिः प्रधानम् । तथा चोक्तम्—

'वातोल्बणेषु दोषेषु वाते वा वस्तिरिष्यते ।' इति ॥

**कुशला पाणिनाक्तेन हरेत् कृत्तनखेन वा ॥ ९१ ॥**

कुशलेत्यादि । अथवा कुशला तद्व्यापारनिपुणा योषिद् वैद्योपदेशेन पाणिना तामपरां हरेत् । किंभूतेन पाणिना । अक्तेन स्नेहाभ्यक्तेन । तथा कृत्तनखेन कृत्ताः कल्पिताः शस्त्रेण च्छेदिताः नखा यस्य तेन तथाविधेन पाणिना तामपरां बहिः प्रलम्बां नालानुसारत आकर्षेत् । 'कुशलः पाणिनाक्तेन' इति केचित् पठन्ति । कुशलो भिषक् । **संग्रहे**—'शाल्मली-पिच्छया[1] सघृतया योनिं पूरयित्वा विधुनुयात् । स्निग्धेन वा कृत्तनखेन[2] पाणिना नालानुसारतो[3] हरेत्' । इति ॥

**मुक्तगर्भापरां योनिं तैलेनाङ्गं च मर्दयेत् ।**
**मक्कलाख्ये शिरोवस्तिकोष्ठशूले तु पाययेत् ॥ ९२ ॥**

**सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ।**
**धान्याम्बु वा गुडव्योषत्रिजातकरजोन्वितम् ॥ ९३ ॥**

मुक्तेत्यादि । गर्भश्चापरा च गर्भापरे । मुक्ते गर्भापरे यया योन्या तां

---

१. 'उमाशाल्मलीपिच्छया वा सा...' । २. 'कृत्तन...' । ३. 'तोऽपह...' इति मुद्रिते ।

योनिं तैलेन मर्दयेत् । अङ्गं शरीरं च मर्दयेत । शिरोबस्तिकोष्ठशूललक्षणे मर्कलाख्ये रोगे उत्पन्ने सति यवक्षारं सुचूर्णितं घृतेन अथवा उष्णजलेन तां सूतां पाययेत् । मर्कलाख्यो रोगः शिरोबस्तिकोष्ठशूललक्षण इति लाघविकेन तन्त्रकृता अस्य लक्षणमुक्तम् । **संग्रहे**—"प्रजातायाश्चेद्वस्तिमूर्धोदरेषु शूलं मर्कलाख्यं स्यात्तत्र यवक्षारचूर्णं सर्पिषा सुखोष्णोदकेन वा पिबेत्" इति । **इन्दुः**—"प्रजातायाः प्रसूताया यदि वस्तौ मूर्धन्युदरे च कारणविशेषाच्छूलं भवति, ततस्तस्मिन् मर्कलनाम्नि शूले घृतेनोष्णोदकेन वा यवक्षारं पिबेत्" इति । धान्याम्बु वा पाययेत् । तत्किंभूतम् । गुल्व्योषत्रिजातकरजोन्वितम् । गुळ इति सामान्येनोक्तावपि पुराणोऽल गुळो विवक्षितः पथ्यत्वात् ।

**अथ बालोपचारेण बालं योषिदुपाचरेत् ॥ ९३ ॥**

अथ बालं जातमात्रमेवोपाचरेदुपपादयेत् । का, योषित्, बहुकृत्वः प्रसूता, न पुमान् । केन—बालोपचारेण उत्तरस्थाने बालोपचरणीयोक्तेनाहार-विहारादिना ॥

**सूतिका क्षुद्वती तैलाद् घृताद्वा महतीं पिबेत् ।**
**पञ्चकोलकिनीं मात्रामनु चोष्णं गुडोदकम् ॥ ९४ ॥**

सूतिका क्षुद्वती बुभुक्षिता यथासात्म्यं तैलादथवा घृतान्महतीं मात्रां पञ्चकोलकिनीं पञ्चकोलचूर्णयुक्तां पिबेत् । "अष्टाभिर्यामैः या जरां याति सा स्नेहमात्रा महती" इत्यरुणदत्तादीनां पक्षः । **असद्गुरवस्तु** अन्यथा वदन्ति—'महतीं मात्रां पिबेदित्ययुक्तं, प्रसूताया महतीमात्रानर्हत्वात् । तस्मादमहती-मिति पदच्छेदः, महतीवर्जितां मात्रां ह्रस्वां वा मध्यां वा पिबेदित्यर्थः' इति । **संग्रहे**—"अहःपरिणामिनीं यथासात्म्यं स्नेहमात्रां पाययेत्" इति । **इन्दुः**—"यथासात्म्यमन्यतमस्य स्नेहस्य अहःपरिणामिनीमिति नात्र स्नेहमात्राया नियमः । केवलं तथा विधेयं—यथा तस्मिन्नेवाहनि जीर्णे स्नेहे यवाग्वाः प्रयोगो न विरुद्ध्यते । तथा चाचार्य (एव) हृदये केवलं महत्याः प्रति-षेधं करोति । यतः साहोरात्रेण जीर्यते । नतु मात्रान्तरस्य विधानम् । सूतिका क्षुद्वती तैलाद् घृताद्वामहतीं पिबेत् । इति" । इति । अनु चोष्णं गुळोदकं, पिबेदिति योज्यम् ॥

वातघ्नौषधतोयं वा तथा वायुर्न कुप्यति ।
विशुध्यति च दुष्टास्रं द्वित्रिरात्रमयं क्रमः ॥ ९५ ॥

वातेत्यादि । वातहरद्रव्यक्काथं वा पश्चात्पिबेत् । तथा एवं कृते सति, वायुर्न कुप्यति न कोपं याति । शून्यं कोष्ठं प्राप्य दुष्टं च रक्तं विशुद्ध्यति । अयमेवोपक्रमो द्विरात्रं त्रिरात्रं वा यथायोगं कार्यः ॥

स्नेहायोग्या तु निःस्नेहममुमेव विधिं भजेत् ।
पीतवत्याश्च जठरं यमकाक्तं विवेष्टयेत् ॥ ९६ ॥

स्नेहेत्यादि । स्नेहपानायोग्या तु या स्त्री स्नेहं नार्हति सा, निःस्नेहं स्नेहं विना अमुमेव पूर्वोक्तमेव विधिं भजेत् । यथायोग्यं स्नेहं वा वातहरद्रव्यक्काथं वा गुळोदकं वा । पीतवत्याश्च तस्या जठरं यमकाक्तं तैलघृताभ्यक्तं वेष्टयेत् । वाससेति शेषः । वातपूरणभयात् । **संग्रहे**—"पीतवत्याश्च यमकेनाभ्यज्य वेष्टयेदुदरम्[1] । तथा न वायुरुदरे विकृतिमुत्पादयत्यनवकाशत्वात्" इति । **इन्दुः**—"स्नेहे क्काथे वा पीते यमकाभ्यक्तदेहाया वस्त्रेणोदरं वेष्टयेत् । वातपूरणभयात् तदवकाशपरिहाराय" इति ॥

जीर्णे स्नाता पिबेत् पेयां पूर्वोक्तौषधसाधिताम् ।
त्र्यहादूर्ध्वं विदार्यादिवर्गक्काथेन साधिता ॥ ९७ ॥

हिता यवागूः स्नेहाढ्या सात्म्यतः पयसाथवा ।
सप्तरात्रात् परं चास्यै क्रमशो बृंहणं हितम् ॥ ९८ ॥

द्वादशाहेऽनतिक्रान्ते पिशितं नोपयोजयेत् ।

जीर्ण इत्यादि । जीर्णे स्नेहे वा कोष्णगुळोदके वा वातघ्नौषधतोये वानन्तरं स्नाता सती पूर्वोक्तौषधसाधितां पञ्चकोलकृतां पेयां पिबेत् । त्र्यहादूर्ध्वमनन्तरं विदार्यादिवर्गौषधसिद्धा यवागूः पेया स्नेहाढ्या हिता । अथवा सात्म्यतः सात्म्यवशात् पयसा क्षीरेण साधिता यवागूः हिता । **संग्रहे**—"प्राक् स्नेहयवागूपानाभ्यां चोभयकालमुष्णोदकेन परिषेचयेत्"

---

१ 'रं वस्त्रेण तथा' इति मुद्रिते ।

इति । सप्तरात्रात्परं अनन्तरं क्रमशो, न सहसा, तस्यै बृंहणं हितम् । बृंहणं जीवनीयबृंहणीयमधुरवर्गसिद्धैरभ्यङ्गोद्वर्तनपरिषेकावगाहनैर्हृद्यैश्चान्नपानविधातव्यम् । तथा च **संग्रहे**—"जीवनीयबृंहणीयमधुरवातहरसिद्धैरभ्यङ्गोद्वर्तनपरिषेकावगाहनैरन्नपानैश्च हृद्यैरुपाचरेत्" इति । "क्वथितं च तोयं पाययेद्" इति च । द्वादशाहेऽनतिक्रान्ते पिशितं मांसं नोपयोजयेद् नाभ्यवहारयेत् स्कन्दादिद्वादशग्रहाभिषङ्गपरिहारार्थम् । मांसभोजनेन हि कदाचित् तैरभिषङ्गो भवेत् ॥

**यत्नेनोपचरेत् सूतां दुःसाधो हि तदामयः ।**
**गर्भवृद्धिप्रसवरुक्क्लेदास्रस्रुतिपीडनैः ॥ ९९ ॥**

**एवं च मासादध्यर्धान्मुक्ताहारादियन्त्रणा ।**
**गतसूताभिधाना स्यात् पुनरार्तवदर्शनात् ॥ १०० ॥**

यत्नेनेत्यादि । सूतां स्त्रियं यत्नेन तात्पर्येण उपचरेत् उपक्रमेत् । कुत इत्याह—हि यस्मात् तस्या आमयो रोगो दुःसाधः कृच्छ्रेणोपक्रम्यः । किमिति कृच्छ्रेण साध्यत इत्याह—गर्भेत्यादि । वृद्धिश्च प्रसवश्च वृद्धिप्रसवौ । गर्भस्य वृद्धिप्रसवौ च रुक् च क्लेदश्चास्रस्रुतिश्च पीडनं च तैर्गर्भवृद्धिप्रसवरुगादिभिः हेतुभूतैः तदामयो दुःसाधः । रुक् प्रवाहणवेदना । 'दुःसाध्य' इति वा पाठः । 'दुःसाधा हि तदामयाः' इति पठन्ति केचित् । एवमनेन क्रमेण सार्धं मासमुपस्कृता क्रमेण विमुक्ताहारविहारयन्त्रणा अध्यर्धान्मासात्परेण गतसूताभिधाना व्यपेतसूताव्यपदेशा स्यात् । पुनरार्तवदर्शनात्परेण वा गतसूताभिधाना स्यात् । **संग्रहे**—"एवमध्यर्धमासमुपस्कृता क्रमेण विमुक्ताहारविहारयन्त्रणा विगतसूतिकाभिधाना स्यात् । पुनरार्तवदर्शनादित्येके" इति । **इन्दुः**—"सार्धान्मासादूर्ध्वं सूतिकाभिधाननिवृत्तिः । अन्ये पुनराहुः—पुनरार्तवदर्शनादूर्ध्वं सूतिकाभिधाननिवृत्तिः" इति ॥

इति हृदयबोधिकानामष्टाङ्गहृदयटीकायां
शारीरस्थाने प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः ।

गर्भावक्रान्तिशारीरादनन्तरं गर्भव्यापदं शारीरमारभते । गर्भव्यापदो भवन्ति गर्भप्रसङ्गात् तद्व्यापद्विज्ञानार्थं तत्प्रतीकारविधानार्थं च ।

**अथातो गर्भव्यापदं शारीरं व्याख्यास्यामः ।**

गर्भस्य व्यापद् गर्भव्यापद्, सा विद्यतेऽस्मिन्निति छः । तस्य 'अध्यायानुवाकयोर्लुक्' (पा० सू० ५-२-६०) इति लुक् । यद्यपि चात्र गर्भव्यापदां चिकित्साप्युक्ता न केवलं गर्भव्यापत् तथापि बाहुल्यादिदमुक्तमिति बोध्यम् । अथादिनां पूर्ववद् व्याख्या ।

**गर्भिण्याः परिहार्याणां सेवया रोगतोऽपि वा ।**
**पुष्पे दृष्टेऽथवा शूले बाह्यान्तः स्निग्धशीतलम् ॥ १ ॥**

गर्भिण्या इत्यादि । गर्भिण्याः परिहार्याणां आहारविहारादीनां पूर्वोक्तानामतिव्यवायादीनां सेवनेन पुष्पे दृष्टे, रोगतोऽपि वा रोगस्य च स्वाभाव्यादपथ्यसर्षपशाकमन्दकदध्यादेराहाराद् मातादेशकालादिवशाद्वा सम्भवात्, पुष्पे दृष्टे । गर्भाख्यस्य फलस्य हेतुत्वाद्रक्तं पुष्पमित्युच्यते । तस्मिन् दृष्टे चक्षुर्गोचरं प्राप्ते । अथवा शूले दृष्टे प्रश्नादिनोपलब्धे । दृशिरत्रोपलब्धिवचनः । बाह्यान्तः स्निग्धशीतलं, साधनं कार्यमिति वाक्यशेषः । बहिः स्नानावगाहादौ अन्तश्च भोजनपानादावित्यर्थः । रोगत इति तृतीयार्थे तसिः ।

तच्चिकित्सामाह—

**सेव्याम्भोजहिमक्षीरिवल्ककल्काज्यलेपितान् ।**
**धारयेद् योनिबस्तिभ्यामार्द्रार्द्रान् पिचुनक्तकान् ॥ २ ॥**

सेव्याम्भोजेत्यादि । बस्तियोनिभ्यां पिचून् नक्तकांश्च धारयेत् । पिचुः कार्पासमयः । नक्तकश्चेलखण्डः । पिचुनक्तकं ഉണിമഠി इति पाठ्ये । किंभूतान् । सेव्यादिभिर्लेपितान् । सेव्यमुशीरम् । अम्भोजं पद्मम् ।

हिमं चन्दनम् । क्षीरिणां वल्कः क्षीरिवल्कः । क्षीरिणः क्षीरवन्तो वृक्षाः पिप्पलादयः, तेषां शस्त्रादिभिन्नानां क्षीरं दृश्यते । आर्द्रार्द्रान् अतिशयेनार्द्रान् ।

**शतधौतघृताक्तां स्त्रीं तदम्भस्यवगाहयेत् ।**

शतेत्यादि । शतशब्दो बहुवारपर्यायः । सङ्ख्यावाचीत्यन्ये । तथाचोक्तं **संग्रहे**—"सहस्रधौतेन सर्पिषा अधो नाभेः सर्वतः प्रदिह्याद्" इति । **इन्दुः**—"सहस्रधौतसर्पिषा, यदनेकशोऽग्निना विलाप्य शीतोदके प्रक्षिप्य स्त्यानीक्रियते" इति । **संग्रहे**—"बलातिबलाशालिषष्टिकेक्षुमूलकाकोलीशृतेन पयसा समधुशर्करेण रक्तशाल्यन्नं सुशीतलं भोजयेत् शीतवीर्यजाङ्गलरसेन वा" इति । शतधौतेन बहुवारप्रक्षालितेन घृतेनाक्तामभ्यक्तां स्त्रीं तदम्भसि सेव्यादिद्रव्याम्भसि अवगाहयेत्, तत्र तां निमज्जनं कारयेत् । तदित्यनेन सेव्यादिद्रव्यपरामर्शः । स्त्रीमिति 'वाम्शसोः' (पा०सू० ६-४-८०) इति वा इयङादेशः । **हाटकोऽपि**—"शतधौतेन जले बहुशो मर्दितेन घृतेनाभ्यक्तां स्त्रियं तदम्भस्यवगाहयेद्" इत्याह ।

**ससिताक्षौद्रकुमुदकमलोत्पलकेसरम् ॥ ३ ॥**

**लिह्यात् क्षीरघृतं खादेच्छृङ्गाटककशेरुकम् ।**

**पिबेत् कान्ताब्जशालूकबालोदुम्बरवत् पयः ॥ ४ ॥**

**शृतेन शालिकाकोलीद्विबलामधुकेक्षुभिः ।**

**पयसा रक्तशाल्यन्नमद्यात् समधुशर्करम् ॥ ५ ॥**

**रसैर्वा जाङ्गलैः**

तथा क्षीरं घृतं च लिह्यात् । किंभूतम्, ससितेत्यादि । सिता च क्षौद्रं च कुमुदकमलोत्पलानां केसरं च किञ्जल्कं तैः सहितं क्षीरघृतं लिह्यात् । **हाटकस्तु**—"क्षीरघृतं क्षीरोत्पन्नं घृतं लिह्याद्" इत्याह । **इन्दुरपि**—"क्षीरमेव प्रमथ्य सम्पादितं घृतं क्षीरघृतम्" इत्याह । तथा शृङ्गाटकं कशेरुकं च खादेत् ।

१. 'सहस्रधौतं सर्पिर्यदनेकशोऽग्नौ विलाप्य' इति मुद्रिते ।

तथा पयः पिबेत् । किम्भूतम्—कान्तेत्यादि । कान्ता गन्धप्रियङ्गुः[1] । अप्सु जातं अब्जम् कमलादि । शालूकं उत्पलमूलम् । बालोदुम्बरम् अपक्वमुदुम्बर-फलम् । तानि विद्यन्ते यस्य पयसस्तदेवं, कान्तादिभिः शृतं क्षीरं पिबेदित्यर्थः । यैर्हि तत्पयः शृतं तानि तस्यावश्यं विद्यन्ते । क्षीरश्रपणविधिश्च अतिसार-चिकित्सितोक्तः "पयस्युत्क्वाथ्य मुस्तानां विंशतिम्" इत्याद्यनुसारेणात्र कल्प्यः । तन्त्रान्तरे त्वेवमुक्तम्—

> द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् ।
> क्षीरावशेषं कर्तव्यं क्षीरपाके त्वयं विधिः ॥

इति । अन्ये तु कान्तादिद्रव्याणां चूर्णेन युक्तं कल्केन वा युक्तं पयः पिबे-दित्याहुः । सारकृदपि—"कान्तादिभिः सिद्धं वा क्षीरमेषां चूर्णयुक्तं वा कल्कयुक्तं वा क्षीरमिति मतुबर्थ इत्याह । शाल्यादिभिः शृतेन सिद्धेन पयसा रक्तशाल्यन्नं समधुशर्करं सुशीतलं भुञ्जीत । देशसात्म्याद्यनुरोधाद् जाङ्गलैर्वा रसैः शाल्यन्नमद्यात् ।

**शुद्धिवर्जं चास्रोक्तमाचरेत् ।**

शुद्धीत्यादि । शुद्धिवर्जं चास्रोक्तं रक्तपित्ताभिहितं यत्साधनं तद् बाह्यान्तराचरेत् सेवेत । अस्रशब्दस्योपलक्षणार्थत्वाद्रक्तपित्तोक्तं गम्यते । "रक्तपित्तक्रियाश्च शोधनवर्ज्याः प्रयुञ्जीत" इति संग्रहे ।

**असम्पूर्णत्रिमासायाः प्रत्याख्याय प्रसाधयेत् ॥ ६ ॥**
**आमान्वये च**

असम्पूर्णेत्यादि । असम्पूर्णाः त्रयो मासा यस्या गर्भिण्याः सैवं, तस्याः पुष्पदर्शने सति गर्भः प्रायो न तिष्ठति असञ्जातसारत्वात्, तस्मात् प्रत्याख्याय प्रत्याख्यानं कृत्वा प्रसाधयेत् प्रकर्षेण यत्नेन साधयेत् । आमान्वये च । तत्रापि प्रत्याख्याय प्रसाधयेदित्यनुवर्तते । आमानुगते रक्तदर्शने (अ) सम्पूर्ण-त्रिचतुरादिमासाया अपि सञ्जातसारे गर्भे सति विरुद्धोपक्रमत्वात् प्रत्याख्याय साधनं कार्यम् । तथा हि रूक्षतीक्ष्णकट्वादिकमामघ्नं गर्भिण्या विरुद्धम् ।

---

१. ङ्गुः ဓတ၇ဖ၀ अपे. प्रपाठः ।

स्निग्धशीतादिकं चामस्य । संग्रहे—"असम्पूर्णत्रिमासायास्तु पुष्पदर्शने गर्भः प्रायो न तिष्ठत्यसञ्जातसारत्वात् । आमान्वये चोर्ध्वमपि विरुद्धोपक्रमत्वात्" इति । इन्दुः—"प्रथमान्मासादारभ्य मासत्रयं पुष्पदर्शने सम्यक् चिकित्सितोऽपि गर्भः कोष्ठे न तिष्ठत्यसञ्जातसारत्वात् । स्रवत्येवेत्यर्थः । तेन प्रथममासत्रयं पुष्पदर्शने प्रायो गर्भः चिकित्सयापि कोष्ठे न तिष्ठति । मासत्रयादूर्ध्वमपि चतुर्थादिमासेष्वकाठिन्यात् । आमान्वये पुष्पदर्शने विरुद्धोपक्रमत्वाद्गर्भः कोष्ठे न तिष्ठति । आमे क्षुण्णतीक्ष्णादिका क्रिया । सा तु गर्भे विपरीता । अतो विरुद्धोपक्रमत्वम् । यत्र चतुर्थादिषु मासेषु आमान्वयो नास्ति तत्र पुष्पदर्शनेऽपि गर्भो विधारयितुं सुशक्यते" इति ।

एवमप्यामरक्तयोर्यदविरुद्धं तदुपदेष्टुमाह—

**तत्रेष्टं शीतं रूक्षोपसंहितम् ।**
**उपवासो घनोशीरगुडूच्यरलुधान्यकाः ॥ ७ ॥**
**दुरालभापर्पटकचन्दनातिविषाबलाः ।**
**क्वथिताः सलिले पानं तृणधान्यादिभोजनम् ॥ ८ ॥**
**मुद्गादियूषैरामे तु जिते स्निग्धादि पूर्ववत् ।**

तत्रेष्टमित्यादि । तत्र आमान्वये सामतायां सत्यां, शीतं यदन्नपानादि औषधं वा तत्सर्वं बाह्यतोऽन्तश्च हितम् । शीतं रक्तस्य हितमामस्य विरुद्धत्वाद् वर्ज्यमित्याशङ्क्याह—रूक्षोपसंहितं रूक्षेण तिक्तकषायादिना युक्तम् । तथा देशसात्म्याद्यनुरोधादुपवासो हितो न केवलं शीतं रूक्षोपसंहितम् । संग्रहे—"तत्र रूक्षशीतानि प्रयुञ्जीत । तद्यथा प्रागुपवासम्" इत्यादि । इन्दुः—"तत्रामान्वये रूक्षशीतानि औषधानि प्रयुञ्जीत । तद्यथेत्यादिना तेषामेवोपयोगं दर्शयति । औषधात् पूर्वमुपवासः" इत्यादि । तथा घनादयो द्रव्यविशेषाः सलिले क्वथिताः पानं हितम् । घनो मुस्ता । अरलुकः स्योनाकः । तथा तृणधान्यानि श्यामाकादीनि । भोजनमाहारस्तत्रामान्वये हितम् । केन सह—मुद्गादियूषैः । आदिग्रहणेन मकुष्ठमसूरादयो

शिम्बिधान्यविशेषाः पित्तश्लेष्महरा गृह्यन्ते । सामतायामेवोत्पन्नायाम् अयमुपक्रमः । एवमामे तु जिते स्निग्धादि पूर्ववत् । निरामे स्निग्धशीतादि पूर्ववत् । निरामे स्निग्धशीतादि यथानिर्दिष्टं हितम् । इन्दुरपि—"आमे जिते पूर्ववत प्रथमपुष्पदर्शनवत् स्निग्धादीन्युपयुञ्जीत" इत्याह ॥

गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत् ॥ ९ ॥
गर्भकोष्ठविशुद्ध्यर्थमार्तिविस्मरणाय च ।
लघुना पञ्चमूलेन रूक्षां पेयां ततः पिबेत् ॥ १० ॥
पेयाममद्यपा कल्के साधितां पाञ्चकोलके ।
बिल्वादिपञ्चककाथे तिलोद्दालकतण्डुलैः ॥ ११ ॥
मासतुल्यदिनान्येवं पेयादिः पतिते क्रमः ।
लघुरस्नेहलवणो दीपनीययुतो हितः ॥ १२ ॥

गर्भ इत्यादि । गर्भिण्या एवमासेवमानाया अप्यदृष्टवशाद्गर्भे निपतिते जातसारेऽप्यामगर्भे पतिते सति तीक्ष्णं कर्कशं मद्यं सामर्थ्यतः सामर्थ्येन पिबेद् बहु पिबेदित्यर्थः । किमर्थमित्याह—गर्भकोष्ठविशुद्ध्यर्थम् आर्तेः पीडाया विस्मृत्यर्थं च । आर्तिरिति क्तिनन्तः । ततो मद्यपरिणामादनन्तरं लघुना पञ्चमूलेन बृहत्यादिना कृतां रूक्षां पेयां पिबेत् । अमद्यपा तु या स्त्री सा पेयां पिबेन्न तु मद्यम् । क साधिताम् । कल्के । किं सम्बन्धिनि । पाञ्चकोलके । पञ्चकोलस्यायं पाञ्चकोलकः त(स्मात् ? स्मिन् ।) पञ्चकोलकं कल्कीकृत्य तत्र पेयां साधितमित्यर्थः । तथा बिल्वादिपञ्चककाथे महापञ्चमूलकषाये साधितां पेयां पिबेदिति योज्यम् । (केन ? कैः) साधितां, तिलोद्दालकतण्डुलैः । उद्दालको व्रीहिविशेषः । मासैस्तुल्यानि दिनानि माससंख्या वासराः । यावन्तो मासा गर्भस्य तावन्त्यह्वानि । गर्भे निपतिते सति एवं पूर्वोद्दिष्टेन प्रकारेण पेयादिक्रमः । "मासतुल्यदिनानि त्रिंशद्दिनानि" इति **हाटकः** । किंभूतः क्रमः । लघुरस्नेहलवणः । तथा दीपनीयैः अग्निकृद्भिः मरिचचित्रकादिभिर्युतः । तथाविधस्तत्र क्रमो हितः । **संग्रहे**—"आमगर्भे तु पतिते मद्यानामन्यतमं

सामर्थ्यतः पाययेद् गर्भकोष्ठविशुद्ध्यर्थं आर्तिविस्मरणार्थं च । अमद्यपां पाचनीय-द्रव्योपहिताभिरस्नेहलवणाभिः सतिलाभिरुद्दालकादियवागूभिरुपाचरेद् यावन्तो मासास्तावन्त्यहानि" इति ॥

किमर्थमयं क्रम इत्याह—

**दोषधातुपरिक्लेदशोषार्थं विधिरित्ययम् ।**

दोषेत्यादि । दोषशब्देन पित्तकफावत्र गृह्येते वातस्य क्लेदाभावात् । दोषौ च धातवश्च तेषां परिक्लेदः तस्य शोषणाय अयं विधिरिति ।

**स्नेहान्नवस्तयश्चोर्ध्वं बल्यजीवनदीपनाः ॥ १३ ॥**

स्नेहेत्यादि । ऊर्ध्वम(धो? तो) दोषधातुपरिक्लेदशोषणादनन्तरं स्नेहान्नवस्तयो हिताः । स्नेहश्चतुर्विधः पाना(थै? दौ) हितः । अन्नं च स्निग्धं, वस्तयश्च स्निग्धा एवम् । न रूक्षाः वातकोपभयात् । किंभूताः स्नेहान्नवस्तयः । बल्यजीवनदीपनाः । बल्या (बलाय) हिताः । दीपना वह्नेः सन्धुक्षणकृतः । तथा जीवनाः ओजोवृद्धिकराः ॥

इदानीमुपविष्टकनागोदरयोर्गर्भयोर्हेतुलिङ्गौषधान्याह—

**सञ्जातसारे महति गर्भे योनिपरिस्रवात् ।**
**वृद्धिमप्राप्नुवन् गर्भः कोष्ठे तिष्ठति सस्फुरः ॥ १४ ॥**

**उपविष्टकमाहुस्तं वर्धते तेन नोदरम् ।**

सञ्जातेत्यादि । सञ्जातः सारः बलं यस्य गर्भस्य स सञ्जातसारः तस्मिन् । तथा महति प्रवृद्धे गर्भे सति गर्भिण्याः परिहा(रा? र्या)परिहाराद् योऽसौ योनेः परिस्रवः त(स्मिन्? स्मात्।) परिस्रव इति सामान्येन निर्देशात् कदाचिद्रक्तरूपः कदाचिदन्यादृशो वा । परिस्रवाच्च कारणाद् वृद्धिमप्राप्नुवन् गर्भः कोष्ठ एव तिष्ठति । यतो योनिपरिस्रवात्कारणाद् वायुः कुपितः पित्त (श्लेष्मणोः? श्लेष्माणौ) परिगृह्य गर्भस्य रसवहा नाडीः प्रतिपीड्यावतिष्ठते ततो नाड्यां दोषैः कुल्यायामिव तृणपत्रादिभिः प्रच्छन्नायां नाडीरोधेन

रसस्यासम्यग् वहनाद् वृद्ध्यभावो गर्भस्य । किंभूतः कोष्ठे तिष्ठति । सस्फुरः । स्फुरः स्फुरणम् । "अज्विधौ भयादीनामुपसंख्यानम्" (वा०) इत्यच् । "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इति ङित्त्वाद् गुणाभावः । सह स्फुरेण वर्तत इति सस्फुरः स्फुरणमात्रयुतः कोष्ठे तिष्ठति । वृद्धिक्षयरहित इव उपविशतीत्यर्थः । तं तथाविधं गर्भमुपविष्टकं उपविष्टकसंज्ञमाहुः । मुनय इति शेषः । तेन तथाभूतेन गर्भेण कोष्ठस्थितेन तस्या उदरं न वर्धते न वृद्धिं याति । (स?) गर्भस्यैवावृद्धेः । न हि यद्यस्य वृद्धौ वर्धते तदवृद्धौ तस्य वृद्धिः स्यात् । तथा हि चन्द्रवृद्धावेव (वनसमुदाय? समुद्र) वेलावृद्धिः । उपविष्टकावस्थश्च गर्भो न वर्धते । अतस्तत्कारणाभावादुदरस्यावृद्धिः ।

एवमुपविष्टकमुक्त्वा नागोदरमाह—

**शोकोपवासरूक्षाद्यैरथवा योन्यतिस्रवात् ॥ १५ ॥**

**वाते क्रुद्धे कृशः शुष्येद् गर्भो नागोदरं तु तत् ।**
**उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥ १६ ॥**

शोकेत्यादि । शोकोपवासरूक्षाद्यैः गर्भगर्भिण्याद्यपचयकारिभिः हेतुभिः वाते क्रुद्धे कुपिते अथवा योन्यतिस्रवाद् गर्भिण्याः कदाचिदुपचारेणात्यर्थं रक्तस्रुतिः स्यात् । तदानीं तस्या योन्यतिस्रावो जायते । तस्माद्योन्यतिस्रा-वात्कारणादपि पवने कुपिते गर्भः कृशः सम्पद्यते शुष्येदित्यत्र चशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः । न केवलं कृशो भवति शुष्येच्चेत्यर्थः । तत् तथारूपं नागोदरं स गर्भो नागोदरसंज्ञः । केषाञ्चिन्मतेनोपशुष्ककमिति च । अत्र नागोदरसंज्ञे गर्भे अन्तःस्थिते उदरं वृद्धमपि महदपि हीयते हानिं याति । स्फुरणं च चिरात् चिरेण भवति । उपविष्टकः प्राप्तपरिमाणात् परिहीयमान एव स्फुरति, नच कुक्षिवृद्धिकरः । नागोदरं तु परिहीयमाणं चिरात् स्पन्दते कुक्षिश्च वृद्धोऽपि परिहीयत इति भेदः । **संग्रहे**—"यस्याः पुनर्महति जातसारे गर्भे वर्ज्यावर्जनात् पुष्पदर्शनं स्यादन्यद्वा योनिस्रावणं तस्यास्तन्निमित्तं वायुः प्रकुपितः पित्तश्लेष्माणौ परिगृह्य गर्भस्य रसवहां

नाडीं प्रतिपद्यावतिष्ठते ततो नाड्यां दोषैः कुल्यायामिव तृणपत्रादिभिः प्रच्छन्नायां रसस्यासम्यग् वहनाद्गर्भो वृद्धिमप्राप्नुवन्नुपविशत्युपशुष्यति वा । तत्र यस्याः कादाचित्कावार्तवपरिस्रावावल्पौ दृश्येते सततं च गर्भः प्राप्तपरिमाणादपरिहीयमाण एव स्फुरति न च कुक्षिर्विवर्धते तमुपविष्टकमाचक्षते । यदा तु प्रतिमासं आर्तवं प्रत्यहं वा परिस्रावणं तथा परिहीयमाणो गर्भश्चिरात् किञ्चित् स्पन्दते कुक्षिश्च वृद्धोऽपि परिहीयते तदुपशुष्कं नागोदरं च । तौ तु मातुराहारतेजसाल्पेनाप्याय्यमानौ यदा पुष्टौ स्यातां तदा वर्षगणैरपि प्रमदा प्रसूयेत" इति । इन्दुः—"यस्याः पुनर्गर्भिण्या महति जातसारे गर्भे वर्ज्यावर्जनाद् योनिरार्तवं अन्यद् वा किञ्चित्स्रवति तस्या योनिस्रुतिनिमित्तं वायुः कुपितः सन् पित्तश्लेष्माणौ परिगृह्य या तु नाडी मातुराहाररसं गर्भस्य वहति तां नाडीं प्रतिपीड्य तिष्ठति । ततस्तया तद्रुद्धया नाड्या कुल्ययेव तृणादिच्छन्नया केदारो, गर्भो वृद्धिमप्राप्नुवन् उपविशत्युपशुष्यति वा । तत्र द्वौ भेदौ । एको वृद्ध्यप्राप्तिः । द्वितीय उपशोषः । प्रथमे कादाचित्केन स्रावेण गर्भो न परिहीयते नापि वर्धते स्फुरति च तमुपविष्टकमित्याचक्षत आचार्याः । द्वितीये त्वतिस्रावाद् वृद्धोऽपि गर्भः परिहीयते। चिरात् स्तोकं च स्पन्दते कुक्षिश्च वृद्धोऽपि परिहीयते। तं गर्भमुपशुष्कनागोदराभ्यामाचक्षते । तौ चोपविष्टकोपशुष्ककौ मातुराहाररसेन आप्याय्यमानौ क्रमेण यदा पुष्टौ स्यातां तदा केशदशनादियुक्तौ बहुभिरपि वर्षैः प्रमदा प्रसूयेत" इति ।

तच्चिकित्सा तूभयोस्सामान्येनोच्यते—

**तयोर्बृंहणवातघ्नमधुरद्रव्यसंस्कृतैः ।**
**घृतक्षीररसैस्तृप्तिरामगर्भांश्च खादयेत् ॥ १७ ॥**
**तैरेव च सुतृप्तायाः क्षोभणं यानवाहनैः ।**

तयोरित्यादि । तयोरुपविष्टकनागोदरयोर्गर्भयोः घृतक्षीरमांसरसैस्तृप्तिः, गर्भिण्याः कार्येति शेषः । किंभूतैः । बृंहणवातघ्नमधुरद्रव्यैः संस्कृतैः सिद्धैः ।

१. 'प्रतिपीड्याव' । २. शुष्ककं ना । ३. तां केशदशनादियुक्तौ तदा । ४. रसाररसं गर्भ । ५. 'हारतेजसा स्वल्पेनाप्याय्य' इति मुद्रिते ।

बृंहणानि च तानि वातघ्नानि मधुराणि च एवंभूतानि द्रव्याणि द्राक्षाशर्करादीनि, न तु व्यस्तानि बृंहणानि (वातघ्नानि मधुराणि च । तत्र केवलबृंहणानि प्रियङ्गुप्रभृतीनि न तु वातघ्नानि । वातघ्नानि च बृंहणानि न तु मधुररसानि । यथा नागरादीनि । मधुराणि च वातघ्नानि नापि बृंहणानि) यथा तण्डुलीयकमसूरादीनि । तदेतैर्व्यस्तगुणैः संस्कृतैर्घृतादिभिस्तृप्तिर्न कार्या । किंतर्हि । समस्तबृंहणादिगुणयुक्तैर्द्रव्यैः संस्कृतैरिति बोध्यम् । तथा हि **संग्रहे**ऽभिजगे—"तयोर्जीवनीयबृंहणीयमधुरौषधसिद्धानां सर्पिषामुपयोगस्तथा पयसां रसानामामगर्भाणां च गर्भवृद्धिकरः" । इति । **हाटको**ऽपि—"बृंहणादिसमस्तगुणयुक्तैर्द्रव्यैः संस्कृतैः घृतादिभिस्तृप्तिः" इत्याह । तथाहि तैरेव घृतादिभिः (सम्भो ? समं भो)जनं कार्यम् । तथा हि तद् गर्भपुष्ट्ये । तां गर्भिणीम् आमगर्भान् खादयेत्, वैद्य इति शेषः । आमगर्भं खादन्त्याः कदाचिज्जुगुप्सा स्यात् । अतो गर्भगर्भिण्योः व्यापदो भवेयुरिति ण्यन्तोऽत्र निर्दिष्टः । वैद्यो हि तथा तां (प्रयुज्य ? प्रयुक्त्या) खाद(यति ? येत्) यथासौ न जुगुप्सेत । आमगर्भा अपरिपूर्णगर्भा उच्यन्ते । **हाटकस्तु**—"आमगर्भानचिरजातान् प्राणिनः असम्पूर्णान् वा प्राणिनः खादयेत्" इत्याह । तथा हि तैरेव बृंहणादिद्रव्यसंस्कृतैः (संस्कृताभिः ?) आमगर्भैश्च (सुभिक्षायाः ?) सुतृप्तायाः क्षोभणं कार्यम् । कैः यानै रथादिभिः । वाहनैः गजतुरगादिभिः, (गर्भान् ?) तत्रारोप्य तां गर्भिणीं वेगेन नयेदित्यर्थः ।

अथ लीनाख्यस्य गर्भस्य चिकित्सामाह—

**लीनाख्ये निस्फुरे श्येनगोमत्स्योत्क्रोशबर्हिजाः ॥ १८ ॥**

**रसा बहुघृता देया माषमूलकजा अपि ।**
**बालबिल्वं तिलान् माषान् सक्तूंश्च पयसा पिबेत् ॥ १९ ॥**
**समेद्यमांसं मधु वा कट्वभ्यङ्गं च शीलयेत् ।**

लीनाख्य इत्यादि । 'अस्य उपविष्टकव्याख्यानेनैव हेतुलक्षणयोरुक्तत्वाद्यदेव निस्फुरणत्वं विशिष्टं तदेवेह तन्त्रकृतोक्तम् । (अन्य ? न्ये नागोदरस्योत्पत्तिरित्यसद्गुरवः ?) ' **अरुणो**ऽप्याह—"अस्य उपविष्टकनागो-

दराभ्यामेव हेतुलक्षणयोरुक्तत्वाद् यदेव निस्फुरणत्वादि विशेषान्तरं तदेवेह तन्त्रकृतोक्तम्" इति । संग्रहे तु पपाठ "यस्याः पुनर्वातोपसृष्टस्रोतसो[1] लीनो गर्भः प्रस्तब्धो[2] न स्पन्दते तं लीनमित्याहुः" इति । इन्दुः—"लीनो नाम गर्भो यो गर्भिण्या वातोपसृष्टस्रोतसो[3] लीनो न स्पन्दते" इति । तत्र लीनाख्ये गर्भे सति गर्भिण्याः श्येनादिजाः रसाः बहुघृता देयाः । आदिशब्देन तित्तिरि-कुक्कुटादीनां ग्रहणम् । तथा माषमूलकजा रसा बहुघृता दातव्याः । संग्रहे—"तत्र श्येनोत्क्रोशमत्स्यगोशिखिकुक्कुटतित्तिरीणाम्[4] अन्यतमस्य रसेन भूरिसर्पिष्केण माषयूषेण वा घृताढ्येन मूलकयूषेण वा रक्तशाल्योदनं भोजयेत्" इति । तथा सात्म्यादिवशाद् बालबिल्वादीन् क्षीरेण पिबेत् । संग्रहे—"सक्तून् वा तिलमाषयूषबिल्वशलाटुयुक्तान[5] पयसा पाययेत्" इति । बिल्वशलाटु बालबिल्वम् । तथा मे(ध्य? द्य)मांसं मधु वा मेदुरमांसेन सह मार्द्वीकं वा पिबेत् । मधु मार्द्वीकम् । संग्रहे—"मे(ध्य? द्य)मांसोपदंशं मार्द्वीकं पाययेत्" इति । तथा कट्यभ्यङ्गं शीलयेत् । अभ्यसेत् । संग्रहे—"तैलेन चाभीक्ष्णमुदरवंक्षणोरुकटीपार्श्वपृष्ठान्यभ्यज्यात्" इति ।

हर्षयेत् सततं चैनामेवं गर्भः प्रवर्धते ॥ २० ॥
पुष्टोऽन्यथा वर्षगणैः कृच्छ्राज्जायेत नैव वा ।

सततं मुहुर्मुहुश्चैनाम् उपविष्टकनागोदरलीनाख्यगर्भवतीं हर्षयेत् । एवं इतिकर्तव्यतया कृतया गर्भः प्रवर्धते वृद्धिं याति । अन्यथा अन्येन प्रकारेण पूर्वोक्तविपर्ययेन रूक्षाद्यात्मना सेवितेन मातुराहाररसेन बहुवर्षैः पुष्टः कृच्छ्राज्जायेत कृच्छ्रेण योनितो निष्क्रामेत् । नैवेति । यावज्जीवं गर्भिण्याः कुक्षावेवावतिष्ठते ।

उदावर्तं तु गर्भिण्याः स्नेहैराशुतरां जयेत् ॥ २१ ॥
योग्यैश्च वस्तिभिर्हन्यात् सगर्भां स हि गर्भिणीम् ।

---

१. 'सि ली' । २. 'प्रसुप्तो न' । ३. 'सि न' इति मुद्रिते । ४. 'शगोमत्स्यगोधाशिखि' । ५. 'माषबिल्व' इति मुद्रिते ।

उदावर्तमित्यादि । उदावर्तः अर्शसि वक्ष्यमाणलक्षणः । गर्भिण्या यदुदावर्ताख्यो व्याधिः स्यात् तं स्नेहैश्चतुर्भिः यथायोग्यौषधसाधितैः पानादिना सेवितैराशुतरमतित्वरितं जयेत् । तथा योग्यैस्तत्कालोचितैर्वस्तिभिश्चानुवासनैर्जयेत् । 'योग्यैरिति योगवस्तिभि'रिति पाठ्ये । गर्भिण्या वर्ज्येषु 'वस्तिमामासतोऽष्टमात्' इति प्रागुक्तमपि तदनुज्ञातमात्ययिकत्वाद् व्याधेः । हि यस्मात्स उदावर्तः उपेक्षितो गर्भेण सह गर्भिणीं हन्यात् । अतस्तमाशुतरं जयेत् ।

मूढगर्भचिकित्सामाह—

**गर्भेऽतिदोषोपचयादपथ्यैर्दैवतोऽपि वा ॥ २२ ॥**

**मृतेऽन्तरुदरं शीतं स्तब्धं ध्मातं भृशव्यथम् ।**

**गर्भास्पन्दो भ्रमस्तृष्णा कृच्छ्रादुच्छ्वसनं क्लमः ॥ २३ ॥**

**अरतिः स्रस्तनेत्रत्वमावीनामसमुद्भवः ।**

गर्भ इत्यादि । दोषाणां वातादीनामुपचयः प्रवृद्धत्वम् । अतिशयेन दोषोपचयोऽतिदोषोपचयः, तस्माद्धेतोः अन्तः उदरमध्ये गर्भे मृते सति अपथ्यैः स्वभावमात्राकालादिविरुद्धस्वभावैः वा अन्तर्मृते । अथवा दैवाद् अन्यजन्मार्जितशुभाशुभकर्मवशादन्तर्मृते सति गर्भे गर्भिण्या जठरं शीतादिलक्षणम् । **संग्रहे**—"यस्याः पुनरतिमात्रदोषोपचयाद्यथोक्तैर्व्यवायादिभिरन्यैर्वा व्याधिभिः पूर्वोपचितेन वा जनन्यपत्ययोः कर्मणा" इत्यादि । स्तब्धं स्तिमितम् । गर्भास्पन्दः न स्पन्दते गर्भः । कृच्छ्रादुच्छ्वसनं ऊर्ध्वश्वसनम् । तथा क्लमो ग्लानिः । तथा अरतिः स्नानाशनशयनादिष्वनवस्थितत्वं चेतसः । स्रस्ते नेत्रे यस्याः तस्या भावः स्रस्तनेत्रत्वम् । स्रस्ते स्थानाच्च्युते इव । तथा आवीनां प्रसवकालवेदनानाम् असमुद्भवोऽनुत्पादः ।

**तस्याः कोष्णाम्बुसिक्तायाः पिष्ट्वा योनिं प्रलेपयेत् ॥ २४ ॥**

**गुडं किण्वं सलवणं तथान्तः पूरयेन्मुहुः ।**

**घृतेन कल्कीकृतया शाल्मल्यतसिपिच्छया ॥ २५ ॥**

---

१. 'कैर्वा व्य' इति मुद्रितपाठः ।

मन्त्रैर्योग्यैर्जरायूक्तैर्मूढगर्भो न चेत् पतेत् ।
अथापृच्छ्येश्वरं वैद्यो यत्नेनाशु तमाहरेत् ॥ २६ ॥
हस्तमभ्यज्य योनिं च साज्यशाल्मलिपिच्छया ।
हस्तेन शक्यं तेनैव

तस्या अन्तर्मृतगर्भाया ईषदुष्णजलसिक्ताया योनिं प्रलेपयेत्प्रदेहयेत् । गुडादिकं पिष्ट्वा सामर्थ्याद् गुडोदकेनैव लेपयेदिति योज्यम् । **हाटको**ऽपि—"गुडादिकं पिष्ट्वा योनौ लेपयेदि"त्याह । किण्वं मद्यस्याधोभागः । तथान्तः पूरयेत् । शाल्मल्यतसिपिच्छयेति संबन्धनीयम् । योनेः प्रकृतत्वात्तस्या अन्तरभ्यन्तरम् इत्येव हि । अतसी ചെറുകായാവ് । कीदृश्या पिच्छया । घृतेन कल्कीकृतया पिष्टया । एवं योनेरभ्यन्तरं मुहुर्मुहुः पूरयित्वा अनन्तरं मूढगर्भपातनार्थं मन्त्रान् सिद्धान् प्रयोजयेत् । तथा जरायुपतने कथितान् प्रयोगान् योजयेत् । मन्त्रैः **संग्रहो**क्तैः—"क्षितिर्जल"मित्यादिभिः । अथर्ववेदोक्तैः जरा(य्व)पतनोक्तैश्च प्रयोगैश्च मूढगर्भो यदि न पतेत् अथ अनन्तरं ईश्वरं नृपमापृच्छ्य तत आज्ञां गृहीत्वा । यथा मृतायां अयशसा योगो न भवतीति ईश्वरमापृच्छ्येत्युक्तम् । तं मूढगर्भं आशु गर्भिण्या आहरेदाकर्षेत् । कथमाहरेत् । हस्तमभ्यज्य हस्तं लेपयित्वा । केन । शाल्मलिपिच्छया आज्यसहितया शाल्मल्याः पिच्छया । तया हस्तं योनिं चाभ्यज्य यत्नेन आशु मूढगर्भमाहरेत् । "न तु क्षणमप्युपेक्षेत गर्भशल्यम् । तद्धि निरुच्छ्वासीकृत्य जननीमाशु हन्यात्" इति **संग्रहे** । अस्मिन्नपि वक्ष्यति—"न चोपेक्ष्यः क्षणमप्यस्तजीवितम्" इति । अन्तर्मृतगर्भो मूढगर्भ उच्यते । तथा च **संग्रहे**—"तं तु गर्भं कदाचिदसम्यगपत्यपथमनेकधा प्रतिपन्नं विगुणेन वायुना पीडितं मोहितश्च मूढगर्भमित्याहुः" इति । आपृच्छ्येश्वरमिति । **संग्रहे**ऽप्युक्तं—"न ह्यतः कष्टतममस्ति शस्त्रकर्म यतो योनियकृत्प्लीहान्त्रगर्भाशयादीनां मध्ये ता(न्यर ? ननु)पहिंसतास्पर्श(तः ? वता)-शस्त्रमवचार्यम्। उत्कर्षापकर्षणव्यावर्तनोत्कर्तनच्छेदनभेदनपीडनर्जुकरणानि चैकेन

१. 'उत्कर्षणव्यावर्तनोत्कर्तन' इति मुद्रिते ।

पाणिना कार्याणि । तस्मादीश्वरमापृच्छ्य परं च यत्नमास्थाय तद्विद्यसहितस्तमुपक्रमेत् । अक्रियायां ध्रुवो मृत्युः” इत्युक्त्वा “तथोदराश्मरीप्रभृतीनपि” इति । हस्तेन शक्यं तेनैव हस्तेनाक्रष्टुं शक्यं गर्भं तेनैव हस्तेन साज्यशाल्मलिपिच्छयाक्तेन समाकर्षेत् ।

**गात्रं च विषमं स्थितम् ॥ २७ ॥**

**आञ्छनोत्पीडसम्पीडविक्षेपोत्क्षेपणादिभिः ।**
**अनुलोम्य समाकर्षेद्योनिं प्रत्यार्जवागतम् ॥ २८ ॥**

गात्रं चेत्यादि । गात्रं च गर्भस्य विषमं कृत्वा स्थितमयथामार्गेण अवस्थितमाञ्छनादिभिरनुलोम्य ऋजु कृत्वा योनिं प्रति योन्यभिमुखमार्जवेन ऋजुमार्गेणागतं सन्तं हस्तेन समाकर्षेत् । आञ्छनं दीर्घीकरणं दीर्घतया स्थापनम् । उत्पीडनमूर्ध्वं पीडनम् । सम्पीडः समन्तात्पीडनम् । विक्षेपो विशेषेणान्यत्र प्रेरणम् । उत्क्षेपणमूर्ध्वं प्रेरणम् । आदिग्रहणादेवंप्रकारैरन्यैरपि स्वबुद्धिपरिकल्पितैः । सारकृदप्याह—“आञ्छनमधोदेशं प्रति हस्ततलैः स्पर्शः । उत्पीडनमूर्ध्वमुखं स्पर्शः । समन्तात्पीडनं सम्पीडः । विक्षेपो विविधः क्षेपः । उत्क्षेपो गर्भिण्या उपरि क्षेपः” इति । पाठ्येऽप्युक्तम्—आञ्छनं ഉഴിക. उत्पीडनं മേൽനോക്കി അമുക്കുക. सम्पीडनं കീഴ്നോക്കി അമുക്കുക. विक्षेपः കലുക്കുക. उत्क्षेपः നിരത്തിക്കലുക്കുക. इति ।

इदानीं शस्त्रोपायसाध्यां मूढगर्भचिकित्सामाह—

**हस्तपादशिरोभिर्यो योनिं भुग्नः प्रपद्यते ।**
**पादेन योनिमेकेन भुग्नोऽन्येन गुदं च यः २९ ॥**
**विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः ।**

हस्तेत्यादि । यस्तुल्यकालमेव हस्तपादशिरोभिः हस्तेन पादेन शिरसा योनिं प्रति भुग्नः कुटिलः प्रतिपद्यते तथा कदाचिद्धस्तेन कदाचित्पादेन कदाचिच्छिरसा योनिं प्रति भुग्नः प्रपद्यते स एको विष्कम्भो नाम मूढगर्भः । पादेनैकेन योनिं द्वितीयेन पादेन गुदं भुग्नः सन् यो मूढगर्भः प्रपद्यते सोऽपरो

विष्कम्भः । तौ हस्तेनाकष्टुमशक्यत्वाच्छस्त्रदारणमर्हतः । तयोः शस्त्रदारणं कार्यमित्यर्थः ॥

अत एवाह—

**मण्डलाङ्गुलिशस्त्राभ्यां तत्र कर्म प्रशस्यते ॥ ३० ॥**

**वृद्धिपत्रं हि तीक्ष्णाग्रं न योनाववचारयेत् ।**

मण्डलेत्यादि । मण्डलशब्देन मण्डलाग्रमुपलक्ष्यते । मण्डलं च अङ्गुलिशस्त्रं चेति द्वन्द्वः । अथवा मण्डलं चाङ्गुलिश्च मण्डलाङ्गुली । मण्डलशब्देन मण्डलाग्रं शस्त्रमुपलक्ष्यते अङ्गुलिशब्देन चाङ्गुलिशस्त्रकम् । ते नामनी ययोः शस्त्रयोस्ते मण्डलाङ्गुलिशस्त्रे शस्त्रविध्यध्यायोक्ते ताभ्यां तत्र तयोर्विष्कम्भाख्ययोर्गर्भयोः कर्म प्रशस्यते । ताभ्यां शस्त्राभ्यां दारणमेतयोः कार्यमित्यर्थः । वृद्धिपत्रं शस्त्रं यस्मात्तीक्ष्णाग्रमतः तद् योनौ नावचारयेत । तेन तत्र विदारणं न विधेयं प्रत्यवायभयात् ।



दारणं यथा विधेयं तथाह—

**पूर्वं शिरःकपालानि दारयित्वा विशोधयेत् ॥ ३१ ॥**

**कक्षोरस्तालुचिबुके प्रदेशेऽन्यतमे ततः ।**
**समालम्ब्य दृढं कर्षेत् कुशलो गर्भशङ्कुना ॥ ३२ ॥**

**अभिन्नशिरसं त्वक्षिकूटयोर्गण्डयोरपि ।**

पूर्वमित्यादि । संग्रहे तूक्तं—"त्रिविधः सङ्गो भवति शिरस्यंसे जघने वा" इति । तान् क्रमेणाह पूर्वमित्यादिना—पूर्वं शिरःसम्बन्धीनि कपालानि शोधयेत् । किं कृत्वा । शस्त्रेण दारयित्वा । शिरोदारणेन विशोधनेन च अल्पपरिमाणः स्यात् । विशोधनं कफनिःसरणार्थं पीडनम् । एवं शिरःकपालानि दारयित्वा गर्भिणीकोष्ठाद् बाह्यतः कृत्वा ततोऽनन्तरं कक्षोरस्तालुचिबुकान्यतमे तद्विषये समालम्ब्य तं गर्भं गृहीत्वा चिबुके तालुन्युरसि कक्ष्यां वा अपहरेदिति । अभिन्नशिरसं यस्य युक्तिवशात्कपालान्यविदारितानि तं गर्भमक्षिकूटयोर्गण्डयोर्वा गर्भशङ्कुना दृढं समालम्ब्य कर्षेत् । अरुणेनाप्युक्तं—"अभिन्न-

शिरसम्विदारितोत्तमाङ्गं पुनर्गर्भमक्षिकूटयोस्तथा गण्डयोस्तद्विषयान्यतमे प्रदेशे। कदाचिदक्षिकूटप्रदेशे कदाचिद् गण्डप्रदेशे समालम्ब्य दृढं गर्भशङ्कुना गृहीत्वा कर्षेत्।" इति।

**बाहुं छित्त्वांससक्तस्य वाताध्मातोदरस्य तु ॥ ३३ ॥**

**विदार्य कोष्ठमान्त्राणि बहिर्वा संनिरस्य च।**

बाहुमित्यादि। अंसाभ्यां सक्तोंऽससक्तः। तस्य बाहुं छित्वा आकर्षणं कुर्यात्। वामेनांसेन सक्तस्य वामं बाहुं छित्वा दक्षिणेनांसेन सक्तस्य दक्षिणमंसं छित्वा इत्यर्थः। **संग्रहे**—"अंससक्तस्य अंसप्रदेशे बाहुं छित्वा" इति। वातेन आध्मातं दृतिवत्पूरितमुदरं यस्य मूढगर्भस्यासौ वाताध्मातोदरः। तस्य कोष्ठमामपक्वाशयाश्रयं विदार्य पाटयित्वा आन्त्राणि बहिः सम्यङ् निरस्य बाह्यतः (क्षिप्र? प्रक्षिप्य) शिथिलीभूतमाकर्षेत्। **संग्रहे**—"दृतेरिवाध्मातस्य वातपूर्णमुदरं विदार्य निरस्यान्त्राणि शिथिलीभूतमाहरेत्" इति।

**कटीसक्तस्य तद्वच्च तत्कपालानि दारयेत् ॥ ३४ ॥**

कटीत्यादि। कटीसक्तस्येति तृतीयासमासः। तद्वच्चेति। तेन वाताध्मातोदरेण तुल्यं कर्म दारणात्मकं कृत्वा। तत्कपालानि तस्याः कट्याः कपालानि खण्डानि दारयेत्। कटीकपालं ൭ൗ൦ൗ इति **पाठये**॥

एवं विशेषेण गर्भस्याकर्षणमुक्त्वा सामान्येन मूढगर्भचिकित्सामाह—

**यद्यद्वायुवशादङ्गं सज्जेद्गर्भस्य खण्डशः।**
**तत्तच्छित्त्वा हरेत् सम्यग् रक्षेन्नारीं च यत्नतः ॥ ३५ ॥**

यद्यदित्यादि। यद्यदङ्गं मूढगर्भस्य वायुवशात्सजेत्संश्लिष्येत् तत्तदङ्गं खण्डशो नैकशः छित्त्वा दारयित्वा सम्यगाहरेत्। किलैक(हे? वे)लया सकलगर्भभेदादन्तःस्थितमूढगर्भाया नार्या अपि बलवच्छस्त्रपाताद्विघातः सम्भाव्यत एवेति खण्डशः इत्युक्तम्। अत एवाह---नारीं च यत्नात् तात्पर्यं कृत्वा रक्षेत्। यथा नार्या अङ्गं किञ्चिदपि (वि? न) छिद्यते तथा विधेयमित्यर्थः। रक्षन्निति वा पाठः।

**गर्भस्य हि गतिं चित्रां करोति त्रिगुणोऽनिलः ।**
**तत्रानल्पमतिस्तस्मादवस्थापेक्षमाचरेत् ॥ ३६ ॥**

गर्भस्येत्यादि । यस्माद्विगुणोऽनिलः प्रकुपितः पवनो गर्भस्य विचित्रां नानाविधां गतिमवस्थितिं करोति तस्मात् अनल्पमतिर्महाबुद्धिर्वैद्यः । स तत्र तस्यां गतावस्थापेक्षमाचरेत् । मूढगर्भं प्रत्यनुक्तमप्यवस्थितं कर्म कुर्यादित्यर्थः ॥

अन्तर्मृतलक्षणं सकलं दृष्ट्वा भिषजा क्रिया कार्येति दर्शयति—

**छिन्द्याद् गर्भं न जीवन्तं मातरं स हि मारयेत् ।**
**सहात्मना न चोपेक्ष्यः क्षणमप्यस्तजीवितः ॥ ३७ ॥**

छिन्द्यादित्यादि । जीवन्तं गर्भं न छिन्द्यात् । गर्भिण्या अन्तर्मृत-लक्षणानभिज्ञो वैद्याभिमानी यः स तं गर्भं न विदारयेत् । कुतो हेतोरित्याह । यस्मात्स गर्भः छिन्नो मातरमात्मना सह मारयेत् । मातर-मात्मना सह छिन्नो गर्भो व्यापादयेदित्यर्थः । न त्वस्तजीवितो गर्भिण्या अन्तर्मृतो गर्भः क्षणमपि मुहूर्तमात्रमपि उपेक्ष्यः । अपि तु द्रागेव तस्य प्रतिक्रियां कुर्यात् । **संग्रहे**—"न तु क्षणमप्युपेक्षेत गर्भशल्यं तद्धि निरु-च्छ्वासीकृत्याशु जननीं हन्यात् । सचेतनश्च गर्भः शस्त्रेण विदार्यमाणो विषम-मङ्गानि क्षिपन्" इति । **इन्दुः**—"शल्यभूतं मृतगर्भं क्षणमपि भिषग् न चोपेक्षेत । तद्धि गर्भशल्यं जनन्या उच्छ्वासरोधनं कृत्वा तां हन्यात् । अज्ञानाच्च सचेतनोऽपि गर्भः शस्त्रेण विदार्यमाणो विषमं कृत्वा अङ्गानि निरुच्छ्वासीकृत्य जननीं हन्यादिति सम्बन्धः ।" इति ।

इदानीमुपेक्ष्यां मूढगर्भां स्त्रियमाह—

**योनिसंवरणभ्रंशमर्कलश्वासपीडिताम् ।**
**पूत्युद्गारां हिमाङ्गीं च मूढगर्भां परित्यजेत् ॥ ३८ ॥**

योनिसंवरणेत्यादि । योनेः संवरणं संवृतत्वम् । तथा तस्या एव योनेर्भ्रंशः स्वस्थानाच्च्यवनम् । तथा मर्कलः शिरोवस्तिकोष्ठशूललक्षणः

१. 'मकल' इति मुद्रिते ।

प्रागुक्तव्याधिः । तथा श्वासः । तैर्योनिसंवरणादिभिः पीडितां तथा पूत्युद्गारां दुर्गन्ध्युद्गारां तथा हिमाङ्गीं शीतगात्रीं एवंविधां मूढगर्भां त्यजेत् नोपक्रमेत् ॥

**अथापतन्तीमपरां पातयेत् पूर्ववद् भिषक् ।**
**एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा ॥ ३९ ॥**

**दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः ।**
**योनिर्मृदु भवेत्तेन शूलं चास्याः प्रशाम्यति ॥ ४० ॥**

अथ मूढगर्भाहरणानन्तरं अपरां जरायुसंज्ञां अपतन्तीं अनिष्क्रामन्तीं पूर्ववत्पातयेत् । पूर्वेण तुल्यं पूर्वोक्तेन अपरापातनोक्तेन विधिना 'हिरण्यपुष्पीमूलं च' इत्यादिना इत्यर्थः । एवमनन्तरोक्तेन विधिना निर्हृतं शल्यं गर्भजरायुसंज्ञं यस्यास्तां तु स्त्रियमुष्णेन जलेन सिञ्चेत् । ततः स्नानादनन्तरं अभ्यक्तशरीरायै स्त्रियै योनौ स्नेहपिचुं दद्यात् । तेन स्नेहपिचुना अस्या योषितो योनिर्मृदु भवेत् । शूलं रुजा प्रशाम्यति ॥

**दीप्यकातिविषारास्नाहिङ्ग्वेलापञ्चकोलकान् ।**
**चूर्णं स्नेहेन कल्कं वा क्वाथं वा पाययेत्ततः ॥ ४१ ॥**

**कटुकातिविषापाठाशाकत्वग्घिङ्गुतेजनीः ।**
**तद्वच्च दोषस्यन्दार्थं वेदनोपशमाय च ॥ ४२ ॥**

**त्रिरात्रमेवं सप्ताहं स्नेहमेव ततः पिबेत् ।**
**सायं पिबेदरिष्टं वा तथा सुकृतमासवम् ॥ ४३ ॥**

**शिरीषककुभक्वाथपिचून् योनौ विनिक्षिपेत् ।**
**उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ॥ ४४ ॥**

ततः स्नानाभ्यङ्गादनन्तरं दीप्यकादीनां दशानां समानां चूर्णं स्नेहेन घृताद्यन्यतमेन प्रकृत्यादिवशाद् यथायोग्येन स्त्रियं पाययेत् । कल्कं वा दीप्यकादेर्जलेन पिष्ट्वा स्नेहेन तां पाययेत् । तथा दीप्यकादेरेव क्वाथं पाययेत् । तथा कटुकातिविषादीनि तद्वद्दीप्यकादिवत् चूर्णीकृत्य स्नेहेन कल्कीकृत्य वा

काथीकृत्य वा तां स्त्रियं पाययेत् । शाकत्वगिति । शाकं खर-च्छदं तस्य त्वक् । शाकं च त्वक् चेति केचित् । तेजनी तेजोवती ചെറുപ്പുന്നാങ്ങി । किमर्थं दोषस्यन्दार्थम् । दोषस्य रक्तस्य पिच्छिलस्य स्यन्दः स्रवणं तदर्थं पाययेत् । दोषस्य रक्तादेः इति वा । इन्दुरपि---"दोषस्य रक्तपिच्छादेः" इत्याह । तथा वेदनायाः पीडायाः उपशान्त्यर्थं च । त्रिरात्रमेवं मूढगर्भाकर्षणदिनात् प्रभृति कार्यम् । तत्र त्रिरात्रादनन्तरं सप्ताहं स्नेहमेव पिबेद् न रूक्षौषधमित्येवकारोऽवधारणार्थो द्योतयति । प्रातः स्नेहे पीते सायं दिनान्ते अरिष्टं पूर्वोक्तलक्षणं पिबेत् । तथा शोभनं कृत्वा कृतं निष्पादितं आसवं मद्यविशेषं पिबेत् । तथा शिरीषककुभकाथ-सिक्तान् पिचून् विकेशिकाप्रायान् कार्पासादिमयान् योनौ निक्षिपेत् । उप-द्रवाः ज्वरादयश्चान्ये ये भवेयुः तानुपद्रवान् यथास्वं उपक्रमैरुपाचरेत् । यस्य ज्वरादेर्य आत्मीय उपक्रमः तेन तमुपक्रमेदित्यर्थः ॥

एतच्च पूर्वोक्तमासेभ्यानन्तरं यत् कर्तव्यं निर्हृतमूढगर्भायाः स्त्रिया-स्तदाह—

**पयो वातहरैः सिद्धं दशाहं भोजने हितम् ।**
**रसो दशाहं च परं लघुपथ्याल्पभोजना ॥ ४५ ॥**

**स्वेदाभ्यङ्गपरा स्नेहान् बलातैलादिकान् भजेत् ।**
**ऊर्ध्वं चतुर्भ्यो मासेभ्यः सा क्रमेण सुखानि च ॥ ४६ ॥**

पयः क्षीरमनन्तरं तस्यै दशाहं भोजने हितम् । किंभूतम् । वातहरै रास्नादिभिः सिद्धं शृतम् । दशाहादनन्तरं द्वितीयं दशाहं रसो भोजने हितः अर्थः----त्रिरात्रमौषधं, स्नेहः सप्तरात्रं, दशाहं पयः, दशाहं मांसरस इति क्रमः । परं ततोऽनन्तरं सा स्त्री चतुर्थमासान्तं यावद् लघुप-थ्याल्पभोजना तथा स्वेदाभ्यङ्गपरा तत्प्रधाना सती स्नेहान् बलातैलादिकान् वातव्याधिनिर्दिष्टान् भजेत् । ऊर्ध्वमनन्तरं चतुर्भ्यो मासेभ्यः । पञ्चमा-न्मासात्प्रभृति सा निष्क्रान्तमूढगर्भा स्त्री क्रमेण न तु सहसा यथेष्टानि सुखानि अन्नपानाहारविहाररूपाणि भजेत् ॥

स्नेहान् भजेदित्युक्तप्रसङ्गे बलातैलमुच्यते—

बलामूलकषायस्य भागाः षट् पयसस्तथा ।
यवकोलकुलत्थानां दशमूलस्य चैकतः ॥ ४७ ॥

निःक्वाथभागो भागश्च तैलस्य च चतुर्दशः ।
द्विमेदादारुमञ्जिष्ठाकाकोलीद्वयचन्दनैः ॥ ४८ ॥

सारिवाकुष्ठतगरजीवकर्षभसैन्धवैः ।
कालानुसार्याशैलेयवचागरुपुनर्नवैः ॥ ४९ ॥

अश्वगन्धावरीक्षीरशुक्लायष्टीवरारसैः ।
शताह्वासूर्पपर्ण्येलात्वक्पत्रैः श्लक्ष्णकल्कितैः ॥ ५० ॥

पक्वं मृद्वग्निना तैलं सर्ववातविकारजित् ।
सूतिकाबालमर्मास्थिक्षतक्षीणेषु पूजितम् ॥ ५१ ॥

ज्वरगुल्मग्रहोन्मादमूत्राघातान्त्रवृद्धिजित् ।
धन्वन्तरेरभिमतं योनिरोगक्षयापहम् ॥ ५२ ॥

बलेत्यादि । बलाया मूलानि तेषां कषायः क्वाथः तस्य भागाः षट् । तैलैकभागापेक्षयैतद् बोध्यम् । पयसस्तथा क्षीरस्य षड् भागाः । एवं द्वादश । यवकोलकुलत्थानां दशमूलस्य चैकत इति । एकत्र क्वथितानां निःक्वाथभाग एक इत्यर्थः । एवं त्रयोदश भागा भवन्ति । तैलस्य चतुर्दशो भागः । चतुर्दशानां पूरणः 'तस्य पूरणे डट्' इति डट् । एतदेव स्पष्टीक्रियते शिष्यहितार्थम्—यदा षोडशपलानि तैलस्य श्रपयितव्यानि तदा बलामूलपलानि चतुर्विंशतिर्भवन्ति । जलपलशतानि त्रीणि चतुरशीत्यधिकानि । ततश्चतुर्थांशेन षण्णवतिः (क्वाथपलानि । क्षीरपलानि षण्णवतिः ।) यवादीनां पलानि चत्वारि । पानीयपलानि चतुःषष्टिः । ततः षोडशपलानि कषायस्य इति । मेदादिभिः समैः तैलाच्चतुर्थभागेन सम्मितैः सूक्ष्मं पिष्ट्वा कल्कीकृतैः । कालानुसारी उत्पलशारिबेति शारिबाविशेषः । उशीरमिति केचित् ।

---

१. 'शूर्पपर्ण्येला इति मुद्रिते ।

शैलेयं चेलेयकम् । क्षीरशुक्ला क्षीरविदारी । वरा त्रिफला । रसो बोलः । 'रसो निर्यासः सर्जरस' इति **पाठ्ये** । पत्रं गन्धपत्रम् । सूप्यपर्णीति मुद्गपर्णी माषपर्णी च । एवं द्वात्रिंशदावापद्रव्याणि । योऽयं यवकोलकुलत्थदशमूलै-रेको भागः परिकल्पितस्तत्र यवकोलकुलत्थानां त्रयो भागाः । दशमूलस्य चतुर्थो भागः । दशमूलसमुदायस्य यवाद्यन्यतमसमत्वं पृथङ्निर्देशात् । बलामूला-दीनां क्वाथ्यद्रव्याणां जलात् षोडशांशं मानं द्रव्याच्चतुर्गुणः क्वाथशेषः । द्वि-मेदादीनां परस्परसमानां तैलाच्चतुर्थांशं मानमित्यमिन्दुना **हाटकेन** च प्रोक्तोऽर्थः । **अरुणदत्त**स्त्वाह---"यवकोलकुलत्थानां त्रयोंऽशाः दशमूलस्य दशांशा इति व्याख्येयम् । "कल्पयेत्सदृशान् भागान् प्रमाणं यत्र नोदित"-मिति वचनात् । **संग्रहे**ऽप्युक्तम्---"यवकोलकुलत्थदशमूलकषायस्य भागः" इति । ये तु यवकोलकुलत्थानां त्रयोंऽशाः दशमूलस्य चतुर्थोंऽशः इति भागोऽयं कल्प्यत इत्याहुः ते तु पौर्वापर्यं न पर्यालोचयन्त्येव । यतः कल्प-येदित्यादि(अनया ? कया) परिभाषया द्रव्याणां समांशत्वं नियमितमेव । पृथक् षष्ठ्या यो निर्देशः तच्छन्दोनुरोधादेव । तथा चानेनैव तन्त्रकृता **संग्रहे** समस्यैवैतानि द्रव्याणि निर्दिष्टानि । अपि च दशमूलस्य चाधिक्येन वातरोगहन्तृत्वं यथास्य तैलस्य न तथा यवादि(भि)रिति सर्वथा पूर्वं व्याख्यानं श्रेय" इति । मृद्वग्निनेति मृदुशब्दोऽग्निविशेषणाय प्रयुक्तः । खरतरदहनसम्पर्कात् क्षीरबाहुल्येनाप्यस्य तैलस्य झटिति पाकातिक्रान्तता किञ्चित्संभाव्यते । ततोऽस्य पाकातिक्रान्ततापरिहाराय मृद्वग्निपाकः । एतच्च तैलमशेषवातरोगहन्तृ । तथा सूतिकादिषु प्रशस्तम् । तथा ज्वरादिहृत् । तथा भगवतो धन्वन्तरेरभिमतमतिशयगुणवत्त्वात । तथा योनिरोगान् क्षयं च अपहन्ति । 'योनिदोषक्षयापह'मिति वा पाठः । अहरहश्चोपयोगाद् गुणवन्तं पुत्रं लभते सूते इति योनिदोषापहत्वम् ।

पुरा मृतगर्भायाश्चिकित्सोक्ता । सम्प्रति मृतायां मातरि जीवतो गर्भस्य चिकित्सामाह---

**वस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।**
**जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥ ५३ ॥**

वस्तिद्वार इत्यादि । गर्भिण्या मृताया अपि यदि कुक्षिः प्रस्पन्दते अत्यन्तं चलति । क्व प्रदेशे । वस्तिद्वारे तत्समीपे । कदा जन्मकाले । तदा कुशलो वैद्यः शीघ्रं ततः कुक्षिप्रस्पन्दनादनन्तरं पाटयित्वा शिशुं बालमुद्धरेत् । **इन्दुना** तूक्तं—'गर्भस्य जन्मकाले जीवतो माता वेदनया यदि विपन्ना स्यात् ततस्तस्याः कुक्षिप्रस्पन्दनेन जीवन्तं गर्भं विदित्वा ततो वस्तिद्वारे विपाट्य शिशुमुद्धरेद्' इति । **हाटकस्या**यमिन्दुप्रोक्तोऽभिमतः । **पाठ्यका रो**ऽपि—'वस्तिद्वारे विपाट्य पाटयित्वा शीघ्रमुद्धरेदिति सम्बन्धः' इत्युक्तवान् ।

प्रतिमासं गर्भिण्याश्चिकित्सामाह—

**मधुकं शाकबीजं च पयस्या सुरदारु च ।**
**अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ ५४ ॥**

**वृक्षादनी पयस्या च लता चोत्पलसारिवा ।**
**अनन्ता सारिवा रास्ना पद्मा च मधुयष्टिका ॥ ५५ ॥**

**बृहतीद्वयकाश्मर्यः क्षीरिशुङ्गत्वचा घृतम् ।**
**पृश्निपर्णी लता शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ ५६ ॥**

**शृङ्गाटकं बिसं द्राक्षा कसेरु मधुकं सिता ।**
**सप्तैतान् पयसा योगानर्धश्लोकसमापनान् ॥ ५७ ॥**

**क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ।**

**मधुकमि**त्यादि । मधुकादिद्रव्योपलक्षितानर्धश्लोकसमापनान् अर्धश्लोकः समापनं समाप्तिर्येषां तान् सप्त योगान् क्रमाद्यथाक्रमं निर्दिष्टान् क्रमेण सप्तसु मासेषु गर्भे स्रवति तद्रक्षणार्थं योजयेत् । मधुकादीनि चत्वारि प्रथमे मासि गर्भे स्रवति योजयेद्यथायोग्यकल्पनया । अश्मन्तकादीनि द्वितीये मासि । अश्मन्तको यमलपत्रकम् । 'मालुकपर्णमि'तीन्दुः । **पाठ्ये**ऽप्युक्तम्—"अश्मन्तकं ഒരർപ്പുളി. മലയാര इति" केचित् इति । ताम्रवल्ली പൊവ്വള്ളിക്കൊടി. मञ्जिष्ठेत्येके । वृक्षादन्यादीनि पञ्च तृतीये । वृक्षादनि द्रुमव्याधिः । वत्सादनीति पाठे अमृता । लता गन्धप्रियङ्गुः ഞാഴൽ. लता गौरशारिवेत्यन्ये । शारिवा कृष्णशारिवा ।

केचिदुत्पलशारिबा रास्नेत्याहुः । अनन्तादीनि पञ्च चतुर्थे । अनन्ता दूर्वा । पद्मा पद्मचारिणी ഓരിലത്താമര । बृहतीद्वयादीनि पञ्चमे । वृद्धं यथोपयोगम् । क्षीरिणां क्षीरिवृक्षाणां न्यग्रोधादीनां शृङ्गास्तथा तेषामेव त्वचश्च यथालाभम् । शृङ्गमङ्कुरम् । पृश्निपर्ण्यादीनि षष्ठे । मधुपर्णिका जीवन्ती । **पाठ्ये**—मधुपर्णी അടകൊതിയൻപാല इत्युक्तम् । अमृतेत्यन्ये । शृङ्गाटकादीनि सप्तमे ॥

**कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिजैः ॥ ५८ ॥**

**मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाष्टमे ।**

**नवमे सारिबानन्तापयस्यामधुयष्टिभिः ॥ ५९ ॥**

**योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया ।**

**अथवा यष्टिमधुकनागरामरदारुभिः ॥ ६० ॥**

कपित्थेत्यादि । कपित्थादीनां समाहारे द्वन्द्वः । कपित्थादीनां षण्णां मूलैः शृतं क्षीरमष्टमे मासि प्रयुञ्जीत । शारिबादिचतुष्टयेन सिद्धं क्षीरं नवमे मासि प्रयुञ्जीत । दशमे मासि पयस्यया सिद्धं क्षीरं योजयेत् । पयस्या काकोली । अथवा यष्टिमधुकादित्रयेण सिद्धं क्षीरं दशमे मासि योजयेत् । सर्वं बृंहणमामान्वयं विना विज्ञेयम् ॥

साम्प्रतं व्याप(लिन्द ? लिङ्ग)कं तथा भूतं वक्तुमिदमाह—

**अवस्थितं लोहितमङ्गनाया**

**वातेन गर्भं ब्रुवतेऽनभिज्ञाः ।**

**गर्भाकृतित्वात्कटुकोष्णतीक्ष्णैः**

**स्रुते पुनः केवल एव रक्ते ॥ ६१ ॥**

**गर्भं जडा भूतहृतं वदन्ति**

**मूर्तेर्न दृष्टं हरणं यतस्तैः ।**

**ओजोशनत्वादथवाप्यवस्थै-**

**र्भूतैरुपेक्ष्येत न गर्भमाता ॥ ६२ ॥**

अवस्थितमित्यादि । लोहितं वातेन विगुणेन हेतुना कुक्षाववस्थितं स्तम्भितं कुक्षौ रुद्धमनभिज्ञाः गर्भं ब्रुवते । नञ् पर्युदासे । अभिज्ञसदृशा इत्यर्थः । कुतस्तेषां भ्रान्तिरिति तद्बीजमाह—गर्भाकृतित्वादिति । गर्भस्या-

कृतिरिवाकृतिर्यस्य तस्य भावो गर्भाकृतित्वम् । आकृतिः संस्थानम् । उन्नत्यादिकम् । तथा हृल्लासदौर्हृदेत्यादिकं रक्तगुल्मनिदानोक्तं लक्षणं च । तस्माद्रक्तगुल्मवद् भ्रान्तिरिति यावत् । वातरुद्धलोहिताव(स्थि)तौ गर्भावस्थितौ चोभयत्र समानं लक्षणम् । अतोऽल्पबुद्धित्वादवस्थितं लोहितं गर्भं ब्रुवते । कटुकोष्णतीक्ष्णादिभिरवस्थितलोहितस्रुतिहेतुभिः स्रुते केवल एव गर्भरहिते रक्ते जडा निर्बुद्धयो गर्भं दुर्बुद्धिलक्षितं प्रत्यक्षेणापश्यन्तो भूतहृतमिति वदन्ति । पुनःशब्दः शिरःकम्पं कृत्वा तेषामसम्भाव्याङ्गीकारेण सकलजनप्रथितेन जळत्वं सहेतुकं प्रतिपादयति । अत एव जळत्वे हेतुमाह—यतो यस्मात्तैः भूतैः मूर्तैः शरीरस्य हरणं न दृष्टं न क्वचिदुपलब्धम् । अतोऽसम्भाव्यवस्तुप्रतिज्ञानात्तेषां जळत्वमित्यर्थः । नन्वेतदपि कथमुच्यत इत्याह—ओजोशनत्वात् । यस्मात्ते भूता ओजोशना ओजोभक्षणमर्यादाः । अथवा कदाचित्ते भूता उल्लङ्घितमर्यादाः स्युः । तस्माद् भूतैर्माता गर्भस्य नोपेक्ष्येत अपि तु ह्रियेतैव । तथा हि यथा गर्भमातोपचितशरीरा न तथा गर्भ इति । **संग्रहे**—“तदेव च कदाचिदार्तवं सौम्यैर्बृंहणात्मभिराहारविहारैः स्तम्भितमनुपद्रवमेवोदरं गर्भाधिष्ठितमिव वर्धयति । येन तामगर्भां गर्भिणीमाहुर्मूढाः । ततो विपरीतैर्यदृच्छया वा प्रवृत्ते रक्ते गर्भशरीरमपश्यन्तो भूतहृतमित्यज्ञा ब्रुवते । यस्मात्संभवत्योजसोऽपहरणं रक्षोभिर्न तु कायस्य अनिष्टत्वादशक्तेर्वा । इच्छाशक्त्योर्हि प्रवृत्तेरुपलब्धिः । न च दृश्यते कस्यचिदमानुषैर्देहापहारः । यदि च दृष्टमपि समुल्लङ्घ्य केचिदतिशक्तियुक्ता गर्भस्य शरीराक्षेपे प्रवर्तन्ते तदा कथमिव प्राप्तावसराः तज्जननीमुपेक्षेरन्” इति । **इन्दुः**—“विपरीतैः कटुकादिभिः यदृच्छया वा स्वयमेवौषधनिरपेक्षं वा प्रवृत्ते रक्ते गर्भं दुर्बुद्धिर्लक्षितं प्रत्यक्षेणापश्यन्तो भूतैर्हृतमिति वदन्त्यज्ञाः । एवं च तेषामज्ञत्वम् । यतो रक्षोभिरोजसोऽपहरणं सम्भाव्यते न तु कायस्य । कथं नु सम्भाव्यत इत्याह—अनिष्टत्वादथवा अशक्तितः (शक्तोऽपि) कदाचिदनिष्टे न प्रवर्तते । इष्टोऽपि वा अशक्त्या न प्रवर्तते । एतदुक्तं—इच्छाशक्त्योर्हि प्रवृत्तेरुपलब्धिः इति । इच्छाभावः

१. ‘सौम्यादिहेतुविपरीतैः काकतालीयेन साधुभिषजा वा प्रयुक्तैः स्वयमेवौषधविप...’ इति मुद्रिते । २. ‘कल्पितं’ मुद्रिते । ३. ‘इच्छाभाव’ इत्यारभ्य ‘तदेवोच्यते’ इत्यन्तोंऽशः मुद्रिते न दृश्यते ।

शक्त्यभावश्च तेषामनुमानलभ्यः । तदेवोच्यते न चेत्यादिना । नह्येवं कदाचिद् दृष्टं यदमानुषैः रक्षोभिः कस्यचिद्देहापहारः कृत इति । अथ कश्चिदेवं ब्रूयाद्यथा पूर्वं न दृष्टम् अधुना दृश्यते तदर्थमाह—यदि चेत्यादि । यदि हि शक्त्यतिशययुक्ता[1] अदृष्टेऽपि देहापहारे प्रवर्तेरन् [2]किमितीच्छातिशय-स्वार्थसम्पादनपरं स्थूलस्थूलं तन्मातृशरीरमुपेक्षन्ते । अतोऽनुमानाज्ज्ञायते शरीरापहरणं भूतानामनिष्टं, अशक्ता वा तत्रेति । एतच्चाचार्य-स्यासम्भवमात्र[3]मिति कृत्वा गृह्यते । अन्यथा शरीरवदोजसः पर्यनुयुक्तः किमुत्त[4]रं दद्यादि"ति । हाटकस्त्वेवमाह—"वातेन विगुणेन कुक्षाववस्थितं स्तम्भितं लोहितं अनभिज्ञा गर्भं ब्रुवते । कुतस्तेषां भ्रान्तिरिति—गर्भाकृतित्वात् । आकृतिः संस्थानमुन्नत्यादिकं दौहृदं च, तस्माद्रक्तगुल्मवद् भ्रान्तिरीति यावत् । कटुकोष्णादिभिः स्रुते केवल एव गर्भरहिते रक्ते जळा निर्बुद्धयो भूतहृतमिति वदन्ति । जळत्वे हेतुमाह—यतो यस्माद् भूतैर्मूर्तैः शरीरस्य हरणं न कचिदु-पलब्धम् । अतोऽसम्भाव्यवस्तुप्रतिज्ञानात् तेषां च जळत्वमित्यर्थः । किञ्च अथवा पूर्वोक्तगर्भशरीरहरणं विना ओजोशनत्वादोजोशनस्वभावत्वादव्यवस्थितै-र्भूतैर्गर्भस्य माता नोपेक्ष्येत, किं तर्हि ह्रियेतैव । मातुरोजोहरणमपि कर्तव्यं तत्कदाचिदपि न दृश्यत इत्यर्थः । **आगमो** हि—

'ओजोशनानां रजनीचराणामाहारहेतोर्न शरीरमिष्टम् ।
गर्भं हरेयुर्यदि तेन मातुर्लब्धावकाशा न हरेयुरोजः ॥'

इति । न च मातुरोजोहरणं दृश्यते न च पतितं गर्भशरीरं, तेनैष गर्भो रक्त-मात्रमेव सञ्चितमित्यवगन्तव्यमिति यावत् ॥

इति हृदयबोधिकायां शारीरस्थाने
द्वितीयोऽध्यायः ।

---

१ 'युक्ता मातुरपि शरीराहरणे समर्था अदृष्टेऽपि' । २. 'किमिति सातिशयस्वार्थ-सम्पादनं स्थूल' । ३. 'त्रप्रदर्शनमि' ४. 'रं दास्यति' इति मुद्रिते ।

# तृतीयोऽध्यायः ।

गर्भव्यापदोऽनन्तरमङ्गविभाग उच्यते अङ्गप्रत्यङ्गविज्ञाने हि सति सम्यग् गर्भाहरणादि कर्तुं शक्यते नान्यथेति । **सारकृताप्युक्तम्**—

“अङ्गप्रत्यङ्गविज्ञाने मूढगर्भोद्धरादिकम् ।
कर्तुं शक्यत इत्याह पश्चादाङ्गविभागिकम् ॥”

इति । **पाठ्ये** तु प्रोक्तं—‘‘सर्वसूक्ष्माङ्गजन्म इत्येतावन्मात्रमेव पूर्वोक्तम् । अतः सर्वशरीरपरिज्ञानार्थमङ्गविभागमाह” इति । किञ्च अङ्गविभागः तदुपकाराय । तथा **चागमः**—‘शरीरं नाम चेतनाधिष्ठानभूतं पञ्चमहाभूतविकारसमुदायात्मकं कालार्थकर्मणां समयोगेन तिष्ठति । शरीरविचयः शरीरोपकारार्थमिष्यते धात्वादीनां हीनातियुक्तानां वृद्धिह्रासकरणार्थम् । मांसमाप्याय्यते मांसेन भूयस्तरमन्येभ्यो धातुभ्यः । तथा लोहितं लोहितेन । मेदो मेदसा । अस्थि अस्थ्ना । वसा वसया । मज्जा मज्जया । शुक्रं शुक्रेन । शुक्रोपयोगे कुक्कुटादीनामण्डोपयोगात् । गर्भस्त्वामगर्भेण । एवमसन्निधाने समानगुणभूयिष्ठानामात्मान्यप्रकृतीनामुपयोगः कार्यः । तद्यथा शुक्रक्षये क्षीरसर्पिषोरुपयोगः ।” इति ॥

**अथातोऽङ्गविभागं शारीरं व्याख्यास्यामः ।**

अथात इत्यादि । अङ्गस्य शरीरस्य विभागो विभजनं अङ्गप्रत्यङ्गादीनां पृथक्करणमङ्गविभागः । अथेत्यादि पूर्ववत् ।

अथ तान्येवाङ्गानि विभक्तुकाम आह—

**शिरोऽन्तराधिर्द्वौ बाहू सक्थिनी च समासतः ।**
**षडङ्गमङ्गं प्रत्यङ्गं तस्याक्षिहृदयादिकम् ॥ १ ॥**

शिर इत्यादि । षडवयवमङ्गं शरीरम् । तान्येव षडङ्गान्याह—शिरस्तथान्तराधिस्तथा द्वौ बाहू वामदक्षिणौ तथा सक्थिनी द्वे वामदक्षिणे इत्येवं समासतः संक्षेपेणाङ्गं शरीरं षडङ्गं षडवयवम् । विस्तरेण पुनरनेकावयवम् ।

अन्तराधिशब्देन शिरोबाहुसक्थिवर्जं सर्वो मध्यमभाग उच्यते । **हाटको**ऽपि—"अन्तराधिः कटीजत्रोर्मध्यम्" इत्याह । "आकण्ठमूलादा चोरुसन्धेरन्तराधिः" **इतीन्दुः** । षडङ्गान्यवयवा यस्य तत् षडङ्गम् । अङ्गं शरीरम् । उक्तं च—

शरीरेऽवयवे देशे संबुद्धावधारणे ।
अप्रधानप्रधानाङ्गदेहेष्वङ्गपदं विदुः ॥

इति । शिरःप्रभृतीन्यङ्गान्यस्मिन्नन्तराधीयन्त इति अन्तराधिः । **अरुणो**ऽप्याह—"आधीयन्ते निबध्यन्ते यथायथं शरीरस्यान्तः स्थाप्यन्ते प्राक्चितेन कर्मणा शिरःप्रभृतयः पञ्चावयवा यस्मिन् सोऽन्तराधिः" इति । "यस्मिन्नाधीयन्ते निबध्यन्ते मूर्धकरचरणाङ्गानि सोऽन्तराधिः" इति **सारकृत्** । तस्य षडवयवस्याङ्गस्य अक्षिहृदयादिकं प्रत्यङ्गम् । आदिशब्देन कर्णनासापाणिपादादिपरिग्रहः । अवयवमवयवं प्रति योऽवयवः तत् प्रत्यङ्गम् । **संग्रहे**—"सकलमपि शरीरमङ्गमित्युच्यते । तच्च पुनः षडङ्गं शिरोऽन्तराधिर्द्वौ बाहू सक्थिनी च । नेत्रनासापाणिपादादीनि त्वस्य प्रत्यङ्गानि" इति ।



शरीरं व्योमवाय्वादिपञ्चमहाभूतात्मकं चेतनादीनामधिष्ठानम् । अतस्तमेव प्रत्येकं महाभूतगुणमाह—

**शब्दः स्पर्शश्च रूपं च रसो गन्धः क्रमाद् गुणाः ।**
**खानिलाग्न्यब्भुवाम्**

शब्द इत्यादि । **सारकृद**प्याह—

"भौतिकत्वं शरीरस्य प्रागुक्तं वक्ष्यतेऽत्र च ।
अतो गुणपरिच्छित्त्यै शब्दादिगुणवर्णना ॥"

इति । पञ्चमहाभूतविकारसमुदायात्मकं शरीरमित्युक्त्वा तेषां प्रत्येकं गुणानाह—शब्दादयः पञ्च गुणाः क्रमात्क्रमेण खादीनां पञ्चानां भवन्ति । तेन शब्दः खस्याकाशस्य गुणः । सुषिरे विविक्ते स्पर्शादिगुणचतुष्टयायोगित्वेन शब्दमात्रस्यैवोपलम्भात् । स्पर्शो वायोः, रूपमग्नेः, रसः पानीयस्य, गन्धो भूमेः । तेषां गुणानां खाद्याश्रितत्वात्तेषां गुणा उच्यन्ते ।

आकाशस्येव वाय्वादीनां किमेकैक एव यथोक्तो गुण उतान्येऽपि सन्तीत्याह—

**एकगुणवृद्ध्यन्वयः परे ॥ २ ॥**

एकेत्यादि । एकेन गुणेन वृद्धिस्तयान्वयः संबन्धः । परे वाय्वादौ महाभूते । अथवा एकगुणस्य वृद्धिस्तयान्वयोऽनुगमस्तद्भावित्वम् । हृद्याकारस्त्वाह—"एकस्यैकस्य गुणस्य वृद्ध्या आधिक्येनान्वयः संबन्धो येषां त एकगुणवृद्ध्यन्वयाः परे । परे पञ्चधातवः ।" इति । तदयुक्तं प्रायशः । पञ्चधात्वनुपपत्त्यादेः । पर इत्याकाशापेक्षया चतुर्णां महाभूतानामुक्तिः । तेन वाय्वादौ महाभूते एकगुणवृद्ध्यन्वयः । आकाशस्त्वेकगुण एव । परत्वासंभवान्न तस्यैकगुणवृद्ध्यन्वयः । आकाशात्परेऽनन्तरे महाभूते वाय्वाख्ये एकगुणवृद्ध्यन्वयेन द्विगु(ण)त्वात् शब्दस्पर्शगुणत्वम् । ततः परे महाभूते अग्न्याख्ये एकगुणवृद्ध्यन्वयेन त्रिगुणत्वात् शब्दस्पर्शरूपगुणत्वम् । ततः परे जलाख्ये महाभूते एकगुणवृद्ध्यन्वयेन चतुर्गुणत्वात् शब्दस्पर्शरूपरसगुणत्वम् । ततः परे महाभूते पृथिव्याख्ये एकगुणवृद्ध्यन्वयेन पञ्चगुणत्वात् शब्दस्पर्शरूपरसगन्धगुणत्वम् । एवं पञ्चानां खादीनां एकद्वित्रिचतुष्पञ्चगुणत्वं बोध्यम् । **हाटको**ऽप्याह—"एकस्य गुणस्य वृद्धिः तयान्वयः । पर इत्याकाशापेक्षया चतुर्णां भूतानामुक्तिः । तेन वाय्वादावेकगुणवृद्ध्यन्वयः । आकाशस्त्वेकगुणः परत्वासंभवात् । अस्मात्परे वायौ शब्दस्पर्शगुण(त्व)म् । ततः परेऽग्नौ शब्दस्पर्शरूपगुणत्वम् । ततः परे जले शब्दस्पर्शरूपरसगुणत्वम् । ततः परायां पृथिव्यां शब्दस्पर्शरूपरसगन्धगुणत्वम् । एवं खादीनां एकद्वित्रिचतुष्पञ्चगुणत्वं बोध्यम् । अर्थः—एकगुणवृद्ध्यन्वयः परे, आकाशस्य परे भूतचतुष्टये शब्दगुणस्यैकस्य वृद्ध्यान्वयः । अनिलस्य परे भूतत्रये स्पर्शगुणस्य वृद्ध्यान्वयः । एवमुत्तरत्रापि एकेन गुणेन वृद्ध्यान्वयः" इति । **आगमश्चात्र**—"एकगुणवृद्धिः परे परे" इति ।

इदानीं यथाक्रमनिर्दिष्टेभ्यो भूतेभ्यो ये भावाः शरीरे भवन्ति तान् दर्शयति—

**तत्र खात् खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता ।**
**वातात् स्पर्शत्वगुच्छ्वासाः वह्नेर्दृग्रूपपक्तयः ॥ ३ ॥**
**आप्या जिह्वा रसक्लेदा घ्राणगन्धास्थि पार्थिवम् ।**

तत्रेत्यादि। तेषु पञ्चमहाभूतेषु मध्ये अस्मिन् देहे मनुष्यादौ स्थूलतया परिणते। नान्यस्मिन् अतीन्द्रिये भूतादौ। खात् आकाशात् सत्त्वबहुलात् खानि छिद्राणि सर्वस्रोतांसि भवन्तीति शेषः। छिद्रविशेष एव श्रोत्रेन्द्रियाधिष्ठानं श्रोत्रम्। तथा शब्दो घोषः। तथा विविक्तता शून्यता रिक्तता खादेव। यद्यपीह छिद्रादिषु सर्वभूतानामेव व्यापारः तथाप्याकाशस्यैवात्र विशिष्टकारणत्वम्। यथा घटादौ मृद्दण्डचक्रसलिलसूत्रादिकारणसमुदाये निष्पन्नेऽपि मृद एव विशिष्टकारणत्वम्। अत एवासौ मृन्मय एवोच्यते। एवं सर्वेषु वक्ष्यमाणेषु वातादिजेषु स्पर्शादिषु वाच्यम्। हाटकेनाप्युक्तं—"तेषु महाभूतेषु मध्येऽस्मिन् मनुष्यादिदेहे आकाशाच्छिद्राणि भवन्ति श्रोत्रादीनि च। इन्द्रियाणां पञ्चमहाभूतात्मकत्वेऽपि क्रमेण तेषु भूतानां विशेषावस्थानं वेद्यम्। विविक्तता शारीराणां भावानां विभाग" इति। वातादनिलाद्रजोबहुलात् स्पर्शादयो भवन्ति। स्पर्शः स्पर्शनम्। त्वक् स्पर्शनेन्द्रियाधिष्ठानम्। **संग्रहे**—"वायव्यानि स्पर्शनं स्पर्शो निश्श्वासोच्छ्वासादिपरिस्पन्दनानि लाघवं च" इति। वह्नेः सत्त्वरजोबहुलाद् दृगादयो भवन्ति। दृक् दृष्टिः चक्षुरिन्द्रियाधिष्ठानम्। तथा रूपाख्यो गुणः। पक्तिः पाकः। उपलक्षणं चेदं, पित्तशौर्यादयोऽपि वह्नेरेव बोध्याः। तथा च **संग्रहे**—"आग्नेयानि दर्शनाधिष्ठानं रूपं पित्तमूष्मा पक्तिः सन्तापो मेधा वर्णो शोभा तेजः शौर्यं च" इति। अद्भ्यः सत्त्वतमोबहुलाभ्यो जाता आप्याः जिह्वादयो भवन्ति। जिह्वाशब्देनात्र जिह्वाया विशिष्ट एकदेशो रसनेन्द्रियाधिष्ठानं विवक्षितम्। न सर्वैव जिह्वा। तथा रसाख्यो गुणः तथा क्लेदाख्यो भावः। उपलक्षणं चेदम्। स्वेदमूत्रादयोऽप्याप्या एव। **संग्रहे**—"आम्भसानि रसनं रसः स्वेदक्लेद[3]रसासृक्शुक्रादिद्रवसमूहः शैत्यं स्नेहनं च" इति। घ्राणादि पार्थिवम्। घ्राणं नासाया विशिष्ट एकदेशो घ्राणेन्द्रियाधिष्ठानम्। तथा गन्धाख्यो गुणः। तथा अस्थि। एतानि सर्वाणि पृथिव्याख्यात् तमोबहुलान्महाभूताज्जातानि। **संग्रहे**—"पार्थिवानि घ्राणं गन्धः केशनखास्थ्यादिमूर्तसमूहो धैर्यं[5] स्थैर्यं गौरवं च" इति।

---

१. 'प्रश्वासो'। २. 'दर्शनं रूपं'। ३. 'द्रवसारसा'। ४. 'स्नेहश्च'। ५. 'धैर्यं च' इति मुद्रिते।

देहेऽस्मिन् किं मातृजं किं पितृजमित्याह—

**मृद्वत्र मातृजं रक्तमांसमज्जगुदादिकम् ॥ ४ ॥**

**पैतृकं तु स्थिरं शुक्रं धमन्यस्थिकचादिकम् ।**

**चैतनं चित्तमक्षाणि नानायोनिषु जन्म च ॥ ५ ॥**

मृद्वत्रेत्यादि । **हाटको**ऽपि—"मातृजपितृजभेदेनाह मृद्वित्यादिना" इत्याह । अस्मिन् देहेऽनेकसामग्रीकेऽपि यन्मृदु वस्तुजातं रक्तादि तन्मातृजं भूयसा भवति । तत्र मातुराधिक्येन कारणभाव इत्यर्थः । मातृजमिति 'पञ्चम्यामजातौ' (पा० सू० ३-२-९७) इति डः । आदिशब्देन नाभिहृदय-यकृत्प्लीहादीनां ग्रहणम् । **संग्रहे**—"तेषु मातृजानि मृदूनि त्वग्रक्तमांस-मेदोमज्जानाभिहृदयामाशयगर्भाशययकृत्प्लीहान्त्रगुदादीनि" इति । ननु गुदस्य मांसत्वान्मांसग्रहणेनैव सिद्धे किं गुदग्रहणेनेति । ब्रूमः—मांसत्वस्यानिश्चयात् पृथगुपादानं कृतम् । तथा च वक्ष्यति "मांसमज्जागुदोऽन्येषाम्" इति । इदानीं पितृजमाह—पैतृकमित्यादि । स्थिरं यद्वस्तु शुक्रादिकं तत् पैतृकं पितृजम् । आदिशब्देन शिरास्नायुरोमादीनां ग्रहणम् । पैतृकमिति 'पितुर्यच्च' (पा० सू० ४-३-७९) इति ठक् । 'इसुसुक्तान्तात्कः' (पा० सू० ७-३-५१) इति कादेशः । चेतना आत्मैव । प्राक्चितशुभाशुभकर्मबीज-क्षेत्रमित्यर्थः । तस्माज्जातं चैतनम् । किं तदित्याह—चित्तमित्यादि । चित्तं मनः इन्द्रियसारथिः । चेतनमात्मा तस्माज्जातं चैतनमिति वा । मनसः आत्मजत्वं तदधीनत्वात् । तच्च नित्यसम्बन्धत्वे सत्यपि यथाजाति शुभाशुभकर्मवशात् सत्त्वेन रजसा तमसा वा गुणेन योगः । तथा अक्षाणि श्रोत्रादीनि । ननु चैतनान्यक्षाणीत्येतत्पूर्वापरव्याहतमिव मन्यामहे । यतः पूर्वमुक्तं 'खात् खानी'ति । तत्कथमिह चैतनान्यक्षाणीति । उच्यते । नात्रावधारणं कृतं यथा चैतनान्येवाक्षाणीति खादेव खानीति । तस्माद् भूतानि चेतना चेति द्वयमप्यक्षाणां कारणमित्यवेहि । **हाटकेना**प्युक्तम्—भौतिकाना-मपीन्द्रियाणामात्मजत्वं कर्माधीनशक्तिपरायत्तत्वात् । आत्मना ह्यवदातकर्मकारण-भूतेन मृगसरीसृपादिषु जन्मोत्पत्तेः । **आगमश्चात्र**—"गर्भात्मा ह्यन्तरात्मा अत्र जीव इत्याचक्षते । शाश्वतमरुजमजरममरमक्षयमभेद्यमक्षरं सद्गर्भाशयमनुप्रविश्य

शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जनयति हिताहितकर्मकारणेनात्मनात्मानमिति आत्माधीनत्वाद्गर्भे आत्मसञ्जातस्य पुनरात्मनो जन्मादिमत्त्वान्नोपपद्यते गर्भशरीरस्यातिव्यवहितशरीरत्वमनादिबीजेनाङ्कुरवत् शरीरे ध्वस्ते अङ्कुरस्थानीया उत्तराः शरीरोत्पत्तयः असति बीजे न स्युः । अतो जायमानोऽयं कर्माश्रयादात्मन एव जायते । तस्मान्न चान्यतो जायते जायमानः किं तर्हि स्वकृतेन कर्मणेति" इति । तथा नानायोनिषु गजवाजिपशुशशशम्बरप्रभृतिषु यज्जन्मसम्भवः तदपि चैतनम् । उपलक्षणं चेदम् । कामक्रोधलोभमोहभयहर्षधर्माधर्मशीलतास्मृतिबुद्धीच्छाद्वेषप्रयत्नाहङ्कारसुखदुःखायुःस्वरविशेषादयोऽपि चैतना एव । **संग्रहे**— "आत्मजानि स्वयोनिषूत्पत्तिर्मनश्चेतनेन्द्रियाणि प्राणापानौ धारणमाकृतिस्वरवर्णविशेषाः कामक्रोधलोभभयहर्षधर्माधर्मशीलतास्मृतिबुद्धीच्छाद्वेषप्रयत्नाहङ्कारसुखदुःखायुरात्मज्ञानानि च" इति ।

**सात्म्यजं त्वायुरारोग्यमनालस्यं प्रभा बलम् ।**

सात्म्यजमित्यादि । सात्म्यं त्रिविधं व्याधिसात्म्यं देशसात्म्यं देहसात्म्यं चेति । तत्रेह व्याधिसात्म्यं न गृह्यते । यतो देहस्य सम्भ(वः ? वतः) सम्भूतमात्रस्य चेयं विचारणा प्रस्तुता कुतः किं भवतीति । अतो व्याधिवर्जदेहप्रस्तावान्नोपयुज्यते । तस्माद्देहसात्म्यं देशसात्म्यं चेह गृह्यते । देहस्य हि सम्भवतः सम्भूतमात्रस्य मात्राहारविहारा(द्यप ? दि यदप)थ्यमप्यतिशयेन शीलितं तदस्य देहस्योचिततां गच्छत् सुखानुबन्धेन सात्म्यमुच्यते । तस्माद्देशसात्म्यं देहसात्म्यं च ग्रहीतुं युक्तम् । **हारीतो**ऽप्याह— "यत्तु देहिनो गर्भात्प्रभृति सेवितं मात्राहाररूपेण स्वतश्च तत्सात्म्यम्" इति । सात्म्याज्जातं सात्म्यजम् । किं तत् । आयुरारोग्यादि । आयुर्जीवितम् । तथा आरोग्यं धातुसाम्यम् । अनालस्यं सर्वचेष्टासूद्यमः । उद्योग उत्साहः । प्रभा कान्तिः । तथा बलं शक्तिः । उपलक्षणं चेदम् । अलोलुपत्वेन्द्रियप्रसादस्वरवर्णवीर्यौजःसम्पत्प्रहर्षाद्यपि सात्म्यजमेव ।

---

१. 'नानायोनिषु' इति मुद्रिते ।

रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोलता ॥ ६ ॥

रसजमाहाररसजं, आहारात् परिणताज्जातम् । किं तत् । वपुषो जन्म सकलशरीरस्य सम्भवः । तथा वृत्तिर्वर्त्तनं जीवितानुबन्धः । रसं विना जीवितस्याप्यभावः । तथा वृद्धिरायामविस्ताराभ्यां (यथा)संस्थानस्य शरीरस्याधिक्यम् । मातृजठरे वृद्धिर्वृद्धिस्तथैव जातस्य च । तथा अलोलता अलौल्यम् । अलोलता रसजेति लिङ्गविपरिणामेन सम्बन्धः । उदाहरणमात्रं चेदम् । उत्साहतृप्तिपुष्टयो रसजा एव ॥

सात्त्विकं शौचमास्तिक्यं शुद्धवर्त्मरुचिर्मतिः ।
राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सराः ॥ ७ ॥
तामसं भयमज्ञानं निद्रालस्यं विषादिता ।

सात्त्विकमित्यादि । रजस्तमोभ्यामनुपहतेन शुद्धेन सत्त्वेन यद्भवति तत्सात्त्विकं सत्त्वगुणाज्जातं शौचादिकम् । शौचं वाक्कायमनसां शुद्धिः । सत्यवाक्याद्यभिधायित्वं वाक्शुद्धिः । मृज्जलादिभिः क्षाळनादि शास्त्रोक्तं कायिकं शौचम् । मानसशौचं जगद्बन्धुता करुणा शुद्धसन्तानत्वमास्तिक्यमित्यादि । शौचमिति 'इगन्ताच्च लघुपूर्वात्' (पा०सू० ५-१-१३१) इत्यण् । आस्तिक्यमिति अस्ति (दिष्टं? परलोक इति) मतिरस्येति अस्ति नास्ति (पा० सू० ४-४-६०) इत्यादिना ठक् । आस्तिकस्य भावः इति ब्राह्मणादित्वात् ष्य(ङ्? ञ्) । 'आस्तिक्यमस्ति परलोक इति ज्ञानम्' इति **हाटकः** । तथा शुद्धे वर्त्म(नि) धर्ममार्गे रुचिर्निर्व्याजा भक्तिः । "शुक्लकर्मरुचिः" इति केचित्पठन्ति । मतिः प्रज्ञा । उपलक्षणं चेदम् । कृतज्ञतादाक्षिण्यव्यवसायशौर्यगाम्भीर्यस्मृतिमेधादयोऽपि सत्त्विका एव। राजसानि बहुभाषित्वादीनि । उपलक्षणं चेदम् । शौर्यदुरुपचारतालोलुपत्वहर्षकामादयोऽपि राजसा एव । तामसानि भयादीनि । उपलक्षणं चेदम् । प्रमादशोकादीन्यपि तामसान्येव । तत्र सत्त्वं मनस्तस्योपप्लवेन रजस्तमश्चेति । **सुश्रुते** चोक्तं—"वाय्वाकाशधातुभ्यां वायुराग्नेयं पित्तमम्भःपृथिवीभ्यां श्लेष्मा" इति । **आयुर्वेदावतारे** तूक्तम्—

"शीतोष्ण(स? श)मवृद्ध्याप्यं न पित्तं द्रुतताम्रवत् ।
करकावत् कफो भौमो नानिलानलसंहतः ।" इति ।

अधुना देहप्रारम्भकाणां भावानां भूतानामेव प्राधान्यम् । अतस्तैरेवोपसंहरति—

**इति भूतमयो देहः**

इति भूतमयो देह इति । **अरुणो**ऽप्याह—"अधुना देहाश्रितसर्वभावोपसंहारं कुर्वन् प्रधानो यो भावो देहस्य तस्य प्राधान्यं दर्शयन् इदमाह इति भूतमयो देहः" इति । **सारकृद**प्याह—"अधुना देहाश्रितानां सर्वाङ्गानामुपकुर्वन् प्रधानो यो भावो देहस्य तस्य प्राधान्यं दर्शयन्निदमाह–इति भूतमयो देहः" इति। इति इत्यनेन प्रकारेण भूतमयो देहः पृथिव्यादिविकारसमुदायात्मकः । भूतात्मकत्वेन प्राधान्याद् भूतमय इत्युक्तम् । सर्वेभ्यो देहाश्रितभावेभ्यो महाभूतानामेव प्राधान्यं तन्मयत्वाद्देहस्य सर्वभावाधारभूतस्य । अस्मिन् दर्शने आत्मा नित्यमविकारः । स न जायते न च विनश्यति । सत्त्वादिसंयोगात्तु जातादिव्यपदेशं लभते । संयोगश्चास्याविद्यास्वभावकृतः । अविद्याक्षयात् शुद्धः स मुक्त इत्युच्यते । तस्मादात्मा चेतनः कारणं नित्यम् । अचेतनानि तु महाभूतानि अनित्यानि प्रतिक्षणप्रध्वंसीनि । त(मे? दे)वं भूतमयो देहः ॥

स देहः त्वगादिभिः प्रविभज्यत इति दर्शयति---

**तत्र सप्त त्वचोऽसृजः ॥ ८ ॥**

**पच्यमानात्प्रजायन्ते क्षीरात्सन्तानिका इव ।**

तत्रेत्यादि । **संग्रहे**—"इत्येवं भूतात्मकं देहमाहुः । तस्य प्रविभागः त्वचः कला दोषा धातवो मला बुद्धीन्द्रियाणि तदधिष्ठानानि कर्मेन्द्रियाण्यतीन्द्रियमाशयाः प्राणायतनानि कण्डराजालानि कूर्चरज्जवः सीवन्योऽस्थिसंघाताः सीमन्ता अस्थीन्यस्थिसन्धयः स्नावानि[1] पेश्यः सिरा धमन्यः स्रोतांस्यूष्माणो मर्माणि केशश्मश्रुरोमाणि प्रकृतिविकृतिभेदाश्च" इति । तत्र तस्मिन् महाभूतमये देहे असृजो रक्तात् सप्तत्वगुत्पादनसमर्थेन धातूष्मणा पच्यमानात् सप्त त्वचः प्रकर्षेण जायन्ते । **हाटको**ऽपि–"तत्र तस्मिन् देहे असृजः स्वोष्मणा

१. 'स्नायूनि' मुद्रितपाठः ।

पच्यमानात् सप्त त्वचः प्रजायन्ते" इत्याह । कुतः का इव । यथा क्षीरात् पच्यमानात् शीतीभूतात् तदुपरि घनस्वभावाः सन्तानिका जायन्ते तद्वदसृजः पच्यमानात् सप्त त्वचो भवन्ति । सन्तानिका जालिका ०७s । इन्दुरप्याह—"तत्र देहे सप्त त्वचो रक्तात् स्वोष्मणा पच्यमानात् क्षीरजालिकावत् सम्भवन्ति । तास्तु कदलीदलवदन्तरेऽन्तरेक्रमेण वर्तन्ते" इति । तासां नामानि परतन्त्रोक्तानि । यथा—

भासिनी लोहिनी श्वेता त्वक्ताम्रा वेदिनी मता ।
स्याद्रोहिणी मांसधरा सप्तमी परिकीर्तिता ॥

व्रीहेरष्टादशांशाद्या द्वितीया षोडशांशिका ।
द्वादशांशा तृतीया तु चतुर्थ्यष्टांशमात्रका ॥

पञ्चमी पञ्चमांशा तु षष्ठी व्रीहिप्रमाणिका ।
व्रीहिद्वयप्रमाणा तु सप्तमी भिषजां मता ॥

(खादि?दीर्घ)छायापञ्चकस्य भासिन्याधारतां गता ।
मन्यन्ते षट् त्वचः केचित् तासां बाह्योदकाश्रया ॥

द्वितीयासृग्धरा सिध्मश्वित्राधारा तृतीयका ।
चतुर्थी सर्वकुष्ठानामधिष्ठानत्वमागता ॥

विद्रध्यलज्यधिष्ठाना पञ्चमी रोगकारिणी ।
षष्ठ्यत्र यस्यां छिन्नायां ताम्यत्यन्धं तमो विशेत् ॥

यामधिष्ठाय जायन्ते स्थूलमूलानि पर्वसु ।
अरूंषि कृष्णरक्तानि दुश्चिकित्स्यतमानि च ॥ (इति) ।

अर्थः—बाह्या प्रथमा उदकधरा नाम या देहे उदकं बिभर्ति येन बहिराद्र्त्वाभावः । द्वितीयया रुद्धं न बहिः स्यन्दते रक्तं सा असृग्धरा नाम इत्यादि । सिध्म कुष्ठविशेषः । षष्ठी सर्वासामन्तः प्राणधरा नाम । सा प्राणानन्तरवरुध्य तिष्ठति ॥

---

१. 'षट् त्वच' मुद्रितपाठः ।

उक्तास्त्वचः । इदानीं कला उच्यन्ते—

**धात्वाशयान्तरक्लेदो विपक्वः स्वंस्वमूष्मणा ॥ ९ ॥**
**श्लेष्मस्नाय्वपराच्छन्नः कलाख्यः काष्ठसारवत् ।**

धात्वाशयेत्यादि । धातूनां रसादीनामाशया आधारा जलाशयवत् तेषामन्तराण्यन्तरालानि तेषु धात्वाशयान्तरेषु क्लेदो धात्वाशयान्तरक्लेदः । स विपक्वः कलाख्य उच्यते कलासंज्ञां लभते । केन विपक्वः स्वंस्वमूष्मणा आत्मीयेन वह्निना । यथा रसधात्वाशयान्तरक्लेदः रसोष्मणा विपक्वः कलैका भवति । यावच्छुक्रधात्वाशयान्तरस्थः शुक्रधातूष्मणा विपक्वः सप्तमी कला भवति । कीदृशो विपक्वः । श्लेष्मणा स्नाय्वा अपरया जराय्वाख्यया छन्नः छादितः । 'वा दान्तशान्त' (पा०सू० ७-२-२७) इत्यादौ छदेर्ण्यन्तात् छन्नशब्दो निपातितः । यथा काष्ठस्य सारः तथायं धातुसारशेषोऽल्पत्वात्कला-संज्ञः । धात्वाशयान्तरमर्यादाः सप्तकलाः । तत्र—

आद्या मांसधरा यस्यां धमन्यः स्नायवः सिराः ।
स्रोतांसि च प्ररोहन्ति प्रतानैर्व्यापिभिः कला ॥

द्वितीयासृग्धरास्यां तु मांसान्तः शोणितं स्थितम् ।
विशेषतः सिराप्लीहयकृत्सु क्षतजं क्षतात् ॥

मांसात्प्रवर्तते क्षीरं क्षीरिवृक्षादिव क्षतात् ।
मेदोधरा तृतीयात्र मेदोस्थ्नामुदरे स्थितम् ॥

अण्वस्थिषु च मज्जा तु[1] स्थूलास्थिष्वेव मूर्धनि ।
मस्तुलुङ्गकपालान्तश्चतुर्थी च कफाश्रया ॥

तत्स्थः कफो द्रढयति सन्धीनस्थ्नां शरीरजान् ।
पञ्चम्यासां विडाधारा सामपक्वाशयाश्रया ॥

उण्डुकस्थं विभजते मलं पित्तधरा पुनः ।
षष्ठी पक्वाशयान्तःस्था वह्न्यधिष्ठानतां गता ॥

---

१. 'भवत्यणुषु मज्जान्तः स्थूलास्थिष्वथ मूर्धनि' ।

पैकाशयात् सुखं धृत्वा बलात् पित्तस्य तेजसा ।
शोषयन्ती पैचेत् पक्कं तदेव च विमुञ्चति ॥

दोषदुष्टाथ दौर्बल्यादाममेव निरैस्यति ।
लभते ग्रहणीसंज्ञामस्याश्चाग्निबलं बलम् ॥

शरीरं धारयत्यग्निर्बलावष्टम्भबृंहिता ।
अन्या कला शुक्रधरा मूत्रमार्गसमाश्रिता ॥

द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाप्यधः ।
शरीरं व्याप्य सकलं सा शुक्रं वर्तयत्यपि ॥

**हाटकः** पुनरेवमाह—"धातूनां रसरक्तादीनामाशयाः यानि स्रोतांसि तेषां द्वयोर्धात्वाशययोर्मध्ये यः क्लेदः स्वेन स्वेन धातूष्मणा पक्वः श्लेष्मादिसंछन्नः स कलाख्यां लभते काष्ठसारवत् । यथा काष्ठेऽन्तः सारो विभज्यते तथा शरीरे कला । ताश्च स्वस्थानमजहत्यः शरीरं व्याप्नुवन्ति । स तु क्लेदो धातुसा(रे? र)शेषो न पूर्वधातुतां याति । अतः स्वल्पत्वात्कलासंज्ञः । आसां तु क्रमो धातुकर्मसम्भवविशेषात् । विशिष्टकार्यता तु स्वभावात् । तथा हि—प्रथमा रसशेषजापि मांसधरा । अथवा केषांचिद्धातूनां केषांचिदाशयानां चान्तरे यः क्लेदः स कलाख्यः । ते धातवो मांसशोणितमेदःशुक्रसंज्ञाश्चत्वारः । आशायाः पुनःश्लेष्मपित्तपुरीषाशयास्त्रयो भवन्ति । एवं सप्त" इति । सर्वेषां धातूनामाशयानां चान्तरे क्लेदः इति केचित् । तदयुक्तम् । अधिकत्वप्रसङ्गात् । मांसादिभिरेव तन्त्रेषु सप्तसंख्याया निर्देशः । किञ्चाभिरेव इतरधातुधारणसिद्धेः । तद्यथा—मांसधरा सर्वशरीरगतं मांसं धारयति । तथा रक्तधरा । मेदोधरा मज्जानमपि धारयति मेदोमज्जयोरेकस्थानत्वात् ।

'मेदो हि सर्वभूतानामण्वस्थिषु महत्सु च'

मज्जा भवति इति वचनात् । अस्थ्यपि सैवं धारयति मेदःस्थानत्वादस्थ्नः ।

---

१. पक्काशयोन्मुखं कृत्वा बलात् । २. पचत्यन्नं तदेव च । ३. विमुञ्चति । ४. बलोपष्टम्भ । ५. अन्त्या कला । ६. र्गमुपाश्रिता मुद्रितसुन्दर्याम् ।

शुक्रधरा सर्वशरीरगतत्वाद्रसशुक्रे धारयति । श्लेष्मधरा श्लेष्माणं धारयति विशेषेण सन्धिषु श्लेष्माणम् । पित्तधरा पित्तम् । पुरीषधरा पक्वाशयाश्रिता पुरीषं धारयति । तस्मात्सप्त । केन पक्वः । आत्मीयेन वह्निना । कीदृशः । श्लेष्मस्नाय्वपराच्छन्नः काष्ठसारवत् । एवं सप्त । अत्र सुश्रुतोक्तिः––"कलाः खल्वपि सप्तधात्वाशयान्तरमर्यादाः । श्लोकश्चात्र—

[1]यथाविधा तु काष्ठेषु भिद्यमानेषु दृश्यते ।
[2]तथाविधा तु मांसेषु च्छिद्यमानेषु दृश्यते ॥

स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा ।
श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु ता विदुः ॥

[3]तत्र प्रथमा मांसधरा नाम । [4]तस्यां सिरास्नायुधमनीस्रोतसां च प्रतानानि भवन्ति ।

यथा बिसमृणालानि विवर्धन्ते समन्ततः ।
भूमौ पङ्कोदकस्थानि तथा मांसे सिरादयः ॥

द्वितीया रक्तधरा नाम । या सन्धिषु मांसाभ्यन्तरतः, तस्यां शोणितं विशेषतः सिरासु यकृत्प्लीह्नोश्च ।

[5]वृक्षाद्यथा तु प्रच्छिन्नात् क्षीरिणः क्षीर[6]मास्रवेत् ।
मांसादेवं क्षतात् क्षिप्रं शोणितं [7]संप्रवर्तते ॥

तृतीया मेदोधरा नाम । मेदो हि नाम सर्वभूतानां[8]मण्वस्थिषु, महत्सु चान्तर्मज्जा भवति । चतुर्थी श्लेष्मधरा नाम [9]या सन्धिषु सर्वप्राणभृतां भवति ।

स्नेहाभ्यक्ते [10]यथाक्षे तु चक्रं साधु प्रवर्तते ।
सन्धयः साधु वर्तन्ते संश्लिष्टाः श्लेष्मणा तथा ॥

पञ्चमी पुरीषधरा नामा [11]या कोष्ठमधितिष्ठति ।

---

१. 'यथा हि सारः काष्ठेषु' । २. 'तथा धातुर्हि मांसेषु' । ३. तासां प्रथमा । ४. 'यस्यां मांसे सिरा' । ५. 'वृक्षाद्यथाभिप्रहतात्' । ६. 'क्षीरमावहेत्' । ७. 'संप्रसिच्यते' । ८. 'नामुदरस्थमण्व' । ९. 'सर्वसन्धिषु प्राणभृतां' । १०. यथा ह्यक्षे चक्रं' । ११. 'यान्तः कोष्ठे मलमपिविभजते पक्वाशयस्था' इति मुद्रितपाठः ।

यकृत्समीपात्कोष्ठं च तथान्त्राणि समाश्रिता ।
उण्डुकस्थं विभजते मलं मलधरा कला ॥

षष्ठी पित्तधरा नाम । या चतुर्विधमाहारमामाशयात्प्रच्युतं पक्वाशयोत्पतितं धारयति । सप्तमी शुक्रधरा नाम । या सर्वप्राणिनां सर्वशरीरव्यापिनी भवति ।

यथा पयसि सर्पिस्तु तैलश्चेक्षुरसे यथा ।
शरीरेषु तथा शुक्रं नृणां विद्याद्भिषग्वरः ॥"

इति । **संग्रहे**—"यस्तु धात्वाशयान्तरेषु क्लेदोऽवतिष्ठते स यथास्वमूष्मभिर्विपक्वः श्लेष्मजरायुच्छन्नः काष्ठ इव सारो धातु सारशेषोऽल्पत्वात् कलासंज्ञः । (ताः) धात्वाशयान्तरमर्यादाः सप्त कलाः । तासां प्रथमा मांसधरा नाम । यस्यां मांसे सिरास्नायुधमनीस्रोतसां भूमाविव पङ्कोदके(न) बिसमृणाळानां प्रतानानि भवन्ति । द्वितीया रक्तधरा नाम मांसस्याभ्यन्तरतः । तस्यां शोणितं विशेषतश्च सिराप्लीहयकृत्सु भवति । मांसाच्च क्षतात् क्षतजं वृक्षादिव क्षीरिणः क्षीरं प्रवर्तते । तृतीया मेदो धरा नाम । मेदो हि तस्यामुदरेऽण्वस्थिषु च सरक्तं भवति । तदेव च शिरसि कपालप्रतिच्छन्नं मस्तिष्काख्यं मस्तुलुङ्गाख्यं च । स्थूलास्थिषु तु मज्जा । चतुर्थी श्लेष्मधरा[2] । तत्स्थेन हि श्लेष्मणा श्लेषिताः सर्वसन्धयो दृढीभवन्ति[3] सोपाङ्गा इवाक्षाः । पञ्चमी पुरीषधरा नाम । सा ह्यन्त्रामपक्वाशयाश्रया उण्डुकस्थं मलं विभजति । षष्ठी पित्तधरा नाम पक्वामाशयमध्यस्था । सा ह्यन्तरग्न्यधिष्ठानतया आमाशयान् पक्वाशयोन्मुखमन्नं बलेन विधार्य पित्ततेजसा शोषयति पचति[4] । दोषाधिष्ठिता तु दौर्बल्यादाममेव विमुञ्चति । अतः[5] सा अन्नस्य ग्रहणात् पूनर्ग्रहणीसंज्ञा मता । बलञ्च तस्याः पित्तमेवाग्न्यभिधानम् । अतः सा अग्निनोपस्तब्धोपबृंहितयोगक्षेमा[6] शरीरं वर्तयति । सप्तमी शुक्रधरा[7] । द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाधो मूत्रमार्गमाश्रिता सर्वशरीरव्यापिनी शुक्रं

---

१. 'गूढश्चेक्षौ रसो यथा' । २. 'धरा नाम तत्स्थे' । ३. 'दृढा भव' ।
४. 'ति पक्वं च विमुञ्चति । दो' । ५. 'ततोऽसावन्नस्य' । ६. 'तैक्ययोगक्षेमा' ।
७. 'धरा नाम' इति मुद्रिते ।

प्रवर्तयति" इति । इन्दुः—"धात्वाशयेत्यादि । धातूनां रसरक्तादीनां आशया यानि स्रोतांसि तेषां द्वयोः धात्वाशययोर्मध्ये यः क्लेदः स्वेन स्वेन धातूष्मणा पक्वः स श्लेष्मादिच्छन्नः सन् कलाख्यां लभते । तासां प्रथमा रसशेषजापि मांसधरा । यां[1] भूमिमिवाधिष्ठाय बिसमृणालानां मांससिरादीनां प्रतानानि भवन्ति[2] । द्वितीयायां शोणितं भवति । विशेषतो यकृदादिष्वेव तस्यां कलायां शोणितं भवति । तत्प्रभावाच्च[3] मांसात् क्षताद् बहिः शोणितं प्रवर्तते । न हि तया विना मांसे रक्तं भवति । दृष्टान्तः स्फुटप्रतिपत्यर्थः । तृतीयायां मेदः सरक्तं भवत्युदरादिषु[4] । तामेवाश्रित्य मेदो मस्तुलुङ्गत्वं याति मज्जत्वं च याति । अक्षाश्चक्रनाभयः । सोपाङ्गाः साभ्यङ्गाः । उण्डुकं पुरीषाधारः । षष्ठी पक्वाशययोर्मध्ये स्थिता आमाशयात् पक्वाशयोन्मुखं अन्नं बलेन विधार्य विपचति पित्ततेजसा करणभूतेन । सैव वातादिदोषाधिष्ठानेन दौर्बल्यादाममेव विमुञ्चति । यदेवाग्नेर्धारणं तदेव तस्या उपस्तम्भनं यदेवाग्नेरुपबृंहणं तदेवास्या उपबृंहणमित्येकयोगक्षेमा । सप्तमी शुक्रधरा नाम । वस्तिद्वारस्य व्यङ्गुलमतिक्रम्य दक्षिणपार्श्वे मूत्रमार्गमाश्रित्य सर्वशरीरव्यापिनी शुक्रं प्रवर्तयति" इति । **पाठ्यकारस्तु**—"धात्वाशयान्तरक्लेद इति । धातोस्तदाशयस्य च अन्तरे यः क्लेदः स कलाख्यः । किं भूतः । स्वस्वमूष्मणा रसाग्न्यादिभिर्विपक्वः" इत्याह ॥

कलाख्यं भावमाख्यायाधाराख्यान् भावानाह—

**ताः सप्त सप्त चाधारा रक्तस्याद्यः क्रमात्परे ॥ १० ॥**

**कफामपित्तपक्वानां वायोर्मूत्रस्य च स्मृताः ।**
**गर्भाशयोऽष्टमः स्त्रीणां पित्तपक्वाशयान्तरे ॥ ११ ॥**

**कोष्ठाङ्गानि स्थितान्येषु हृदयं क्लोमपुप्फुसम् ।**
**यकृत्प्लीहोण्डुकं वृक्कौ नाभिडिम्बान्त्रवस्तयः ॥ १२ ॥**

---

१. 'यस्यां भूम्यामिव' । २. 'य मांसे कर्दमसदृशे सिरादीनां प्रतानानि मृणालप्रख्यानि भवन्ति' । ३. 'प्रभावाच्च' । ४. 'भवत्युदरेऽण्वस्थिषु' इति मुद्रिते ।

सप्त चाधारा इति । न केवलं कला एव सप्त आधारा अपि सप्त । रक्तादीनामिति वाक्यशेषः । अधारा आशयाः कण्ठोरःप्रभृतयः । रक्तस्याद्यः कण्ठः आशयः । सर्वप्राणिनां कण्ठच्छेदे सकलशरीरावस्थितस्य रक्तस्य प्रवृत्तेः । अन्ये उरःप्रभृतयो महास्रोतसि क्रमेण वर्तमानाः कफादीना-माधाराः स्मृताः इत्यर्थः । रक्तस्य कण्ठ आशयः । उरः श्लेष्मणः । आमस्यान्नस्य य आधारः स आमशब्देनोक्तः आमाशयः । पित्तस्य नाभिः । पक्वस्यान्नस्य पुरीषतां प्राप्तस्य य आधारः स पक्वाशयः । पुरीषस्य प्रदेशः । तस्याधो वायोः पक्वाधानं विशेषत इत्युक्तत्वात् । तस्याधो मूत्रस्याधार इत्युक्त इति । मूत्रवहाः सिराः वस्तिस्तस्याधश्च मूत्राधार इत्यर्थः । इन्दुरपि—"असृगाद्याशयाः कण्ठादयः क्रमेण महास्रोतसि वर्तन्ते सप्त" इत्याह । अरुणदत्तस्त्वाह—"रक्तस्याद्यः आद्यो रसाख्यो धातू रक्तस्याधारः । परेऽन्ये ये धातवः षट् क्रमाद्यथाक्रमं कफादीनामाधाराः स्मृताः । आमस्यान्नस्य य आधारः सोऽत्रामशब्देनोक्तः । पक्वान्नस्य पुरीषतां प्राप्तस्य य आधारः स पक्व-शब्देनोच्यते" इति । गर्भाशयो गर्भाधारः सोऽष्टमः स्त्रीणामेव देहे सम्भवति न पुंसाम् । क्व शरीरदेशे स्त्रीणां सम्भवतीत्याह—पित्तेत्यादि । पक्वशब्देनेह पक्वान्नमुच्यते । पित्तं च पक्वञ्च पित्तपक्वे तयोराशयौ आधारौ तयोरन्तरं मध्यं तस्मिन् । पित्ताशयपक्वाशययोर्मध्ये गर्भस्याशयः । इन्दुरपि—"अष्टमो गर्भाशयः स्त्रीणामेव । स च पित्ताशयपक्वाशययोर्मध्ये भवति" इत्याह । कोष्ठाङ्गानीत्यादि । एषु रक्ताद्याधारेषु सप्तसु । कोष्ठाङ्गानि उदरावयवाः । हृदयादीनि स्थितान्या-श्रितानि । कोष्ठाङ्गानि അകത്തിറച്ചി । हृदयं കരളം । क्लोम കിലോമക്കഴൽ । पुप्फुसः പൊരുമ്പൊതി । यकृत्प्लीहानौ दक्षिणवामतः स्थितौ । ഉതിരക്കുറ,ഉള്ളിറച്ചി । वृक्कौ വിലാക്കൊല രണ്ടും । नाभि എതിരിറച്ചി । डिम्बं ചങ്കു് । तत्र कफरक्तप्रसादसम्भूतं पद्माकार-मधोमुखं ओजसश्चेतनस्य च स्थानं हृदयम् । तस्य वामपार्श्वे प्लीहा पुप्फुसश्च । दक्षिणतो यकृत् क्लोम च । समानवायुप्रध्माताद्रक्ताद्देहोष्मणा पाचितात् प्लीहयकृती जायेते । रक्तफेनात् पुप्फुसः रक्तकिट्टादुण्डुकं रक्तप्रसादाद् वृक्कौ रक्तमांसप्रसादादान्त्राणि । नाभिः सर्वसिराणामाधारः ।

डिम्बः शकृत आधारः । वस्तिर्मूत्रं वहन्तीस्तदाधारभूताः सिराः समाश्रितः तदाधारभूतश्च । **अरुणो**ऽप्याह—

"कफरक्तप्रसादात्स्याद्धृदयं स्थानमोजसः ।
चेतनानुगभावानां परमं चिन्तितस्य च ॥
मांसपेशीमयं रक्तपद्माकारमधोमुखम् ।
तस्य दक्षिणतः क्लोमयकृत्पुप्फुसमास्थितम् ॥
समानवायुप्रध्माताद्रक्ताद्देहोष्मपाचितात् ।
किञ्चिदुच्छूनरूपस्तु जायते क्लोमसंज्ञकः ॥
तत्तुल्यहेतुजे प्लीहयकृती भिषजां मते ।
रक्तकिट्टादुण्डुकः स्यात्पुप्फुसो रक्तफेनजः ॥
मेदोऽसृजः पच्यमानात्स्यातां वृक्कौ प्रसादजौ ।
नाभिः सर्वसिराणां स्यादाधारः शकृतः पुनः ॥
डिम्बः स्याद्रक्तमांसस्य प्रसादादान्त्रसम्भवः ।
सार्धं त्रिव्याममात्राणि पुरुषाणां तु तानि च ॥
स्त्रीणां त्रिव्याममात्राणि वस्तिर्मूत्रस्य चाशयः ।"

इति । **संग्रहे**—"(तेषु) सप्तसु प्रतिबद्धानि कोष्ठाङ्गानि । हृदययकृत्प्लीहपुप्फुसोण्डुकवृक्कान्त्रादीनि । तत्र समानेनाध्मायमानस्य देहोष्मणा पच्यमानस्य शोणितस्याच्छतो जायते यकृत् प्लीहा च । रक्तफेनात्पुप्फुसः । रक्तकिट्टादुण्डुकः । रक्तमेदःप्रसादाद् वृक्कौ । रक्तमांसप्रसादादान्त्राणि । तानि सार्धत्रिव्यामानि पुंसाम् । त्रिव्यामानि स्त्रीणाम् । रक्तस्यानिलयोगात् कालीयम् । हृदयं पुनः श्लेष्मरक्तप्रसादात्संभवति पद्मकोशसङ्काशं सुषिरमधोमुखम् । यद् विशेषेण चेतनाया स्थानं सर्वभावानां च चेतनानुगतानाम् । तस्य वामपार्श्वे प्लीहा पुप्फुसश्च । दक्षिणतो यकृत् क्लोम च ।" **इन्दुः**—"तेषु चाशयेषु प्रतिबद्धानि हृदयादीनि कोष्ठाङ्गानि । आदिग्रहणान्नाभ्यादीनि सूक्ष्माणि गृह्यन्ते । तानि मृतशरीरे दृष्ट्वा कार्यकारणभावाद् विकल्पनीयानि । चेत-

१. 'चयो रक्त' । २. 'दुच्छ्रितरूप' इति मुद्रिते । ३. 'तद्' मुद्रितपाठः ।

नानुगता भावाः स्मृत्यादयो यत्र चेतनोऽन्वयी सक्तः” इति । पुनरप्युक्तं **संग्रहे**—“कफरक्तवाहिनां स्रोतसां महाभूतानां च प्रसादादिन्द्रियाणि । तेष्वपि नेत्रे श्लेष्मणः प्रसादाच्छुक्लमण्डलं तत् पितृजम् । असृजः प्रसादात् कृष्णमण्डलं तन्मातृजम् । मध्ये दृष्टिमण्डलं तदुभयात्मकम् । पक्ष्मवर्त्मशुक्लकृष्णदृष्ट्याख्यानि पञ्च मण्डलानि । तत्सन्धयश्चत्वारः । द्वौ चापाङ्गकनीनिकयोरिति ते षट् । (षट्) च पटलानि । द्वे वर्त्मनी । बाह्यं त्वाश्रितमम्यम्भसी । द्वितीयं मांसं तृतीयं मेदः चतुर्थमस्थि । तेषां बहलता दृष्टेः पञ्चमांशेन । बन्धनगुणास्तु चत्वारः । सिराकण्डरामेदःकफात्मकाः । श्लेष्मा तु परं सर्वसन्धिबन्धनमित्युक्तं प्राक् । नेत्राश्रितं तु तेजोबाह्यतेजसा योगाच्छस्त्र[1]मिवाश्मना कर्मण्यं भवति । अतियोगाच्चोपहन्यते । तच्च वैद्युतवद् वडवामुखवच्चाम्भोमध्यगतमपि वीर्योत्कर्षात्तेजस्त्वं न जहाति । मांसासृक्[2]प्रसादात्तु जिह्वा जायते । मांसासृक्कफमेदःप्रसादाद् वृषणौ” इति । **अत्रेन्दुः**—“कफादिवहानि स्रोतांसि[3] तेषां महाभूतानां[4] पाकपरिणामात् प्रसादाच्चक्षुरादीन्द्रियाणि भवन्ति । इन्द्रियाधिष्ठानानीन्द्रियाण्यु[5]च्यन्ते । तेष्वपीन्द्रियेषु मध्ये नेत्रे[6] यच्छुक्लमण्डलं तच्छ्लेष्मणः प्रसादाद्भवति । तच्च पैतृकं भवति । सुबोधम् । पञ्च नेत्रे[7] मण्डलानि पक्ष्मादीनि । तेषां सन्धयः (षट्)। एकः पक्ष्मवर्त्मनोः । द्वितीयो वर्त्मशुक्लयोः । तृतीयः शुक्लकृष्णयोः । चतुर्थः कृष्णदृष्ट्याख्ययोः । पञ्चमो नेत्रापाङ्गयोः । षष्ठोः नेत्रकनीनकयोः इति षट् । अपाङ्गः कर्णान्तिकम्[8] । कनीनकं नासानिकटम्[9] । षट् च नेत्रे पटलानि भवन्ति । बाह्यमित्यादिना पटलानां क्रमः । तत्र यद् बाह्यं पटलं तदूर्ध्वाधोभेदेन द्वे वर्त्मनी । अम्म्यम्भसी चाश्रितम् । (ताभ्यां तदाप्यायितम् । एवं) सर्वत्र वाच्यम् । दृष्टिमण्डलस्य यावती विस्तीर्णता तस्याः पञ्चमेन भागेन पटलानां घनत्वम् । सिरादिमयाश्चत्वारो देहे[10] बन्धन-

१. ‘च्छत्र’ । २. ‘सृक्कफप्रसा’ । ३. ‘यानि स्रोतांसि’ । ४. ‘नां चात्मीयाग्निना पाक’ । ५. ‘याणीत्युच्य’ । ६ ‘त्रे चक्रवदान्तरतो मण्ड’ । ७. ‘योः । अपाङ्ग’ । ८. ‘कर्णदिशिक’ । ९. ‘नासादिशि । षट्’ । १०. ‘देहबन्धन’ इति मुद्रिते ।

रज्जवः । याभिर्महासन्धयो बध्यन्ते । तेषां सिराधनन्यत्वान्नाधिकनिर्देशः । जिह्वावृषणयोरिन्द्रियाधारेष्वनुप्रवेशः" इति । "महाभूतानामात्मीयाग्निना पाकपरिणामप्रसादादिन्द्रियाणि जातानीति" तन्त्रान्तरेऽप्युक्तम् ॥

अधुना विशेषेण जीवितस्य स्थानानि देहावयवास्तान्याह—

**दश जीवितधामानि शिरोरसनबन्धनम् ।**
**कण्ठोऽस्रं हृदयं नाभिर्वस्तिः शुक्रौजसी गुदम् ॥ १३ ॥**

दशेत्यादि । शिरश्च रसनं च शिरोरसनम् । रसनं जिह्वा । बध्यतेऽनेनेति बन्धनम् । शिरोरसनस्य बन्धनं शिरोरसनबन्धनम् । शिरोरसन–बन्धनादीनि दश जीवितस्थानानि । एषु स्थानेषु विशेषेण जीवितं शरीरेन्द्रि–यसत्त्वात्मसंयोगलक्षणमवतिष्ठते । **हाटकस्त्वाह**—"दश प्राणायतनानि शिरः प्रभृतीनि रसनबन्धनं जिह्वामूलं जिह्वाबन्धनस्याधः कण्ठः" इति । **संग्रहे**—"दश प्राणायतनानि मूर्धा जिह्वाबन्धनं कण्ठो हृदयं नाभिर्वस्तिर्गुदः शुक्रमोजो रक्तं च" इति । **इन्दुः**—"प्राणानां आयतनानि मूर्धादीनि" इत्याह ॥

**जालानि कण्डराश्चान्ये पृथक् षोडश निर्दिशेत् ।**
**षट् कूर्चाः सप्त सीवन्यो मेढ्रजिह्वाशिरोगताः ॥ १४ ॥**

**शस्त्रेणैताः परिहरेच्चतस्रो मांसरज्जवः ।**
**चतुर्दशास्थिसङ्घाताः सीमन्ता द्विगुणा नव ॥ १५ ॥**

जालानीत्यादि । जालानीव जालानि शरीरे षोडश निर्दिशेत् । तेषां मांससिरास्नाय्वस्थिजालानि चत्वारि एकैकत्र गुल्फे मणिबन्धने च परस्परगवाक्षितानि स्थितानि । **तन्त्रान्तरे** च प्रोक्तम्—

"सिरास्नाय्वस्थिपिशितैश्चत्वारि मणिबन्धने ।
एकैकत्र च गुल्फे च जालान्येवं तु षोडश ॥"

इति । "एकैकत्रेति प्रत्येकं चतुर्षु गुल्फमणिबन्धनेषु चत्वारि" इतीन्दुः । जालं ഞരമ്പുകെട്ട्° । कण्डराश्च पृथगेव षोडश ब्रूयादाचार्य इति शेषः ।

कण्डरा मांसरज्जुप्रायाः । (ഞരമ്പു്?) तासां द्वे द्वे करचरणेषु, चतस्रः पृथग् ग्रीवापृष्ठयोरिति षोडश । **तन्त्रान्तरे—**

> "हस्तयोर्द्वे पादयोर्द्वे ग्रीवाभागेऽथ पृष्ठतः ।
> प्रत्येकं तु चतस्रः स्युः कण्डरा इति षोडश ।"

इति । तथा षट् कूर्चा अङ्गे स्युः । कुर्चाकृतयः स्नायुकण्डरा (सिराः) सिराबन्धाः कूर्चाः । हस्तपादेषु चत्वारः ग्रीवामेढ्रयोः द्वौः इति षट् । उक्तं च **तन्त्रान्तरे—**

> "करयोर्द्वौ पादयोर्द्वौ ग्रीवायां मेहने तथा ।
> एकैक इति षट् कूर्चाः"

इति । सप्त सीवन्यो मेढ्रादिषु स्थिताः । एका मेढ्राश्रिता । तथैका जिह्वायां स्थिता । पञ्च शिरःसंश्रिताः । द्वे शङ्खावाश्रित्य (प्र)वृत्ते द्वे कृकाटिके, एका उपरि ऋज्वी इति पञ्च । एवं स्थिताः सप्त । ताः शस्त्रेण परिहरेत् प्रत्यवायभयात् । न तासु शस्त्रं पातयेदित्यर्थः । उक्तं च—

> "सीवन्यः सप्त कीर्तिताः
> एका मेढ्रेऽथ जिह्वायां भवेयुः पञ्च मूर्धनि ।"

इति । सीवनी ത്തൽ । चतस्रो मांसरज्जवः (വെളത്തകാഠ?) पृष्ठवंश-मुभयतः पेशीनिबन्धनार्थाः । तासां द्वे बाह्ये द्वे अभ्यन्तरस्थिते । उक्तं च—

> "पृष्ठवंशं ह्युभयतश्चतस्रो मांसरज्जवः ।
> बाह्ये द्वे अन्तरे द्वे च"

इति । अस्थ्नां सङ्घाताश्चतुर्दश । तेषामेकैको गुल्फजानुवंक्षणविभागेन पादयोः षट् । मणिबन्धनकूर्परकक्ष्याभेदेन हस्तयोः षट् । त्रिकशिरसोर्द्वयमेवं चतुर्दश । उक्तं च—

> "गुल्फे जानुनि वंक्षणे ॥
> त्रिके शिरसि कक्ष्यायां कूर्परे मणिबन्धने ।
> अस्थ्नां भवेयुः सङ्घाता अमी चात्र चतुर्दश ॥"

इति । अस्थिसङ्घाताः ഏപ്പു് । तथा सीमन्ता द्विगुणा नव अष्टा-

दशेत्यर्थः । ते तु पञ्च शिरसि शेषा गुल्फादिष्वस्थिसङ्घातवत् । एवमष्टादश । उक्तं च—"सीमन्ताः [illegible]° । पञ्च मूर्ध्नि(स्युः) गुल्फादिष्वस्थिसङ्घातवत् ।" इति । **संग्रहे**—"षोडश कण्डराः । तासां द्वे द्वे करचरणेषु, चतस्रः पृथग् ग्रीवापृष्ठयोः । षोडश जालानि । तेषां मांससिरा[1]स्नावास्थिजालानि । चत्वार्येकैकत्र गुल्फे मणिबन्धने च परस्परगवाक्षितानि[2] स्थितानि । षट् कूर्चा हस्तपादग्रीवामेढ्रेषु । चतस्रो मांसरज्जवः पृष्ठवंशमुभयतः पेशीनिबन्धनार्थम् । तासां द्वे बाह्ये द्वे चाभ्यन्तरस्थिते । सप्त सीवन्यः । ताः पञ्च शिरसि जिह्वामेहनयोरेकैका परिहार्याश्च शस्त्रेण । चतुर्दशास्थिसङ्घाताः । तेषामेकैको गुल्फजानुवंक्षणमणिबन्धनकूर्परकक्ष्यासु त्रिकशिरसोश्च । तद्वत्सीमन्ताः । ते तु पञ्च शिरसीत्यष्टादश" इति ।

**अस्थ्नां शतानि षष्टिश्च त्रीणि दन्तनखैः सह ।**

अस्थ्नामित्यादि । शरीरे दन्तनखैः सम अस्थ्नां त्रीणि शतानि षष्ट्यधिकानि । तेषां चत्वारिंशच्छाखासु । विंशतिशतमन्तराधौ शतं मूर्धनीति । उक्तं च—

"अस्थ्नां शतानि षष्टिश्च त्रीणि दन्तनखैः सह ।
तेषु पादनखाः पञ्च सक्थिप्रत्यङ्गुलिस्थितम् ?
पञ्च पादनखासक्थिप्रत्यङ्गुल्यस्थिकत्रयम् ।
एवं पञ्चदशैतानि शलाकाः पञ्च तु स्मृताः ।
एकस्तत् प्रतिबद्धश्च जङ्घायां कूर्चगुल्फके ॥
द्वे द्वे इति षडेव स्युः पार्ष्णावूरौ च जानुनि ।
एकैकमित्येकसक्थि पञ्चत्रिंशत्तथापरे ॥
भुजयोः सक्थितुल्यानि भेदा एषां तु नामतः ।
पाणिः स्यात्पादवत्तत्र हस्तमूलं च पार्ष्णिवत् ॥

---

१. 'स्नाय्वस्थि' । २. 'नि तानि स्थि' इति मुद्रिते ।

मणिबन्धो गुल्फतुल्यः कूर्चस्तुल्योद्वयेऽपि हि ?।
प्रकोष्ठो जङ्घया तुल्यो जानुवत् कूर्परो भवेत् ॥
ऊरुवद् बाहुपृष्ठं स्यादन्तराधौ तु पार्श्वकाः ।
चतुर्विंशतिरेतेषु फलकान्यर्बुदानि च ।
तावन्ति पृष्ठे त्रिंशत्स्युरुरस्यष्टौ त्रिभागके ।
एकैकं स्यादक्षकयोरंसयोः फलकाख्ययोः ॥
नितम्बे तु द्वे भवेतां शतमेतत्सविंशति ।
गण्डयोः कर्णयोर्द्वे द्वे शङ्खयोश्चाथ तालुनि ॥
तथा जत्रुण्येकमेकं ग्रीवायां तु त्रयोदश ।
कण्ठनाड्यां तु चत्वारि हनुबन्धे द्वयं भवेत् ॥
द्वात्रिंशदेते दन्ताः स्युस्तत्सङ्ख्योलूखलानि च ।
त्रीणि घ्राणे ( षट् ) शिरसि शतमूर्ध्वमिति स्मृतम् ॥
शाखान्तराध्यूर्ध्वभेदादेवं षष्ट्या शतत्रयम् ।
कपालं रुचकं चैव तरुणं वलयं तथा ॥
नलकं चेति पञ्च स्युर्नितम्बे गण्डजानुनि ।
तालुमध्ये शिरस्यंसे कपाल(ख्येन? ख्यानि) निदिशेत् ॥
दशनारुचकाख्याः स्युः घ्राणकर्णाक्षिकोशके ।
तरुणानि पृष्ठपार्श्वे चरणे हस्तयोरपि ॥
शेषाणि नलकाख्यानि नामाख्याताकृतीनि च ।

इति । संग्रहे—"त्रीणि षष्ट्यधिकान्यस्थिशतानि । तेषां चत्वारिंशच्छतं शाखासु । विंशच्छतमन्तराधौ । शतमूर्ध्वमिति । तत्रै (कै) कस्मिन् सक्थ्नि पञ्च पादनखाः प्रत्येकमङ्गुल्यां त्रीण्यस्थीनि तानि पञ्चदश । पञ्च पादशलाकाः । प्रतिबन्धकमेकम् । द्वे द्वे कूर्चगुल्फजङ्घासु । एकैकं पार्ष्णि-

१. 'प्रकोष्ठौ जङ्घया तुल्यौ' । २. 'देव द' । ३. पष्टिशत' । ४. 'नलकं पञ्चचेतिस्युः' इति मुद्रितसुन्दर्याम् । ५. 'वलयानि तु' इति मुद्रितसुन्दर्यां पाठः । ६. 'तेषां च चत्वा' । ७. 'सविंशः' । ८. 'तत्प्रति' ।

जानूरुषु । सर्वाणि च नखास्थ्यादीनि सक्थिवद् बाह्वोश्च । चतुर्विंशतिः पार्श्वकाः । तावन्त्येव स्थालकान्यर्बुदानि च । त्रिंशत् पृष्ठे । अष्टावुरसि । एकैकं भागे त्रिके । नितम्बयोश्च द्वे । तद्वदक्षकांसांसफलकेषु । तथा गण्डकर्णशङ्खेषु जत्रुतालुनोश्च । त्रयोदश ग्रीवायाम् । चत्वारि कण्ठनाळ्याम् । द्वे हनुबन्धने । द्वात्रिंशद् दन्ताः । तावन्ति तद्वदुलूखलानि । त्रीणि नासायाम् । षट् शिरसि । तानि जानुनितम्बांसगण्डतालुशङ्खवंक्षणशिरःसु कपालसंज्ञानि । दशनास्तु रुचकाः । घ्राणकर्णग्रीवाक्षिकोशेषु तरुणानि । पाणिपादपार्श्वपृष्ठेषु वलयानि । शेषाणि नलकानीति । नामानुगताकृतीनि पञ्चविधान्यस्थीनि" इति । अत्रेन्दुः—"प्रत्येकं शाखायां पञ्च नखाः । पञ्चदशाङ्गुल्यस्थीनि । पञ्चाङ्गुलीनखशलाकाः । एकं शलाकाप्रतिबन्धनम् । कूर्चे द्वे । गुल्फे द्वे । जङ्घायां द्वे । एकं पार्ष्णौ । एकं जानुनि । एकमूरौ । इति पञ्चत्रिंशत् । शाखानां चतुष्ट्वाच्चतुर्गुणानि चत्वारिंशच्छतमस्थ्नां शाखासु । पॅरशुकस्थालकार्बुदानि द्विसप्ततिरस्थीनि । त्रिंशदष्टावेकमेकं नितम्बयोर्द्वित्वाद् द्वे अक्षकादीनामपि त्रयाणां द्वित्वाद् द्वे द्वे इत्यन्तराधौ विंशकं शतमस्थ्नाम् । पार्श्वका दीर्घवक्रान्ता यत्र पृष्ठतो बध्यन्ते । यानि स्थालकानि तान्यपि । एषु यानि पृष्ठवंशारम्भकास्थिषु संबध्यन्ते तान्यर्बुदानि । तथेत्येकैकम् । तत्र गण्डादीनां त्रयाणां द्वित्वात् द्वे द्वे द्वे । (ए)कमेकम् । त्रयोदश । चत्वारि । द्वे द्वयोः । द्वात्रिंशत् । द्वात्रिंशत् त्रीणि । षडिति शतं शिरसि । नासायामग्रे पार्श्वयोर्मध्य एकम् । शिरस्यग्रे कपालमेकम् । पृष्ठत एकम् । पार्श्वयोर्द्वे द्वे इति षट् कपालं शिरसि । कपालदिनामानि पञ्च अन्वर्थाकृतीनि । तरुणानि मृदूनि" इति ॥

धन्वन्तरिस्तु त्रीण्याह सन्धीनां च शतद्वयम् ॥ १६ ॥

दशोत्तरं

---

१. 'परशुकाः' इति मुद्रितपाठः । २. 'तद्वदुलूखलानि च त्री' । ३. वंक्षणमध्यचि' । ४. लीलम्रश' । ५. 'पार्श्वकास्थाल' इति मुद्रिते । ६. 'नासाग्रे' । ७. 'योर्द्वयोर्द्वौ' ।

धन्वन्तरिरित्यादि । धन्वन्तरिसंज्ञः पुनस्तन्त्रकृदस्थ्नां शतानि त्रीण्येवाह नाधिकानि । तथा सन्धीनां शतद्वयं दशोत्तरम् । धन्वन्तरिराहेति योज्यम् । संग्रहे—"तेषु पञ्चविधेष्वस्थिषु सिरास्नावभिर्मांसानि बद्धानि ।[1] दशोत्तरं शतद्वयमस्थिसन्धीनाम् । तेषामष्टषष्टिः शाखासु । एकोनषष्टिरन्तराधौ । त्र्यशीतिरूर्ध्वम् । तत्रैकैकस्मिन् सक्थ्नि पादाङ्गुल्यां प्रत्येकं त्रयः । द्वावङ्गुष्ठे । ते चतुर्दश । एकैको गुल्फजानुवंक्षणेषु । त्रयः कटीकपालेषु । चतुर्विंशतिः पृष्ठवंशे । तथा पार्श्वयोः । अष्टावुरसि । अष्टौ ग्रीवायाम् । त्रयः कण्ठनाड्याम् । अष्टादश कण्ठनालीनिबद्धाः हृदयक्लोमनाडीषु । द्वात्रिंशद् दन्तमूलेषु । एकैकः काकलनासामूर्धसु । द्वौ द्वौ गण्डकर्णशङ्खवर्त्मनेत्रहनुसन्धिषु । द्वावुपरिष्टाद् भ्रुवोः । पञ्च शिरःकपालेषु । तेऽङ्गुलीगुल्फजानुमणिबन्धकूर्परेषु कोरसंज्ञाः । कक्ष्यावंक्षणदन्तमूलेषूलूखलसंज्ञाः ।[2] अंसपीठगुदभगनितम्बेषु सामुद्गाः । ग्रीवापृष्ठवंशयोः प्रतराः । शिरःकटीकपालेषु तुन्नसीवनसंज्ञाः ।[3] हनूभयतो वायसतुण्डाः । कण्ठहृदयनेत्रयकृत्(प्लीह) क्लोमनाडीषु मण्डलसंज्ञाः । श्रोत्रशृङ्गाटकेषु शङ्खावर्ताः । इत्यस्थिसन्धयोऽष्टविधाः" इति । इन्दुः—"(तेषां) प्रत्येकं त्रय अङ्गुलीषु । द्वादश । त्रिष्वस्थिष्वङ्गुल्याः द्वौ[4] । शलाकायां तृतीयः । अङ्गुष्ठमध्य एकः शलाकायां द्वितीय इति चतुर्दशकरे । गुल्फादिष्वेकैकः । एवं शाखासु अष्टषष्टिः सन्धयः । त्रयः चतुर्विंशतिद्वयं अष्टावित्येकोनषष्टिरन्तराधौ । तथेति पृष्ठवंशवत् पार्श्वे एकस्मिन् द्वादशान्यस्मिन् द्वादश । परशुकाश्रयत्वात्सन्धीनाम् । अष्टौ त्रयः अष्टादश द्वात्रिंशद् एकः एकः गण्डादिषु द्वौ द्वौ षट्सु एवं द्वादश द्वौ प(ञ्च) इति त्र्यशीतिरूर्ध्वम् । त्रिषु[6] हृदयादिषु अष्टादश सन्धयः, ते च कण्ठनाड्यां प्रतिबद्धाः । अत एव शिरसि गणिताः । हन्वोः सन्धिः हनुसन्धिः । द्वौ द्वौ गण्डादीनामित्येकैकस्मिन् गण्डादावेकैकः सन्धिर्ज्ञेयः । उपरिष्टाद् द्वाविति भ्रुवोरूर्ध्वे । शिरोवर्तुलतया शिरःकपालेषु पञ्च । द्वौ ललाटपार्श्वयोः । द्वौ कृका

१. 'तेषु हि सिराभिः स्नायुभिश्च निबद्धानि मांसानि । दशो' । २. 'कक्षावं' । ३. 'सेवनीसं' । ४. 'द्वे' । ५. 'याः' । ६. 'तिसृषु हृदयादिनाडीष्वष्टा' इति मुद्रितपाठः ।

टिकापार्श्वयोः । एक ऋजुः । तेषां सन्धीनां स्थानविशेषेण संज्ञाष्टकमनुगतार्थम् । श्रोत्रशृङ्गाटकं भ्रुव उपरि कर्णनिकटे । इत्यस्थ्याश्रितानां सन्धीनां दशोत्तरं शतद्वयमुक्तम्" इति । अरुणेनाप्युक्तं---

सङ्ख्यायन्ते सन्धयोऽत्र चतस्रोऽङ्गुल्यः पदि[1] ।
चतसृष्वङ्गुलीषु स्युः प्रत्येकं त्रय एव तु ॥
द्वावङ्गुष्ठे वंक्षणे स्यादेको गुल्फेऽथ जानुनि[2] ।
सक्थ्न्येकस्मिन् सप्तदश तावन्तोऽपि द्वितीयके ॥
भुजयोः सक्थितुल्याः स्युरन्तराधौ[3] त्विमे मताः ।
त्रयः कटीकपालेषु विंशतिश्चतुरुत्तरा ॥
पृष्ठे तद्वत्पार्श्वयोश्च[4] उदरेऽष्टावथोर्ध्वतः ।
शिरोधरायामष्ट स्युः कण्ठनाड्यां त्रयः स्मृताः ॥
हृदयक्लोमयकृतां नाडीष्वष्टादश स्मृताः ।
द्वात्रिंशद्दन्तमूलेषु एकैको[5] घ्राणकाकले ॥
मूर्ध्नि च द्वौ कर्णशङ्खगण्डे नेत्रेऽथ वर्त्मनि ।
हनुसन्धौ च विज्ञेयौ द्वौ भ्रुवोश्चोपरि स्मृतौ ॥
पञ्च (मूर्ध)कपालेषु ऊर्ध्वमेवं[6] त्र्यशीतिका ।
संज्ञयैतेऽष्टधा[7] ज्ञेया मणिबन्धेऽथ जानुनि ॥
गुल्फेऽङ्गुलौ कोरसंज्ञा द्विजमूलेषु वंक्षणे ।
कक्ष्यायां चोलूखलाख्या अंसपीठे गुदे भगे ॥
नितम्बे चैव सामुद्गो ग्रीवायां पृष्ठवंशके ।
प्रतराः स्युर्मूर्धकटीकपालेषु तु सीवनाः ॥
हनुभये काकतुण्डाः कण्ठस्य यकृतस्तथा[8] ।
हृदयक्लोमनेत्राणां नाड्यां मण्डलनामकाः ॥
श्रोतशृङ्गाटकाख्येषु शङ्खावर्ता इति स्मृताः ।" इति ॥

---

१. 'पदे' । २. गुल्फे तु जानुनि' । ३. 'ल्यानि चान्तराधौ' । ४. 'श्च वक्षस्यष्टा' इति मुद्रिते । ५. 'चैकके घ्राण' । ६. 'चोर्ध्वमेवं' । ७. 'सन्धयस्त्वष्टधा' । ८. 'पन्नगस्तथा' मुद्रितपाठः ।

अथ आत्रेयमतं ब्रूते—

**सहस्रे द्वे निजगादात्रिनन्दनः ।**

अत्रिनन्दनो द्वे सहस्रे सन्धीनां निजगाद प्रोवाच । स हि स्नायुपेशीसिराश्रितैः सन्धिभिः सह गणयति । संग्रहे—"स्नायुपेशीसिराश्रितैस्तु सन्धिभिः सहस्रद्वयम् । न पुनः शस्त्रप्रणिधाने तेषु वाच्यमस्तीति पृथङ् नोच्यते" इति । तेषु सप्तशतानीत्येवमेकविंशतिशतानि प्रायेणाप्नुवन्तीति मन्यामहे ।

**स्नावानवशती पञ्च पुंसां पेशीशतानि च ॥ १७ ॥**

**अधिका विंशतिः स्त्रीणां योनिस्तनसमाश्रिताः ।**

स्नावा इत्यादि । स्नायूनामस्मिन् देहे नवशती । नवानां शतानां समाहारो नवशती । 'द्विगोः' इति ङीप् । नवशतानीत्यर्थः । तेषां षट् शतानि शाखासु । त्रिंशच्छतद्वयमन्तराधौ । ऊर्ध्वं सप्ततिः । तत्रैकैकस्मिन् सक्थ्नि पदाङ्गुल्यां प्रत्येकं षट् । तानि त्रिंशत् । दश प्रत्येकं पादतलकूर्चगुल्फेषु । तान्यपि त्रिंशत् । एकीकृत्य षष्टिः । त्रिंशद् जङ्घायाम् । दश जानुनि । चत्वारिंशदूरौ । दश वंक्षणे । इत्येवं सक्थ्नि सार्धं शतम् । द्वितीयेऽपि तद्वत् । बाह्वोश्च सक्थिवत् । शाखास्वेवं षट् शतानि । चत्वारिंशत् कट्याम् । (विंशतिः) मुष्कमेढ्रवस्त्यान्त्रेषु । अशीतिः पृष्ठे । षष्टिः पार्श्वयोः । अष्टादश उरसि । चत्वार्यक्षकयोः । अष्टावंसयोः । इत्यन्तराधौ त्रिंशच्छतद्वयमिति । त्रिंशदधिकाष्टौ शतानि भवन्ति मुष्कादिषु तानि विंशतिः साधारणानि । अक्षकयोर्द्वे द्वे । अंसयोश्चत्वारि चत्वारि । शिरस्युच्यन्ते—द्वे द्वे मन्यावटुनेत्रोष्ठतालु(ष्वतिद ? षु ।) त्रिंशद् ग्रीवायाम् । त्रीणि जत्रुणि । चत्वारि हन्वोः । पञ्च जिह्वायाम् । द्वादशोत्तराधरेषु दन्तमांसेषु । षण्मूर्धनि । एवं सप्ततिः शिरसि । अवटुः कृकाटिका । एवं स्नायूनां नवशतानि । सूक्ष्माः सिराः स्नावाः । तेषां देशविशेषेणाकारविशेषा उच्यन्ते । (संग्रहे)—"तत्र शाखासु सन्धिषु (च) प्रतानवन्ति । महास्नावानि तु वृत्तानि कण्डरासंज्ञानि । वस्त्यामपक्वाशयान्त्रेषु सुषिराणि । पार्श्वपृष्ठोरःशिरस्सु पृथूनि"

इति । अत्रेन्दुः—"प्रतानवन्ति अनेकप्रकाराणि, तेषामेव स्नावानां वृत्तानां महतां च कण्डरासंज्ञा" इति । संग्रहे—"[1]तैरेतैः स्नावभिः सन्धिषु सुबद्धा तनुर्नौरिव सम्यगीहते । तस्मादस्थिसिरादिभ्योऽपि तानि यत्नतो रक्षेत्" इति । तथा चोक्तम्—

"नह्यस्थीनि तथा हिंस्युर्न पेश्यो न च सन्धयः ।
व्यापादिता अपि सिरा यथा स्नायूनि देहिनाम् ॥
तथा स्नायूनि यो वेत्ति बाह्यान्याभ्यन्तराणि च ।
स गूढशल्यमाहर्तुं देहाच्छक्नोति देहिनः ॥"

इति । संग्रहे—"यः स्नावानि बाह्यान्यभ्यन्तराणि च सम्यग् जानाति स गूढशल्यमाहर्तुं समर्थो भवति" इति । पुंसां पञ्च पेशीशतानि । "तासां चत्वारि शतानि शाखासु । षष्टिरन्तराधौ । चत्वारिंशदूर्ध्वम् । तत्रैकैकस्मिन् सक्थ्नि पादाङ्गुल्यां प्रत्येकं तिस्रस्तिस्रः । ताः पञ्चदश । दश दश प्रपदे पादतले गुल्फे च । तथा पादस्योपरि कूर्चे सन्निविष्टाः । विंशतिर्जङ्घायाम् । पञ्च जानुनि । विंशतिरूरौ" इति । इन्दुः—"अङ्गुलीषु पञ्चदश । प्रपदे पादतलस्याग्रभागे दश । तथा पादतले दश । गुल्फे दश । पादस्योपरि दश । ताश्च कूर्चनाम्नि मर्मणि सन्निविष्टाः । विंशतिर्जङ्घायाम् । जानुनि पञ्च । ऊरौ विंशतिः । इति शतं सक्थ्नि । तद्वत् तिसृषु शेषासु शाखासु" इति । एकैका मेढ्रसीवन्योः । द्वे वृषणयोः । दश स्फिजोः । तिस्रो गुदे ता वलीसंज्ञाः । द्वे बस्तिशिरसि । चतस्र उदरे । नाभ्यामेका । द्वे हृद्यामाशये च साधारण(म्) । यकृदादिषु त्रिषु षट् । पृष्ठे पञ्च । तास्तु ऊर्ध्वं शिरसः सन्निविष्टाः । दश दीर्घाः पार्श्वयोः । दश वक्षसि । तिस्रोऽसाक्षकोपरितः । अत्रेन्दुः—"एका मेढ्रे । एका सीवन्याम् । द्वे वृषणयोः । स्फिजोर्दश । गुदे तिस्रो वलीसंज्ञाः । द्वे । चतस्रः । एका । द्वे हृद्यामाशये च साधारणम् । यकृदादिषु त्रिषु षट् । पृष्ठे पञ्च । तास्तु ऊर्ध्वं शिरसि संनिविष्टाः । दश ।

---

१. 'स्नावबन्धनैर्हि सन्धिषु' इति मुद्रिते ।

दश। अंसाक्षकोपरितस्तिस्र इत्यन्तराधौ षष्टिः। पूर्वैः सह षष्ट्यधिकानि चत्वारि शतानि भवन्ति"। संग्रहे—"अंसाक्षकोपरितस्तिस्र इत्यन्तराधौ षष्टिः। दश ग्रीवायाम्। अष्टौ गण्डयोः। अष्टौ हन्वोः। एकैका गलकाकलजिह्वामूर्धसु। द्वे द्वे तालुललाटयोः। नासौष्ठकर्णेषु च" इति। चत्वारिंशदूर्ध्वाङ्गे। (तरलुकं काक(ल)स्योपरि मुसलाकृति मांसकूमूर्धा शिरः?) नासायां द्वे ओष्ठयोः कर्णयोश्च प्रत्येकमेका इति पुंसां पञ्च पेशीशतानि। स्त्रीणां तु विंशतिः पेश्योऽधिकाः। काः। योनिस्तनसमाश्रयाः। तासां मध्याद् दश स्तनयोः। एकस्मिन् स्तने पञ्च अन्यस्मिन्नपि पञ्चेति दश। तासां बालभावे रुद्धावमात्रं यौवने तु वृद्धिर्भवति। दश योनौ। तासां विभागः **संग्रहे प्रोक्तः**—"स्त्रीणां तु विंशतिरधिका। तत्र दश स्तनयोः। तासां यौवने परिवृद्धिर्भवति। दश योनौ। तासामभ्यन्तरप्रसृते द्वे। मुखाश्रिते वृत्ते द्वे। तिस्रो गर्भमार्गाश्रयाः। योनिस्तु शङ्खनाभ्याकृतिस्त्र्यावर्ता। तस्यास्तृतीये आवर्ते पित्तपक्वाशययोरन्तरे रोहितमत्स्यमुखाकारा गर्भशय्या तस्याः शुक्रार्तवप्रवेशिन्य(श्चतस्रः? तिस्रः) पेश्यः" इति। **अत्रेन्दुः**—"द्वे अभ्यन्तरे महास्रोतसि प्रवृत्ते। द्वे योनिमुखाश्रये वृत्ताकारे। तिस्रो गर्भमार्गमास्थिताः। तिस्रश्च गर्भाशये शुक्रार्तवप्रवेशिन्यो गर्भशय्यायां प्रतिबद्धाः। सा च योनौ शङ्खनाभ्याकृत्या तृतीय आवर्ते निबद्धा। रोहितमत्स्यमुखाकारा गर्भशय्या" इति। सूक्ष्माः सिराः स्नायवः। पेश्यः पुनः स्नाय्वाकृतयो मांसमय्यः। **तन्त्रान्तरे**ऽप्युक्तं—

"पुरुषाणां भवेदेतत्पेशीनां शतपञ्चकम्।
दशाधिकास्तु स्तनयोर्दश योनौ च योषिताम्॥

प्रत्येकं स्तनयोः पञ्च तासां वृद्धिस्तु यौवने।
योन्यन्तराश्रिते द्वे च द्वे च वृत्ते मुखाश्रिते॥

गर्भपात्राश्रितास्तिस्रो यत्र गर्भोऽवतिष्ठते।
शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता जायते स्त्रियाः॥

१. 'न्तराश्रिते द्वे। मुखाश्रिते'।

तस्यास्तृतीय आवर्ते रोहितस्याकृतिर्भवेत् ।
गर्भशय्याथ तिस्रश्च भवेयुः सम्प्रवेशिकाः ॥
शुक्रस्य चार्तवस्यैवं पेशीस्तन्त्रविदो विदुः ।"

इति । "एताभिर्हि शरीरे तनुबहलस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्ण-कर्कशाभिः सन्ध्यस्थिसिरास्नावानि प्रच्छादितानि । सिराधमनी(मुखानां) त्वणुशो विभज्यमाना(ना)मेकोनत्रिंशच्छतसहस्राणि नव च शतानि षट्पञ्चाशानि भवन्ति । ताभिरिदं शरीरं गवाक्षितं पिनद्धमाततं च । तावन्ति च केशश्मश्रुलोमानि । तासां हि मुखानि तत्प्रतिबद्धानि । अतः तानि ताभिराप्याय्यन्ते । तैश्च ताः स्वेदमभिवहन्ति । तदाभ्यङ्गलेपादिवीर्यं त्वचि विपक्वमन्तर्नयन्ति स्पर्शं च गृह्णन्ति । स्रोतांसि पुनरसङ्ख्येयान्येव" इति **संग्रहे** । अत्र **इन्दुः**—"ताभिरनन्तरोक्ताभिः पेशीभिः तनुत्वादिगुण-युक्ताभिः शरीरे सन्ध्यस्थ्यादीनि प्रच्छादितानि । सिरा नातिस्थूलाकारा अन्तःसुषिरा वातादिवहाः । धमन्यस्तद्विशेषा एव वक्ष्यमाणलक्षणाः । ताभिः शरीरं गवाक्षितं जालवत् । पिनद्धं यन्त्ररज्जुवत् । आततं विस्तारितं पैटवत् । अणुशो विभज्यमा(ना)नां सूक्ष्मैर्भागैः क्रमेण विभागं (भँजन्ति? भजन्तीनां) तासां सिराधमनीनां मुखानि सर्वत्र प्रसृतानि । तत्प्रतिबद्धानि केशा-द्यनुबद्धानि । अतो हेतोस्तानि केशादीनि ताभिः सिराधमनीभिः आप्याय्यन्ते । तैश्च केशाद्यनुबद्धैर्मुखैः ताः स्वेदमभिवहन्ति अभ्यङ्गादिवीर्यं त्वचि विपक्वं सदन्तर्नयन्ति । स्पर्शं गृह्णन्ति । स्रोतांसि मार्गा यैरन्नरसो धातुतां याति । तान्यतिसौक्ष्म्यात् प्रतानवत्वाच्चापरिसङ्ख्येयानि" इति । अन्ये त्वेवमाहुः—शरीरे रोम्णां द्वासप्ततिः कोट्यः इति ।

इदानीं सिराः सङ्ख्यातुमाह—

**दश मूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः ॥ १७ ॥**
**रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम् ।**

---

१. 'ताभिः' । २. 'ला रज्ज्वाकारा' । ३. 'पटतन्तुवत्' । ४. 'गं गच्छन्तीनां तासां' इति मुद्रिते ।

दशेत्यादि । हृदि तिष्ठन्तीति हृत्स्थाः हृदयप्रतिबद्धाः । अन्यासां सर्वासां सिराणां मूलभूताः प्रधानभूताः सिरा दश । ताभ्यो हि सर्वाः सिरा भवन्ति ततः प्रधाना इत्यर्थः । ताः सिराः सर्वं वपुः सकलं देहं रसात्मकमोजो वहन्ति नयन्ति । कथम् । सर्वतः सर्वदिनं, अङ्गेषु प्रत्यङ्गेषु चेत्यर्थः । वहेर्द्विकर्मकत्वाद्वपुष ओजसश्च कर्मभावः । रसात्मकं रसस्वभावम् । आहारात् सारकिट्टतया परिणतात् सारभूतम् । ओजः सर्वतो नित्यं वहन्ति तन्निबद्धं हि चेष्टितं तासु दशसिरासु निबद्धं निश्चयेन स्थितं चेष्टितं वाक्कायमनोव्यापारः । हिशब्दो यस्मादर्थे । यस्मात्तन्निबद्धं चेष्टितं अतस्ता मूलसिराः ॥

इदानीं संस्थानमासां निर्दिशति—

**स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखाप्रतानवत् ॥ १९ ॥**

**भिद्यन्ते तास्ततः सप्तशतान्यासां भवन्ति तु ।**

स्थूलेत्यादि । स्थूलं मूलं यासां ता एवम् । स्थूलमूलत्वेन तासां व्यानवायुनिक्षिप्तो रसः शीघ्रमेवान्तः प्रविशति ततश्चास्मिन् देहे ता हृदयप्रतिबद्धा दशसिराः स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखाप्रतानवद् भिद्यन्ते अनेकधा सम्पद्यन्ते । यथा वृक्षपलाशरेखाणां प्रतानाः समूहाः स्थूलमूलाः सुसूक्ष्माग्राः अनेकधा जायन्ते तथैताः स्थूलमूलाः (सुसूक्ष्माग्राः) अनेकधा सम्पद्यन्ते । ततस्तस्माद्धेतोः पलाशरेखाप्रतानवदनेकधा गमनादासां सिराणां सप्त शतानि भवन्ति । (तास्तु-ध्याङ्गुलमङ्गुलः ?) (तु)शब्दोऽवधारणे भिन्नक्रमः सप्तैव शतानीति । तथा च सुश्रुतोक्तिः—"सप्तशतानि याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव कुल्याभिः उपस्निह्यतेऽनुगृह्यते च" इति । संग्रहे—"सिरास्तु[1] मध्ये एकैकत्र एकैकस्यां शाखायां शतं स्थितं तस्मिन् सिराशते सि जालन्धरा नाम या जालानि धारयति । तास्तु द्व्यङ्गुलमङ्गुलमर्धाङ्गुलं यवं यवार्धं च (गत्वा) द्रुमपत्रसीवनीप्रतानवत् भिद्यमानाः सप्तशतानि भवन्ति" इति । "सिराणामपि सङ्ख्याग्रहणं दृश्या एव गण्यन्त इति सूचयितुम्" इति पाठ्ये ।

१. "सिरास्तु......धारयन्ति" इदं मुद्रिते न दृश्यते ।

**तत्रैकैकं च शाखायां शतं तस्मिन्न वेधयेत् ॥ २० ॥**

**सिरां जालन्धरां नाम तिस्रश्चाभ्यन्तराश्रिताः ।**

तत्रेत्यादि । तत्र तासु सिरासु मध्ये एकैकत्र एकैकस्यां शाखायां शतं स्थितम् । तस्मिन् सिराशते सिरां जालन्धरां नाम, या जालानि धारयति, तां न विध्येत् । तिस्रश्चेति । याश्चान्याः तिस्रः सिराः अभ्यन्तराश्रिताः अन्तर्मुखाः ता अपि न वेध्याः इति चशब्दार्थः । एवं सक्थ्याश्रिते सिराशते चतस्रः सिराः न वेध्याः । द्वितीयेऽपि सक्थ्नि चतस्र एव । सक्थिवद् बाह्वोरपि । एवं चतुर्षु सिरा(चत्तसृषु? शतेषु) शाखास्वाश्रितेषु षोडश सिरा न वेध्याः । **संग्रहे**—"तासां चतुःशती शाखासु । तत्र षोडश अव्यधनीयाः" इति । तत्रेति चतुःशत्याम् ॥

**षोडश द्विगुणाः श्रोण्यां तासां द्वे द्वे तु वंक्षणे ॥ २१ ॥**

**द्वे द्वे कटीकतरुणे शस्त्रेणाष्टौ स्पृशेन्न ताः ।**

षोडशेत्यादि । षोडश द्विगुणाः श्रोण्यां द्वात्रिंशच्छ्रोण्यवयवाश्रिताः सिराः । तासां मध्ये द्वे द्वे तु वंक्षणे द्वयोर्वंक्षणयोः प्रत्येकं द्वे सिरे । द्वे द्वे कटीकतरुणे द्वयोः कटीकतरुणयोः मर्मणोः प्रत्येकं द्वे सिरे । एवं श्रोण्यामष्टौ सिराः शस्त्रेण न स्पृशेत् ॥

**पार्श्वयोः षोडशैकैकामूर्ध्वगां वर्जयेत् सिराम् ॥ २२ ॥**

पार्श्वयोः षोडश सिराः, तयोः पार्श्वयोः प्रत्येकमेकैकामूर्ध्वगां सिरां पार्श्वसन्धिसंज्ञां वर्जयेत् ॥

**द्वादश द्विगुणाः पृष्ठे पृष्ठवंशस्य पार्श्वगे ।**

**द्वे द्वे तत्रोर्ध्वगामिन्यौ न शस्त्रेण परामृशेत् ॥ २३ ॥**

द्वादश द्विगुणाः पृष्ठे चतुर्विंशतिः पृष्ठमाश्रिताः, तासां पृष्ठवंशस्य पार्श्वयोः पृष्ठवंशं ह्युभयतो द्वे द्वे तत्रोर्ध्वगामिन्यौ पृष्ठवंशस्यैकस्मिन् पार्श्वे ऊर्ध्वगामिन्यौ द्वे अपरस्मिन् द्वे एवं पृष्ठे चतस्रः शस्त्रेण न परामृशेत् ॥

**पृष्ठवज्जठरे तासां मेहनस्योपरि स्थिते ।**
**रोमराजीमुभयतो द्वे द्वे शस्त्रेण न स्पृशेत् ॥ २४ ॥**

पृष्ठवज्जठरे पृष्ठेन तुल्याः सिरा उदरे तत्सङ्ख्याः चतुर्विंशतिरित्यर्थः । तासामुदराश्रितानां सिराणां मध्ये मेहनस्य मेढ्रस्योपरि स्थिते रोमराजीमुभयतः उभयपार्श्वयोः द्वे द्वे सिरे । एवं चतस्रः सिराः शस्त्रेण न परामृशेत् । **सारकृदपि**—"रोमराजीमुभयतः उभयपार्श्वे द्वे द्वे सिरे एवं चतस्रः" इत्याह । **संग्रहे**—"चतुर्विंशतिः पृष्ठे । तासां पृष्ठवंशं ह्युभयतो द्वे द्वे ऊर्ध्वगामिन्यौ ताश्चतस्रः । चतुर्विंशतिरुदरे । तासां मेढ्रस्योपरि रोमराजीमुभयतो द्वे द्वे ता अपि चतस्रः" इति । **इन्दुः**—"पृष्ठे चतस्रः पृष्ठवंशस्यैकस्मिन् पार्श्वे ऊर्ध्वगामिन्यौ द्वे अपरस्मिन् द्वे इति जठरे चतस्रः । रोमराज्याः पार्श्वयोः द्वे द्वे" इति । **हाटकस्त्वाह**—"मेहनस्योपरि स्थिते द्वे सिरे रोमराजीमुभयत उभयपार्श्वे द्वे एवं चतस्रः" इति ॥

**चत्वारिंशदुरस्तासां चतुर्दश न वेधयेत् ।**
**स्तनरोहिततन्मूलहृदये तु पृथग्द्वयम् ॥ २५ ॥**
**अपस्तम्भाख्ययोरेकां तथापालापयोरपि ।**

चत्वारिंशदुरसि सिरास्तासां मध्ये चतुर्दश न वेधयेत् । ता एव दर्शयति—तयोः स्तनयोर्मूलं तन्मूलम् । स्तनरोहितयोः तथा स्तनमूलयोः तथा हृदये पृथक् प्रत्येकमेकैका । तथा अपालापयोरपि प्रत्येकमेकां सिरां एवं चतुर्दश न वेधयेत् । 'अपालवयो'रिति केचित्पठन्ति ।

चतुःषष्ट्यधिकं शतमूर्ध्वाङ्गे । तद्विभजनार्थमाह—

**ग्रीवायां पृष्ठवत्तासां नीले मन्ये कृकाटिके ॥ २६ ॥**
**विधुरे मातृकाश्चाष्टौ षोडशेति परित्यजेत् ।**

ग्रीवायामित्यादि । ग्रीवायां पृष्ठवत् सिराणां सङ्ख्या चतुर्विंशतिः ।

तासां सिराणां मध्ये नीले द्वे मन्ये द्वे कृकाटिके द्वे विधुरे द्वे अष्टौ च मातृकाः मातृकाख्यानि मर्माणि इत्येवं षोडश परित्यजेत् न शस्त्रं तासु पातयेत् ॥

**हन्वोः षोडश तासां द्वे सन्धिबन्धनकर्मणी ॥ २७ ॥**

हन्वोः षोडश हन्वोर्द्वयोः षोडश सिराः संश्रिताः । तासां सिराणां मध्ये द्वे सिरे परित्यजेत् । किंकर्मणी ते इत्याह—सन्धिबन्धनकर्मणी । बध्यतेनेनेति बन्धनम् । हनुसम्बन्धिनः सन्धेः बन्धनं कर्म क्रिया ययोस्ते सन्धिबन्धनकर्मणी सिरे इत्यरुणदत्तोक्तिः । एवं व्याख्यायमाने विलिङ्गत्वमाशङ्क्य **अस्मद्गुरवः** सन्धिबन्धनकर्मणि विषये प्रवृत्ते इति सप्तम्यन्तमाहुः ।

**जिह्वायां हनुवत्तासामधो द्वे रसबोधने ।**
**द्वे च वाचःप्रवर्तिन्यौ**

जिह्वायां हनुवत् सिरासङ्ख्या । जिह्वायां षोडशैव सिराः । तासां मध्ये जिह्वाया अधो द्वे स्थिते रसबोधने मधुरादिरसवेदिन्यौ याभ्यां रसो ज्ञायते । द्वे च वाचःप्रवर्तिन्यौ सिरे । एवं चतस्रो जिह्वाश्रिताः सिराः परित्यजेत् ।

**नासायां चतुरुत्तरा ॥ २८ ॥**
**विंशतिर्गन्धवेदिन्यौ तासामेकां च तालुगाम् ।**

नासायां चतुरुत्तरा विंशतिः सिराणाम् । एवं चतुर्विंशतिः सिराः नासाश्रिताः । तासां मध्ये द्वे गन्धवेदिन्यौ । गन्धं वेदितुं शीलं ययोः ते गन्धवेदिन्यौ सिरे । तथैकां तालुगां सिरामेवं नासाश्रिताः सिराः तिस्रः परित्यजेत् ।

**षट्पञ्चाशन्नयनयोर्निमेषोन्मेषकर्मणी ॥ २९ ॥**
**द्वे द्वे अपाङ्गयोर्द्वे च तासां षडिति वर्जयेत् ।**

षट्पञ्चाशत्सिरा नयनयोः । तासां मध्ये निमेषोन्मेषकर्मणी सिरे द्वे द्वे प्रत्येकं निमेषे द्वे उन्मेषे द्वे । तथापाङ्गयोः द्वे सिरे एवं षट् सिरा वर्जयेत् । तत्र शस्त्रं न पातयेत् ।

**नासानेत्राश्रिताः षष्टिर्ललाटे स्थपनीश्रिताम् ॥ ३० ॥**
**तत्रैकां द्वौ तथावर्तौ चतस्रश्च कचान्तगाः ।**
**सप्तैवं वर्जयेत्तासां**

नासेत्यादि । नासानेत्राश्रिता या सिराः पूर्वोक्ताः तासां मध्ये ललाटाश्रिताः षष्टिः सिराः भवन्ति । इन्दुरप्याह—'ललाटे षष्टिर्नासानेत्राश्रिताः ताभ्योऽनन्याः अतो न गण्यन्ते' इति । पाठ्येऽप्युक्तं—"नासानेत्राश्रिता एव प्रतानवैशेष्याल्ललाटे षष्टिधा भवन्तीत्यर्थः" । तत्र तासां मध्यात् स्थपनीश्रितां, स्थपनी नाम मर्मविशेषः तत्रस्थामेकां सिरां न विध्येत् । द्वौ तथावर्तौ, द्वौ मर्मविशेषौ । तयोरावर्तयोः स्थिते द्वे सिरे न विध्येत् । चतस्रश्च कचान्तगाः केशान्तःस्थाः सिराः न विध्येत् । एवं सप्त सिरा ललाटे वर्जयेत् ।

**कर्णयोः षोडशात्र तु ॥ ३१ ॥**
**द्वे शब्दबोधने शङ्खौ सिरास्ता एव चाश्रिताः ।**
**द्वे शङ्खसन्धिगे तासां**

कर्णयोर्द्वयोः षोडश सिराः । अत्र तु अस्मिन् षोडशसङ्ख्ये सिरोद्देशे कर्णयोराश्रिते द्वे सिरे शब्दबोधने याभ्यां शब्दो बुध्यते ज्ञायते ते वर्जयेत् । ता एव कर्णाश्रिता एव सिराः शङ्खाश्रिताः । इन्दुनाप्युक्तं—"कर्णयोः षोडश सिरा एव शङ्खाश्रिताः । अतस्तत्रस्थाः न गण्यन्ते" इति । तासां मध्ये द्वे सिरे शङ्खसन्ध्याश्रिते वर्जयेत् ॥

**मूर्ध्नि द्वादश तत्र तु ॥ ३२ ॥**
**एकैकां पृथगुत्क्षेपसीमन्ताधिपतिस्थिताम् ।**

मूर्ध्नि विषये द्वादश सिराः । तत्र तु तासु द्वादशसिरासु मध्ये अष्टौ सिराः शस्त्रेण वर्जयेत् । एकैकां पृथगुत्क्षेपसीमन्ताधिपतिस्थितां एवं प्रत्येकं (उत्क्षेपयोः) द्वयोरेकैकां सीमन्तेषु पञ्चस्वेकैकां अधिपतावेकामित्यष्टौ ॥

**इत्यवेध्यविभागार्थं प्रत्यङ्गं वर्णिताः सिराः ॥ ३३ ॥**

---

१. 'रास्ता एव' इति मुद्रिते ।

**अवेध्यास्तत्र कार्त्स्न्येन देहेऽष्टानवतिस्तथा ।**

**सङ्कीर्णा ग्रथिताः क्षुद्रा वक्राः सन्धिषु चाश्रिताः ॥ ३४ ॥**

इत्यवेध्य इत्यादि । इतिः समाप्तौ प्रकारे वा । अवेध्यसिराविभाग-ज्ञानार्थं तन्निमित्तं प्रत्यङ्गं शिरस्यन्तराधौ बाह्वोः सक्थ्नोश्च याः सिराः ता वर्णिता उक्ताः ता वर्णयितुं समाप्ताः । अथवा अनेन प्रकारेण पूर्वोक्तेन प्रकारेण वर्णिताः । तत्र तासु सिरासु मध्ये कार्त्स्न्येन साकल्येन देहे शरीरे अष्टानवतिः सिरा अवेध्याः । अन्तराधौ द्वात्रिंशद् ऊर्ध्वाङ्गे पञ्चाशदित्य-ष्टानवतिः । न केवलमेता एवावेध्याः यावत्सङ्कीर्णादयश्चेति तथाशब्दस्यार्थः । सङ्कीर्णाः परस्परं बद्धाः । "बहुभिरनभिव्यक्ताः" इतीन्दुः हाटकश्च । ग्रथिताः सङ्कोचेन ग्रथितरूपाः । क्षुद्राः अल्पाः । सूक्ष्मा न महत्यः । ചെറിയവ । वक्राः कुटिलाः अनृजुगामिन्यः കോടിയവ । तथा (अस्मिन्? अस्थि)सन्धिषु कूर्परादिषु या आश्रितास्ता अपि न वेध्याः ॥



**तासां शतानां सप्तानां पादोऽस्रं वहते पृथक् ।**

**वातपित्तकफैर्जुष्टं शुद्धं चैवं स्थिता मलाः ॥ ३५ ॥**

**शरीरमनुगृह्णन्ति पीडयन्त्यन्यथा पुनः ।**

तासां सिराणां सम्बन्धीनि यानि सप्तशतानि तेषां पादः चतुर्थांशः पञ्चसप्तत्यधिकं शतं यथास्वं शाखास्वन्तराधावूर्ध्वे च अस्रं रुधिरं वहते अस्मिन् देहे । किंभूतं तद्रुधिरम् । वातपित्तकफैर्जुष्टं सेवितं मिश्रितं, शुद्धं च तैरनाक्रान्तमदुष्टम् । पृथक् प्रत्येकं पादोऽस्रं वहते । अर्थः—वातेन किञ्चिद् दुष्टं रुधिरं सिराशतं पञ्चसप्तत्यधिकं वहति । एवं पित्तदुष्टमन्यः पादो वहति । कफदुष्टं च पादोऽन्यो वहति । शुद्धं रक्तमन्यः पादो वहति । एवं पूर्वोक्तेन सिरावहननियमेन मलाः शरीरमनुगृह्णन्ति अन्यथा पुनरेतद्विपर्ययेण स्थिताः पीडयन्ति विकारेण योजयन्ति । उक्तं च सुश्रुते—

यदा वायुरदुष्टस्तु सेवते स्ववहाः सिराः ।
तदा च बलवर्णौ स्तः प्रसीदेच्च मनस्तथा ॥
क्रियाणामप्रतिहतममोघं बुद्धिकर्मणाम् ।
करोत्यन्यान् गुणांश्चापि चेष्टा चान्यसिराश्चरन् ॥
भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम् ।
करोत्यन्यान् गुणांश्चापि पित्तमात्मसिराश्चरन् ॥
स्नेहमङ्गेषु सन्धीनां स्थैर्यं बलमदीनताम् ।
करोत्यन्यान् गुणांश्चापि (चेष्टा ? श्लेष्मा) चात्मसिराश्चरन् ॥
वर्णप्रसादं स्थैर्यं च धातूनां पुष्टिमेव च ।
करोत्यन्यान् गुणांश्चापि रक्तमात्मसिराश्चरन् ॥

---

१. क्रियाणामप्रतीघातममोहं बुद्धिकर्मणाम् ।
करोत्यन्यान् गुणांश्चापि स्वाः सिराः पवनश्चरन् ॥
यदा तु कुपितो वायुः स्वाः सिराः प्रतिपद्यते ।
तदास्य विविधा रोगा जायन्ते वातसम्भवाः ॥
भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम् ।
संसर्पत्स्वाः सिराः पित्तं कुर्याच्चान्यान् गुणानपि ॥
यदा प्रकुपितं पित्तं सेवते स्ववहाः सिराः ।
तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः ॥
स्नेहमङ्गेषु सन्धीनां स्थैर्यं बलमुदीर्णताम् ।
करोत्यन्यान् गुणांश्चापि बलासः स्वाः सिराश्चरन् ॥
यदा तु कुपितः श्लेष्मा स्वाः सिराः प्रतिपद्यते ।
तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः ॥
धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम् ।
स्वाः सिराः सञ्चरद्रक्तं कुर्याच्चान्यान् गुणानपि ॥
यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः ।
तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः ॥
नहि वातं सिराः काश्चिन्न पित्तं केवलं तथा ।
श्लेष्माणं वा वहन्त्येता अतः सर्ववहाः स्मृताः ॥
प्रदुष्टानां हि दोषाणां मूर्छितानां प्रधावताम् ।
ध्रुवमुन्मार्गगमनमतः सर्ववहाः स्मृताः ॥" इति मुद्रितसुश्रुते ।

नहि वातं सिराः काश्चिन्न पित्तं केवलं सिराः ।
श्लेष्माणं वा वहन्त्यन्याः सर्वाः सर्ववहाः स्मृताः ॥
प्रदुष्टानां तु दोषाणां मूर्च्छितानां प्रधावताम् ।
ध्रुवमुन्मार्गगमनं (सर्वः सर्ववहाप्यतः ?) ॥

इति । ननु च सर्वाः सर्ववहाः । कुतो वातवहाः पित्तवहा इत्युक्तमिति । उच्यते—विशेषतो, वातादिवहनाद् वातवहाः पित्तवहाः श्लेष्मवहाः इत्युक्तम् । इतरवहत्वमपि सामान्यतो विद्यत इति ॥

ननु कथमेतद् ज्ञायते इमाः सिराः वातजुष्टं रक्तं वहन्ति इमाः सिराः पित्तजुष्टमित्यादि, तत्परिज्ञानार्थं तासां लक्षणमाह—

**तत्र श्यावारुणाः सूक्ष्माः पूर्णरिक्ताः क्षणात्सिराः ॥ ३६ ॥**
**प्रस्पन्दिन्यश्च[1] वातास्रं वहन्ते**

तत्रेत्यादि । **अरुणदत्तोऽप्याह**—"किंलक्षणाः सिराः वातादिजुष्टं वहन्तीत्याह—तत्रेत्यादि" इति । तत्र तासु सिरासु मध्ये श्यावारुणा या वर्णेन सिराः ता वातरक्तं वहन्ति । तथा सूक्ष्माः । तथा पूर्णरिक्ताः वायोः चलत्वात् क्षणात्पूर्णाः ध्माताः क्षणाद्रिक्ताः शून्याः । तथा प्रस्पन्दिन्यः प्रकर्षेण स्पन्दिन्यः । किञ्चित् स्पन्दनं सर्वासां विद्यते, प्रकर्षेण वातरक्तवाहिनीनामिति प्रशब्देन द्योत्यते ॥

**पित्तशोणितम् ।**
**स्पर्शोष्णाः शीघ्रवाहिन्यो नीलपीताः कफं पुनः ॥ ३७ ॥**
**गौर्यः स्निग्धाः स्थिराः शीताः संसृष्टं लिङ्गसङ्करे ।**

पित्तेत्यादि । सिराः पित्तशोणितं वहन्ते । किंविधाः । स्पर्शोष्णाः स्पर्शेनोष्णा न शीताः । तथा शीघ्रवाहिन्यः शीघ्रमेव वहन्ति स्रवन्तीत्यर्थः । तथा नीलपीताः वर्णेन । कफं पुनः गौर्यो वहन्ते । तथा स्निग्धादिविशेषणाः । कफमिति कफशोणितम् । शोणितशब्दलोपात् । स्निग्धाः स्निग्धच्छायाः । तथा स्थिराः न तु चलाः । तथा शीताः स्पर्शेन । "अत्र तु

1. 'प्रस्पन्दिन्यश्च' ।

दोषो यदि दोषान्तरेण संसृष्टो भवति तदा यथास्वं लक्षणानां सङ्करो विज्ञेय इत्याह—संसृष्टमित्यादि" (इति) इन्दुः । लिङ्गसङ्करे यथानिर्दिष्टस्य लक्षणस्य सङ्कीर्णत्वे संसृष्टः वहति वातपित्तजुष्टं वातकफजुष्टं पित्तकफजुष्टं त्रिभिरपि जुष्टं रक्तं सिरा वहन्ति सकलशरीरं प्रापयन्ति ॥

**गूढाः समस्थिताः स्निग्धाः रोहिण्यः शुद्धशोणितम् ॥ ३८ ॥**

गूढाः अन्तर्भूताः तथा समं कृत्वा स्थिताः तथा स्निग्धाः स्निग्धच्छायाः तथा रोहिणीसंज्ञाः शुद्धशोणितं देहेऽस्मिन् वहन्ति । रोहिण्य इत्यनेन केवलरक्तवाहिनीनां सिराणां रोहिणीत्यपरसंज्ञा विद्यत इति द्योतयति । 'रोहिण्यो लोहितवर्णाः' इतीन्दुः । **पाठ्ये**ऽपि 'रोहिण्यः कनकवर्णाः' इत्युक्तम् । इति सिरा उक्ताः ॥

धमन्यः सिराविशेषाः अत आह—

**धमन्यो नाभिसंबद्धा विंशतिश्चतुरुत्तरा ।**
**ताभिः परिवृतो नाभिश्चक्रनाभिरिवारकैः ॥ ३९ ॥**
**ताभिश्चोर्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते ।**

धमन्य इत्यादि । 'धमन्यो विशिष्टाः सिरा एव' **इतीन्दुः** । വലിയ ഞരമ്പ് । ध्मानाद्धमन्यः । 'स्रोतोविशेषाः' इति **सारकृदरुणदत्तश्च** । धमन्यो नाभिसंबद्धाः ताश्च सङ्ख्यया विंशतिश्चतुरुत्तरा चतुर्विंशतिरित्यर्थः । चतुरुत्तराः इति बहुवचनान्तं पठन्ति केचित् । ताभिर्धमनीभिः नाभिः परिवृता । कथम् । चक्रनाभिरिव । 'ഒരുണിഞരമ്പ്' इति **पाठ्ये** । सिराधमन्योरभेद इति केचिदिच्छन्ति । तन्न । स्थानकर्मवैशेष्यात् । 'ध्मानाद्धमन्यः सरणात्सिराः' इत्यागमात् । व्यञ्जनान्यत्वेन च परस्परप्रतानसन्निकर्षाज्जीवनाडीसदृशकर्मत्वाद्विभक्तकर्मणामप्यविभाग इव । ताभिर्धमनीभिः नाभिप्रतिबद्धाभिः सर्वदेहमूर्ध्वमधस्तिर्यक्प्रसृताभिरयं देहः ऊर्ध्वमधस्तिर्यक् चानुगृह्यते । रसादिप्रापणादिना कर्मणा ताः कायस्यानुग्रहं कुर्वन्ति । ताभिरयं देह आप्यायते आराम इव जलहारिणीभिः केदार इव कुल्याभिः ।

संग्रहे—"धमन्यस्तु चतुर्विंशतिः । ताभिः कायोऽयमाराम इव कुल्याभिरुप-स्त्रिह्यति । ताभिश्च नाभिः चक्रनाभिरारकैरिवावृता । तस्यां नाभ्यां विशेषेण प्राणा व्यवस्थिताः । यतश्च सा अन्तरग्न्यधिष्ठानम् । तासां खलु धमनीनां दशोर्ध्वं प्रसृता दश चाधः चतस्रस्तिर्यक् । ततस्ताभिः यथा-स्वमङ्गावयवाः धार्यन्ते आप्याय्यन्ते च । तासामूर्ध्वगा हृदयमभिप्रपन्नाः प्रत्येकं त्रिधा जायन्ते । तत्र त्रिंशतो द्वे द्वे वातपित्तकफशोणितरसान् वहतः । अष्टाभिः शब्दस्पर्शरूपरसगन्धा गृह्यन्ते । द्वाभ्यां भाषते । द्वाभ्यां घोषं करोति । द्वाभ्यां च स्वपिति । द्वाभ्यां प्रतिबुध्यते च । द्वे चाश्रु वहतः । द्वे च स्तनाश्रिते नार्याः स्तन्यं नरस्य शुक्रं वहतः । अधोगमाः पक्वाशयस्थाः एवं त्रिधा जायन्ते । तत्र दश आद्याः पूर्ववत् । (पञ्च वातपित्तकफान् वहतः?) द्वे वहतोऽन्नं मात्राश्रयेण । द्वे तोयम् । द्वे मूत्रम् । द्वे च शुक्रं वहतः । द्वे च मुञ्चतः । ते एव नारीणामार्तवं वहतः । द्वे च वर्चोनिरसने स्थूलान्त्रप्रतिबद्धे । एवं द्वादश । शेषास्त्वष्टौ धमन्यः तिरश्चीनाः स्वेदमभि-तर्पयन्ति । तिर्यग्गामिन्यस्तु चतस्रो भिद्यमानाः बहुधा भवन्ती"ति ।

अत्रेन्दुः—"धमन्यो विशिष्टाः सिरा एव । ताश्च सङ्ख्यया चतुर्विंशतिः । यथा आरामो जलहारिणीभिः केदारं इव कुल्याभिः आप्याय्यते तद्व-त्ताभिर्नाभिप्रतिबद्धाभिः कायमाप्याय्यते । चक्रस्य नाभिरक्षः । आरास्तन्नि-बद्धानि काष्ठानि । सुबोधम् । यतश्च सा नाभिरन्तरग्नेरधिष्ठानमतोऽपि तस्यां विशेषेण प्राणा व्यवस्थिताः । तासां धमनीनां मध्याद्दश धमन्यः ऊर्ध्वमुपरि-कायं गताः । दश अधःप्रसृताः । तिर्यक् चतस्रः । ताश्च दश हृदयं प्राप्य प्रत्येकं त्रिधा भिन्नाः त्रिंशत् संपद्यन्ते । तस्याश्च त्रिंशतो द्वे द्वे वातादीन् पञ्च वहतः । एवं ता दश । शब्दादींश्चतुरोऽष्टाभिः गृह्णीते पुरुषः । ताभिर्हि चित्तस्थानं शब्दादीनि यान्ति । भाषणादिक्रिया-चतुष्टयं द्वाभ्यां द्वाभ्यां करोति । एवं ता अष्टौ । घोषः शब्दोऽव्यक्तः ।

---

१. 'ततस्त्रिंशतो' । २. 'द्वाभ्यां द्वाभ्यां भाषते घोषं करोति स्वपिति प्रति-बुध्यते च' इति मुद्रिते । ३. 'रसिन्यौ स्थू' । ४. 'रः कुल्या' । ५. 'सां च नाभिप्रतिबद्धानां मध्या' इति मुद्रितपाठः ।

द्वे अश्रु वहतः । द्वे च स्तनाश्रिते नार्याः स्तन्यं वहतः । नरस्य तु ते एव शुक्रम् । एवं त्रिंशत् । यास्तु नाभेरधोगता दश धमन्यः ताः पक्वाशये एवं त्रिंशद् भवन्ति । तस्याश्च त्रिंशतो दश पूर्ववत् । द्वे द्वे पञ्च वातपित्तादीन् वहतः । द्वे मात्राश्रयेणान्नं वहतः । मात्राग्रहणमाधिक्यप्रतिषेधप्रदर्शनार्थम् । द्वे तोयं द्वे मूत्रं वहतः । द्वे पुरुषस्य शुक्रं वहतः । द्वे च शुक्रं बहिर्मुञ्चतः । ये एव पुरुषस्य शुक्रं ते एव स्त्रिया रक्तमिति चतस्रः । द्वे च स्थूलान्त्रप्रतिबद्धे वर्चोनिरसनकर्मणी । अष्टौ शेषा या अधोगमा अपि मनाक् तिर्यग्गतास्ताः स्वेदमभितर्पयन्ति । एवं नाभेरधः (दश तिर्यग्गामिन्यः?) त्रिंशत् । (तिर्यग्गामिन्यश्चतस्रो या नाभेः पार्श्वाभ्यां द्वे द्वे वर्तन्ते ता भिद्यमानाः सत्यो बहुधा भवन्ति" इति ॥

इदानीं स्त्रीपुरुषाणां दृश्यानि स्रोतांसि निरूपयितुमाह—

**स्रोतांसि नासिके कर्णौ नेत्रे पाय्वास्यमेहनम् ॥ ४० ॥**
**स्तनौ रक्तपथश्चेति नारीणामधिकं त्रयम् ।**

स्रोतांसीत्यादि । स्रोतांसि छिद्राणि पुंसां नव । द्वौ नासापुटौ । द्वौ कर्णौ । द्वे नेत्रे । पायुर्गुदम् । आस्यं मुखम् । मेहनं मूत्रनिष्क्रमणद्वारम् । स्त्रीणामेतानि तथान्यानि त्रीणि च । द्वौ स्तनौ तथा रक्तपथो रक्तमार्गः प्रतिमासं यतो रक्तं प्रवर्तते । तदेवं त्रीणि स्त्रीणां पुंभ्योऽधिकानि भवन्ति । हाटकोऽप्याह—"नासादिमेहनान्तानि स्त्रीपुरुषयोः साधारणानि । स्त्रिया द्वे स्तनस्रोतसी एकश्चापत्यमार्गः इत्यधिकं त्रयम्" इति ॥

एवं दृश्यानि बाह्यानि स्रोतांसि अभिधाय शरीरे यान्यदृश्यानि आन्तराणि तान्याह—

**जीवितायतनान्यन्तः स्रोतांस्याहुस्त्रयोदश ॥ ४१ ॥**
**प्राणधातुमलाम्भोन्नवाहीन्यहितसेवनात् ।**
**तानि दुष्टानि रोगाय विशुद्धानि सुखाय च ॥ ४२ ॥**
**स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ।**
**स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥ ४३ ॥**

**आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ।**
**धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥ ४४ ॥**

जीवितेत्यादि । अन्तः शरीरस्याभ्यन्तरे त्रयोदश स्रोतांसि वदन्त्याचार्या इति शेषः । तानि च स्रोतांसि जीवितायतनानि विशेषेण जीवितस्याधिष्ठानानि । किंभूतानि । प्राणधातुमलाम्भोन्नवाहीनि । प्राणाख्यं वायुं वहन्ति यानि तानि प्राणवाहीनि । धातुवाहीनि रसादिधातून् यानि वहन्ति । मलवाहीनि मूत्रशकृत्स्वेदाख्यान् यानि वहन्ति । तथाम्भोवाहीनि उदकवाहीनि । अन्नवाहीनि अन्नमभ्यवहृतं यानि वहन्ति । एवं त्रयोदश अन्तःस्रोतांसि । "स्रोतसां त्रयोदश ग्रहणं नियमार्थम् । इडापिङ्गलासुषुम्नादयः तर्कगम्या एव इति **पाठ्ये** । **संग्रहे तूक्तं**---"तत्र प्राणवाहिनां हृदयं मूलं महास्रोतश्च । तानि धातुक्षयरौक्ष्य(पिपासा)-क्षुद्व्यायामवेगविधारणादिभिः दुष्यन्ति । ततोऽतिसृष्टं प्रतिबद्धमल्पाल्पमभीक्ष्णं वा सशब्दशूलमूच्छ्वसनम् । तत्र श्वासवत् साधनम् । उदकवाहिनां तालु मूलं क्लोम च । तन्यामभयातिपानोष्णशुष्कान्नतृण्निग्रहादिभिर्दुष्यन्ति । ततोऽतितृष्णा मुखशोषः कर्णक्ष्वेलनं तमोदर्शनं च । तत्र तृष्णोक्तमौषधम् । **इन्दुः**—"तत्रेति निर्धारणे । प्राणवाहिनां स्रोतसां हृदयं महास्रोतश्च मूलम् । तेषां धातुक्षयादिभिर्दूषणं दुष्टत्वादुच्छ्वसनं कुर्वन्ति । तत्र श्वासवच्चिकित्सा । उदकवाहिनां स्रोतसां तालुक्लोमनी मूलम् । तेषामामेन भयादिभिश्च दूषणम् । दुष्टत्वाच्चातितृष्णाद्युत्पत्तिः । तत्र तृष्णाचिकित्सा । अतिपानं मद्यस्य । उष्णशुष्काभ्यामन्नस्य संबन्धः । तृण्निग्रहः तृष्णावेगनिग्रहः । आदिग्रहणेनैवंप्रकाराणामन्येषामप्यावारकोपशोषणानामाहाराणां ग्रहणम् । क्ष्वेलनं नादः । तमस इव दर्शनं तमोदर्शनमप्रतिपत्तिः" इति । **संग्रहे**—अन्नवाहिनामामाशयो मूलं वामपार्श्वं च । तेषां (दुष्टौ) सर्वं मात्राशितीयोक्तमव-

---

१. 'त्वकषायतृ' । २. तानि च धातुक्षयादिभिर्दुष्यन्ति । ततः कारणादतिसृष्टं वातिबद्धं वोच्छ्वसनं भवति । श्वासस्यैकत्वाद्विसर्गे दीर्घश्च भवति । अल्पाल्पं स्तोकमुच्छ्वसनम् । अभीक्ष्णं वात्यर्थम् । तत्र दुष्टेषु प्राणवाहिषु स्रोतःसु श्वासोक्तं चिकित्सितम्' । ३. 'हारविहारादीनां ग्र' इति मुद्रिते ।

गच्छेत् । इन्दुः—अन्नवाहिनां स्रोतसां दुष्टत्वे हेतुं कार्यं प्रतिकारं च सर्वं ज्ञातुं मात्राशितीयमध्यायमवगच्छेत् । तेनैतदुक्तं भवति । अन्नवाहिनामतिमात्रसमशनादीनि दूषणम् । दुष्टत्वे विषूचिकाद्युत्पत्तिः । वमनादिका चिकित्सा । शेषं सुबोधम् । मूलमाश्रयः । उपकारापकारद्वारमित्यर्थः" इति । **संग्रहे**—"रसवाहिनां हृदयं मूलं दश च धमन्यः । रक्तवाहिनां यकृत् प्लीहा च । मांसवाहिनां स्नावानि त्वक् च । मेदोवाहिनां वृक्कौ मांसं च । अस्थिवाहिनां जघनं मेदश्च । मज्जवाहिनां पर्वाण्यस्थीनि च । शुक्रवाहिनां स्तनौ मुष्कौ मज्जा च । मूत्रवाहिनां वास्तिर्वंक्षणौ च । शकृद्वाहिनां पक्वाशयः स्थूलान्त्रं च । स्वेदवाहिनां मेदो मूलं रोमकूपाश्च" इति । पुनरपि **संग्रहः**—'स्रोतसामेव विशेषाः सिराधमन्यः । परे तु अन्यत्वमिच्छन्ति सिराधमनीस्रोतसाम्[1] । सरणात्सिराः । ध्मानाद्धमन्यः । स्रवणात्स्रोतांसि । परस्परं[2]प्रतानसन्निकर्षात् सदृशकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामप्यविभाग[3] उपलक्ष्यते" (इति) । अन्ये तु पुनरेवमाचक्षते—"(स्रोतांसि सिराधमन्यो तु ग्रहणम् । आर्षं हि—

"गुरुशीतमृदुस्निग्धमतिमात्रं समश्नताम् ।
रसवाहीनि दुष्यन्ति चिन्त्यानां चातिचिन्तनात् ॥"

इति । तत्र गुर्वाद्याः श्लेष्मणः कोपकाः । अतिचिन्तनं वायोः एतदुभयं रसस्येति । एवं रक्तादिष्वपि अतो वातादिहेत्वविशेषेऽपि एवमादिर्विशेषः तस्माद्यत्किञ्चिदेतत् ॥ ? )

दुष्टं स्रोतः कथं ज्ञायत इत्याह—

**अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।**
**विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥ ४५ ॥**

अतिप्रवृत्तिर्मूत्रादीनाम् । सङ्गस्तेषां स्तोकं प्रवृत्तिः । **अरुणो**ऽप्याह—"अतिप्रवृत्तिरतिशयेन प्रवृत्तिः । यथा मूत्रवाहिस्रोतसां प्रमेहवद् बहुमूत्रता । सङ्गोऽप्रवृत्तिः किञ्चिद्वा प्रवृत्तिः मूत्रकृच्छ्रवत् । शकृद्वाहिनां स्रोतसामतीसारवत्

---

१. 'साम् । केवलं परस्पर' । २. 'रसन्निकर्षे' । ३. 'ग इव लक्ष्यते' इति मुद्रितपाठः ।

पुरीषातिसरणमतिप्रवृत्तिः । सङ्गः स्तोकं स्तोकं कृत्वा पुरीषस्य प्रवृत्तिः । (अथवा सर्वथोदार्तवत् पुरीषस्य प्रवृत्तिः । एवं) मूत्रवाहिस्रोतसां मूत्रातिप्रवृत्त्यप्रवृत्ती तत्स्रोतोदुष्टेर्लक्षणम् । तथैव पुरीषवाहिनां स्रोतसां पुरीषातिप्रवृत्त्यप्रवृत्ती दुष्टेर्लक्षम् । एवमन्येषामपि स्रोतसां यथायथं वस्तुवाहिनां यथास्वं वस्त्वतिप्रवृत्त्यप्रवृत्ती तेषां दुष्टेर्लक्षणम्" इति । अथवा सिराणां ग्रन्थयः कुटिलीभावः शरीरावयवेषु दुष्टस्य लक्षणम् । अथवा विमार्गतो गमनं स्वमार्गमुज्झित्वा मार्गान्तरासादनं स्रोतसां दुष्टिलक्षणम् । यथा पुरीषं स्वं स्रोतो हित्वा मूत्रमार्गं भजते । तस्य लक्षणं मूत्रं दुर्गन्धि भवति । एतत्सर्वं स्रोतसां दुष्टिलक्षणम् । दुष्टिलक्षणेनैव चिकित्सासिद्धेस्तदनुक्तिः । सा च दोषादिविज्ञानीयोक्ता ॥

**बिसानामिव सूक्ष्माणि दूरं प्रविसृतानि च ।**
**द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥ ४६ ॥**

बिसानां मृणालानां यथा सूक्ष्माणि द्वाराणि छिद्राणि दूरं प्रविसृतानि सकलं बिसं गतानि तथैव स्रोतसां द्वाराणि मुखानि दूरं प्रविसृतानि कृत्स्नं देहं प्रकर्षेण गतानि । यैर्द्वारैः छिद्रैः देहे शरीरे रसोऽभ्यवहृतस्याहारस्य कायाग्निना पच्यमानस्य प्रसादभावो यः समुद्भवति स रसः प्रसादाख्य उपचीयते । हाटकोऽप्याह—"रसः आहारस्य कायाग्निना पच्यमानस्य प्रसादाख्यो यैः छिद्रैः देहे उपचीयते वृद्धिं नीयते" इति । रसो द्रव इति केचित् ॥

**व्यधे तु स्रोतसां मोहकम्पाध्मानवमिज्वराः ।**
**प्रलापशूलविण्मूत्ररोधा मरणमेव वा ॥ ४७ ॥**

**स्रोतोविद्धमतो वैद्यः प्रत्याख्याय प्रसाधयेत् ।**
**उद्धृत्य शल्यं यत्नेन सद्यःक्षतविधानतः ॥ ४८ ॥**

व्यध इत्यादि । स्रोतसां व्यधे ताडने सति मोहादयो भवन्ति । 'व्यथे तु स्रोतसां' इति वा पाठः । विण्मूत्रयो रोधेन सम्बन्धः । मोहादीनामितरेतरद्वन्द्वः प्रलापादीनां च । अथवा मरणमेव वा भवति ।

अतोऽस्माज्जीवितसंशयाद्धेतोर्वैद्यः प्रत्याख्याय अक्रियाया ध्रुवो मृत्युरित्युक्त्वा शल्यमुद्धृत्य बहिर्निष्कास्य प्रसाधयेत् । यत्नेन नावहेलया । केन प्रसाधयेत् । सद्यः क्षतविधानतः सद्योव्रणप्रतिषेधोक्तेन विधिना । इन्दुनाप्युक्तं—"स्रोतसां व्यधे शस्त्रादिताडने जन्तोर्भ्रममोहाद्युद्भवः । तस्माद् वैद्यः स्रोतोविद्धं चिकित्सायां प्रत्याख्यानं कृत्वा असाध्यतामुक्त्वा दैवात्किञ्चिद् भवेदिति शास्त्रानुगमेन उपाचरेत् । अन्तःशल्यं च स्रोतोविद्धं शल्यमुद्धृत्य उपाचरेदिति संबन्धः । केनेत्याह । वक्ष्यमाणेन सद्योव्रणप्रतिषेधेने"ति ॥

देहस्यैवंभूतस्य वृद्धिहेतोराहारस्य पाकं वक्तुकामः पाचकमग्निं प्रस्तौति—

**अन्नस्य पक्ता पित्तं तु पाचकाख्यं पुरेरितम् ।**
**दोषधातुमलादीनामूष्मेत्यात्रेयशासनम् ॥ ४९ ॥**

अन्नस्येत्यादि । अथवा स्रोतसां दुष्टिरपि वह्निदोषादेव । अतस्तद्विज्ञानार्थमाह—अन्नस्येत्यादि । **संग्रहे**—"तेषां हि सर्वेषामेव दूषयितारो दुष्टा दोषाः । ते च प्रायशो दुष्यन्त्यग्निदोषात्" इति । **इन्दुः**—"तेषां सर्वेषां धातूनां धात्वाशयानां च । दुष्टान् वातादीन् अन्तरेण नान्यद् दुष्टौ कारणम् । दोषाणां दुष्टिरपि प्रायोऽग्निदोषात्" इति । तुरवधारणे । पाचकाख्यं पित्तमेवानेकविधस्याहारस्याभ्यवहृतस्य पक्ता । किंभूतं पित्तम् । पुरेरितं पूर्वं दोषभेदीयाध्याये उक्तम् । यथा 'पक्वामाशयमध्यग'मित्यारभ्य यावत्-'पाचकं नाम तत्स्मृतम्' इति । तदीदृशं पित्तमाहारं पचतीति धन्वन्तरीयमतम् । भगवत आत्रेयस्य शासनमाज्ञा, इति एवं, दोषादीनामूष्मा अग्निरिति । दोषा वातादयः । धातवो रसादयः । मला मूत्रपुरीषस्वेदादयः । आदिशब्देन दूषिकादयः । तेषां दोषादीनां सम्बन्धी ऊष्मा अग्निर्यः स एवान्नस्य पक्ता न तु पित्तं पाचकाख्यमिति । जठराग्निरूष्मस्वभावो न ज्वालाजटिलः । **संग्रहे**—"तत्र पित्तविशेषः पाचकसंज्ञोऽग्निरित्यभिहितः । अन्ये पुनराचक्षते दोषधातुमलसन्निपातजनितोऽन्तरूष्मा यथानिर्दिष्टाधिष्ठानकर्माग्निः" इति ।

---

१. 'भ्रमाद्युद्भवः' इति मुद्रित..ः ।

इन्दुः—"अन्ये पुनराचार्याः 'पित्तमग्निरिति नेच्छन्ति । दोषादिसंयोगजनितो-ऽन्तःशरीर ऊष्मा ग्रहण्यधिष्ठानः पाकरागादिकर्माग्निरित्याहुः" इति ॥

**तदधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता ।**
**सैव धन्वन्तरिमते कला पित्तधराह्वया ॥ ५० ॥**

**आयुरारोग्यवीर्यौजोभूतधात्वग्निपुष्टये ।**
**स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सा ॥ ५१ ॥**

तदधिष्ठानमित्यादि । तस्याग्नेर्जाठरस्याधिष्ठनमाधारो यत्रासौ शरीरेऽग्निस्तिष्ठति सा अन्नस्य ग्रहणाद्धेतोस्तसंज्ञा ग्रहणीति मता । सा आमाशयस्थो विशिष्टो धमनीविशेषः । सैव ग्रहणी धन्वन्तरिमते पित्तधरा नाम कला कथ्यते । एवं ग्रहण्यग्नेराधारभूता । तथा अन्नं च गृह्णाति । तस्मादायुरादिपुष्टये सम्पद्यत इति वाक्यशेषः । भूतधात्वोरग्निना संबन्धः । आयुरादीनां द्वन्द्वः । आयुः शरीरेन्द्रियसत्त्वात्मसंयोगविशेषः । आरोग्यं धातुसाम्यम् । वीर्यं शक्तिः कर्मणि सामर्थ्यम् । ओजः आहारप्रसादः । अरुणदत्तोऽप्याह—"ओज आहारस्य परं प्रसादजं सप्तधात्वाप्यायकं यद्वस्तुजातं तदुच्यते" इति । भूतानि शरीरारम्भकाणि पृथिव्यादीनि । भूताग्नयः पञ्च । धात्वग्नयः सप्त । पुष्टिशब्द एषां प्रत्येकं योज्यः । आयुःपुष्टये आरोग्यपुष्टये वीर्यपुष्टये ओजःपुष्टये पञ्चमहाभूताग्निपुष्टये धात्वग्निपुष्टये चेति । पक्वाशयस्य द्वाः पक्वाशयद्वाः तस्यां पक्वाशयद्वारि । अर्गलेवान्तःप्रवेशनिरोधिनी या स्थिता सा ग्रहणी भुक्तस्याहारस्य सहसा पक्वाशयान्तःप्रवेशनिरोधिनी । भक्तमभ्यवहृतं कण्ठनालीलुठितं कायस्य महानिम्नदेशं कोष्ठाख्यमवतीर्णं ग्रहणी गृहीत्वावतिष्ठते ।

**भुक्तमामाशये रुद्ध्वा सा विपाच्य नयत्यधः ।**
**बलवत्यबला त्वन्नमाममेव विमुञ्चति ॥ ५२ ॥**

अनन्तरं जठराग्निना विपक्वं शनैः आमाशये, आमाशयो नाम स्थानं यत्र, आममन्नं सा ग्रहणी रुद्ध्वा अवष्टभ्य विपाच्य विविधैः प्रकारैः पाचयित्वा अधो नयति । बलवती भुक्तं विपाच्याधो नयति । अबला

पुनः सती सा अन्नमाममेव विमुञ्चति । ननु जठराग्निरन्नं ग्रहणीस्थं पचति, न ग्रहणी, ततश्च कथमुक्तं 'सा विपाच्य नयत्यधः' इति । अत्रोच्यते । अग्निग्रहण्योराधाराधेयभावेन स्थितत्वाद्युज्यत एवैतद्वक्तुम् । ग्रहणी ह्यग्नेराधारः । तथा च प्रागुक्तं— कला पित्तधराह्वया' इति । पित्तं च वह्निः । तथा चाधुनैव वक्ष्यति । तदेवं वह्न्याधारा या कला सा अन्नग्रहणाद् ग्रहणीत्युच्यते । ततश्चाधारतया ग्रहणीमाश्रित्याग्निः पाककरणसमर्थो भवति । नाधारमन्तरेण केवल एव । तदेवमग्न्याधारस्य ग्रहण्याख्यस्य पाकनिर्वर्त्तनं प्रति कर्तृत्वं युक्तमेवेत्यतः 'सा विपाच्य नयत्यधः' इत्येतदुपपन्नमेव ॥

अग्निग्रहण्योराधाराधेयभावेनावस्थानात् परस्परं बलाधानेन उपकार्योपकारकभावः सम्भाव्यत इत्याह—

**ग्रहण्या बलमग्निर्हि स चापि ग्रहणीबलः ।**
**दूषितेऽग्नावतो दुष्टा ग्रहणी रोगकारिणी ॥ ५३ ॥**

ग्रहण्या इत्यादि । हिर्यस्मादर्थे । यस्माद् ग्रहण्या बलं सामर्थ्यं तस्य हेतुरग्निः । अग्नितो ग्रहणीबलमुत्पद्यते । स चापि ग्रहणीबलः । ग्रहणी बलं यस्याग्नेः स एवम् । अपिशब्दान्न केवलमग्निः ग्रहण्या बलम् । ग्रहण्यग्नेर्बलम् । अतो हेतोर्दूषितेऽग्नौ दुष्टा ग्रहणी रोगकारिणी सम्पद्यते । एवं च अर्थाद् ग्रहण्यामपि दुष्टायामग्निर्दुष्यति । दुष्टश्च सोऽपि रोगकारी भवतीति गम्यते । एवं या पित्तधरा कला सा अदुष्टा सती आयुरादीनां पुष्ट्यै भवतीत्युक्तम् । अन्नग्रहणाद् ग्रहण्या एवंरूपता । तच्चान्नं विपक्वं देहधात्वादिपोषणं नापक्वम् ॥

तस्य चान्नपाकस्य हेतुरग्निरत आह—

**यदन्नं देहधात्वोजोबलवर्णादिपोषणम् ।**
**तत्राग्निर्हेतुराहारान्न ह्यपक्वाद्रसादयः ॥ ५४ ॥**

यदन्नमित्यादि । अनेन प्राधान्यमाह । यदन्नमाहारो देहधात्वादिपोषणं भवति तत्राग्निर्हेतुः अग्निप्रभावात् पक्वमन्नं देहादिपोषणम् । कुत

इत्याह—न ह्यपक्वाद्रसादयः। यस्मादपक्वादाहाराद्रसरुधिरादयो न भवन्ति अतो देहादिपोषणे सर्वत्राग्निः कारणं पाकक्रियानिर्वर्तनात्। तदेवमन्वयव्यतिरेकाभ्यामवगम्यते—अन्नं देहधात्वादिपोषणमग्निप्रभावादेव। तस्मादग्निः पाककारणम्। पक्वान्नं देहादिपोषणमिति परस्परकारणत्वमनयोः॥

न ह्यपक्वाद्रसादय इत्युक्तमतः पाकस्येतिकर्तव्यतामाह—

**अन्नं कालेऽभ्यवहृतं कोष्ठं प्राणानिलाहृतम्।**
**द्रवैर्विभिन्नसङ्घातं नीतं स्नेहेन मार्दवम्॥ ५५॥**

**सन्धुक्षितः समानेन पचत्यामाशयस्थितम्।**
**औदर्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतण्डुलम्॥ ५६॥**

अन्नमित्यादि। काले 'विसृष्टे विण्मूत्रे' इत्यादिना प्रागुक्ते। पुरुषेणाभ्यवहृतं भुक्तमन्नं कोष्ठं प्राणानिलाहृतं प्रयत्नोदीरितेन प्राणाख्येन वायुना कोष्ठं महास्रोतः आहृतमानीतम्। 'ष्ठीवनक्षवथूद्गारनिःश्वासान्नप्रवेशकृद्' इत्यनेन प्राणानिलाहृतत्वे लब्धे पुनरुक्तं स्पष्टार्थम्। तच्च द्रवैः द्रवगुणोपलक्षितैः तोयव्यञ्जनमद्यक्षीरादिभिः भिन्नसङ्घातमानीतं स्नेहेन भृशं मृदुत्वं प्रापितं तथामाशयस्थितं पित्तधराकलामर्यादे आमाशये विधृतमग्निः पचति।

'नाभिस्तनान्तरे जन्तोरामाशय इति स्मृतः'

इति व्याख्यात आमाशयस्तन्त्रान्तरे। किंभूतोऽग्निः। औदर्योऽग्निर्जठरभवः। तथा समानाख्येन वायुना सन्धुक्षितः उद्दीपितः सन्। कालग्रहणस्य उपलक्षितार्थत्वान्मात्रादिसहायेन जठराग्निना समानोद्दीपितेन पक्वमन्नं धात्वादिपोषणम्। नन्वौदर्योग्निरदृश्यत्वान्न ज्ञायते कथं पचतीति। अतस्तदर्थं बाह्यदृष्टान्तं निरूपयितुं ग्रन्थकृदाह—यथेत्यादि। यथा बाह्योऽग्निः स्थालीस्थितं तोयतण्डुलं पचति। तोयं च तण्डुलाश्च तोयतण्डुलं द्वन्द्वस्यैकवद्भावात्। तथैवासावौदर्योऽग्निः सन्धुक्षितः समानेन आमाशयस्थितं चतुर्विधमन्नमशितपीतलीढखादितभेदभिन्नं प्रयत्नोदीरितेन प्राणवायुना कोष्ठमानीतं पचति। ननु दोषभेदीयाध्याये पूर्वमुक्तं—'प्राणोऽत्र मूर्धगः' इत्यारभ्य यावद् 'निश्वासान्नप्रवेशकृद्' इति। अन्नस्य प्रवेशमहरहः करोतीति अन्नप्रवेशकृत्।

प्राणानिलाहृतमित्यनेनाप्ययमर्थः प्रतिपादितः । तत्किमनेन । अत्रोच्यते–अन्नप्रवेशकृदित्यनेनान्नप्रवेशकारणमात्रमुक्तं न तु कोष्ठप्रापणमपि । प्राणस्य वायोर्मूर्धाश्रितस्य उरो यावत् सञ्चार उक्तो न ततोऽधः । एवमन्नप्रवेशकारणं तावत् प्राप्तं यावदुरो न कोष्ठमिति । कोष्ठं प्राणानिलाहृतमित्यनेन तु कोष्ठप्रापणाख्यार्थविशेष उक्त इति द्वयमप्येतद्व(क्तु? क्तुं युक्त)मिति । सन्धुक्षितः समानेनेति न वाच्यम् । यतः प्रागुक्तं–'समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः' इति । एवं जाठरेणाग्निना सहचरः समानो वायुः सन्धुक्षयतीत्यर्थोऽवतिष्ठते । तस्मात्सन्धुक्षितः समानेनेत्यनेन कोऽर्थः । उच्यते–अर्थविशेषसम्प्रत्ययार्थमेतदुक्तम् । तथा हि–'समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः । अन्नं गृह्णाति पचति' इति समानस्यैव पाकक्रियां प्रति वह्निसन्धुक्षणद्वारेण कर्तृत्वमुक्तम् । इह तु पुनः सन्धुक्षितः समानेनाग्निः पचति न समानो वायुरित्यपौनरुक्त्यमेव । यद्यपि चैकप्रत्ययजनित्वं (न) किञ्चिदस्ति तथाप्यन्नपाकक्रियां प्रत्यग्नेरेव कर्तृत्वं न समानादेः । समानादयो(प्यु? सु)पका(राभाव? रका एव) (अत) उक्तमग्निः पचतीति ।

तस्यान्नस्येदानीमग्निसमीपस्थस्य या अवस्थास्ताः कथयन् पुनरपि तमेव पाकं निर्दिशति—

> आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् ।
> फेनीभूतं कफं यातं विदाहादम्लतां ततः ॥ ५७ ॥
> पित्तमामाशयात्कुर्याच्च्यवमानं च्युतं पुनः ।
> अग्निना शोषितं पक्वं पिण्डितं कटुमारुतम् ॥ ५८ ॥

आदावित्यादि । तत्र चामाशये तदन्नं षड्रसमपि, अपिशब्दादेकद्वित्र्यादिरसमपि अभ्यवहृतमशितपीतादिकं पच्यमानं सद् आदौ प्रथमं विक्लेदमात्रावस्थायां मधुरीभूतममधुरं मधुररसं सम्पन्नं सत् कफमीरयेत् । किंभूतं फेनीभूतं, पानीयादेरपि पच्यमानस्य प्रथमं फेनोत्पत्तिदर्शनादेवमुक्तम् । इन्दुरप्याह—"तदन्नं षड्र[1]समपिशब्दादेकरसमपि पच्यमानं सत् प्रथमं विक्लेदमात्रावस्थायां माधुर्यं प्राप्तं[2] कफमुदीरयेत् । तच्च फेनीभूतं यथा दध्यादितः क्षुमितात्प्रथमं

१. 'समपि पच्य' । २. 'माधुर्यमिव प्राप्तं सत्कफ' इति मुद्रिते ।

फेनसम्भवः" इति। ततः प्रथमावस्थातो माधुर्यप्रायाया अनन्तरं मध्यमावस्थां प्राप्य जाठराग्निना पक्वं षड्रसमप्यन्नमभ्यवहृतमम्लतां यातमनम्लमम्लरसं सम्पन्नं सत् पित्तं विदध्यात्। कस्मात्पुनरम्लतां यातमित्याह—(विदाहात्)। विरुद्धो विषमो वा दाहो विदाहः। ततो विदाहाद्धेतोरम्लत्वं यातम्। किंभूतमन्नम्। आमाशयात् च्यवमानं न आमाशयस्थितमेव। हाटकस्तु—'विदाहात्किञ्चित्पाकादम्लतां यातम्' इत्याह। च्युतं पुनः तत आमाशयात् पक्वाशयं यातम्। जाठरेणाग्निना पक्वं शोषितमन्नं तथा पिण्डितं तदानीं पिण्डं संजातं संहतं सम्पन्नं तथा कटु कटुकीभूतं सद् अन्त्यां तृतीयामवस्थां प्राप्य मारुतं कुर्यादिति योज्यम्। एतच्च समस्तं स्वभावसिद्धम्। (स्वसंवेद्यप्रायं) कार्यानुमेयं च। अत एव रसषट्केऽपि यद् द्रव्याणां विपाकत्रैविध्यं मधुराम्लकटुकलक्षणमुक्तं तदनया रीत्या उपपन्नतरं भवति। तथाहि षड्रसस्यान्नस्य जाठराग्निना पच्यमानस्य रसत्रयोपलक्षितेन मधुराम्लकटुस्वभावेन अवस्थात्रयेण परिणामो भवति। हाटकोऽपि—"षड्रसत्वेऽपि द्रव्याणां प्रथमं पाकत्रैविध्यं दोषजनकत्वं च स्वभावः" इत्याह। अथान्नमित्यत्र 'अदो जग्धिर्ल्यप्ति किति' (पा० सू० २-४-३६) इति जग्ध्यादेशो न भवतीति ब्रूमः। 'अन्नाण्णः (पा० सू० ४-४-७५) इति निपातनात् 'बहुलं छन्दसि' (पा० सू० २-४-३९) इति बहुलवचनाद्वा जग्ध्यादेशाभावः। ननु 'विदाहादम्लतां गत'मिति सामान्येनोक्तमयुक्तमिवाभाति, यतो द्राक्षेक्षुशर्करादीनामविदाहित्वं श्रूयते। अपि च 'विदाहि वर्जयेदि'ति तन्त्रकारः पठति। अनया रीत्या अविदाहिद्रव्याभाव एव स्यात्। तस्मात् सामान्येनाविदाहित्वमभ्युपगम्यमानमन्यार्थमेव मन्यामहे। उच्यते—विदाहस्य द्वैविध्याददोषः। इह हि द्विविधो विदाहः प्रथितः। दोषस्थानकृतो द्रव्यकृतश्च। तत्रेह दोषस्थानकृतस्य ग्रहणम्। 'आमाशयाच्च्युतमग्निना पक्व'मिति कथमुक्तं यतः पक्वाशयेऽग्निना पाकोऽनुपपन्नः। दूरव्यवधानो ह्यग्निरामाशयस्थः। तस्मात् पक्वाशयस्थस्यान्नस्य पक्वत्वमनुपपन्नम्। अत्रोच्यते—पक्वाशयेऽप्यस्ति पाकस्तन्त्रकारवचनात्। तथा हि प्राग् वस्तिविधावभ्यधात्।

"यथा वा स्नेहपक्तिः स्यादतोऽप्युद्वणमारुतात्।
व्यायामनित्यदीप्ताग्नीन्"

इत्यादि। तदेवं पक्वाशयस्थस्याप्यनुवासनस्नेहस्य पाकोऽभिहितः। तस्मात् पक्वाशयेऽप्यग्निना पक्वस्य पुनः पाको युक्त एव। अन्यैर्मांसादीनामपि विक्लेद-दर्शनादन्यत्रापि पाकोऽनुज्ञात एव। **हाटके**नाप्युक्तं—"ननु आमाशयस्थेनाग्निना कथं पक्वाशयस्थस्य पाकः। उच्यते—यथा बाह्यस्याग्नेरन्यदेशावस्थितस्य समीप-स्थानवर्तिनां पचनशोषणे तथान्तराग्नेरपि स्थानान्तरस्थे तस्मिन् पाकः। 'यथा वा स्नेहपक्तिः स्यादि'ति स्नेहस्य पाकवत्त्वादामाशयस्थेनाग्निना स्थानान्तरेऽपि पाक-शोषणादिकरणान्नानुपपन्नम्" इति॥

जठराग्निना किञ्चित्पक्वविक्लिन्नस्यान्नस्य भौतिकाग्निना पाकं दर्शयति—

**भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः।**
**पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यनु॥ ५९॥**

भौमेत्यादि। **अरुणो**ऽपि—"एवं जाठरस्याग्नेः कर्माभिधाय इदानीमन्ये-षामप्यग्नीनां कर्माभिधातुमाह" इत्युक्तवान्। भूमेरयं भौमः। आप्य इति चिन्त्यम्। आग्नेय इति 'अग्नेर्ढक्' (पा० सू० ४-२-३३) इति ढक्। वायव्य इति सास्य देवतेत्यर्थे 'वाय्वृतुपित्रुषसो यत्' (पा० सू० ४-२-३१) इति यत्। तद्वदौपम्यार्थो बोध्यः, वायव्य इव वायव्य इति। के पुनस्त इत्याह—पञ्चोष्माणः इति। किंभूताः। सनाभसाः। सह नाभसेनोष्मणा पञ्चोष्माणः पञ्चाग्नयः भौम ऊष्मा यावन्नाभस उष्मा। तदेतेऽग्नयः पञ्चाहारगुणान् आहारभागान् अनु पश्चात्पचन्ति। कुतोऽनु? प्रकृतत्वादुदर्याग्निनिर्वर्त्तितादन्नपाकात्। किंभूतानाहारगुणान्। स्वान् स्वान् पार्थिवादीन्। यो यस्य महाभूतोष्मणः पार्थिवाद्रेरात्मीयो गुणः तं गुणं स एव पार्थिवाद्यूष्मा पचति॥

**हाटको**ऽप्याह—"अनु अग्निनिर्वर्त्तितादन्नपाकादनन्तरं सनाभसा भौमादिपञ्चोष्माणोऽग्नयः पचन्ति। तद्गुणोत्कटत्वं पार्थिवादीनामस्तीति पार्थिवोऽग्निः सादृश्यात्पार्थिवमेवाहारं पचति। एवं सर्वत्र योज्यम्" इति। गुणशब्दोऽवयववाची। **असद्गुरव**स्तु—"अनुशब्दः सहार्थे अनुपचन्ति सहपचन्ती"त्याहुः। **संग्रहे**—"ततश्चैवं विक्लिन्ने आहारे[1] पञ्चमहाभूताग्नयो वायुना

१. 'रे पञ्च पञ्चात्मका महाभूताग्नयो' इति मुद्रिते।

व्यस्तान् यथास्वं पञ्चैव भूतगुणान् आहारस्थान् पचन्ति" इति । अत्र इन्दुः— "जठराग्निना किञ्चित्पक्वविक्लिन्ने आहारे पञ्चमहाभूताग्नयः पार्थिवादयः पञ्चाहारस्थान्[1] महाभूतगुणान् पार्थिवादीनाहारभागान् पचन्ति" इति ॥

अनया चोक्त्या आहारः शरीरगतानां (भावानां) समानगुणानां गुण-द्वारेण वर्धनहेतुः विपरीतगुणानां च क्षयहेतुरिति प्रतिपादयति—

**यथास्वं ते च पुष्णन्ति पक्त्वा भूतगुणान् पृथक् ।**

यथास्वमित्यादि । ते च पार्थिवादयः पञ्चाहारगुणाः पार्थिवादिभिः पञ्चभिरग्निभिः पक्त्वा पुनर्यथास्वमात्मीयानतिक्रमेणैव देहगान् देहाश्रितान् स्वविकारभूतान् पार्थिवादीन् भूतगुणान् पुष्णन्ति । कथं पुष्णन्तीत्याह–पृथक्, प्रत्येकं सर्वो न सर्वानित्यर्थः ॥

तामेव प्रत्येकं भूतगुणपुष्टिं पञ्चोष्मपकाहारगुणकृतां स्पष्टीकुर्वन्नाह—

**पार्थिवाः पार्थिवानेव शेषाः शेषांश्च देहगान् ॥ ६० ॥**

पार्थिवा इत्यादि । पार्थिवा आहारगुणाः पार्थिवानेव देहगान् गुणान् देहभावान् पुष्णन्ति वृद्धिं नयन्ति । शेषाः पार्थिवेभ्योऽन्ये ये आहारगुणाः आप्यास्तैजसा वायव्या नाभसाश्च ते शेषान् पार्थिवगुणव्यतिरिक्तान् आप्यादिमहाभूतगुणान् पुष्णन्ति आप्याययन्ति । गुणानां च निराधाराणामसम्भवात् सहाधारेण पृथिव्यादिना महाभूतेन पक्त्वा एते महाभूतगुणास्तथाविधानेव महाभूतगुणान् पुष्णन्तीति सामर्थ्यलभ्योऽर्थः । "गुणशब्दोऽवयववाची" इतीन्दुः । अत्र चोदयन्ति—"ननु पृथिव्यादिमहाभूतव्यतिरिक्तदेशमात्रत्वादाकाशस्य सत्तैव दुर्घटा । कथं तस्योष्मणः सम्भवः इति । अत्रोच्यते—आकाशस्य सत्ता तावद् द्रव्यनिर्णयप्रस्तावे प्राक् प्रतिपादितैव । तथा नासिकाश्रोत्रास्यादिषु सुषिरेषु स्थानेषु स्थित ऊष्मा दाहपाकादीन् कुर्वन् नाभस ऊष्मेत्युपचर्यते इत्यौपचारिक ऊष्मास्योपपन्न एव । एवं पञ्च भौतिकाग्नयः । एक उदराग्निः । सप्त धात्वग्नयो वक्ष्यमाणा इति त्रयोदशाग्नयः ।

---

१. 'स्थान् यथास्वं महा' इति मुद्रिते ।

ननु पार्थिवाद्यूष्मभिः पक्वस्य पुनश्च धातूष्मभिः पाको धातूनामपि पाञ्चभौतिकत्वात् तत्रापि पार्थिवाद्यूष्मभावः । तैश्च पार्थिवाद्यूष्मभिः पुनः पाक इत्येवमष्टादश प्राप्नुवन्ति । सत्यमेवैतत् । किन्तु त एव पञ्चोष्माणः पार्थिवादयः स्थानान्तरं प्राप्ता धातूष्माण इति व्यपदेशं प्राप्नुवन्ति । यथोदकं स्थानान्तरगतं लसीकादिव्यपदेशं लभते । तथा चोक्तं–"तच्छरीरगतं लसीकादिव्यपदेशं प्राप्नोती"ति । अन्ये त्वेवमाहुः–"एते त्रयोदशाग्नयस्तथा सप्तसु सिराशतेषु सप्ताग्निशतानि पञ्चसु मांसपेशीशतेषु पञ्चाग्निशतानि" इति । एवं पञ्चमहाभूतात्मकादाहाराद्यथास्वमग्निना पक्वाद्रस आहारसारः तत्रस्थैर्महाभूतगुणैर्देहगा महाभूतगुणा रसधात्वाश्रिता यथास्वमभिवर्धन्ते ॥

**किट्टं सारश्च तत्पक्वमन्नं सम्भवति द्विधा ।**

किट्टमित्यादि । तदेवमन्नं पक्वं द्विधा सम्भवति द्विप्रकारं जायते किट्टरूपतया प्रसादरूपतया च । संग्रहे–"एवं पक्वाहाराद्विविधौषधगर्भादिव स्नेहादच्छः सारभूतो रसाख्यः किट्टाख्यश्च मलोऽभिनिर्वर्त्तते" इति ॥

किट्टमपि यदेतदन्नस्य पक्वस्य तदप्यच्छानच्छभेदेन द्विधेत्याह—

**तत्राच्छं किट्टमन्नस्य मूत्रं विद्याद् घनं शकृत् ॥ ६१ ॥**

तत्रेत्यादि । तत्र तयोरच्छानच्छभेदभिन्नयोः किट्टयोः मध्यादच्छमन्नस्य किट्टं तन्मूत्रं विद्यात् । यत् घनं संहतमन्नस्य किट्टं तत् शकृत् पुरीषं जानीयात् ॥

**सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः ।**

सार इत्यादि । सार आहारस्य प्रसादाख्यो भावो भूयः सप्तभिरग्निभिः पच्यते । उदराग्निना पञ्चभिश्च भूताग्निभिः पूर्वं, पश्चात्सारीभूतो धातूष्मभिः पच्यत इति प्रतिपादनार्थं भूयोग्रहणम् । कथं पच्यते । यथास्वम् । यो यस्य रसादेः सप्तधा स्थितस्य धातोरात्मीयोऽग्निः तेन स सारः पच्यत इत्यर्थः । रसधातुस्थः सारो रसधात्वग्निना पच्यत इति भावः । चतुर्विधोऽप्याहारोऽभ्यवहृतो जाठराग्निना भूताग्निसहायेन पक्वः किट्टसारतां याति । ततो यः सारः

प्रसादाख्यः स पूर्वं हृदयं याति । ततो हृदयान्तःस्थेन व्यानेन विक्षिप्तं पत्स्थाभिः सिराभिः दशभिः मूलभूताभिः कृत्स्नं शरीरमुह्यमानो रसधातुना सहैकतां प्राप्तो रसधात्वाशयस्थेनाग्निना भूताग्निसहायेन पच्यमानो रक्तसारतया तरिणमति । रक्तधातुसारतया परिणतो मांसधातुसारतया परिणमति । यावत् स एवाहारसारः क्रमेण गर्भतया परिणमतीति ॥

अमुमर्थं द्योतयितुमुवाच—

**रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ॥ ६१ ॥**

**अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते ।**

रसाद्रक्तमित्यादि । उक्त आहारपाकक्रमः आगमोक्तप्रकारेण स्पष्टीक्रियते । यथा जाठरेणैवाग्निना आहारस्य पाके आरब्धे प्रतिनियतफलाभिनिर्वृत्तिशक्तित्वात्तदाश्रयाणामेव भृत्यस्थानीयानां पञ्चानां भूताग्नीनां पाकः । ननु च यद्येते भूताग्नयः पञ्चाहारद्रव्याणि पचन्ति न च तद्व्यतिरेकेण अपर आहारोऽपि विद्यते यज्जाठरः पचति अथ समुदायं पचति जाठर इति भूताग्निकल्पना व्यर्था । अत्रोच्यते—समुदायावयवपाकसम्पादकत्वात् स मूलो जाठरो राजवत् सर्वेषामनुग्राहकः इत्युक्तम् । तथा च सौश्रुतं वचः—'जाठरेणाग्निना पूर्वं कृते संहतिभेदने । पश्चाद् भूताग्नयः पञ्च स्वं स्वं द्रव्यं पचन्ति हि' इति । पश्चात्प्रसादकिट्टरूपेण भिन्नस्याहारस्य सप्तभिर्धात्वग्निभिर्यथास्वं प्रतिनियतस्वलक्षणः पाकः । ननु येऽपि धात्वग्नयः सप्त किमेते भूताग्निभ्योऽन्ये अथवा नान्ये । किञ्च यदन्ये किमात्मका इति वक्तव्यम् । अथ पञ्च भूतात्मकास्तर्हि भेदः अन्येषामपि पाञ्चभौतिकत्वात् । अथानन्ये त्रयोदशत्वहानिरिति यत्किञ्चिदेतदुच्यते । स्थानविशेषात् कार्यविशेषाच्च । भूताग्नय एव धात्वग्निसमाख्यां लभन्ते । यथैको बहूनां कर्मणां करणसमर्थो भवति । यद्यत्कर्म कुरुते तस्य तस्य कर्मणः सदृशं तन्नामविशेषं प्राप्नोति पाचकादिवत् । यथा चोदकस्य दश अञ्जलयः । तदेव रोमकूपेभ्यो निष्पतत् स्वेदशब्दं लभते । तदेव व्रणप्राप्तं लसीकाशब्दम् । तद्वदग्नयोऽपीत्यनवद्यम् । नन्वाहारद्रव्याणां सर्वेषां यथास्वमपि लक्षणं रसादीनां पाककाले मधुरादिविपाकत्रयोपदेशात् 'स्वादुः पटुश्च मधुर'—मित्येषां व्यवस्था न स्यात् । यद्यनवस्था पाकत्रयोपदेशवैयर्थ्यम् । ब्रूमः ।

भिन्नकालमुभयानुज्ञानादुत्तरकालमात्मीयपाककालः, पाकश्च निष्ठेत्युच्यते । निष्ठा अन्त्यपाकः मधुररसप्रधानत्वयोगे सत्यपि प्राङ् मधुरस्येव जननम् । उत्तरं च अम्लस्याल्पमात्रस्य । अन्ते च कटुकस्याल्पतरस्य । स्वभावतो दोषस्थानानुपूर्व्या वा त्रिपाकावस्थानक्रमः । अस्थिरत्वात् कालिको यथा गुणाद्यनुरूपकार्यकारणशक्तानां द्राक्षाक्षीरपानीयादीनां वर्षास्वम्लपाकः तथा षड्रसस्याप्याहारस्य पूर्वे पाकाः सम्भवन्ति इति । सर्वाग्निपाकादनन्तरं आत्मीयपाकलाभो रसाद्यनुरूपकार्यकरणशक्तिश्चेति इदानीं प्रसादसंज्ञकानां धतूनां च क्रमोत्पादसन्दर्शनायाह—रसाद्रक्तमित्यादि । रसधतोराहाररसेन सहैकतामापन्नाद्रक्तं प्रजायते । स धातुरसस्तथाभूतो मांसतया सम्पद्यते । तावद् यावत् स एव गर्भत्वेनेति योज्यम् । **हाटको**ऽप्याह—"आहारसारेण सहैकतामापन्नादात्मीयाग्निना पच्यमानाद्रसधातुसारात् रक्तं प्रजायते । तावद्यावदेवं क्रमेण शुक्रान्तम् । अस्माच्छुक्राद्गर्भः परिणमति" । इति । अत्र चोदयति—ननु यद्याहाररसो व्यानक्षिप्तो रस(धातु?) धातुना सहैकतया परिणमन् क्रमेण रक्तादीन् गर्भावसानान् परिणामयति तर्हि कथमुक्तं–'सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः' इति । अत्रोच्यते—कार्ये कारणोपचाराद् एवमुक्तमित्यवेहि । सारकार्येषु रसरक्तादिषु सप्तभिर्धात्वग्निभिः पच्यमानेषु 'सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः' इत्युक्तम् । तस्माद्रसधातुरेव रसाख्यान्मूलकारणादुत्थितः परमार्थेन पच्यते इति बोध्यम् । एवमाशुक्राद्धातूनां कार्यकारणत्वं प्रसाधितं भवति । अत्राह—यदि क्रमेण रसाद्रक्तं रक्तान्मांसमित्यादिक्रम आश्रीयते तत्कथं वक्ष्यते 'व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा' इति । अत्र युगपदिति निर्दिश्यते । युगपदेककालं व्यानेन रसो देहे विक्षिप्यते । विक्षिप्ताच्च रसात् सर्वधातूत्पत्तिरिति प्रत्यज्ञायि । इह च रसरक्तमांसादिक्रमेण आहाररसाद्धातुनिष्पत्तिरित्युच्यते । तदेतत्परस्परविरुद्धमिव लक्ष्यते । ब्रूमः—युगपच्छब्दोऽत्र शीघ्रक्रमार्थः । तथा चोवाच **साङ्ख्ये** 'युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा' इति । तस्यार्थः—मनोबुद्ध्यहङ्कारास्त्रयः चक्षुःश्रोत्रादीनां मध्यादन्यतम इत्येवं चतुष्टयम् । एतस्य च वृत्तिर्युगपन्निर्दिष्टा क्रमेण च । तत्र युगपद्वृत्तिः उत्पलपत्रशत(स्रवी? पत्रसूची)वेधन्यायेन । क्रमेण च वृत्तिः

यथा चक्षुरादि रूपादिकं पश्यति । मनस्तत्र संशेते । बुद्धिर्निश्चिनोति । अहं करोमीत्यहङ्कार उद्यमयति । तद्वदत्रापि युगपत् क्रमेण च विक्षेपो न विरुद्धः । **सारकृताप्युक्तं**—"ननु रसाद्रक्तं रक्तान्मांसमित्येष क्रमो व्याहन्यते वक्ष्यमाणेन 'व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा' इत्यनेनेति । उच्यते–इह तु रसादेव सप्तधातवः सम्भवन्ति । तथापि 'रक्तान्मांसः प्रवर्तते' इति वचनं रक्तस्थानगताद्रसान्मांसोत्पत्तिरिति ज्ञापनार्थम् । कथमेतद् गम्यत इति चेत् । उपचारतः । रक्तस्थानगतो रसो रक्तमित्युपचर्यते तत्स्थानात्ताच्छब्द्यमिति । एवमेवेतरेषां क्रमः मेदप्रभृतीनां च । एवं च वचनाद्धातूनां उपचयक्रमज्ञानं प्रसाधितं भवति । एवमेकधातुक्षयश्चोपपन्नो भवति । **टिप्पणे**ऽप्युक्तं—"रसात्परिणताद्रक्तं तस्मान्मांसं भवति । यदि रसो नश्यति (इति) चेत् । तन्न । वास्तव्यं प्रवेकश्चोभयथा धातूनां गतिः । स्वाधारे यः पूर्णः स रसः । तत्रैव स्थितस्य वास्तव्यसंज्ञा । योऽणीयान् प्रवेकः, स रक्तत्वं प्राप्नोतीत्यादि योज्यम्" इति । उक्तं चा**ग्निवेश्ये**—'अथ खलु विविधमशितपीतलीढखादितं द्विविधपाकप्रतिपत्तौ स्वेन च प्राणतेजसाभिपच्यमानं त्रिभी रूपैः बहिर्भागं प्राप्नोति तथैतत् स्वेदरूपेण पुरीषरूपेणेति द्विपाकमुपपन्नं रसो भवति । रसो भूत्वा द्वैधीभवति । तत्र यद्वास्तव्यं रस एव वेदितव्यो भवति । योऽणीयान् प्रवेकः स शोणितं भवति । शोणितं भूत्वा द्वैधीभवति । तस्य यद्वास्तवं शोणितमेव तद्विद्यात् । योऽणीयान् प्रवेकः स मांसतामेति । मांसं भूत्वा द्वैधीभवति । तस्य यद्वास्तव्यं मांसमेव तद्विद्यात् । योऽणीथान् प्रवेकः समेदोभावमेति । मेदो भूत्वा द्वैधीभवति । तत्र यद्वास्तव्यं मेद एव तद्विद्यात् । योऽणीयान् प्रवेकः सोऽस्थिभावमेति । अस्थि भूत्वा द्वैधीभवति । तत्र यद्वास्तव्यं तदस्थ्येव विद्यात् । योऽणीयान् प्रवेकः स मज्जतामेति । मज्जा भूत्वा द्वैधीभवति । तत्र यद्वास्ताव्यं तद् मज्जैव वेदितव्यम् । योऽणीयान् प्रवेकः स शुक्रतामेतीति । 'युगपत्सर्वतोऽजस्र'-मित्यत्र युगपच्छब्देन उत्पलशतपत्रसूचीभेदनक्रमन्यायेन क्रमो बोध्यः । तस्माद् युगपत्क्रमेण च विक्षेपो न विरुद्धः" इति । अस्त्वेतत् । रसधातुरित्येतत्तु कथमुक्तम् । यतो न रसाख्यो धातुस्तेन विक्षिप्यते । किं तर्ह्याहाररसः । अत एव धातुशब्दोपादानमनर्थकम् । ब्रूमः–धातुशब्दः आधारा(देय?भिधेय)त्वेन इहोपात्तो

रसस्य देहधारणत्वं दर्शयितुम् । सर्वेषां हि धातूनां यद्देहधारणस्वभाववत्वं तदाहार-रसाप्यायितानामेषां न त्वनाप्यायितानाम् । अतः स आहार(स्सारः?रसः) (स्तो?) धातूनामा(क?धा)र उद्भवस्थानम् । यथा लोके हेमादीनां य आ(क?धा)रः प्रति-(नयताविष्टो?नियतो विशिष्टा) मृत्स्ना सा धातुसंज्ञया गृह्यते । इयं मृत् हेमधातुः इयं मृद्रजतधातुः इति । एवमाहाररसो व्यानेन विक्षिप्यते न रसाख्यो धातु-रिति स्थितमेतत् । किञ्च आहाररसादेककालं सप्तसु धातुस्रोतःसु प्रवेशिताद्र-सरक्तादयो धातव उत्पद्यन्ते इति । यद्येष एककालधातुपोषणपक्ष आश्रीयेत तदानीमिदं विरुध्यते 'पूर्वो धातुः परं कुर्याद् वृद्धः क्षीणश्च तद्विधम्' इति । यतः सर्वे धातव आहाररसेन युगपद् व्यानविक्षिप्तेन स्वे स्वे स्रोतस्यवतिष्ठमानाः स्वातन्त्र्येण आहाररसाप्यायिताः पुष्यन्ति, अनाप्यायिताः क्षयं यान्ति । तदेवं कथं पूर्वस्य धातोः वृद्ध्या परस्य धातोः वृद्धिः पूर्वस्य धातोः क्षये वा परस्य क्षयः स्यात् । न हि कदाचिद् यज्ञदत्ते तृप्ते चैत्रः सुहितः स्यादतृप्ते वासुहितः स्यात् । कथं स्थूलस्य मेद (एव) उपचीयत इति दृष्टम् । न च समं कृत्वा सप्तसु धातु-स्रोतःसु विक्षिप्ते रसे मेदसोऽधिका वृद्धिः कथञ्चिदुपपद्यते । क्रमपरिणामपक्षे तु स्थूलस्य आहाररसो रसधातुतया परिणमति । रसधातू रक्ततया रक्तधातुर्मांसतया (मां)सधातुः मेदस्तया परिणमति । मेदस आधारेऽतिपूर्णे आहाररसो मेदस्त्वं प्राप्तः पुनः प्रतिस्रोतोन्यायेन मांसस्य विशेष(वन्तिः?)वृद्धिं करोति । अनन्तरं रक्तस्यानन्तरं रसस्य पुनश्च रसधातुरतिपूर्णो रक्तस्य वृद्धिं विधत्ते । रक्तधातु-र्मांसस्य मांसधातुर्मेदस इत्येवमतिस्थूलस्य मेदो(वत्) रसादयो मांसावसाना अप्युपचीयन्ते । अस्थ्यादयस्त्वस्थ्यादिस्रोतसां मेदसावृतत्वात् न तथा प्रची-यन्ते । तस्मादाहाररसेन मेदोभावेन परिणमता उदकपूर्णाभिनवमृत्कुम्भजल(लव)-स्यन्दनन्यायेनास्थ्यादयो धातवः केवलमाप्याय्यन्ते न तथोपचीयन्ते (तथा च **मुनिः**—"स्थूलस्य मेद एवोपचीयते न) तथेतरे धातवः" इति । तस्य ह्यय-मर्थः । मेदसोऽन्येऽस्थ्यादयः शुक्रावसानाः ते तथा नोपचीयन्ते यथा मेदः । न पुनः पू(र्वे?र्वे)रसादयो धातवः स्थूलस्य नोपचीयन्त इति । अत एवाह **मुनिः**—

मेदोमांसा(दि?ति)वृद्धत्वाच्चल(स्थि?स्फि)गुद(राननः?रस्तनः) ।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥

इति। अपि च यदि क्रमपरिणामपक्षो नोररीक्रियेत तदानीं गर्भस्य शुक्रसारोत्थस्य रसादयो मज्जावसाना धातवो न स्युः। कारणानुविधायीनि कार्याणि भवन्तीत्युक्तम्। क्रमपरिणामपक्षे पुनः शुक्रप्रसादस्य सर्वधातुप्रसादरूपतया परिणतत्वात् (स) शुक्रप्रसादो गर्भतया परिणमन् तथारूप एव परिणमति कारणसरूपत्वात् कार्याणाम्। (त?य) था च बीजकारणे (बाधानकादौ?वटधवप्ररोहादौ) सकलान्य(वश्यंतत्? दृश्यत्)पदार्थजातानि तथारूपाण्यव्यक्तरूपतया तान्यवतिष्ठन्ते। यानि च कार्यरूपतया परिण(तिः?मन्ति तानि) सर्वाण्यभिव्यक्तिं यान्ति कार्ये दृश्यन्ते। **अरुणदत्तो**ऽप्याह—"ननु क्रमपरिणामपक्षे धातोः धात्वन्तरोत्पत्तावाश्रीयमाणायां यो धातुः धात्वन्तरभावेन देहे परिणमति तस्य धातोर्धात्वन्तरभावेन देहे परिणतत्वादभावः प्राप्नोति पूर्वस्य। ततश्च शुक्रप्रसादस्यैव देहे सद्भावः स्यान्न रसादीनां धातूनाम्। तथा चाहारनिवृत्तावपि स्त्रीगमनसामर्थ्यं स्यात्। शुक्रस्य विद्यमानत्वात्। उच्यते—अव्युच्छिन्नप्रवाहसन्तानक्रमेणांशांशितया धातूनां धात्वन्तरापत्तिः, न तुल्यकालं सर्वैरवयवैः उत्पत्तिरिति कृत्वा यो यो धातुः धात्वन्तरभावेन देहे परिणमति न तस्य धातोः पूर्वस्याभावः प्राप्नोति। सर्वैरवयवैरपरिणतत्वात्। अयमर्थः पूर्वमेव प्रतिपादितो वास्तव्यप्रवेकभेदकथने। किं बहुना, सर्वथा क्रमपरिणामपक्ष एवाश्रयितुं न्याय्यः। **अष्टाङ्गसंग्रहे**ऽप्यधीतं—"तत्राहाररसो व्यानविक्षिप्तो यथास्वं सप्तधात्वग्निषु[1] क्रमात्पच्यमानः स्वभावप्रच्युति[2]समकालमेव प्राप्तरक्तादिधातुसंज्ञः कालवदस्खलित[3]प्रयाणो देहमूर्जयन् धातून् धातुमलांश्च पुष्णाति" इति। **इन्दुः** "तत्रेत्यादिना तस्मिन्[4] क्रमधातुपाकवादे क्रमं दर्शयति। आहारस्य प्रधानाग्निना पक्वस्य[5] यो रसो भवति स व्यानेन हृदयमूलभवेन वायुना विक्षिप्तः स्रोतःसु विनियुक्तः सन् धात्वग्निषु पच्यमानो विशिष्टतत्कालव्यपदेशयोग्यस्वरूप[6]च्युत्येककालं प्राप्तरक्तादिधातुसंज्ञः कालवदविच्छिन्नवाही धातून् रक्तादीन् धातुमलांश्च कफादीन् पुष्णाति। रक्तं रक्ताग्नेरेव पाकेन भवति मांसं मांसाग्नेरेवेत्येवमादि यथास्वशब्दार्थः। देहमूर्जयन् शरीरं प्राणयन्" इति।

---

१. 'सप्तसु धात्व'। २. 'स्वात्मभावप्रच्युति'। ३. 'तवलप्रमाणो'। ४. 'अस्मिन्'। ५. 'स्य सतः यो'। ६. 'पप्रच्यु' इति मुद्रिते।

तथा चरकसंहितायां दृढबलोऽप्याह—

"रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ।
अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते ॥
इत्युक्तवन्तमाचार्यं शिष्यस्त्विदमचोदयत् ।
रसाद्रक्तं विसदृशात्कथं देहेऽभिजायते ॥
रसस्य च न रागोऽस्ति स कथं याति रक्तताम् ।
रसाद्रक्तात् स्थिरं मांसं कथं तज्जायते नृणाम् ॥
रसाद्रक्तात्तथा मांसान्मेदसः श्वेतता कथम् ।
श्लक्ष्णाभ्यां मांसमेदोभ्यां खरत्वं कथमस्थिषु ॥
खरेष्वस्थिषु मज्जा च केन स्निग्धो मृदुस्तथा ।
मज्ज्ञश्च परिणामेन यदि शुक्रं प्रजायते ॥
कथं सर्वगतं शुक्रं प्रवदन्ति मनीषिणः ।
अथ प्रसादान्मज्ज्ञश्च शुक्रं भवति देहिनाम् ॥
छिद्रं न दृश्यतेऽस्थ्नां च तन्निस्सरति वा कथम् ।
एवमुक्तस्तु शिष्येण गुरुः प्रावोचदुत्तरम् ॥
तेजो रसानां सर्वेषामन्नजानां यदुच्यते ।
पित्तोष्मणा सरागेण रसो रक्तत्वमृच्छति ॥
वाय्वग्नितेजसा युक्तं रक्तं मांसत्वमृच्छति ।
श्लेष्माणं तत्समाश्रित्य मांसं स्नेहाभिसंयुतम् ॥
स्थिरत्वं प्राप्य शौक्ल्यं च मेदो देहेऽभिजायते ।
पृथिव्यग्न्यनिलादीनां सङ्घातः श्लेष्मणा वृतः ॥
खरत्वं प्रकरोत्यस्य जायतेऽस्थि ततो नृणाम् ।
करोति तस्य सौषिर्यमस्थ्नां मध्ये समीरणः ॥
मेदसा तानि पूर्यन्ते स्नेहो मज्जा ततः स्मृतः ।
तस्मान्मज्ज्ञश्च यः स्नेहः शुक्रं संजायते ततः ॥

१. 'च समा' । २. 'वाय्वग्निसं' इति मुद्रितसुन्दर्याम् ।

वाय्वाकाशादिभिर्भावैः सौषिर्यं जायतेऽस्थिषु ।
येन स्रवति तच्छुक्रं नवात् कुम्भादिवोदकम् ॥

स्रोतोभिः स्यन्दते देहात् समन्ताच्छुक्रवाहिभिः ।
हर्षेणोदीरितं रागात् सङ्कल्पाच्च मनोभवात् ।
वस्तौ संभृत्य निर्याति स्थलान्निम्नमिवोदकम् ॥"

पाठ्यकारस्त्वाह—"शुक्राद्गर्भः प्रजायत इति । तर्हि स्त्रीणां शुक्रात्कथं गर्भो न जायत इति चेत् । भ्रमः—अत्रैवं परिहारः । अग्नीषोमीयत्वाज्जगत इति । आग्नेयमार्तवं सौम्यं शुक्रं च यदा सम्मिलिते भवतः तदानीमेव बीजत्वम् । नाङ्कुरोत्पत्तिरबीजादिति प्रसिद्धिः । प्रकृतिपुरुषाभ्यामेव संमिलिताभ्यां जगदधिष्ठितं यतस्तस्मात् 'शुक्राद्गर्भः प्रजायत' इत्यौपचारिकोऽयं व्यवहारः । रजसो गर्भ इति ब्रुवते तन्त्रकृतः ॥

रसादीनां धातूनां प्रसादं दर्शयित्वा किट्टं यथाक्रमं दर्शयितुमाह—

**कफः पित्तं मलः खेषु प्रस्वेदो नखरोम च ॥ ६३ ॥**
**स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः ।**

कफ इत्यादि । कफादयो धातूनां क्रमेण मलाः । रसस्य कफो मलः । रक्तस्य पित्तं मलः । खेषु नासिकाविवरादिषु यो मलोऽन्तः सम्भवति स मांसस्य मलः । यः शरीरे प्रस्वेदो रोम(कूपे)भ्यः सलिलसम्भवः स मेदसो मलः । नखरोमाणि चास्थ्नां मलः । अक्ष्यादिसंबन्धी स्नेहो मज्ज्ञो मलः । यदोजः सर्वेषां धातूनां तेजः शरीरे (स) शुक्रस्य मलः । रजःप्रभृतीनामपि रसादेव जन्मानुमीयते । अयं पुनराचार्यो ग्रन्थबाहुल्यभयाद्रजोलसीकाजरायुस्तन्यादीनामुत्पत्तिं नोक्तवान् । संग्रहे तूक्तं—"रसस्य सारो रक्तं मलः कफः तथा लसीका च । रक्तस्य सारो मांसं कण्डराः सिराश्च । मलः पित्तम् । मांसस्य सारो मेदः त्वचो वसा च । किट्टं कर्णनासिकास्यरोमकूपप्रजननमलाः । मेदसः सारोऽस्थिस्नायुसन्धयः ।

---

१. 'कर्णाक्षिनासिका' इति मुद्रिते ।

किट्टं स्वेदः । अस्थ्नः सारो मज्जा । किट्टं केशरोमनखाः । मज्ज्ञस्तु सारः शुक्रम् । मलोऽक्षिविट्त्वचां स्नेहः । शुक्रसार ओजः अत्यन्तशुद्धतया चास्य मलाभावः । अन्ये पुनरत एव तस्य नेच्छन्ति पाकम् । अपरे पुनः शुक्रसारं गर्भमेवामनन्ति" इति । इन्दुः—कर्णादिषट्कस्य मलशब्देन संबन्धः। प्रजननं मेहनम्[1] । कर्णादिषु मलो दृश्यते । सन्धयोऽस्थिभागाः पूर्वमुक्ताः[2] । शुक्रस्य तु क्रमेण सारसारत्वात् शुद्धतया मलाभावः । अपरे आचार्याः अतः सारादपि सारतरत्वाद्धेतोः (पाकात्?) शुक्रस्य पाकं नेच्छन्ति । अन्ये त्वाचार्याः शुक्रस्य सारो गर्भ इत्यामनन्ति" इति । टिप्पणे तूक्तं—"ननु पूर्वं सूत्रस्थाने ओजसो धातुसारत्वमुक्तं—'ओजस्तु तेजो धातूनां शुक्रान्तानां परं स्मृतम्' इति । संग्रहेऽपि—"शुक्रसार ओजः । अत्यन्तशुद्धतया अस्य मलाभावः" इत्युक्तम् । तदिह कथमोजः शुक्रस्य मल इत्युच्यते । एकस्यैव सारत्वं मलत्वं च न घटते इति । ब्रूमः—द्विविधं ह्योजः । शुक्रस्य प्रसादरूपमेकं शुक्रस्य मलरूपं द्वितीयम् । अत एव—

'ओजस्तु तेजो धातूनां शुक्रान्तानां परं स्मृतम् ।'

इत्युक्तम् । शुक्रान्तानां धातूनां यस्तेजः तत्परं प्रधानमोजः स्मृतमित्यन्वयः । परमित्युक्तत्वादपरमप्योजोऽस्तीति गमयति । संग्रहे—"तद्वदोजोऽपि परं हृदयस्थमष्टबिन्दुप्रमाणमाधारः प्रास्रुतिकस्य रसात्मकस्यौजसः" इति । अस्य व्याख्या प्रकृतिस्वरूपकथने वक्ष्यत इति ॥

न केवलमाहारस्य प्रसादकिट्टतया द्वैविध्यं यावद्धातूनामप्याहाररसाप्यायितानां प्रसादकिट्टतया द्वैविध्यमिति दर्शयन्नाह—

**प्रसादकिट्टौ धातूनां पाकादेवं द्विधर्च्छतः ॥ ६४ ॥**

प्रसादेत्यादि । धातूनां रसादीनामेवमनेन प्रकारेण यथादर्शितेन अग्न्याहितात्पाकात् प्रसादकिट्टौ द्विधा ऋच्छतः द्वैविध्यं भजतः । किट्टशब्दस्यात्र पुंस्त्वं लोकाश्रयत्वाल्लिङ्गस्येति बोध्यम् ।

---

१. 'न्धः कर्णादिषु मलो दृश्यत एव । प्रज' । २. नम् । सन्ध' । ३. 'क्ताः । अक्ष्यादेः स्नेहो मलः । शुक्र' इति मुद्रिते ।

(रसस्य धातुत्वं भजतो यथोत्तरं सारोत्कर्षमिति आहारस्य धातुसार-जनकत्वं दर्शयति ?)

**परस्परोपसंस्तम्भाद्धातुस्नेहपरम्परा ।**

परस्परेत्यादि । धातूनां स्नेहः सारो धातुस्नेहः । आहारस्य धात्वात्मना परिणमतो (यो यद्वा ? यथायथं धा)त्वग्निभिः पच्यमानस्य यः सारः स स्नेहशब्द-वाच्यः । **हाटको**ऽपि--"धातूनां यथास्वमग्निभिः पच्यमानानां क्षीरस्येव शृतस्य यः सारो भवति स धातुस्नेहः" इत्याह । तस्य धातुस्नेह(स्य) परम्परा आहार-रसाप्यायि(ता ? ततया अ)व्युच्छिन्नप्रबन्धप्रवृत्तरूपतया विशिष्टैव यथोत्तरं धातु-स्नेहोत्कर्षक्रमेण परिणमति । सा धातुस्नेहपरम्परा परस्परमुपसंस्तम्भादुप-श्लेषाज्जायते । उत्कर्षेण परिणतिराहारस्य धात्वात्मना परिणमतो रसधात्वग्निना पच्यमानस्य तादात्म्यमापन्नस्य स्नेहभूतस्य रक्तधातुप्रविष्टस्य तत्स्थेनाग्निना पच्यमानस्य रक्ततामापन्नस्येत्यादिक्रमेण । अत एव शोणितप्रभृतीनां धातूनामुत्तरोत्तरं गौरवं यथोत्तरं स्नेहोत्कर्षः । परस्परमुपस्तम्भेति केषा-ञ्चित्पाठः । इति क्रमधातुपाकवादः । अन्ये पुनराचार्याः अन्नरसादेव सकल-धातुसम्भवं वर्णयन्ति । न च धातोर्धात्वन्तरादुत्पत्तिमिच्छन्ति । तत्पक्षोऽप्युक्तः **संग्रहे**--अन्ये तु वर्णयन्ति । अभ्यवहृतमात्रस्याहारस्य कण्ठनालीप्रलुठितस्य महानिम्नमवतीर्णस्य[1] य एवांशः कायाग्निनावलीढः पाकमुपनीयते[2] तस्यैव प्रसादाख्यो रसलेशोऽभिनिर्वृत्तिसमनन्तरं समं समस्तधातुषु संवृतासंवृतैः[3] परि-स्रुतो विवृतमुखेष्वासन्नेषु स्रोतःसु[4] प्रथमतरं चान्वेति[5] विपर्ययेणेतरेष्व(ति ? पि) । एवमन्नरस एव साक्षात्सप्तधातून्[6] केनचिदेव कालभेदेन पुष्णाति । न पुनर्धातवो धात्वन्तरतां स्वरूपोपमर्देन प्रतिपद्यन्ते" इति । **इन्दुः**--"य एवाहारभागः कोष्ठप्राप्तिसमनन्तरं अग्निना संबध्यते तस्यैव तेन पक्वस्य योऽन्नसारः स तदैव सर्वधातुष्वन्तर्गच्छति[7] । केवलं त्वयं विशेषः । विवृतमुखेषु[8] स्रोतःसु सारसम्भव-देशासन्नेषु च प्रथममन्वेति भूयांश्चान्वेति । इतरेषु संवृतमुखेषु दूरेषु च

१. 'स्य यो य एवांशः' । २. 'ते तस्य तस्यैव' । ३. 'प्रविसृतो वि' । ४. 'सु भूयान् प्र' । ५. 'ति पर्यायेणेतरेष्वपि । एव' । ६. 'सर्वधातून्' । ७. 'धातुस्रोतःस्वनुगच्छति' । ८. 'षु असंवृतेषु स्रो' इति मुद्रितपाठः ।

विपर्ययेण स्वल्पश्चिरेण चेत्यर्थः । एतस्मिन्[1] पक्षे केवलमन्नसारस्य[2] सकलधातु-परिपोषकत्वमुक्तम्[3] । यथोत्तरं[4] धातुस्रोतसां संवृतमुखत्वाच्च दूरदूरत्वाच्च काल भेदोऽङ्गीकृतः । तेन द्वयोरपि पक्षयोर्युगपद् धातुसम्भवः" इति ॥

इदानीमन्नं कियता कालेन सर्वधातूनभिव्याप्नोतीत्याह—

**केचिदाहुरहोरात्रात्षडहादपरे परे ॥ ६५ ॥**
**मासेन याति शुक्रत्वमन्नं पाकक्रमादिभिः ।**

केचिदित्यादि । केचिदाचार्याः अहोरात्राद्रात्रिन्दिवेन अन्नं शुक्रत्वं यातीत्याहुः । कैः । पाकक्रमादिभिः । पाकस्य क्रमः पाकक्रमः । पाकस्य जठराग्निना भूताग्निभिर्धात्वग्निभी रसरक्तादिपरिपाट्येत्येवंप्रकारः क्रमः स आदिर्येषां वीर्यप्रभावादीनां तैः । **हाटकोऽ**पि—"पाकक्रमः पाकपरिपाटी रसरक्तादिरूपा । आदिशब्दाद् वीर्यप्रभावादीनां ग्रहणम् ।" इत्याह । आदिशब्दात् स्रोतःशीघ्र-मन्दवहत्वादीनां ग्रहणमित्यस्मद्**गुरवः** । अन्ये आचार्याः षड्भिर्दिवसैः अन्नं पाकक्रमादिभिः शुक्रत्वं यातीति वदन्ति । शुक्रव्यतिरिक्तषड्धातुपरिणति-स्तावता दिनेन भवतीति । अपरे तु मासेन शुक्रत्वं यातीत्याहुः । अहोरात्रात् प्रभृति मासः परोऽवधिरन्नस्य रसादिपाकक्रमादिना परिणमतः शुक्रत्वगमने न तत ऊर्ध्वं कदाचिदपीति । मतत्रयमेतत् पाकक्रमादिभिर्धातुपरिणतेः स(र्वैर्दी? सभिर्दि)नैरसंभवं दर्शयति । तथा च **पराशरो**ऽष्टरात्रेण अन्नं परिणमच्छुक्रत्वं यातीति संगिरते । तथा च तद्ग्रन्थः—

"आहारोऽद्यतनो यश्च श्वो रसत्वं स गच्छति ।
शोणितत्वं तृतीयेऽह्नि चतुर्थे मांसतामपि ॥
मेदस्त्वं पञ्चमे षष्ठे त्वस्थित्वं सप्तमे व्रजेत् ।
मज्जतां शुक्रतामेति दिवसे त्वष्टमे नृणाम् ॥
तस्माद्धि पथ्यापथ्याभ्यामाहाराभ्यां नृणां ध्रुवम् ।
सप्तरात्रेण शुद्ध्यन्ति प्रदुष्यन्ति च धातवः ॥"

---

१. 'एवमस्मिन् पक्षे' । २. 'लमधिकृतस्यान्न' । ३. 'रिपाकात्वसु' । ४. 'रं तु धातु' । इति मुद्रितपाठः ।

इति। सौश्रुते मासेन रसस्य शुक्रीभावे हेतुरप्युपदिष्टः—

अष्टादश सहस्राणि ह्यस्मिन् सङ्ख्यासमुच्चये।
नवतिश्च कला ज्ञेया मासवृद्धिविधौ यतः॥

इति। मासवृद्धिकल्पना (यातेश्च?) तावत्कलासम्भवादित्यर्थः। शुक्रवदार्तवमपि स्ववहसिरासौक्ष्म्यान्मासात् स्वस्थानं गच्छतीत्येके। उक्तं च—

सूक्ष्माः केशप्रतीकाशा बीजरक्तवहाः सिराः।
गर्भाशयं पूरयन्ति मासाद् बीजाय कल्पते।

इति। अयं खलु रसगतिकालो दुर्बलतमस्योपदिष्टो मासावसानिक इत्यवगन्तव्यम्। उक्तं ह्याग्निवेश्ये—'स्त्री पुरुषो वा यदन्नं रसति तन्मासे विंशतिरात्रे पक्षे वा दशाहे त्र्यहे द्व्यहे वा पूर्वरात्रेऽपररात्रे वा शुक्रीभवति। ते यदा बलवन्तः पूर्वरात्रे, ते यदा दुर्बला द्व्यहे त्र्यहे, ते यदा दुर्बलतरा दशरात्रे पक्षे, ते यदा दुर्बलतमा विंशतिरात्रे मासे' इति। मन्दाग्नेरुपदिष्टोऽयं रसगतिकाल इत्येके। उक्तं हि—

'रसे गतिविशेषोऽयं मन्दाग्नेरावसानिकः।
अनयैवोर्जिताग्नेश्च विज्ञेयः कालसङ्ख्यया॥' इति।

अथैतदन्नं रसादिभावेन परिणमच्छुक्रत्वं यातीति किं विच्छिन्नं कृत्वा अथ कालवदनवरतं कृत्वा पाकक्रमेणात आह—

**सन्ततं भोज्यधातूनां परिवृत्तिस्तु चक्रवत्॥ ६६॥**

सन्ततेत्यादि। हाटकोऽप्याह—"अन्नं रसादिभावेन परिणमद् विच्छिन्नप्रवाहं शुक्रत्वं याति उत वा अनवरतप्रवाहमित्याह—सन्ततेत्यादिना" इति। भोज्याश्च ते धातवश्च भोज्यधातवः। भोज्यशब्देन यस्य धातोर्य आहारस्तस्य सर्वस्य ग्रहणम्। उक्तं हि—'धातवो धात्वाहारा' इति। एतदुक्तं भवति—यस्य धातोर्यस्मादुत्पत्तिः स तस्याहारः इति। भोज्यधातूनां

१. 'अष्टादशसहस्राणि सङ्ख्या ह्यस्मिन् समुच्चये।
कलानां नवतिः प्रोक्ता स्वतन्त्रपरतन्त्रयोः' मुद्रिते।

परिवृत्तिः परिवर्तनं भ्रमणं गतिः सा चक्रवदव्युच्छिन्नस्वरूपा अन्नरसेनाप्यायितत्वात् ॥

एवं पूर्वोक्तेन कालावधिना वृष्याद्यपि यद्वस्तुजातं तदपि शुक्रत्वं यातीत्याशङ्कायामिदमाह—

**वृष्यादीनि प्रभावेण सद्यः शुक्रादि कुर्वते ।**

वृष्यादीनीत्यादि । इन्दुनाप्युक्तं—"ननु चैकस्मिन्नेवाह्नि वृष्यादीनां शुक्रादिकर्तृत्वं दृष्टं तत्कथमित्याह—वृष्यादीनीत्यादी"ति । सारकृदप्याह—"इदानीं रसादिपरिणामक्रममन्तरेणापि शुक्रस्योपचयमौषधवीर्यापेक्षमुपदिशति—वृष्यादीनीति" इति । वृष्याणि वाजीकरणानि क्षीरमधुक(षाय? माष)कूष्माण्डहंसादिपक्ष्यण्डादीनि । आदिशब्देन बल्यतर्पणादीनां विषगरप्रशमनमूढगर्भजरायुनिष्क्रमणद्रव्याणां च ग्रहणम् । प्रभावेण समतिशायिनी शक्तिः तेन सद्यस्तत्क्षणादेव सूक्ष्मं दुर्लक्ष्यं तथाविधं प्र(सादम्? भावम्) आसाद्य शुक्रादि कुर्वते इति ॥

सर्वशास्त्रार्थसिद्धान्तं दर्शयति—

**प्रायः करोत्यहोरात्रात्कर्मान्यदपि भेषजम् ॥ ६७ ॥**

प्रायः इत्यादि । न केवलं वृष्यादीनि, यावदन्यदपि भेषजं चूर्णगुलिकादि दीपनादिक्रियां प्रायोऽहोरात्रेण स्वं स्वं कर्म करोति । प्रायोग्रहणं किञ्चिद्भेषजमहोरात्रादप्यूर्ध्वं किञ्चित्ततोऽप्यवाग् वीर्यादिवशात्कर्म करोतीति द्योतनार्थम्। इन्दुरपि—"अहोरात्रमतिक्रम्य घृततैलादीनां यद्यपि मात्राभ्यासेन रोगोपशमनाख्यकार्यनिर्वृत्तिस्तथापि तेषां दिनानुदिनं कार्यकर्तृत्वं विद्यत एवेति प्रदर्शनार्थं प्रायोग्रहणम्" इत्याह । अथ हाटकोक्तिर्लिख्यते—ननु "सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः" इति धातुष्वाहाररसस्य युगपत्प्रवेशः पाको धात्वात्मकता चाभिहिहिता । तथा व्यानेन रसधातुर्हि युगपद् विक्षिप्यते इत्यादिना आहाररसात्सर्वधातूत्पत्तिरभिहिता । (रसाद्रक्तमित्यादिना क्रमेणाहाररसाद्रसादिधातुनिष्पत्तिश्चक्रं च केचिदाहुरदे अत्राभिधीयते आहाररसस्य सर्वधातुजनकत्वं युक्तियुक्तं न परम्परया क्रमेण च धातूनामुत्पत्तिं तन्त्रकारा वदन्ति ।

अत्र क्रमेण धान्वन्तरीयाणामुभयमभिमतमवस्थावशात् । ?) **सुश्रुतस्त्वेवं ब्रूते**— 'मासेनाहाररसः शुक्रीभवति कृत्स्नं शरीरमहरहस्तर्पयती'ति । एवमुभयपक्षावलम्बेनं विस्तरणीयं प्रयोगक्रमेण धातुपरिणत्या संगच्छते । रसधातोराहाररसेनाप्यायितस्य य(द्र ? द्वा)स्तव्यं तद्रसधातुः योऽणीयान् प्रवेकः स एव शोणितताममेति । शोणितस्याणीयान् प्रवेको मांसताममेति वास्तव्यं शोणितता(म्) । एवमुत्तरत्रापि द्रष्टव्यम् । **हिरण्याक्षीये** चोक्तं—

'धातूनां शोणितादीनां स मूलं वर्धनो रसः' ।

इति । रसः पञ्चविंशतिकलाशतानि चतुरशीतिश्च नव काष्ठाश्चात्मस्थाने हृदये गच्छतीति । एवमेकैकस्मिन् धातौ तानि समस्तानि त्रिकाष्ठाहीनानि भवन्ति । एवं मासेन रसः शुक्रीभवति । श्लोकश्चात्र—

"अष्टादशसहस्राणि ह्यस्मिन् संख्यासमुच्चये
नवतिश्च कला ज्ञेया मासवृद्धिविधौ यतः" ।

इति । अयं खलु रसगतिकालो दुर्बलस्य । उक्तं **ह्यग्निवेश्ये**—मासे विंशतिरात्रे वा पक्षे द्वादशरात्रे त्र्यहेऽग्निबलापेक्षया रसः शुक्रताममेतीति च । कालभेदेन रसगतिज्ञानार्थं स्वयमाचार्यो दृष्टान्तेनाह । (सप्ता ? शब्दा)र्चिर्जलसन्तानवदणुना विवेकेन अनुसरति रसः । शब्दसन्तानवच्छीघ्रं परिणमत्युत्तमाग्निबलस्य । शनैरर्चिःसन्तानवन्मध्यमबलस्य । शनैर्जलसन्तानवद् दुर्बलाग्नेश्शरीरमनुसरति । अस्माद्रसाद्रक्तमित्यादिकः परिणामः कालभेदश्च दर्शितः । अणीयसा प्रवेकेन चोत्तरोत्तरधातूद्गमश्च । किञ्च तथा सम्यक् परिणतस्याहारस्य यस्तेजोगुणभूतः सारः परमसूक्ष्मः स रस उच्यते । तस्य हृदयं स्थानम् । हृदयाच्चतुर्विंशतिन्धमनीरनुसृत्य प्रविश्योर्ध्वगा दश चाधोगामिनीः चतस्रस्तिर्यग्गताः पुरुषस्य कृत्स्नं शरीरमहरहस्तर्पयति वर्धयति जीवयति चादृष्टहेतुकेन कर्मणा । रस इति गतौ धातुः । अहरहर्गच्छतीत्यतो रसः । तस्य शब्दसन्तानवदव्युच्छेदेन तिर्यग्गणनाविवेकेनार्चिःसन्तानवदूर्ध्वमणुना विवेकेन जलसन्तानवदधश्चाणुना विवेकेन शरीरमनुसरतोऽनुमानगम्या गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः । रसक्षये शरीरक्षयः वृद्धौ वृद्धिः वैकृते व्याधिश्चानुमीयत इति यावत् । एवं युगपत्सर्वधातुव्याप्तिर्दर्शिता रसस्य । **आगमश्चात्र**—'पुष्यन्ति

त्वाहाररसाद्रसरुधिरमांसमेदोऽस्थिमज्जशुक्रौजांसि' इति । रसक्षयात्सर्वधातुदुष्टिक्षयप्राप्तिः स हि तान् सर्वानेव धातून् पुष्णातीति । ब्रूमः । एतदपि व्यपार्थकम् । कस्मात् । नत्वयमेकान्तः यदयमुपयोक्ता सर्वधातुविगुणं सर्वदात्ति, तेन यस्यैवायं रसादीनां धातूनामन्यतमस्य विगुणमाहारमादत्ते तस्यैव धातोर्दुष्टिः, तस्य प्रसादाख्यो भावो निष्पद्यत इति । यदि तु सर्वधातुविगुणमेवाभ्यवहरेत् भवेतामेवास्य प्रसादवैगुण्याद्रसादीनां दुष्टिहानी । रसाद्रक्तमित्यादिना च न क्रमाभ्युपगमः । तच्च रसस्य क्रमप्रवेशाद्रसादेव पुष्यन्ति सर्व एव रक्तादिधातवः । पूर्वं तु रसः पुष्यति ततोऽनन्तरं रक्तं ततश्च जघन्यं मांसादयः । ननु 'रसाद्रक्तं ततो मांस'मित्युक्तेऽपि क्रमेण रसस्य सर्वधातुपूरणे कालोपपत्तिः । यत्समं सर्वैः स्रोतोभिः प्रसरन्नाहाररसः पुरा रसं पुष्यति तच्चानु रक्तम् । ततोऽपि जघन्यं मांसं सर्वपश्चात्तरं शुक्रमिति । ब्रूमः—'यथाक्रमं स्रोतसां सौक्ष्यात् । रसादीनां शुक्रान्तानां धातूनां यथोत्तरं सूक्ष्माणि स्रोतांसीति । ततश्च सर्वस्रोतोभिरपि समं प्रसृत आहाररसः स्थूलैः विवृतैः रसस्रोतोभिः क्षिप्रं प्रयाति सूक्ष्मैस्तु कृच्छ्रेण । 'रसाद्रक्तं ततो मांस'मित्यत्र क्रमपरिणामपक्षे रसप्रदुष्टौ सर्वदुष्टिरित्येतदुपपत्त्या सङ्गच्छते । तथा हि रस एव परिणमन् रक्ततामुपेयात् । रक्तं च मांसताम् । तेन रसे दुष्टे रक्तादीनां दुष्टिरुपेयात् । कारणस्वरूपाणि कार्याणीति । किञ्च अश्नतो मांसादिक्षयानुपपत्तिः । अश्नतो हि रसस्य नापुष्टिः । मांसादीनां (रक्तादिभ्योपजन?) इति तेषां कारणसद्भावाद् भवेदेव पुष्टिः । न त्वेवं द्रष्टव्यम् । एकाहोरात्रोपोषितानां सद्यो वा विरिक्तानां मांसादिधातुपरिक्षयात् । तस्मादाहाररसाद्धातूत्पत्तिरिति । अत्राह—य इमे रसादयः शुक्रान्ताः सप्तधातवः किं स्त्रीपुरुषाणां सामान्या आहोस्वित् पुरुषाणामेवेति । यदि सामान्या इति मतं स्यात् तदनुपपन्नं स्त्रीणां शुक्रानुपलब्धेः । यदि पुनः पुरुषाणामेव(दवशेषिका?) इति मतं स्यात् तदप्ययुक्तम् । स्त्रीणां षड्धातुत्वप्रसङ्गादिति । उच्यते । स्त्रीपुरुषाणां सामान्या एव सप्तधातवः । कस्मात् । आगमात् । एवं ह्याह —

'यथाहि पुंसां शुक्रान्ता रसाद्याः सप्त धातवः ।
तथाहि धातवः सप्त नारीणामिति निश्चयः ॥'

इति । किं स्त्रियाः शुक्रस्थानं, कीदृशं पुनस्तच्छुक्रं किं वा तस्य फलमिति चेत् । उक्तं हि **भारद्वाजीये**—'यथा पुरुषाणां सप्त धातवः स्त्रीणामप्येवमेव । स्त्रीणां हि शुक्रं हृष्टेन मनसा सम्भवति । उत्पन्ने च हर्षे गर्भः सम्भवति । न च हर्षः स्त्रीणां सर्वत्रोपजायते । शुक्रस्थानं योनिमुखम् । तच्च शुक्रमुदकप्रख्यं सौम्यत्वान्न गर्भबन्धनायोपकल्पते । नारीणां तु बीजमार्तवमाग्नेयम् । पुरुषाणां शुक्लं सौम्यमिति" इति । स्थितमेतत्स्यात् । दृश्यते हि कारणसारूप्यं कार्याणां तत्कथं पूर्वपूर्वधातुभिरुत्तरोत्तरा विलक्षणा धातवो जन्यन्त इति । ब्रूमः । स्थानसहकारिभेदेन वैलक्षण्यसिद्धेः । अयमर्थः पूर्वमाचार्यदृढबलोक्तग्रन्थनिर्देशेन साधितः । यथा—

पित्तोष्मणा सरागेण रसो रक्तत्वमृच्छति ।
वाय्वग्नितेजसा युक्तं रक्तं मांसत्वमृच्छति ॥

इत्यादि । रसादिपरिणामक्रमान्तरं हित्वा वाजीकरणौषध्यः स्ववीर्योत्कर्षात् शुक्रमेवोपयोगादनन्तरं वर्धयन्ति यथोपयुक्तं विरेचनं पच्यमानमेव विरेचयति । आहाररसस्य सर्वधातुषु स्रोतोनुरोधात् क्रमप्रवेशशीघ्रभावत्वे च (न?) युगपदिति व्यवहारः यथा उत्पलपत्रशतसूचीभेदन्यायेन' इति । **सारकृता**प्युक्तं—"ननु 'मासेन याति शुक्रत्वमन्नं पाकक्रमादिभिः' इति सामान्योक्तत्वात् कुतो (न) बालानां शुक्रप्रादुर्भावः इति चेत् दृष्टान्ततः साध्यते । यथा पुष्पमुकुलस्थो गन्धः इहास्तीति वक्तुं न शक्यते । मुकुलावस्थायां घ्राणेन्द्रियानुपलब्धेः । नैव शक्यं नास्तीति वक्तुं तत्रैव कालान्तरेण गन्धस्योपलब्धेः इति । अथ चैवं सत्यपि 'सतामेव भावानामुत्पत्तिर्नासता'मिति कृत्वा केवलं मुकुलकाले गन्धः सौक्ष्म्यान्नाभिव्यज्यते स एव मुकुलस्थो गन्धो पुष्पे विस्तृतपत्रकेसरे कालान्तरेणाभिव्यक्तो भवति ।' इति ॥

आहाररसो रसधातुना सहैकत्वमापन्नो रसरक्तादिभावेन परिणमति यावच्छुक्रप्रसा(द?दो) गर्भत्वेनेत्युक्तम् । तत् कथं कदाचिदे(ते देशोऽपि रागो?कदेशे रोगकृत्) रुधिरमांसाद्येकदे(श?शे) वृद्धिक्षयविका(रं कृत्वा?रकृत्)

१. इतः पूर्वं किञ्चिद् भ्रष्टमिति भाति ।

भवतीति संशयापनोदनार्थमिदं सयुक्तिवचनमाह—

**व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ।**
**युगपत्सर्वतोऽजस्रं देहे विक्षिप्यते सदा ॥ ६८ ॥**

**क्षिप्यमाणः खवैगुण्याद्रसः सज्जति यत्र सः ।**
**तस्मिन् विकारं कुरुते खे वर्षमिव तोयदः ॥ ६९ ॥**

व्यानेनेत्यादि । आहाररसो जठराग्निना पक्वः प्रसादो धात्वाकारत्वाद्धातुवाच्यः यस्माद्व्यानेन सर्वदा सर्वतः सर्वस्मिन् देहे विक्षिप्यते विशेषेण प्रेर्यते । सर्वत इत्या(द्या)दित्वात्तसिः । किंभूतेन । विक्षेपः प्रेरणमेवोचितं कर्म यस्य तेन विक्षेपोचितकर्मणा । कथं विक्षिप्यते । युगपत् । तथा अजस्रमनवरतम् । व्यानेन सदा विक्षिप्यमाणो रस आहारप्रसादाख्यः खवैगुण्यात् स्रोतोदुष्टेः यत्र प्रदेशे स्वरूपात् प्रच्युतः सज्जति तत्रस्थेन वायुना सक्तः सम्पद्यते तस्मिन् प्रदेशे देहस्य विकारं कुरुते न सर्वत्र । एतद् दृष्टान्तेन स्पष्टयति—यथा वियति तोयदो मेघो वातवशात् क्षिप्तः प्रदेशान्तरस्थेन वायुना स्तब्धो वर्षं वृष्टिं क्वचिदेव देशे कुरुते न सर्वत्र एवं यत्र खवैगुण्यात् सज्जति रसः तस्मिन् विकारं कुरुते । खस्य वैगुण्यं खवैगुण्यमिति षष्ठीसमासः । 'पूरणगुण–' (पा. सू. २-२-११) इत्यादिना चात्र यथा समासनिषेधो न भवति तथा 'शिरोर्तीन्द्रियदौर्बल्य'मित्यत्र प्रतिपादितमेव । तस्मिन् विकारं कुरुते इत्यत्र आत्मनेपदं न प्राप्नोति रसस्य कर्त्रभिप्रायाभावात् । न ह्यस्य रसस्य चित्तमुत्पद्यते रोगं करोमीति । ब्रूमः—औपचारिकोऽत्र कर्त्रभिप्रायः कल्प्यः । अनेन न्यायेन व्रीहीनातपः शोषयत इत्याद्युपपन्नम् । व्यानो रसधातुं यत्र नयति तत्र विकार इति तावद्रसस्य विक्षेपः ।

**दोषाणामपि चैवं स्यादेकदेशप्रकोपनम् ।**

दोषाणामित्यादि । एवमिति दोषप्रकोपप्रक्रमातिदेशार्थम् । यथा रसः क्षिप्यमाणः खवैगुण्यात् यत्र सज्जति तस्मिन् विकारं कुरुते एवमनेन न्यायेन दोषाणामपि वातादीनां व्यानेन विक्षिप्यमाणानामेकदेशप्रकोपनं विकार-

करणं स्यात् । अत एव सिध्मदद्रुश्वयथ्वाद्येकदेशे जायते । एवं(क्षिप्य-माण?क्षेप्याणां) स्वभावस्थानामप्यस्वातन्त्र्याद् विकारकारित्वं भवति ।

**अन्नभौतिकधात्वग्निकर्मेति परिभाषितम् ॥ ७० ॥**

अन्नेत्यादि । भूतमेव भौतिकम् । विनयादित्वात् ठक् । अन्नं च भौतिकं च धातवश्च अन्नभौतिकधातवः । तेषामग्निः अन्नभौतिकधात्वग्निः । तस्य कर्म अन्नभौतिकधात्वग्निकर्म । इतिः प्रकारे । (इति पूर्वोक्तेन प्रकारेण) अन्नभौतिकधात्वग्निकर्म परिभाषितमुक्तं निश्चयीकृतम् । तत्र 'अन्नं कालेऽभ्य-वहृत'मित्यादिना 'कट्टुमारुत'मित्यन्तेन ग्रन्थेन तथा(न?न्नं) सारकिट्टतया यत्परि-णमति (इत्यन्तेन ग्रन्थेन) यन्निर्दिष्टं तदेतज्जठराग्नेः कर्म । 'भौमाप्याग्नेये'-त्यारभ्य 'शेषाः शेषांश्च देहगान्' इत्येवमन्तेन ग्रन्थेन यन्निर्दिष्टं तद् भूताग्नेः कर्म । 'सारस्तु सप्तभिर्भूयः' इत्यारभ्य 'प्रसादकिट्टौ धातूना'मित्येवमन्तेन यन्निर्दिष्टं तद्धात्वग्निकर्म इति । हाटकोऽपि—"इत्यनेन पूर्वोक्तेन प्रकारेण अन्नस्य पक्तुः जाठरस्य भौतिकाग्नीनां धात्वग्नीनां च कर्म परिभाषित"मित्यु-क्तवान् ॥

**अन्नस्य पक्ता सर्वेषां पक्तॄणामधिको मतः ।**
**तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ॥ ७१ ॥**

**तस्मात्तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ।**
**पालयेत्प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः ॥ ७२ ॥**

अन्नस्येत्यादि । सर्वेषां पक्तॄणामग्नीनां मध्ये अन्नस्य यः पक्ता पाचको जठराग्निः सोऽधिको मतः बलीयानभिप्रेतः । तन्त्रकृतामिति शेषः । कुतः श्रेष्ठ इत्याह (तन्मूला इत्यादि । स) जाठरो मूलं प्रधानं येषां भूताग्न्यादीनां ते । तस्मात्तन्मूलाः । मूलमिव मूलं यथा वृक्षादीनां प्रधानमवयवं मूलम् । सर्वेषां हि तदवयवानां जन्मादिषु तत्कारणं तेन विना तेषामसम्भवात् । यस्माच्चैवं मूलं सर्वावयवेभ्यः प्रधानोऽवयवः तस्मात्तेऽग्नयः तद्वृद्धिक्षयवृद्धिक्षयात्मकाः । तस्य जाठरस्य वृद्धिक्षयाभ्यां वृद्धिक्षयावात्मा स्वभावो येषां ते एवम् । एतदुक्तं भवति — जाठरानलवृद्ध्या परेषामग्नीनां वृद्धिः । तत्क्षयेण

तेषां क्षयः इति । हाटकोऽप्याह—"यस्माज्जठरानलवृद्धिक्षयपरायत्तवृद्धिक्षयस्वरूपास्ते भूताग्न्यादयः । तन्मूलास्तत्कारणात् । तस्माज्जठराग्निर्बलीयान्" इति । तस्मात्तं पाचकमग्निं विधिवत् प्रशस्तेन विधिना युक्तैर्योजितैः अन्नपानेन्धनैर्हितैः पथ्यैः पालयेत् । अन्नपानान्येवेन्धनानि तैः । कथं पालयेत् । प्रयतः यत्नवान् । नावहेलया । हि यस्मात् तस्य अन्नपाचकस्य स्थितौ सद्भावे आयुर्बलस्थितिः तत्स्थितावायुरवतिष्ठते बलं च । तथा चोक्तं—

'अग्निमूलं बलं पुंसां बलमूलं हि जीवितम्' इति ॥

अधुना जठराग्नेश्चातुर्विध्यं वक्ति—

**समः समाने स्थानस्थे विषमोऽग्निर्विमार्गगे ।**
**पित्ताभिमूर्छिते तीक्ष्णो मन्दोऽस्मिन् कफपीडिते ॥ ७३ ॥**

सम इत्यादि । हाटकोऽपि—"पूर्वोक्तमग्नेश्चातुर्विध्यं व्याकरोति सम इत्यादिना" (इत्याह) । समाने वायौ स्थानस्थे स्वाशयस्थिते सति समोऽग्निर्भवति । अग्निसमीपस्थानस्थेन समानेनाकुपितेन समाभ्यां पित्तकफाभ्यां सहितेन समोऽग्निर्भवतीति बोद्धव्यम् । समैः समः इत्युक्तत्वात् । विमार्गगे मार्गमुज्झित्वोत्पथ(प्र)वृत्ते समाने सति विषमोऽग्निर्भवति । पित्तेनाभिमूर्च्छिते एकलोलीभूते समाने तीक्ष्णोऽग्निर्भवति । अस्मिन् समाने कफपीडिते श्लेष्माभिभूते मन्दोऽग्निर्भवति ॥

**समोऽग्निर्विषमस्तीक्ष्णो मन्दश्चैवं चतुर्विधः ।**

सम इत्यादि । एवं समादिभेदेन चतुर्विधोऽग्निर्भवति ।

इदानीमस्य चतुर्विधस्याग्नेर्लक्षणं वक्ति—

**यः पचेत्सम्यगेवान्नं भुक्तं सम्यक् समस्त्वसौ ॥ ७४ ॥**
**विषमोऽसम्यगप्याशु सम्यक् क्वापि चिरात्पचेत् ।**
**तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम् ॥ ७५ ॥**

**मन्दस्तु सम्यगप्यन्नमुपयुक्तं चिरात्पचेत् ।**
**कृत्वास्यशोषाटोपान्त्रकूजनाध्मानगौरवम् ॥ ७६ ॥**

यः पचेदित्यादि । वह्निरिति वक्ष्यमाणेन संबन्धः । यो वह्निः सम्यग् यथाविधि भुक्तमन्नं सम्यगेव पचेत् स सम एव भवतीति तुशब्देनावधारयति । अन्नमिति प्रकृतम् । यो वह्निरसम्यगपि देशकालमात्राविधिभ्रष्टमप्यन्नं भुक्तमाशु पचेत्, सम्यक् चापि भुक्तमन्नं चिरात् पचेत् स विषमः । यो वह्निरसम्यगप्युपयुक्तं भोजनमन्नं शीघ्रं पचेत् स तीक्ष्णः । "स एव वर्धमानोऽत्यग्निर्भवती"ति **संग्रहे** । यस्तु सम्यगप्यन्नमास्यशोषादीन् कृत्वा चिरात्पचेत्स मन्दः । आटोपः क्षोभः । सशब्दस्य वायोः सञ्चरणमाटोपः इति च । गौरवमुदरशिरसोः । (उदरशिरसोः गौरवमिति **संग्रहे?**) मन्देऽग्नौ सभक्तमेवौषधं प्रायेणोपयोक्तुं युज्यते । तथा च **संग्रहे**—

"यामैश्चतुर्भिर्द्वाभ्यां च भोज्यभैषज्ययोः समे ।
पाकोऽग्नौ युक्तयोः प्राक् तु तीक्ष्णे मन्दे पुनश्चिरात् ॥
सभक्तमौषधं तस्मान्मन्दाग्नेरवचारयेत् ।" इति ॥

एवमग्नेर्भेदमुक्त्वा अग्न्यायत्तत्वाद् बलस्यापि भेदमाह—

**सहजं कालजं युक्तिकृतं देहबलं त्रिधा ।**

सहजमित्यादि । सहजं कालजं युक्तिकृतमिति देहबलं त्रिधा त्रिविधं भवति ।

**तत्र सत्त्वशरीरोत्थं प्राकृतं सहजं बलम् ॥ ७७ ॥**
**वयस्कृतमृतूत्थं च कालजं युक्तिजं पुनः ।**
**विहाराहारजनितं तथोर्जस्करयोगजम् ॥ ७८ ॥**

तत्रेत्यादि । तत्र तेषु बलेषु मध्ये सत्त्वशरीरोत्थं सत्त्वसमुत्थं शरीरसमुत्थं च प्राकृतं स्वाभाविकं यद् बलं तत्सहजम् । सत्त्वशब्देन गुणत्रयमुपलक्ष्यते । सत्त्वरजस्तमस्समुत्थमित्यर्थः । शरीरं च त्वग्रक्तादिसारमयं वस्तुजातम् । 'सत्त्वं मनः' इति **टिप्पणे** । वयो बा(ल? ल्य)यौवनादि तेन कृतं वयस्कृतं वयोनुसारेण निष्पादितम् । ऋतुभ्यो हेमन्तादिभ्य उद्भूतमृतूत्थम् । एतदुभयमपि कालजम् । वयस्कृतमिति "अतः कृकमिकंस" (पा० सू० १-३-४६) इत्यादिना सः । युक्तिजं पुनर्बलं विहरणं विहारो देहवाङ्म-

नश्चेष्टालक्षणोऽनेकप्रकारः । आहारः पूर्वमुक्तः । विहाराहाराभ्यां जनितं यदेतद् बलं तद् युक्तिजम् । युक्तिर्योगः इतिकर्तव्यता ततो जातं युक्तिजम् । तथा ऊर्जस्करास्त्विमे योगाः । तद्यथा बलवत्पुरुषदेशे जन्म सुखं च । काल-योगा बीजक्षेत्रगुणशरीराहारसत्त्वसम्पत्तयश्च । तथा ये योगा रसायनवाजी-करणोक्तास्तेभ्यो जातमूर्जस्करयोगजं यद् बलं तदपि युक्तिजम् । **हाटकोऽपि**—"ऊर्जस्करयोगा रसायनवाजीकरणोक्ताः" इत्याह । **टिप्पणेऽप्युक्तम्**—"ऊर्जस्करयोगा द्विविधाः रसायनानि वाजीकरणानि च" इति ।

त्रिविधोद्दिष्टस्य देशस्य लक्षणमाह—

**देशोऽल्पवारिद्रुनगो जाङ्गलः स्वल्परोगदः ।**
**आनूपो विपरीतोऽसात्समः साधारणः स्मृतः ॥ ७९ ॥**

देश इत्यादि । **टिप्पणे तूक्तं**—"देशतोऽपि बलविशेषं दर्शयति देश इत्यादिना" इति । अल्पवारिद्रुनगः स्तोकजल(वारिक?)वृक्षशैलाक्रान्तः स्वल्प-रोगदो जाङ्गलो देशः शुद्धस्रोतस्तया । तथा च मरुदेशोद्भवा अल्परोगाश्चिर-जीविनश्च दृश्यन्ते । अस्माज्जाङ्गलाद्विपरीतो बहूदकगिरितरुसमधिष्ठित आनूपः । **टिप्पणेऽपि**—'बहुलवारिद्रुनगो बहुरोगश्चानूपः' इत्युक्तम् । समस्तु देशो यो नात्य(यु ? म्बु)वृक्ष(पर्व)तो(य ? न) चात्यल्पवारि(तरु)गिरिः स साधारणो मध्य(स्थ)रो(गा)रोग्य इति ॥

शरीरे कठिनान् भावांस्त्वगादीन् परिसंख्याय द्रवाणां मज्जादीनां परिमाणमाह—

**मज्जमेदोवसामूत्रपित्तश्लेष्मशकृन्त्यसृक् ।**
**रसो जलं च देहेऽस्मिन्नेकैकाञ्जलिवर्धितम् ॥ ८० ॥**

मज्जेत्यादि । **अरुणदत्तस्तु**—"भूमिलक्षणं देशमुक्त्वा मज्जादीनां परिमाणमाह" इत्युक्तवान् । मज्जादिद्रव्यं जलावसानमस्मिन् पौरुषे देहे एकैकाञ्जलिवर्धितम् । तेन मज्ज्ञः एकोऽञ्जलिः । द्वौ मेदसः । यावज्जलस्य देहाश्रितस्य दशाञ्जलयः । **संग्रहे**—"एवं[1] परिसंख्याताः शरीरे मूर्तिमन्तः स्थिरा

---

१. 'इत्येवं' इति मुद्रिते ।

भावाः। द्रवास्तु यत्तदतियोगेन च्यवमानं पुरीषमनुबध्नाति। तथा मूत्रं रुधिर-मन्यांश्च शरीरे धातून्। यच्च शरीरगतं बाह्या त्वग् बिभर्ति। यच्च त्वगन्तरे व्रणगतं लसीकाशब्दवाच्यम्। यच्चोष्मणानुबद्धं रोमकूपेभ्यो निष्पतत् स्वेदशब्द-वाच्यं तदुदकम्। तस्याद्यस्य चाहारसारस्य रसाख्यस्य तथा रक्तस्य शकृतः श्लेष्मणः[3] पित्तस्य मेदसो मज्जायाश्च स्वेन स्वेन अञ्जलिप्रमाणेन यथापूर्वमेकादि-सङ्ख्याप्रवृद्धिः" इति। इन्दुः—"शरीरे मूर्ताः कठिनाः स्पर्शनेन्द्रियाधिगम्या भावाः त्वगादयः परिसङ्ख्याता यथोक्तेन भेदेन। द्रवास्तु भवन्तीति शेषः। ते च उदकमूत्रादयः। तत्र उदकं देहे यत् कर्तृ कर्मभूतमतियोगेन च्यवमानं पुरीषमनुबध्नाति। तत्प्रसादादृध्यतीसारे वेगानां गतसङ्ख्यत्वम्। तथा चातियोगेन च्यवमानं मूत्रं प्रमेहे। रक्तपित्ते च रक्तमिति। अन्यांश्च शरीरे धातून् पित्तश्लेष्मादीन् अतियोगेन प्रवर्तमानाननुबध्नाति तदुदकमिति संबन्धः। सुबोधम्। तस्येत्युदकस्य रसाख्यस्या(चा)हार(सार)स्य रक्तादीनां च मज्जान्ता-नामष्टानां स्वेन स्वेनाञ्जलिप्रमाणेन यथापूर्वमेकादिसङ्ख्याप्रवृद्धिर्विज्ञेया।" इति॥

**पृथक स्वप्रसृतं प्रोक्तमोजोमस्तिष्करेतसाम्।**
**द्वावञ्जली तु स्तन्यस्य चत्वारो रजसः स्त्रियाः॥ ८१॥**

ओजोमस्तुलुङ्गशुक्राणां देहगानां पृथक् प्रत्येकं स्वप्रसृतं प्रमाणम्। स्त्रियाः स्तन्यस्य स्वेनाञ्जलिमानेन द्वावञ्जली। रक्तस्य चार्तवस्य चत्वा-रोऽञ्जलयः। 'उभयमपि चैतद्रसप्रसादात्मक'मिति संग्रहे। इन्दुः—'उभयं रजःस्तन्यलक्षणं रसस्य धातोः प्रसादात्संभवती'ति। अञ्जलिप्रसृताविह हस्त-संस्थानविशेषवाच्यौ गृह्येते न तु चतुष्पलद्विपलपरिमाणौ मानवाच्यौ स्वशब्द-प्रयोगात्। प्रसृतशब्दे तु मानवाचिनि गृह्यमाणे स्वशब्दोऽनर्थक एवेह स्यात्। ननु यथा मज्जादीनां समत्वाधिक्य(मा?)हानयो विद्यन्ते। तथा (च?) पवन-स्यापि। तथा च प्रागभ्यधायि—'उत्साहोच्छ्वासनिःश्वास' इत्यादि। तथा

१. 'भ्योऽस्मि निष्प'। २. 'ख्यस्य रक्तस्य तथा'। ३. 'णः पित्तस्य मूत्रस्य वसाया मेद' इति मुद्रिते।

'वृद्धस्तु कुरुतेऽनिलः' इत्यादि । तथा 'लिङ्गं क्षीणेऽनिलेऽङ्गस्य' इत्यादि । तस्माद्वायोरपि प्रमाणं वाच्यं स्यात् । तत्कथमिह नोक्तम् । अत्रोच्यते–पवनस्यामूर्तत्वात् प्रमाणं वक्तुमयुक्तम्[1] ।

**समधातोरिदं मानं विद्याद् वृद्धिक्षयावतः ।**

समधातोरित्यादि । समप्रकृतेरेतन्मानं विद्यात् । नैकदोषाधिकप्रकृतीनां द्विदोषाधिकप्रकृतीनां वा । तेषां ह्यत एव यथोक्तादञ्जलिप्रमाणादिकाद्यथायथं मज्जादीनां वृद्धिक्षयौ विद्यात् । **टिप्पणे** तूक्तं–'समधातोरिदं मानमिति । इदं पूर्वोक्तं परिमाणं समधातोर्विज्ञेयमिति शेषः । समधातुः स्वस्थः । अन्यस्यात एव यथोक्तादञ्जलिप्रमाणादिकाद्यथायथं मज्जादीनां वृद्धिक्षयौ दोषभेदीयोक्तैर्यथास्वं लक्षणैर्विद्यात्' इति । **संग्रहे**–"समधातोः परिमाणमिदम् । अतो वृद्धिक्षयौ तैः यथास्वं लक्षणैर्विभावयेदपरांश्चापरिसंख्यातान् मूर्तामूर्तान् भावान् । तद्यथा मांसकर्णमलादीन्[2] वायुबुद्धिस्मृत्यादींश्च" इति । **इन्दुः**–"इदं यथोक्तं परिमाणं समधातोर्नीरुजो विज्ञेयम् । अन्यस्य त्वेतेषां वृद्धिक्षयौ दोषभेदीयप्रदर्शितैः यथास्वं लक्षणैः[3] विभावयेत् । अपरांश्च मूर्तान् मांसकर्णमलादीन् अमूर्तांश्च वायुबुद्धिस्मृत्यादीन् यथास्वैर्लक्षणैर्विभावयेदिति संबन्धः" इति ॥

अधुनायुष्कामीयाध्याये 'शुक्रार्तवस्थैर्जन्मादौ' इत्यादिना उद्दिष्टायाः प्रकृतेर्लक्षणमाह–

**शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु ।**
**यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ॥ ८३ ॥**

शुक्रासृगित्यादि । **इन्दुनाप्युक्तं**–"शरीरविचारणं प्रकृतं तस्य चावयवपरिच्छेदः कृतः । सम्प्रति दोषादिभेदेन प्रकृतिप्रदर्शनार्थमाह[4] । तत्र सर्वप्रकृतिभ्यो दोषप्रकृतीनां प्राधान्यात् ता एवादावुच्यन्ते" इति । शुक्रं

१. तथा च दारुकः–'न मानोन्मानता वायोरमूर्तत्वात्तु युज्यते' इति । तस्माल्लिङ्गैरेव समत्वाधिक्यहानयोऽनिलस्य वक्तुं युक्ताः तस्माद्वायोरमूर्तत्वादञ्जल्यादिमानवचनं नोक्तम्' । घ पाठः । २. 'कर्णादिमलान्' । ३. 'यथास्वं लक्षणैः' । ४. 'र्थमध्यायाम्मः' इति मुद्रिते ।

च असृक् चेत्यादि द्वन्द्वः । गर्भिणी सम्पद्यमाना गर्भमाता तस्या भोज्यचेष्टे आहारविहारौ । शुक्रादिषु यो दोषो वातादिरधिकस्तेन प्रकृतिः सप्तप्रकाराभिहिता सूत्रस्थाने । पृथक् तिस्रः संसर्गेण तिस्रः सन्निपाते-नैका इति । य इति जातावेकवचनम् । तेन यो दोषो यौ दोषौ ये दोषा इत्यर्थोऽवतिष्ठते । एकदोषद्विदोषत्रिदोषप्रकृतिषु यथासंख्यमेको दोषो द्वौ दोषौ त्रयो दोषा अधिका इत्यर्थः । ननु समधातौ वातादीनां समत्वात्कथमिवाधिक्यं स्यात् । ब्रूमः । समधातावपि समानां त्रयाणां दोषाणां तस्मिन् काले स्वप्रमा-णतो यथास्वं तुल्यत्वेनाधिकत्वं भवतीति युक्तं तत्राप्याधिक्यम् । यदि वा दोषोऽधिक इति बाहुल्येनोक्तम् । तेन षट्स्वेव प्रकृतिषु दोषाधिकभावो न तु समधाताविति वेद्यम् । संग्रहे—"सप्त प्रकृतयो दोषैः पृथक् संसर्गेण साम्येन (च) भवन्ति । तत्र शुक्रार्तवगर्भाशयकालेषु मातुश्चाहारविहारयोरे-कोऽनेकोऽपि वा यो दोषो भवत्याधिक्येन तेनामरणाद्विषवल्ल्यामिवोत्पद्य-मानस्य कृमेर्विषेण सविषक्रिमेरिव वृश्चिकादेराशीविषस्येव वा[1] विषेण प्रकृति-र्जायते' इति । इन्दुः—"वातादिभिः पृथक् तिस्रः संसर्गेण तिस्रः सन्नि-पातेनैका । ननु कदा वातादयः प्रकृतीनां कारणतां यान्तीत्याह—तत्रेत्यादि । शुक्रादिष्वधिको य एव दोषो भवति पृथक् संयुक्तो वा तेनैव पुरुषस्य प्रकृतिः सम्पद्यते[2] । कथं पुरुषस्य प्रकृतिर्जायते[3] । यथा विषवल्ल्यामुत्पद्यमानस्य कृमेर्विषेण प्रकृतिर्जायते । यथा वा सविषस्य कृमेर्वृश्चिकादेः यथा वा आशीविषस्य सर्पस्य विषेण[4] वृश्चिकादीनां[5] (सम्भवः इति एवं) एवं दोषैरपि पुरुषस्यापी"ति । पुनरप्युक्तं संग्रहे—"द्विधा वातादयः प्राकृता वैकृताश्च । प्राकृताः सप्तविधायाः प्रकृतेर्हेतुभूताः शरीरैकजन्मानः । ते शरीरधारणाद्धातुसंज्ञाः । दोषाख्यानां वैकृतानां बीजभूताः । मुमूर्षोः स्वरूपाच्चलन्ति । सर्वेष्वपि च देहे सन्निहितेषु प्रकृताबुल्बणेन व्यपदेशः । वैकृतास्तु गर्भादभिनिःसृतस्याहार(रसस्य) मलाः सम्भवन्ति । प्राकृतेष्वेवावरोहन्ति । ते कालादिवशेन स्वप्रमाणवृद्धिक्षय-योगाद्देहमनुगृह्णन्ति दूषयन्ति च । तद्वदोजोऽपि परं हृदयस्थमष्टबिन्दुप्रमाणमाधारः

१. 'वा स्ववि' । २. 'ते । गर्भाशयकालो यावद् गर्भस्याशयावस्थानम् । कथं' । ३. 'ते इत्याह यथा' । ४. षेणान्यमारणात्मकेनापि विषेण वृश्चि' । ५. 'नां प्रकृतिर्भवत्येवं दो' इति मुद्रिते ।

प्रासृतिकस्य रसात्मकस्यौजसः क्षयवृद्धिभाजः" इति । अत्रेन्दुः—ये तु जन्मन उत्तरकालं सम्भवन्ति ते वैकृताः । यद्यपि च प्रकृत्यवस्थायां सर्वे वातादयः सन्निहिता भवन्ति तथापि यं एतेषामधिकस्तेनैव प्रकृतेर्व्यपदेशः । ये च वैकृतास्ते (यद्यपि) गर्भान्निःसृतस्याहारमलाः 'फेनभूतं कफं यातमित्यादिनोक्ताः सम्भवन्ति तथापि ते सम्भूतास्तत्रैव प्राकृतेष्वेव वातादिष्ववरोहन्ति सजातीयत्वादेकीभवन्तीत्यर्थः । ते च वैकृताः प्राकृतैरेकीभूताः कालादिविशेषापेक्षया केनचित्स्वप्रमाणेन स्थिता देहमनुगृह्णन्ति । वृद्धिक्षययोगात्तु देहं दूषयन्ति । ओजोऽपि तद्वदेव वातादिवत् स्वप्रमाणस्थितं देहमनुगृह्णाति । वृद्धिक्षयाभ्यां युक्तं दूषयति च । तच्चौजः परं मानेन चाष्टबिन्दुप्रमाणं प्रासृतिकस्य महत ओजस आधारः तदायत्तयोगक्षेमत्वान्महतः" इति । यत्परमोजस्तदष्टबिन्दुप्रमाणम् । यत्पुनरपरमोजस्तत्प्रसृतप्रमाणम् । उक्तं हि—

पृथक् स्वप्रसृतं ज्ञेयमोजोमस्तिष्करेतसाम् ।

इति । रसस्तु मज्जादिषु पाठादञ्जलिप्रमाणः ।

अधुना वातस्य प्राधान्यं षड्भिः कारणैः प्रदर्श्य वातप्रकृतिं प्रागभिधत्ते—

**विभुत्वादाशुकारित्वाद्बलित्वादन्यकोपनात् ।**
**स्वातन्त्र्याद्बहुरोगत्वाद्दोषाणां प्रबलोऽनिलः ॥ ८४ ॥**

विभुत्वाद् व्यापित्वात् तथा आशुकारित्वात् तथा बलित्वात् । यथा हि वायुः व्यापी आशुकारी बली च न तथा पित्तश्लेष्माणौ । तथा अन्यकोपनात् । अन्य इति सजातीयापेक्षया पित्तश्लेष्मकोपनात् । पित्तश्लेष्माणावनेन यथा कोप्येते न ताभ्यां तथायम् । तथा स्वातन्त्र्यात् प्रेरकत्वात् । तथा हि नासावन्येन प्रेर्यते । स्वतन्त्रोऽसौ । तथा बहुरोगत्वात् । तथा चोक्तम्—

'अशीतिर्वातजा रोगाश्चत्वारिंशत्तु पित्तजाः ।
विंशतिः श्लेष्मजाश्च'

इति । एवं दोषाणां त्रयाणां मध्ये अनिलः प्रवरः प्रधानः ॥

---

१. 'य एव तेषामधिक' इति मुद्रिते ।

प्रायोऽत एव पवनाध्युषिता मनुष्या
दोषात्मकाः स्फुटितधूसरकेशगात्राः ।
शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टा-
सौहार्ददृष्टिगतयोऽतिबहुप्रलापाः ॥ ८५ ॥

अल्पपित्तबलजीवितनिद्राः
सन्नसक्तचलजर्जरवाचः ।
नास्तिका बहुभुजः सविलासा
गीतहासमृगयाकलिलोलाः ॥ ८६ ॥

मधुराम्लपटूष्णसात्म्यकाङ्क्षाः
कृशदीर्घाकृतयः सशब्दयाताः ।
न दृढा न जितेन्द्रिया न चार्या
न च कान्तादयिता बहुप्रजा वा ॥ ८७ ॥

नेत्राणि चैषां खरधूसराणि
वृत्तान्यचारूणि मृतोपमानि ।
उन्मीलितानीव भवन्ति सुप्ते
शैलद्रुमांस्ते गगनं च यान्ति ॥ ८८ ॥

अधन्या मत्सराध्माताः स्तेनाः प्रोद्बद्धपिण्डिकाः ।
श्वभृगालोष्ट्रगृध्राखुकाकानूकाश्च वातिकाः ॥ ८९ ॥

प्रायोग्रहणं क्वचिद् व्यभिचारार्थम् । अत एवास्मादेव कारणात् पवनाध्युषिताः शुक्रार्तवरूपावस्थात आरभ्य यावज्जीवितं वायुना अधिष्ठिता मनुष्याः पुरुषाः प्राय एवंरूपा भवन्ति । कारणानुविधायित्वात्कार्याणामिति । स्वदोषगुणानुरोधाद्दोषात्मकाः न तु गुणस्वभावा भवन्ति । स्फुटितधूसरकेशगात्राः स्फुटितानि धूसराणि (च) केशगात्राणि येषां त एवम् । तथा शीतं द्विषन्तीति शीतद्विषः उष्णाभिलाषित्वात् । तथा चला अनेकरूपा धृत्यादयो गत्यन्ता येषां त एवम् । तथातिशयेन बहुः प्रलापोऽसंबद्धसम्भाषणं येषां त एवम् । वसन्ततिलकं वृत्तम् ॥

अल्पाः पित्तादयो निद्रान्ता येषां त एवम् । तथा सन्ना सक्ता चला जर्जरा वाग् येषां त एवम् । केषांचित् सन्ना अवसादं नीता केषांचित् सक्ता भाषणे विलम्ब्य प्रवृत्ता केषांचिच्चला केषांचिज्जर्जरा भग्नकंसध्वनिसदृशी वागिति । तथा नास्ति दिष्टं मतिर्येषां ते नास्तिकाः । अदृष्टं नास्तीति मन्यन्त इत्यर्थः । 'अस्ति नास्ति दिष्टं मतिः' (पा० सू० ४-४-६०) इति ठक् । तथा बहुभुजः अनल्पाशनाः तथा सविलासाः सलीलाः । तथा गीतादिषु लोलाः सतृष्णाः गीतादिप्रिया इत्यर्थः । मृगया मृगवधक्रीडायात्रा । कलिः कलहम् । स्वागतावृत्तम् ॥

तथा मधुरादिसात्म्या मधुरादिकाङ्क्षिणश्च मधुरादिगुणमन्नपानमाकाङ्क्षन्ते तदेवम् । (तेषामुपशेते सुखाय भवन्तीत्यर्थः ?) कृशाश्च ते दीर्घाकृतयश्च कृशदीर्घाकृतयः कृशदीर्घाकाराः । तथा सशब्दं यातं गमनं येषां ते सशब्दयाताः । गच्छतां जान्वादिसन्धिषु शब्दो भवतीत्यर्थः । संग्रहेऽपि---"सशब्दसन्धिगामी" इत्युक्तम् । न दृढाः न दृढशरीराः । न जितेन्द्रियाः न चार्याः न सन्तः । न च कान्तानां स्त्रीणां दयिता अभिमताः । संग्रहे--"दुर्भगः" इत्युक्तम् । न च बहुप्रजाः, अपि त्वल्पसन्ततयः । औपच्छन्दसिकं छन्दः ।

एषां च वातप्रकृतीनां नेत्राणि खराणि परुषाणि तथा धूसराणि पांसुनेव कीर्णानि वृत्तानि च वर्तुलानि अचारूणि च मृतोपमानि मृतानामिव अशोभनानि । तथा सुप्ते स्वप्ने उन्मीलितानीव उद्घाटितानीव भवन्ति । "किञ्चिदुन्मिषितदुर्मुखसुप्तः" इति संग्रहे । "प्रसुप्तश्च किञ्चिदुत्पाटितनेत्र उत्पाटितमुखश्च भवति" इतीन्दुः । ते वातप्रकृतयः स्वप्ने सति शैलद्रुमान् गगनं च यान्ति । इन्द्रवज्रावृत्तम् ॥

ते च अधन्या अतथ्याः मत्सराध्माताः द्वेषपूर्णाः तथा स्तेनाश्चोराः प्रोद्बद्धपिण्डिकाः प्रकर्षेणोन्नतपिण्डिकाः । "प्रोद्बद्धे ह्रस्वकठिने पिण्डिके येषाम्" इतीन्दुः । जङ्घापश्चिमे भागे पिण्डाकृति कठिनमांसं पिण्डिका । आनूकं स्वभावो रूपचेष्टानुकरणम् । श्वादीनामिवानूकं येषां वातिकादीनां

त एवम् । वातिका इति भूम्नि मत्वर्थीयः । पाठ्येऽपि—"आनूकशब्देन तामसादिगुणजातः स्वभावः कथ्यते" इत्युक्तम् ॥

अधुना पित्तप्रकृतिलक्षणं प्रस्तौति---

पित्तं वह्निर्वह्निजं वा यदस्मा-
त्पित्तोद्रिक्तस्तीव्रतृष्णाबुभुक्षः ।
गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्रः
शूरो मानी पिङ्गकेशोऽल्परोमा ॥ ९० ॥

दयितमाल्यविलेपनमण्डनः
सुचरितः शुचिराश्रितवत्सलः ।
विभवसाहसबुद्धिबलान्वितो
भवति भीषु गतिर्द्विषतामपि ॥ ९१ ॥

मेधावी प्रशिथिलसन्धिबन्धमांसो
नारीणामनभिमतोऽल्पशुक्रकामः ।
आवासः पलिततरङ्गनीलिकानां
भुङ्क्तेऽन्नं मधुरकषायतिक्तशीतम् ॥ ९२ ॥

धर्मद्वेषी स्वेदनः पूतिगन्धि-
र्भूर्युच्चारक्रोधपानाशनेर्ष्यः ।
सुप्तः पश्येत्कर्णिकारान् पलाशान्
दिग्दाहोल्काविद्युदर्कानलांश्च ॥ ९३ ॥

तनूनि पिङ्गानि चलानि चैषां
तन्वल्पपक्ष्माणि हिमप्रियाणि ।
क्रोधेन मद्येन रवेश्च भासा
रागं व्रजन्त्याशु विलोचनानि ॥ ९४ ॥

मध्यायुषो मध्यबलाः पण्डिताः क्लेशभीरवः
व्याघ्रर्क्षकपिमार्जारयक्षानूकाश्च पैत्तिकाः ॥ ९५ ॥

पित्तमित्यादि । धन्वन्तरिमतेन पित्तमेव वह्निः पाकादिकर्मकरणात् । अथवा वह्निजं वह्नेर्जातमग्न्यधिकरणत्वात् । यदस्माद् यतश्चैवमतो हेतोः पित्ताधिकः पुरुषः तीव्रतृष्णाबुभुक्षो भवति । तथाविधात्कारणादुत्पन्नत्वादब्धातु रसधातुश्च तस्य प्रागेव शुष्यतीति भावः । हाटकोऽपि—"तीव्रतृष्णाबुभुक्षो भवति अब्धातोः शीघ्रमेव शोषणाद्" इत्याह । तथा गौरोष्णाङ्गश्च गौरमुष्णं चाङ्गं यस्य स एवम् । संग्रहेऽपि—"पित्तप्रकृतिरुष्णगौरगात्रः" इत्युक्तम् । तथा ताम्रवर्णहस्ताङ्घ्रिवक्त्रं यस्य स एवम् । तथा शूरो मानी च । पिङ्गलकेशः अल्परोमा च । शालिनीवृत्तम् ॥

दयितानि प्रियाणि माल्यादीनि यस्य स एवम् । तथा सुचरितः शोभनचेष्टितः । तथा शुचिः कायवाङ्मनोव्यापारैर्मलिनैरसंसृष्टः । आश्रितानां वत्सलः प्रियकृत् । विभवादियुक्तः । तथा भीषु भयेषु द्विषतामपि गतिः शरणं भवति । इन्दुरपि—"द्विषतां शत्रूणामपि भीषु गतिस्त्राता भवति" इत्याह । अपिशब्दात्सुहृदां मध्यस्थानां च किमु गतिर्न भवतीति द्योतयति । द्रुतविलम्बितं वृत्तम् ।

मेधावीति । मेधा प्रज्ञा विद्यते यस्येति प्रशंसार्थे—'अस्मायामेधास्रजो विनिः' (पा. सू. ५-२-१२१)। प्रशिथिलाः सन्धिबन्धाः मांसं च यस्य स एवम् । "सन्धिबन्धाश्च मांसं च तानि प्रशिथिलानि यस्य" इत्यरुणदत्तः । तथा स्त्रीणामनभीष्टः । "दुर्भगः" इति संग्रहे । अल्पौ शुक्रकामौ यस्य स एवम् । संग्रहेऽपि—"अल्पशुक्रव्यवायापत्यः" इत्युक्तम् । "अल्पशुक्रोऽल्पव्यवायोऽल्पापत्यश्च" इतीन्दुः । पलितादीनामावासः स्थानभूतः । तान्यस्य बहूनि सन्तीत्यर्थः । संग्रहेऽपि—"शीघ्रवलिखलतिपलितपिप्लुव्यङ्गपिटकाक्षुत्पिपासः" इत्युक्तम् । "शीघ्राणि शीघ्रोत्पत्तीनि वल्यादीनि यस्य स एवम् । वलयश्चर्मसङ्कोचाः । खलतिः शीर्णरोमत्वम् । पलितं केशशौक्ल्यम् । पिप्लुः नीरुक् कृष्णो मांसाङ्कुरः" इतीन्दुः । स च मधुराद्यन्नं भुङ्क्ते । "स्वादुतिक्तकषायशीताभिलाषोपचयश्च भवति" इति संग्रहे । "स्वाद्वादिकमाकाङ्क्षते तदेव चास्योपशेते" इतीन्दुः । प्रहर्षणीवृत्तम् ॥

धर्मद्वेषीत्याभीक्ष्ण्ये णिनिः। स्विद्यतीति स्वेदनः। पूतिर्गन्धो यस्य सः पूतिगन्धिः। 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' (पा. सू. ५-४-१३५) इति इदादेशः। भूरयः प्रभूताः उच्चारादयो यस्य स एवम्। उच्चारो मलप्रवृत्तिः। सुप्तः सन् कर्णिकारादीन् पश्येत्। दिग्दाहो दिशां लौहित्येन दाह इव। शालिनीवृत्तम्॥

एषां पैत्तिकानां लोचनानि तनुत्वादिगुणयुक्तानि भवन्ति। तानि च क्रोधाद्यैर्द्रागेव लौहित्यं यान्ति। उपजातिर्वृत्तम्।

ते च पैत्तिका मध्यायुष्यादियुक्ता भवन्ति। व्याघ्रादीनामिवानूकं येषां त एवम्। इति पित्तप्रकृतिलक्षणानि।

श्लेष्मप्रकृतिलक्षणमाह—

श्लेष्मा सोमः श्लेष्मलस्तेन सौम्यो
गूढस्निग्धश्लिष्टसन्ध्यस्थिमांसः।
क्षुत्तृड्दुःखक्लेशघर्मैरतप्तो
बुद्ध्या युक्तः सात्त्विकः सत्यसन्धः॥ ९६॥

प्रियङ्गुदूर्वाशरकाण्डशस्त्र-
गोरोचनापद्मसुवर्णवर्णः।
प्रलम्बबाहुः पृथुपीनवक्षा
महाललाटो घननीलकेशः॥ ९७॥

मृद्वङ्गः समसुविभक्तचारुवर्ष्मा
बह्वोजोरतिरसशुक्रपुत्रभृत्यः।
धर्मात्मा वदति न निष्ठुरं च जातु
प्रच्छन्नं वहति दृढं चिरं च वैरम्॥ ९८॥

समदद्विरदेन्द्रतुल्ययातो
जलदाम्भोधिमृदङ्गसिंहघोषः।
स्मृतिमानभियोगवान् विनीतो
न च बाल्येऽप्यतिरोदनो न लोलः॥ ९९॥

तिक्तं कषायं कटुकोष्णरूक्ष-
मल्पं स भुङ्क्ते बलवांस्तथापि ।
रक्तान्तसुस्निग्धविशालदीर्घ-
सुव्यक्तशुक्लासितपक्ष्मलाक्षः ॥ १०० ॥

अल्पव्याहारक्रोधपानाशनेहः
प्राज्यायुर्वित्तो दीर्घदर्शी वदान्यः ।
श्राद्धो गम्भीरः स्थूललक्ष्यः क्षमावा-
नार्यो निद्रालुर्दीर्घसूत्री कृतज्ञः ॥ १०१ ॥

ऋजुर्विपश्चित्सुभगः सुलज्जो
भक्तो गुरूणां स्थिरसौहृदश्च ।
स्वप्ने सपद्मान् सविहङ्गमालां-
स्तोयाशयान् पश्यति तोयदांश्च ॥ १०२ ॥

ब्रह्मरुद्रेन्द्रवरुणतार्क्ष्यहंसगजाधिपैः ।
श्लेष्मप्रकृतयस्तुल्यास्तथा सिंहाश्वगोवृषैः ॥ १०३ ॥

श्लेष्मेत्यादि । यस्माच्छ्लेष्मा सोमस्तेन हेतुना श्लेष्मलो नरः सौम्यो भवति कारणानुविधायित्वात्कार्याणाम् । सोम इव सौम्यः । 'शाखादिभ्यो यः' (पा. सू. ५-३-१०३) । तथा गूढश्लिष्टस्निग्धानि सान्ध्यस्थिमांसानि यस्य स एवम् । तथा क्षुदादिभिः अतप्तः अक्षोभितो भवति । तथा बुद्ध्या अन्वितः । सात्त्विकः प्रशस्तसत्त्वः । तथा सत्यं सन्दधाति प्रतिजानीते इति सत्यसन्धः सत्यप्रतिज्ञः । 'आतश्चोपसर्गे' (पा. सू. ३-१-१३६) इति कः । शालिनीवृत्तम् ।

प्रियङ्ग्वादितुल्येन वर्णेनैकेन युक्तः । कश्चित्प्रियङ्गुसमानवर्णः कश्चिद् दूर्वासमानवर्णः कश्चित् शरकाण्डतुल्यवर्णः । शरकाण्डम् അമ്പവള്ളൊൽ । कश्चित् शस्त्रसमानवर्णः । शस्त्रं തെളികടഞ്ഞ ആയുധം । कश्चिद् गोरोचनातुल्यवर्णः । कश्चित्पद्मवर्णः । कश्चित् सुवर्णवर्णः । प्रियङ्ग्वाद्यन्यतमवर्ण इति **टिप्पणे** । तथा प्रलम्बबाहुः दीर्घभुजः । तथा

विस्तीर्णपीवरवक्षाः । तथा महल्ललाटमलिकं यस्य स एवम् । निष्ठुरं च न कदाचिद्वदति । प्रच्छन्नं गूढं कृत्वा वैरं दृढं च वहति न तु शिथिलयति । प्रहर्षणीवृत्तम् ॥

समदस्य द्विरदेन्द्रस्य तुल्यं यातं गमनं यस्य स एवम् । तथा जलदादितुल्यशब्दः । 'सिंहमृदङ्गघनघोषः' इति **संग्रहे** । तथा प्रशस्तस्मृतिः । तथा शोभनाभियोगः । "അഭിയോഗം = ഒരുംപാട്" इति **पाठ्ये** । विनयी च । बालत्वेऽपि नातिरोदनः । न च लोलः । औपच्छन्दसिकं वृत्तम् ॥

स च तिक्तादि भुङ्क्ते तथापि बली भवति । 'कटुतिक्तकषायोष्णरूक्षेच्छोपशयश्च भवति' इति **संग्रहे** । रक्तोऽन्तो ययोस्ते रक्तान्ते, तथा सुस्निग्धे विशाले दीर्घे च, तथा सुव्यक्तौ शुक्लासितौ ययोस्ते सुव्यक्तशुक्लासिते तथा पक्ष्मले एवम्भूते अक्षिणी यस्य स एवम् ॥

व्याहारो भाषणम् । ईहा शरीरचेष्टा । आयुर्वित्तं च आयुर्वित्ते प्राज्ये प्रभूते आयुर्वित्ते यस्य स एवम् । दीर्घदर्शी भावि कार्यम् पश्यति इदं कुर्वीत इदमवश्यं सम्पद्यत इति । इन्दुरपि—'कार्यप्रान्तवित्' इत्याह । वदान्यो वल्गुभाषी दाता वा । श्राद्धो दानादौ श्रद्धावान् । गम्भीरो महाचित्तः । इन्दुरप्याह—"श्रद्धा विद्यते यस्यासौ श्राद्धः । गम्भीरः ।

यस्य प्रसादादाकारात् क्रोधशोकभयादयः ।
भावस्था नोपलभ्यन्ते गम्भीर इति स स्मृतः ॥[1]

इति । स्थूललक्षो भूरिदाता ।

योऽल्पं दातुं न शक्नोति स्थूललक्षः स उच्यते ।"

क्षमावान् क्षान्तियुक्तः । आर्यः सज्जनः । निद्रालुर्बहुनिद्रः । दीर्घसूत्री चिरकारी । **पाठ्यकार**स्तु—"दीर्घसूत्री वदान्यः, दीर्घदर्शी कृतज्ञ" इति पठति । कृतं जानातीति कृतज्ञः । वैश्वदेवीवृत्तम् ।

ऋजुरकुटिलचित्तः । विपश्चित्पण्डितः । सुभगो जनप्रियः । इन्दुरप्याह—"शोभनो भगो यस्य स एवम् ।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः
आरोग्यस्याथ मोक्षस्य षण्णां भग इतीरणा ॥"

---

१. 'तद् गाम्भीर्यमिति स्मृतम्' इति मुद्रिते ।

इति । सुष्ठु लज्जत इति सुलज्जः । गुरूणां पित्रादीनां भक्तः सेवकः । सुहृदयस्य भावः सौहृदय्यम् । स्थिरं दृढं सौहृदय्यं मैत्री यस्य स एवम् । स्वप्ने तोयाशयांस्तटाकादीन् पद्मपक्षिपङ्क्तियुक्तान् पश्यति । मेघांश्च पश्यति । उपजातिवृत्तम् ॥

एवं वातादिप्रकृतीः पृथक् तिस्रोऽभिधाय द्वन्द्वसर्वदोषप्रकृतिलक्षणा-भिधित्सयेदमाह—

**प्रकृतीर्द्वयसर्वोत्था द्वन्द्वसर्वगुणोदये ।**

प्रकृतीरित्यादि । द्वयात् संसर्गादुद्भूताः तिस्रः प्रकृतयः । सर्वोत्था सर्वदोषोद्भूता एका प्रकृतिः । एवं द्वन्द्वसर्वोत्थाः प्रकृतयश्चतस्रः । गुणशब्दोऽत्र धर्मवचनो लिङ्गवचनो वा । द्वन्द्वशब्देन दोषद्वयं सर्वशब्देन दोषत्रयं च लक्ष्यते । द्वन्द्वं च सर्वे च द्वन्द्वसर्वे तेषां गुणाः दोषद्वयदोषत्रयाणां धर्माः लिङ्गानि वा । तेषामुदयः प्रादुर्भावः तस्मिन् द्वन्द्वसर्वगुणोदये सति द्वन्द्वसर्वोत्थाः प्रकृतीर्वदेदादिशेत् । द्वयं च सर्वे च द्वयसर्वे तेभ्य उत्था उत्थानं यासां ता एवम् । द्वन्द्वदोषगुणोदये द्वन्द्वोत्थाः प्रकृतीर्वदेत् । सर्वदोष-गुणोदये सर्वोत्थां प्रकृतिं वदेत् । उत्थ इत्युत्पूर्वात् तिष्ठतेः 'सुपि स्थः' (पा. सू. ३-२-४) इति योगविभागात् कः । 'उदः स्थास्तम्भोः पूर्वस्य' (पा. सू. ८-४-६१) इति पूर्वसवर्णादेशः । एवं प्रकृतयः सप्त । तत्राद्यास्त्रयो नित्यातुराः दोषानुशयितशरीरत्वात् । विशेषतश्च द्वन्द्वप्रकृतयः । तेषु हि गुणमिश्रविकारकारिषु क्षुत्पिपासादिष्विवारोग्यव्यपदेशः । संग्रहे—"उभयलक्षण-सङ्करे तु संसर्गप्रकृतिः । सर्वगुणसमुदितः समदोषप्रकृतिः । तत्रा-द्यास्त्रयो नित्यातुराः दोषानुशयितप्रकृतित्वात् । विशेषतश्च द्वन्द्वप्रकृतयः । तेषु हि गुणमिश्रविकारकारिषु क्षुत्पिपासादिष्विवारोग्यव्यपदेशः । तस्माद्विपरीत-गुणेन विधिना दोषोपक्रमणीयोक्तेन तानुपाचरेत् । समसर्वरसेन सात्म्येन अन्त्यं यथर्तुविहितेन च" इति । इन्दुः—"संसर्गप्रकृतीनामुभयप्रकृति-लक्षणं विज्ञेयम् । यस्तु सर्वैरेव गुणैः समुदितः सः समदोषप्रकृतिर्ज्ञातव्यः ।

---

१. 'त्रयाणां संसर्गप्रकृतीनाम्' इति मुद्रिते ।

गुणशब्देन गर्हणीयवातादि (प्रकृतिलक्षण) परित्यागः । तेषां दोषाधिक्य-हेतुत्वात् । अत्र[1] सप्तसु प्रकृतिषु मध्ये आद्यास्त्रयो वातपित्तश्लेष्मजा दोषानुशयितत्वाद्धेतोर्नित्यातुराः नित्योपक्रमणीया इत्यर्थः । अत एव दोषानुशयितत्वाद्धेतोर्द्वन्द्वप्रकृतयो[2] विशेषेण नित्यातुराः[3] । तेषु हि पृथङ्मिश्रप्रकृतिषु मध्ये योऽयमारोग्यव्यपदेशः स गुणमिश्रविकारकारित्वात् । यथा लोके रुक्करग-स्वभावेष्वपि क्षुत्पिपासादिष्वारोग्यव्यपदेशः । तस्मात्तान् षट्प्रकृतियुक्तान् प्रकृति-दोषविपरीतगुणेन दोषोपक्रमणीयोक्तेन विधानेनोपाचरेत् । अन्त्यं पुनः सर्वसम-प्रकृतिं समसर्वरसेन सात्म्येन उपाचरेदिति संबन्धः । ऋतुविहितचर्या-विधानेन च" इति ॥

एवं वातादिप्रकृतीर्निर्दिश्य सत्त्वादिप्रकृतीर्निर्दिशति—

**शौचास्तिक्यादिभिश्चैवं गुणैर्गुणमयीर्वदेत् ॥ १०४ ॥**

शौचेत्यादि । चशब्दो भिन्नक्रमो गुणमयी चेति द्रष्टव्या । एवं वातादिप्रकृतीरिव पृथग्द्वन्द्वसर्वोत्थाः सप्त सत्त्वादिगुणमयीश्च प्रकृतीः शौचा-स्तिक्यादिभिः सत्त्वादिगुणैः वदेत् । आदिग्रहणात् शुक्लकर्मरुच्यादिभिः सत्त्वादीनां गुणैर्यथायथं सत्त्वादिप्रकृतीर्वदेत् । सत्त्वादिप्रकृतयश्च वातादि-प्रकृतयश्च परस्परमनुरुध्यन्ते । एवं वातादिप्रकृतयः सप्त सत्त्वादिप्रकृत-योऽपि सप्तैव जातिकुलदेशकालवयोबलप्रत्यात्मसंश्रयाः च सप्तैव । तथाहि दृश्यन्ते पुरुषाणां जात्यादिनियतास्ते ते भावविशेषाः परस्परविलक्षणाः । वातादि-सत्त्वाद्यसङ्ख्यभेदावेशाच्च रूपस्वरचरितानुकरणमप्यनुक्तशब्दवाच्यसङ्ख्यभेदं भवति । सत्त्वाद्यावेशस्त्वनन्तरजन्माभ्यासवासनया जन्यते । तस्माद्देवमानुष-तिर्यक्प्रेतनारकाणां तद्विशेषाणां च यथायथं चानूकं पुरुषस्य अवेक्षेत । यस्मा-च्छरीरं सत्त्वादीननुरुध्यते सत्त्वादयोऽपि शरीरम् । प्रकृतिविभागश्चायं तदनु-रूपचिकित्सा प्रवृत्तये वैद्यस्योपयुज्यते । तत्राद्यास्त्रयो नित्यातुराः दोषानुशयि-तशरीरत्वात् । विशेषतश्च द्वन्द्वप्रकृतयः । तस्माद्विपरीतगुणेन दोषोपक्रमणी-

१. 'तत्र' । २ 'तोः संसर्गप्रकृतयो' । ३. 'राः । अतिशयेन नित्यत्वात् पथ्यादीनाम् । एतेषु हि' इति मुद्रिते ।

योक्तेन तानुपाचरेत् । समधातुप्रकृतिस्तु सर्वरसेन सात्म्येनोपचरणीयः । तथा च **मुनिः—**

'समसर्वरसं सात्म्यं समधातोः प्रशस्यते'

इति । **संग्रहे—**"दोषवच्च गुणैरपि सत्त्वादिभिः सप्त प्रकृतयो भवन्ति । तास्तदभिनिर्वृत्तैरिव यथोक्तैः शौचादिभिः जानीयात् । तथा पुनः सप्त प्रकृतयो जातिकुलदेशकालवयोबलप्रत्यात्मसंश्रयाः । दृश्यन्ते हि पुरुषाणां जात्यादिनियताः ते ते भावविशेषाः । सत्त्वादीनां च तरतमयोगाच्छरीरविशेषेभ्यश्चान्योन्यानुविधायित्वाच्च भेदाश्रयमसङ्ख्येयं भवति । शरीरमपि हि सत्त्वादीननुरुध्यते । सत्त्वादयोऽपि शरीरम् । सत्त्वाद्यसङ्ख्यभेदावेशाच्च रूपस्वरचरितानुकरणमप्यनूकशब्दवाच्यमसङ्ख्यभेदम्[1] । तदावेशस्त्वनन्तरजन्माभ्यासवासनया जन्यते । तस्माद्देवमनुष्यतिर्यक्प्रेतनारकाणां तद्विशेषाणां[2] च यथायथमेवानूकं पुरुषस्यान्ववेक्षेत" इति । **अत्रेन्दुः—**"न केवलं वातादिभिरेव दोषैः सप्त प्रकृतयो भवन्ति । यावद् गुणैरपि सत्त्वरजस्तमोभिः संयुक्तैः पृथक्भूतैश्च सप्तैव प्रकृतयो भवन्ति । ताश्च सत्त्वादिप्रकृतयः तदभिनिर्वृत्तैः सत्त्वाद्यभिनिष्पन्नैः शौचास्तिक्यादिभिः लक्षणैः जानीयात् । तत्र शौचेनास्तिक्येन शुक्लवर्त्मरुचित्वेन[3] च युक्तं सत्त्वप्रकृतिं विद्यात् । बहुभाषित्वेन मानेन क्रुधा डम्भेन मात्सर्येण च युक्तं रजःप्रकृतिं विद्यात् । लक्षणसङ्करे च भयेनाज्ञानेन निद्रया आलस्येन[4] च युक्तं तमः प्रकृतिं विद्यात् । लक्षणसङ्करे च संयोगप्रकृतीर्निध्यवस्येदिति गुणैः सप्त प्रकृतयः । तथा जात्यादिविशेषेणापरमपि सप्तविधत्वं भवति । यस्माद् दृश्यन्ते ते ते भावविशेषाः जात्यादिनियताः । जात्या यथा ब्राह्मणो मधुरप्रायाहाररुचिरसाहसिको बहुलभीतिः शस्त्राद्यसहत्वादियुक्तो भवति । एवं राजन्यादीनामपि यथासम्भवं प्रायोदर्शनेन योज्यम् । एवं कुलेनापि पुंसां विशेषो दृष्टः । तथा च केचित् कुलेनैव

---

१. 'भेदं भवति । तदा' । २. 'तत्तद्विशे' । ३. 'न मतिमत्त्वेन च' । ४. 'न विषादत्वेन च' इति मुद्रिते ।

मद्यलोलुपाः केचित् पिशितगुरुग्रासगृध्नवः इत्यादि वाच्यम् । प्रत्यात्मसंश्रयो हि विशेषो य एकस्मिन्नेव शरीरे दृश्यते स्वभावविशेषः । इति प्रकृतिसप्तकम् । आसां च प्रकृतीनां सत्त्वादीनां संयोगे तरतमयोगाच्छरीरविशेषेभ्योऽन्योन्यानुविधायित्वाद् भेदाश्रयं भेदप्रकारः भेदनिष्पत्तिः प्रकृतीनामपरिसङ्ख्येयं भवति । यस्मात्सत्त्वादयोऽपि कार्यविशेषैसम्भववशात् शरीरमनुरुध्यन्ते तथा शरीरमपि सत्त्वादीन् । सत्त्वादीनामनन्तरोक्तेन प्रकारेणासंख्यो भेदस्तस्यावेशादन्यसंबन्धिनां रूपादीनामनुकरणं सादृश्यमसङ्ख्यभेदं भवति । तस्य रूपाद्यनुकरणस्यानूक इति नाम । ननु सत्त्वादिभेदावेशस्य किं कारणमित्याह—तदावेशस्त्वित्यादि । अनन्तरेभ्यो जन्मभ्यो येयमभ्यासवासना तया जन्यते । तस्माच्च रूपाद्यनुकरणं सत्त्वाद्यावेशाद्यतो देवादीनामानूकं रूपसत्त्वाद्यनुकरणं पुरुषस्यान्ववेक्षेत" इति ।

एवं वातादिप्रकृतीः सत्त्वादिप्रकृतीश्च परस्परानुरोधिनीर्निर्दिश्य वयसस्त्रैविध्यं बालमध्यमवृद्धभेदेनाह—वय इत्यादि । वक्ष्यति च 'त्रिविधः कथितो बालः क्षीरान्नोभयवर्धनः' इति ॥

**वयस्त्वा षोडशाद् बालं तत्र धात्विन्द्रियौजसाम् ।**
**वृद्धिरा सप्ततेर्मध्यं तत्रावृद्धिः परं क्षयः ॥ १०५ ॥**

तत्र बाले वयसि धातूनां रसादीनामिन्द्रियाणां चक्षुरादीनां तथा सर्वधात्वाप्यायकस्यौजसश्च वृद्धिः । आ सप्ततेर्मध्यं वयः । आङ् मर्यादायां, नाभिविधौ । ततश्चैकान्नसप्ततिर्यावत्तावन्मध्यम् । तदपि त्रिविधम् । यौवनं सम्पूर्णत्वमपरिहाणिरिति । तत्र तस्मिन्मध्ये वयसि धात्वादीनामवृद्धिरवर्धनं भवति । परं क्षयः परमेकोनसप्ततेराजीवितं धात्विन्द्रियौजसां क्रमेण क्षयः । **संग्रहे**—"वयस्तु त्रिविधम् । बालं मध्यं वृद्धं च । तत्र षोडशाद् बालम् । आ षष्टेः मध्यम् । ततो वृद्धम् । तेष्वपि स्तन्याहारोभयवृत्त्या बालं

---

१. 'वः अपरे तु क्षारलवणजनितजडिमानं सोढुमसमर्थाः । केचित्पुनः प्ररूढेऽपि ग्रीष्मसमये तप्ताङ्गाराधिकतरप्लोषदायिनस्तीक्ष्णदीधितिपादानपि कालवद् गुणकलापानिवाभिमन्यन्त इत्येवमादि चिन्त्यम् । देशविशेषेण तु पुरुषाणां प्रसिद्धा एव विशेषाः । एवं कालवयोबलानामपि वाच्यम् । प्रत्यात्म' । २. 'नां सप्तविधानां सत्त्वादीनम्' । ३. 'षसम्पादनाय श' इति मुद्रिते ।

त्रिविधम् । तस्मिन् देहप्रमाणवृद्धिः श्लेष्मोद्रेकश्च । तेन बालस्य स्नेहमार्दव-सौकुमार्याल्पक्रोधसौभाग्यानि भवन्ति । मध्यमपि त्रिविधम् । यौवनं सम्पूर्णत्व-मपरिहाणिश्च । तस्मिन् पित्तोद्रेकः । तेन दीप्ताग्निता प्रज्ञाधिक्यं परिपाको व्यवसायश्च । तत्रा त्रिंशतो यौवनमा चत्वारिंशतः सर्वधात्विन्द्रियबलवीर्यपौरुष-स्मरणवचनविज्ञानप्रश्रयगुणसम्पूर्णत्वम् । अतः परमपरिहाणिः । वृद्धं तु शश्वत्क्षीयमाणधात्विन्द्रियादिगुणं वलीखलतिपलितकासश्वासाग्निसादादिभिरभि-भूयमानं जीर्णं भवनमिवाभिवृष्टमवसीदति । तस्मिन् मारुतोद्रेकः । तेन श्लथसार-मांससन्ध्यस्थिता त्वक्पारुष्यमवनामः कायस्य वेपथुः कासः श्वासः श्लेष्मसिङ्घा-णकोदीरणं धातुक्षयश्च" इति । इन्दुः—"तत्र बालं त्रिविधं क्षीरवृत्त्यान्नवृत्त्या क्षीरा(न्न)वृत्त्या च । तस्मिन् बाले वयसि क्रमेण देहप्रमाणवृद्धिर्भवति । तेन वर्धमानत्वेन श्लेष्मोद्रेकेण च बालस्य स्नेहादीनि भवन्ति । मध्यं त्रिविधमित्यादि सुबोधम् । त्रिविधेऽपि मध्ये पित्तोद्रेकादिकम् । चत्वा-रिंशतः परमपरिहाणिः न वृद्धिर्नाप्यपचयः । वृद्धं शश्वत् समन्तात् क्षीय-माणधात्वादिकं वल्यादिभिरभिभूयमानमवसीदतीति संबन्धः । क्षीयमाणाः पूर्वोक्ताश्च वपुःस्थैर्यादयो गुणाः शश्वत् समन्तात् । वलयः चर्मसङ्कोचाः । पलितं केशरोम्णोः शौक्ल्यम् । आदिग्रहणेनैवंप्रकाराणां ग्रहणम् । तथावसीदति यथा जीर्णं भवनमभिवृष्टं जलेन सिक्तम् । तस्मिन् वार्द्धके श्लथं शिथिलं सारादिकं भवति । साराणि वक्ष्यन्ते । कायस्यावनामः कुब्जत्वम् । वेपथुः कम्पः । श्लेष्मसिङ्घाणको नासास्रावः तस्योदीरणमिति सर्वं वातोद्रेकात्" इति ॥

वयः उक्तम् । शरीरप्रमाणमवयवसन्निवेशलक्षणं चाह—

**स्वं स्वं हस्तत्रयं सार्धं वपुः पात्रं सुखायुषोः ।**

स्वं स्वमित्यादि । स्वं स्वमात्मीयमात्मीयं हस्तत्रयं सार्धं प्रमाणतो यद्वपुः शरीरं तत् सुखायुषोः पात्रं भाजनम् ॥

**न च यद्युक्तमुद्रिक्तैरष्टाभिर्निन्दितैर्निजैः ॥ १०६ ॥**
**अरोमशासितस्थूलदीर्घत्वैः सविपर्ययैः ।**

---

१. 'बालं वयस्त्रि' । २. 'वृद्धं तु शश्वत्' । ३. 'द्विगुणं वल्या' इति मुद्रिते ।

न चेत्यादि । एवंभूतमपि यद्वपुरुद्रिक्तैरधिकैः निन्दितैरप्रशस्तैः निजैः सहजैरष्टाभिररोमशत्वादिभिर्युक्तं सुखायुषोर्न पात्रम् । तेन अरोमशं यद्वपुः तन्न सुखायुषोः पात्रम् । अरोमशस्य विपर्ययमतिरोमशत्वम् । यदतिरोमशं वपुः तच्च सुखायुषोः न पात्रम् । एवमसितादिष्वपि योज्यम् । एवमीषद्रोमादियुक्तं हस्तत्रयं सार्धं यद्वपुः तत्सुखायुषोः पात्रम् । तत् प्रशस्तमिति यावत् ॥

सुस्निग्धा मृदवः सूक्ष्मा नैकमूलाः स्थिराः कचाः ॥ १०७ ॥
ललाटमुन्नतं श्लिष्टशङ्खमर्धेन्दुसन्निभम् ।
कर्णौ नीचोन्नतौ पश्चान्महान्तौ श्लिष्टमांसलौ ॥ १०८ ॥
नेत्रे व्यक्तासितसिते सुबद्धे घनपक्ष्मणी ।
उन्नताग्रा महोच्छ्वासा पीनर्जुर्नासिका समा ॥ १०९ ॥
ओष्ठौ रक्तावनुद्वृत्तौ महत्यौ नोल्बणे हनू ।
महदास्यं घना दन्ताः स्निग्धाः श्लक्ष्णाः सिताः समाः ॥११०॥
जिह्वा रक्तायता तन्वी मांसलं चिबुकं महत् ।
ग्रीवा ह्रस्वा घना वृत्ता स्कन्धावुन्नतपीवरौ ॥ १११ ॥
उदरं दक्षिणावर्तगूढनाभि समुन्नतम् ।
तनुरक्तोन्नतनखं स्निग्धमाताम्रमांसलम् ॥ ११२ ॥
दीर्घाच्छिद्राङ्गुलि महत्पाणिपादं प्रतिष्ठितम् ।

केशाः सुस्निग्धादिगुणयुक्ताः । श्रेष्ठाः इत्यनुक्तमप्यर्थाद् गम्यते । सुस्निग्धादिगुणकेशयुक्तं वपुः सुखस्यायुषश्च पात्रं भवति । एवं ललाटादिष्वपि चिन्त्यम् । ललाटमुन्नतमूर्ध्वं गतम् । तथा श्लिष्टावनुल्बणौ शङ्खौ यस्मिंस्तदेवम् । तथार्धेन्दुसन्निभमर्धचन्द्राकारम् । कर्णौ नीचोन्नतौ अधो नीचौ ह्रस्वौ ऊर्ध्वमुन्नतौ च । पश्चान्महान्तौ विस्तीर्णौ । श्लिष्टौ च तौ मांसलौ च । श्लिष्टौ रम्यौ मांसलावुपचितमांसौ । **पाठ्यकारो**ऽप्याह—"कर्णौ नीचोन्नताविति । पालीमुद्दिश्य नीचत्वम् । उन्नतत्वं शष्कुलीमुद्दिश्य । पश्चान्महान्ताविति पृष्ठमुद्दिश्य । पृष्ठे विस्तीर्णौ इत्यर्थः । कर्णम् – ചെവി" इति । **टिप्पणे**ऽप्युक्तम्— "कर्णावग्रतो नीचोन्नतौ अधो ह्रस्वौ ऊर्ध्वमुन्नतौ च । अथवा पी(ठ)स्य ह्रस्वत्वं

तदितरस्य दीर्घत्वमिति । पश्चान्महान्तौ पृष्ठे विस्तीर्णौ । (बहले कुम्भवत् स्थिताविल्यर्थः ?)" इति । नेत्रे व्यक्तौ स्फुटौ सितासितौ ययोस्ते एवम् । कृष्णो भागः कृष्ण एव शुक्लो भागः शुक्ल एव वर्णान्तराव्यामिश्रः । तथा सुबद्धे सुसन्धिनी । घने संहते पक्ष्मणी ययोस्ते एवम् । नेत्रम् - കണ്ണ് । नासिका घ्राणमुन्नतमग्रं यस्याः सैवम् । महानुच्छ्वासो यस्याः सैवम् । तथा पीना अशिथिला ऋजुरवक्रा । तथा समा अनिम्नोन्नता । ओष्ठौ रक्तौ तथा अनुद्वृत्तौ बहिर्निर्गतौ । ओष्ठं - വാമ്മൂടൽ. हनू महत्यौ । नोल्बणे नोन्नते । उल्बणत्वमुन्नतत्वम् । हनुशब्दस्य स्त्रीत्वमपि चिन्त्यम् । 'महान्तौ नोल्बणौ हनू' इति वा पाठः । हनु - കവിൾ । आस्यं मुखं महत् । दन्ता द्विजाः घना अविरलाः श्लक्ष्णाः कोमलस्पर्शाः स्निग्धाः स्निग्धकान्तयः सिताः शुक्लाः । समाः समपङ्क्तयः । जिह्वा रसना रक्ता तथा आयता दीर्घा । तथा तन्वी न स्थूला । चिबुकं मांसलं महच्च । चिबुकम् - താടി । ग्रीवा शिरोधरा ह्रस्वा अदीर्घा घना निबिडा वृत्ता वर्तुला च । ग्रीवा = കഴുത്ത് । स्कन्धावंसौ । उन्नतौ च तौ पीवरौ च । स्कन्धम् - തോള് । उदरमित्यादि । दक्षिण आवर्तो यस्या नाभेः सा दक्षिणावर्ता गूढा नाभिर्यस्य तद्दक्षिणावर्तगूढनाभि । समुन्नतं सम्यगुन्नतं श्रेष्ठत्वेन उन्नतमुदरम् । उदरं - വയറ് । दक्षिणावर्तम् വലഞ്ചുഴി । नाभिः - പൊക്കിൾ । तन्वित्यादि । तनवो रक्ता उन्नता नखा यस्य तदेवंभूतं पाणिपादं प्रतिष्ठितं प्रशस्तं भवति । तथा स्निग्धं स्निग्धच्छायम् । तथा आताम्रं च तन्मांसलं चाताम्रमांसलम् । समन्तात्ताम्रमाताम्रम् । मांसलमुपचितमांसम् । तथा दीर्घाः अच्छिद्राः परस्परं संश्लिष्टा अङ्गुल्यो यस्य तदेवम् । तथा महद्विस्तीर्णम् । हाटकस्तु—"प्रतिष्ठितं भूमौ प्रतिष्ठित"मित्याह । एतत्पादस्यैव विशेषणम् ॥

**गूढवंशं महत् पृष्ठं निगूढाः सन्धयो दृढाः ॥ ११३ ॥**
**धीरः स्वरोऽनुनादी च वर्णः स्निग्धः स्थिरप्रभः ।**
**स्वभावजं स्थिरं सत्त्वमविकारि विपत्स्वपि ॥ ११४ ॥**

गूढः अदृश्यो वंशो यस्य तदेवंविधं पृष्ठं प्रशस्तम् । तथा महद् विस्तीर्णम् । वंशम् = നട്ടെല്ല് । सन्धयो निगूढाः अन्तर्गताः । दृढाः

अलुटनशीलः । धीरोऽकृपणः । स्वरः अनुनादी च घण्टादिवदनुरणन-न्यायेन । वर्णः स्निग्धः अरूक्षः । स्थिरा प्रभा कान्तिर्यस्य स एवम् । सत्त्वं स्वभावाज्जातं स्वभावजं प्राकृतमबाह्यहेतुजम् । अत एव विपत्स्वपि अविकारि अक्षोभि । अपिशब्दात् किमुत सम्पत्सु, न स्यादेव । द्विधा सत्त्वं स्वभावज-माहारजं च ॥

शरीरलक्षणस्योक्तस्य तारतम्यं दर्शयति—

**उत्तरोत्तरसुक्षेत्रं वपुर्गर्भादिनीरुजम् ।**
**आयामज्ञानविज्ञानैर्वर्धमानं शनैः शुभम् ॥ ११५ ॥**

उत्तरोत्तरमित्यादि । क्षेत्रमिव क्षेत्रं, शोभनं क्षेत्रं सुक्षेत्रम् । उत्तरोत्तरं सुक्षेत्रं यस्मिन् वपुषि तदुत्तरोत्तरसुक्षेत्रम् । उत्तरोत्तरं प्रशस्तलक्षणं वपुः शुभमिति योज्यम् । एतदुक्त भवति । 'स्वं स्वं हस्तत्रयं सार्धम्' इत्यादि-ग्रन्थोक्तप्रमाणं वपुः शुभम् । ततोऽपि यथोक्तललाटाद्यवयवं वपुः शुभतरम् । ततोऽपि यथोक्तसत्त्वलक्षणयुक्तं वपुः शुभतममेव । **पाठ्यकारो**ऽपि—"क्षेत्रमिति लक्षणस्य पर्यायः" इत्याह । अपरे क्षेत्रमित्यङ्गमेव ब्रुवते । **अरुणदत्तो**ऽप्याह—"क्षेत्रमिव क्षेत्रं शोभनं क्षेत्रं सुक्षेत्रं, तस्य शरीरस्य यथावत् प्रशस्तं "स्वं स्वं हस्तत्रयं सार्ध"मित्यादि ग्रन्थोक्तम् । (तदवयवानां ललाटादीनां यथावत्प्रशस्त-गुणलक्षणं 'ललाटमुन्नत'मित्यादिग्रन्थोक्तं, तथा प्रशस्तं सत्त्वलक्षणं 'स्वभावजं स्थिर'मित्यादि ग्रन्थोक्तम् ।) उत्तरोत्तरं सुक्षेत्रं यस्मिन् वपुषि तदुत्तरो-त्तरसुक्षेत्रम् । प्रशस्तलक्षणभूमिकं वपुः शुभमिति योज्यम् । एतदुक्तं भवति । यथोक्तप्रमाणं सुक्षेत्रं वपुः शुभम् । *(ततोऽपि यथोक्तलक्षणललाटाद्यवयवं सुक्षेत्रं वपुः शुभतरम् ।) ततोऽपि यथोक्तसत्त्वलक्षणगुणं सुक्षेत्रं वपुः शुभतममित्यु-त्तरोत्तरसुक्षेत्रशब्दस्यार्थः ।" इति । **सारकृद**पि—"उत्तरोत्तरं सुक्षेत्रं प्रशस्तं लक्षणं यस्मिन् वपुषि तदुत्तरोत्तरसुक्षेत्र"मित्याह । तथा गर्भादिनीरुजं गर्भ आदिर्येषां बाल्ययौवनादीनां वयोवस्थाविशेषाणां त एवं, गर्भादयो नीरुजो यस्य वपुषः तद् गर्भादिनीरुजं वपुः शुभम् । तथा आयामा-दिभिः शनैः न सहसैव वर्धमानं वपुः शुभम् । आयामो दैर्घ्यम् । ज्ञानं

* Omits ग. पाठः ।

लौकिको व्यवहारः । विज्ञानं विशिष्टं ज्ञानं शास्त्राद्यभ्यासादिसमुत्थं परमात्मावबोधपर्यन्तं तैर्यद्वपुः शनैर्वर्धमानं वृद्धिं सम्प्राप्नुवद्, न सहसा, तच्छुभम् । इन्दुनाप्युक्तं—"उत्तरोत्तरसुक्षेत्रत्वादियुक्तं वपुः शुभम् । गर्भादितश्च नीरुजं क्रमेण च आयामादिभिर्वर्धमान"मिति ॥

**इति सर्वगुणोपेते शरीरे शरदां शतम् ।**
**आयुरैश्वर्यमिष्टाश्च सर्वे भावाः प्रतिष्ठिताः ॥ ११६ ॥**

**इतीत्यादि ।** इति एवंप्रकारेण यथोक्तेन सर्वगुणैरुपेते युक्ते शरीरे शरदां समानां शतमायुर्जीवितं प्रतिष्ठितम् । तथा ऐश्वर्यम् । तथेष्टाः शुभा ये केचिद् भावाः ते तत्र तथाभूते देहे सर्वे प्रतिष्ठिताः व्यवस्थिताः वर्षशतानुबन्धिनः । वर्षशतं खल्वायुषः प्रमाणमित्यागमात् । कर्मविशेषादूनाधिकवर्षजीविनो मनुष्याः । **संग्रहे**–

"बाल्यं वृद्धिः प्रभा मेधा त्वक्शुक्राक्षिश्रुतीन्द्रियम् ।
दशकेषु क्रमाद् व्येति मनः सर्वेन्द्रियाणि च ॥

एवं वर्षशतमायुषः प्रमाणम् । अस्मिन् काले सन्ति पुनः कर्मवशादूनाधिकवर्षशतजीविनो मनुष्याः" इति । **इन्दुः**–"क्रमाद्दशसु दशकेषु बाल्यादिदशकं व्येति व्यपगच्छति । तत्र प्रथमे दशके बाल्यं व्यपगच्छति । द्वितीये वृद्धिः, ततः परं न वर्धत इत्यर्थः । तृतीये प्रभा । चतुर्थे मेधा । पञ्चमे त्वग् व्यपगच्छति अन्यथा भवतीत्यर्थः । षष्ठे शुक्रम् । सप्तमेऽक्षीन्द्रियम् । अष्टमे श्रुतीन्द्रियम् । नवमे मनः । दशमे सर्वेन्द्रियाणि । एवं स्थिते सर्वथास्मिन् काले कलौ वर्षशतमायुषः परिमाणम् । केचित्तु मनुष्या दैवस्य पौरुषस्य च कर्मणो विशेषादूनाधिकवर्षशतजीविनोऽपि सन्ती"ति ॥

एवं वपुषः प्रशस्तलक्षणमुक्त्वा बलप्रमाण(ज्ञाना)र्थमाह—

**त्वग्रक्तादीनि सत्त्वान्तान्याग्रयाण्यष्टौ यथोत्तरम् ।**
**बलप्रमाणज्ञानार्थं साराण्युक्तानि देहिनाम् ॥ ११७ ॥**

त्वग्रक्तादीनीत्यादि । **सारकृदपि**–"प्रशस्तलक्षणं वपुरुक्त्वा बलप्रमाणज्ञानार्थमाह त्वग्रक्तादीनी"त्युक्तवान् । त्वग्रक्तादीनि सत्त्वान्तानि देहिनां साराणि

यथोत्तरं श्रेष्ठान्युक्तानि । तेन त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्त्वानि यथोत्तर-मग्र्याणीति बोद्धव्यम् । किमर्थं साराण्युक्तानि । बलप्रमाणज्ञानार्थम् । तथा च देहदर्शनादेव हि भिषङ् मुह्येदयमुपचयेन महाशरीरत्वाद् बलवान् अयं कृशत्वा-दल्पशरीरत्वाद् अल्पबल इति । तच्चोभयमप्यन्यथा दृष्टं गजसिंहे । **संग्रहे**—"साराण्यष्टौ त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्त्वात्मकान्युत्तरोत्तरमग्र्याणि बल-[1]प्रमाणज्ञानार्थमुपदिश्यन्ते[2] । अत्र न मुह्येद्देहमात्रदर्शनादेव हि भिषगयमुपचयेन महाशरीरत्वाद् बलवान् अयं कृशत्वादल्पशरीरत्वादल्पबलः[3] इति । तच्चोभयमन्यथा दृष्टं गजसिंहे" इति । **इन्दु**.—"सहजादिभेदेन बलं त्रिविधम् । अस्य च बलस्य मानविशेषपरिज्ञानार्थं त्वगाद्यात्मकान्यष्टौ साराण्युपदिश्यन्ते । तानि च यथोत्तर-मग्र्याणि श्रेष्ठानि च । अत्र तेन त्वक्सारवान् बली भवति । ततो रक्तसारवान् । ततो मांससारवान् । ततो मेदःसारवान् इत्येवमादि बोध्यम् । त्वगेव सारं[4] न रक्तक्रमेण सारम् । एवं सर्वत्र योज्यम् । एतावता बलमानपरिज्ञानदर्शनेन भिषग् बलं जानीयात्[5] । न मुह्येत् । अयमित्यादिना मोहे हेतुरुच्यते । तदुभय-मुपचयेन बलवत्त्वं कृशत्वेनाल्पबलत्वम् । गजसिंहेऽन्यथा वैपरीत्येन दृष्टम् । सिंहः कृशोऽपि अतिबलो, गजः स्थूलोऽपि अल्पबलः" इति ।

**सारैरुपेतः सर्वैः स्यात्परं गौरवसंयुतः ।**
**सर्वारम्भेषु चाशावान्सहिष्णुः सन्मतिः स्थिरः ॥ ११८ ॥**

सारैरित्यादि । सारैरेतैः सर्वैः युक्तः परमतिशयेन गौरव-संयुतः स्यात् । सर्वारम्भेषु सर्वेष्वपि चिकीर्षितकार्येषु आशावान् स्यात् । अस्मात् कर्तव्यात् कृतादिदं सम्पद्यत इत्याशाशब्दस्यार्थः । तथा सहिष्णुः सहनशीलोऽत एव शारीरमानसैर्दुःखैः न अभिभूयत इति यावत् । तथा सन्मतिः सुधीः । तथा स्थिरः कर्तव्येषु स्थिरबुद्धिः । "तद्विपरीतस्त्वसारः । मध्यो मध्य-गुणः" इत्युक्तं **संग्रहे** । **इन्दुः**—"यै[6]स्त्वविद्यमानसर्वसारः सर्वसारगुणवैपरीत्य-

१. 'रवराणि बल' । २. 'न्ते । अपि च न मुह्ये' । ३. 'त्वाद् वाल्पबल' । ४. 'रं एवं सर्वत्र' । ५. 'यात् । शरीरमात्रदर्शने भिषग् बले उक्तनयान्न मुह्येत्' ।६. 'यो विद्यमानसर्वसारगुणवैपरीत्ययुक्तो भवति सोऽसारः । यस्य तु मध्यमानि साराणि स गुणैरपि मध्यो भवति' इति मुद्रिते ।

युक्तो भवति । यस्य मध्यानि साराणि स गुणैरपि मध्यो भवती"ति । त्वगादिसाराणां पृथग् लक्षणमुक्तं चरके तदत्र ग्रन्थबाहुल्यभयान्नोक्तम् । संग्रहे तु शरीरावयवानां स्वेनाङ्गुलादिना प्रमाणमुक्तम् । यथा—"पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते तिस्रोऽन्याः क्रमेणोत्तरोत्तरं पञ्चमभागहीनाः तन्नखहीना वा । चतुरङ्गुलायताः पृथक् पृथक् प्रपदपादतलपार्ष्णयः षट्पञ्चचतुरङ्गुलविस्तृताश्चतुर्दशैवायामेन पादश्चतुर्दशैव परिणाहेन । तथा गुल्फौ जङ्घामध्यं च । चतुरङ्गलोत्सेधः पादोऽष्टादशायामा जङ्घा उरुश्च । चतुरङ्गुलं जानु । त्रिंशदङ्गुलपरिणाह ऊरुः । षडायामौ मुष्कमेढ्रावष्टपञ्चपरिणाहौ । षोडशविस्तारा कटी पञ्चाशत्परिणाहा । दशाङ्गुलं बस्तिशिरः । द्वादशाङ्गुलमुदरम् । दशविस्तारे द्वादशायामे पार्श्वे । द्वादशोत्सेधं त्रिकम् । अष्टादशोत्सेधं पृष्ठम् । द्वादशकं स्तनान्तरम् । द्व्यङ्गुलं स्तनपर्यन्तम् । चतुर्विंशत्यङ्गुलविशालं द्वादशोत्सेधमुरः । द्व्यङ्गुलं हृदयम् । अष्टकौ स्कन्धौ कक्षौ च । षट्कावंसौ । षोडशकौ (प्र)बाहू । पञ्चदशकौ प्रपाणी । (द्वादशाङ्गुलौ पाणी ।) तलापि च पञ्चाङ्गुला मध्यमाङ्गुलिः । ततोऽर्धाङ्गुलहीने प्रदेशिन्यनामिके । सार्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ[1] । चतुरङ्गुलोत्सेधा द्वाविंशतिपरिणाहा शिरोधरा । द्वादशोत्सेधं चतुर्विंशतिपरिणाहमाननम् । पञ्चाङ्गुलमास्यम् । चतुरङ्गुलं पृथक् चिबुकौष्ठनासादृष्ट्यन्तरकर्णललाटम् । त्रिभागाङ्गुलविस्तारा नासापुटमर्यादा । द्व्यङ्गुलायतमङ्गुष्ठोदरविस्तृतं नेत्रम् । तत्र शुक्लात् तृतीयांशं कृष्णं कृष्णान्नवमांशा मसूरदलमात्रा दृष्टिः । षडङ्गुलोत्सेधं द्वात्रिंशत्परिणाहं शिर इति । सर्वं पुनः शरीरमङ्गुलानि चतुरशीतिः । तदायामविस्तारसमं समसुच्यते । तत्र यथोक्तपरिमाणमिष्टम् । अनिष्टं हीनमधिकं वा । तथा स्नातानुलिप्तमधः प्रभृत्यानुपूर्व्या शुष्यदिष्टं शरीर"मिति । इन्दुः—"आयामो दैर्घ्यम् । विस्तारः पार्श्वतः । परिणाहः वर्तुलता । तत्र पादाङ्गुष्ठः समीपे चाङ्गुली च[2] आयामेन द्व्यङ्गुले । अन्यास्तिस्रोऽङ्गुल्यः क्रमेण द्व्यङ्गुलस्य पञ्चमभागेन हीनाः, प्रदेशिन्या मध्यमा ततोऽनामिका ततः कनिष्ठेति यथोत्तरार्थः । प्रपदादित्रयं प्रत्येकमायामेन चतुरङ्गुलं (प्रपदमङ्गुल्यन्तरं, पादाग्रं पादतलम् । पाद-

१. 'कनिष्ठिकाङ्गुष्ठौ' । २. 'ष्ठः तत्समीपे च' इति मुद्रिते ।

मध्य पार्ष्णिः खुडिकाभागः तत्र च प्रपदं विस्तारेण षडङ्गुलम् । पञ्चाङ्गुलं पादतलम् । पार्ष्णिश्चतुरङ्गुला । (द्वे[1] चत्वारि त्रिगुणानि चेति?) चतुर्दशायामेन पादः । परिणाहः पादपृष्ठात्पादतलं यावत् । गुल्फजङ्घामध्ये अपि परिणाहेन चतुर्दशाङ्गुले । पादस्योत्सेधः क्षितिलग्नात् प्रभृति गुल्फो यावत्, स चतुरङ्गुलः । सुबोधम् । मुष्कावष्टाङ्गुलपरिणाहौ षडायामौ । मेढ्ः पञ्चपरिणाहः (षडायामः) । कटी मेढ्मुष्कयोरुपरिभागे । दशाङ्गुलं वस्तिशिर आयामेन मेढ्मूलान्नाभिप्रदेशो यावत् । त्रिकश्च कट्या एव उत्सेधादौन्नत्यम् । स्तनपर्यन्तं स्तनपार्श्वम् । द्व्यङ्गुलं हृदयमिति । अतः प्रभृति कानिष्ठिकाङ्गुष्ठौ इत्येवमन्तमयामो विज्ञेयः । आस्यं पञ्चाङ्गुलम् । चिबुकादिकं पृथक् प्रत्येकं चतुरङ्गुलमायामेन । दृष्ट्यन्तरं दृष्टिमण्डलयोर्मध्यम् । नासापुटयोर्मर्यादा मांसमयी । त्रिभागाङ्गुलमङ्गुलस्य तृतीयो भागः । तृतीयांशो नेत्रभागात् शुक्लात् । मसूरदलमात्रा(घनत्वेन) । इत्युक्तं समप्रमाणं शरीरं सममित्युच्यते । यथोक्तायामविस्तारोत्सेधेन समेन परिमाणमिष्टम् । तथात्यन्तह्रस्वत्वादियुक्तमनिष्टम् । हीनाधिकप्रमाणमवयवमनिष्ट"मिति ॥

सत्त्वादिप्रकृतीनां तिसृणां कथं सुखदुःखानुभवः स्यादित्याह—

**अनुत्सेकमदैन्यं च सुखं दुखं च सेवते ।**
**सत्त्ववांस्तभ्यमानस्तु राजसो नैव तामसः ॥ ११९ ॥**

अनुत्सेकमभिमानं हित्वा सत्त्ववान् पुरुषः सुखं सेवते सुखमनुभवति । तथा अदैन्यं कार्पण्यं च हित्वा दुःखं सेवते अनुभवति । स्तभ्यमानस्त्विति[2] । तुर्व्यतिरेके भिन्नक्रमः । राजसः पुनः पुरुषः स्तभ्यमानोऽहमेवामुना प्रकृष्टेनानन्यसाधारणेन सुखेन सुखीत्येवं सेवते । अहङ्काराक्रान्तमानसोऽहमेवेदं दुःखं सोढुं शक्त इत्येवं राजसो नरो दुखमनुभवति । तामसः पुनः पुरुषो नैव सुखं सेवते न दुःखमत्यन्तमूढत्वात् । नासौ सुखेन सुखी दुःखेन दुःखी प्राप्ततृतीयमदो यथा पुरुषः । एवं द्वन्द्वप्रकृतिरपि न सुखं सेवते न दुःखमत्यन्तमूढत्वात् । समसत्त्वादिप्रकृतिस्त्वनुत्सिक्तोऽदीनः सन् सुखदुःखे सेवते । अन्यथा प्रोक्तमिन्दुना—"यस्तु राजसः पुरुषः स सुखमपि स्तभ्यमानः सेवते ।

---

१. 'द्वे चत्वारीति गुणानि । चतुर्दशा' । २. 'स्तप्यमान' इति मुद्रिते ।

दुःखमपि स्तभ्यमानः स्तोकोत्सेकदैन्य इत्यर्थः । तामसो नैव सुखमुपभुङ्क्ते नापि दुःखम् । तत्कारणसन्निधानेऽपि शठत्वात्सुखदुःखं न गृह्यत इत्यर्थः । अथवा तामसो नैवानुत्सेकमदैन्यं च सुखदुःखे सेवते । नैव च स्तभ्यमानः सेवते अपि तु सोत्सेकः सुखं सेवते सदैन्यो दुःखं सेवते" इति । **अस्मद्गुरवो**ऽपि—"तामसो बह्वुत्सेकदैन्ययुक्तः सुखदुःखे सेवते" इति । **हाटको**ऽप्याह---"अनुत्सेकमभिमानं हित्वा सत्त्ववान् पुरुषः सुखं सेवते । अदैन्यं कार्पण्यं च हित्वा दुःखं सेवते अनुभवति । राजसः पुरुषः स्तभ्यमानः स्तोकोत्सेकदैन्ययुक्तः अहमेवामुना प्रकृष्टेनानन्यसाधारणेन सुखेन सुखी(भव?)त्येवं सुखं सेवते । अहंकाराक्रान्तमानसोऽहमेवेदं सोढुं शक्त इत्येवं दुःखमनुभवति । तामसः पुरुषः नैव सुखं सेवते नैव दुःखमत्यन्तमूढत्वात्" इति ॥

इदानीं प्रधानफलदायि यत् प्रधानं प्रशस्तं लक्षणं वपुषः तद्दर्शयितुमाह—

**दानशीलदयासत्यब्रह्मचर्यकृतज्ञताः ।**
**रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद् गणः ॥ ११० ॥**

दानेत्यादि । दानं धनादित्यागः तच्छीलयत्यभ्यस्यतीति दानशीलः । 'शीलिकामिभक्ष्याचारिभ्यो णः' (वा०) इति णः । दया दीनेष्वभ्युपपत्तिः । मैत्री सर्वसत्त्वानामात्मभावनम् । न केवलं पूर्वोक्तं 'स्वं स्वं हस्तत्रय'-मित्यादि 'वर्धमानं शनै'रित्येतत्पर्यन्तं यल्लक्षणं तच्छरीरस्य आयुर्वृद्ध्यादिहेतुः, यावदयं दानशीलादिगुणो मैत्र्यवसानः पुण्यायुर्वृद्धिकृत् । दानादयश्च यथासम्भवं केचित्पुण्यकृतः केचिदायुर्वृद्धिकृतः केचिदुभयकृतः । अन्येभ्यश्च महापुरुषलक्षणेभ्योऽस्यैव गणस्य ज्यायस्त्वं प्रतिपादयता शास्त्रकृता अध्यायावसाने ग्रन्थस्यास्य निर्देशः कृतः । अथवा शरीरगतं वस्तुजातं सिरास्थिधमनीस्नायुपेशी-कण्डरारज्जुजालान्त्रविण्मूत्रकेशादिकमनित्यं ज्ञात्वा देहेन्द्रियादिषु ममतां परित्यज्य पुण्ये पुण्यकारणे त्वायुषि च प्रयत्नः कार्य इति सूचयितुं (तत्पुण्यं?) दानेत्यादिना प्रोक्तवान् । **सारकृद**पि–"पुण्यायुर्वृद्धिकरं गणमाह दानेत्यादिना" इत्याह ॥

इति हृदयबोधिकायामष्टाङ्गहृदयदीपिकायां
शारीरस्थाने तृतीयोऽध्यायः ॥

# चतुर्थोऽध्यायः ।

अङ्गविभागानन्तरं मर्मविभागाख्यः शारीरः प्रक्रम्यते । मर्मणामङ्गाश्रितत्वात् । यतो मर्माण्यङ्गप्रत्यङ्गसमाश्रितान्यतस्तत्रैवाख्यातुं युक्तानि । बहुवक्तव्यत्वात्पृथगुच्य(ते ? न्ते) । तस्मादस्याध्यायस्यारम्भो युक्त इत्याह—

**अथातो मर्मविभागं शारीरं व्याख्यास्यामः ।**

अथात इत्यादि । **हाटको**ऽप्याह—"अङ्गविभागादनन्तरं मर्मविभागाख्यः शारीरः प्रक्रम्यते । मर्मणामङ्गाश्रितत्वात् । बहुवक्तव्यत्वात्तु पृथगध्यायनिर्देशः" इति । म्रियतेऽस्मिन्नङ्ग उपहत इति मर्म । विभजनं विभागः । मर्मणां विभागो मर्मविभागः । सोऽस्मिन्नध्यायेऽस्तीति मर्मविभागः । अर्शआदित्वादच् । शारीरस्थानप्रतिबद्धत्वात् शारीरः । शेषं पूर्ववत् ।

सुखग्रहणार्थं पूर्वं मर्मणां सङ्ख्यां वक्तुमाह—

**सप्तोत्तरं मर्मशतं**



सप्तोत्तरमित्यादि । **पाठ्यकार**स्त्वाह—"सप्तोत्तरं मर्मशतमिति संख्याग्रहणं योगेश्वरसांख्यमतनिराकरणार्थम् । एकादश मर्माणीति तेषां पक्षः" इति । सप्त उत्तराणि अधिकानि यस्मिन् शते तदेवम् । सर्वस्मिन् शरीरे सप्तोत्तरं मर्मणां शतम् ॥

**तेषामेकादशादिशेत् ।**

**पृथक् सक्थ्नोस्तथा बाह्वोस्त्रीणि कोष्ठे नवोरसि ॥ १ ॥**

**पृष्ठे चतुर्दशोर्ध्वं तु जत्रोस्त्रिंशच्च सप्त च ।**

तेषां मर्मणां मध्ये पृथक् प्रत्येकं कृत्वा सक्थ्नोर्द्वयोः बाह्वोश्च द्वयोः एकादशादिशेत् । एवं चतुश्चत्वारिंशच्छाखासु मर्माणि विद्यात् । कोष्ठे जठरे त्रीणि मर्माणि । उरसि वक्षसि नव नवसंख्यानि । पृष्ठे चतुर्दश । जत्रोरूर्ध्वं जत्रुण उपरिष्टात् त्रिंशत् तथा सप्त एवं सप्तत्रिंशदित्यर्थः । जत्रोरिति पुंस्त्वमत्र चिन्त्यम् । अथवानित्यमागमशासनमित्यत्र नुम् न कृतः । जत्रु - പൂണെല്ല് ॥

एषां मर्मणां स्थानसंज्ञाकर्मविशेषानाह—

**मध्ये पादतलस्याहुरभितो मध्यमाङ्गुलिम् ॥ २ ॥**
**तलहृन्नाम रुजया तत्र विद्धस्य पञ्चता ।**
**अङ्गुष्ठाङ्गुलिमध्यस्थं क्षिप्रमाक्षेपमारणम् ॥ ३ ॥**
**तस्योर्ध्वं द्व्यङ्गुले कूर्चः पादभ्रमणकम्पकृत् ।**

मध्ये इत्यादि। **अरुणदत्तो**ऽप्याह—"इदानीमेषां मर्मणामा पादतलान्मस्तकं यावद्विशिष्टदेशसमाश्रयेण विशिष्टसंज्ञान्तराणि विशिष्टकर्माणि मर्माणि कथयितुमाह" इति। पादतलस्य मध्यदेशे मध्यमाङ्गुलिमभितो मध्यमाङ्गुलेः पादसम्बन्धिन्या आभिमुख्येन यत् पादतलं (स्पष्टःपादपृष्ठं) तत्र तलहृन्नाम तलहृदयं नाम मर्म आहुः। पूर्वाचार्या इति शेषः। मध्यमाङ्गुलिमित्यभितःशब्दयोगे 'अभितःपरितः' इत्यादिना द्वितीया। तत्र तस्मिन् विद्धस्य आहतस्य रुजया वेदनया पञ्चता मरणं भवति। रुजया मरणं नान्यथा, तस्माद्रुजाशमने यतितव्यमिति प्रतिपादनार्थो रुजयेति हेतुरुपन्यस्तः। एष एव न्यायोऽन्यत्राप्यनुसर्तव्यः। तेन यत्र विद्धे कारणं कथितं तत्र तच्चिकित्सायां यतितव्यमिति। तलहृत् - ഉള്ളംകാൽ। अङ्गुष्ठश्चाङ्गुलिश्च तयोर्मध्ये स्थितमङ्गुष्ठाङ्गुलिमध्यस्थं क्षिप्रं नाम मर्मेति। तद् विद्धमाक्षेपमारणमाक्षेपेण आक्षेपाख्येन वातव्याधिना मारयति। क्षिप्रम - ഏട്ടണി। "अङ्गुष्ठाङ्गुल्योर्मध्यं क्षिप्रं, तत्राक्षेपकेन मरण"मिति **संग्रहे**। तस्योर्ध्वं तस्य क्षिप्रमर्मण उपरिष्टाद् द्व्यङ्गुले द्व्यङ्गुलं विमुच्य उभयतः कूर्चो नाम मर्म। तद् विद्धं पादस्य भ्रमणं कम्पं च करोति। कूर्चम् - പാദവടിമട്ട്"। **संग्रहे**ऽप्युक्तं—" क्षिप्रस्योपरिष्टाद् द्व्यङ्गुले उभयतः कूर्चः। तत्र पादस्य भ्रमणवेपने भवतः।" इति। **इन्दुः**—"कूर्चः क्षिप्रस्योपरि द्व्यङ्गुले। उभयत इति पादपृष्ठात्पादतलं यावत्। कूर्चे विद्धे पादभ्रमणवेपने भवतः। वेपनं कम्पनम्। तत्रेत्यत्र विद्धस्येत्यनुवर्तते।" इति।

**गुल्फसन्धेरधः कूर्चशिरः शोफरुजाकरम् ॥ ४ ॥**
**जङ्घाचरणयोः सन्धौ गुल्फो रुक्स्तम्भमान्द्यकृत् ।**
**जङ्घान्तरे त्विन्द्रवस्तिर्मारयत्यसृजः क्षयात् ॥ ५ ॥**

गुल्फसन्धेरधः कूर्चशिरो नाम मर्म । तद् विद्धं शोफरुजाकरम् । उत्तरत्रापि विद्धशब्दोऽनुवर्तते । जङ्घाचरणयोः सन्धौ सन्धिप्रदेशे गुल्फो नाम मर्म । तद् विद्धं रुजं स्तम्भं मान्द्यं च तानि करोति । स्तम्भः स्तब्धत्वमङ्गस्य । **संग्रहे** तु प्रोक्तं–"पादजङ्घयोः सन्धाने गुल्फः । तत्र रुक् स्तब्धसक्थिता षण्ढता च ।" इति । षण्ढता अयोषिद्योग्यत्वम् । गुल्फम् – നരിയാണി । जङ्घान्तरे पार्ष्णिं प्रति द्वादशभिरङ्गुलैः जङ्घामध्ये इन्द्रवस्तिर्नाम मर्म । तद्विद्धं रक्तक्षयान्मारयति नान्यथा । तस्माद्रक्तस्तम्भने यतितव्यमिति प्रदर्शनार्थोऽसृक्क्षयादिति हेतुरुपन्यस्तः । तेन यत्र विद्धे कारणं कथितं तत्र तच्चिकित्सायां यतितव्यमिति । **अरुणदत्तोक्तिरेषा** । **संग्रहे**– "पार्ष्णिं[1] प्रति द्वादशभिरङ्गुलीभिर्जङ्घामध्ये[2] त्विन्द्रवस्तिः । तत्र शोणितक्षयान्मरण"मिति । इन्द्रवस्तिः – വണ്ണ ।

**जङ्घोर्वोः सङ्गमे जानु खञ्जता तत्र जीवतः ।**
**जानुनस्त्र्यङ्गुलादूर्ध्वमाण्यूरुस्तम्भशोफकृत् ॥ ६ ॥**

**उर्व्यूरुमध्ये तद्वेधात्सक्थिशोषोऽस्रसंक्षयात् ।**
**ऊरुमूले लोहिताक्षं हन्ति पक्षमसृक्क्षयात् ॥ ७ ॥**

**मुष्कवंक्षणयोर्मध्ये विटपं षण्ढताकरम् ।**

जङ्घोर्वोः सङ्गमे सन्धौ जानु नाम मर्म । जानु – മുഴങ്കാൽ । तत्र जानुनि विद्धे पुरुषो म्रियत एव । अथ जीवतोऽस्य पुंसः खञ्जता स्यादित्यर्थात् प्रायेण पुरुषस्य मरणमिति बोधयति । खञ्जः विकृतपादः तस्य भावः खञ्जता । जानुनो जानुसन्धेरूर्ध्वमुभयतः आणी नाम मर्म । (तद्) विद्धमूरुस्तम्भशोफकरम् । आणी – ഇടയുഴൽ । **संग्रहे**–"जानुनस्त्र्यङ्गुलादूर्ध्वमुभयतः आणी । तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च" इति । **इन्दुः** – "आणिरप्युभयतः (ऊरौ जानुनस्त्र्यङ्गुलाद्)(र्ध्वे?र्ध्वं) द्वे दिशौ व्याप्य वर्तते" इति । ऊरुमध्ये उर्वी नाम मर्म । तद्वेधात् तदभिघातात् सक्थिशोषः ऊरुकार्श्यम् । स च सक्थिशोषो रक्तक्षयात् । नान्यथा

१. 'पार्ष्णिप्रभृति द्वा' । २. 'लैर्जं' इति मुद्रिते ।

व्यधे सत्यपि । उर्वी – ഉടവണ്ണ് । ऊरोमूले वंक्षणसन्धेरधस्ताल्लोहिताक्षं नाम मर्म । तद् विद्धं पक्षं हन्ति पक्षाघातकरं सम्पद्यते । असृक्क्षयात्नान्यथा व्यधे सत्यपि । लोहिताक्षम् – ഉതിരക്കണ്ണ് । संग्रहे–उर्व्यास्तूर्ध्व-मधो वंक्षणसन्धेरूरुमूले लोहिताक्षम् । तत्र रक्तक्षयात्पक्षाघातः" इति । मुष्क-वंक्षणयोर्मध्ये विटपं नाम मर्म । तद्विद्धं पुंसः षण्ढताकरं निरपत्यताकरम् । विटपं – ഉമിതാങ്ങി ॥

**इति सक्थ्नोस्तथा बाह्वोर्मणिबन्धोऽत्र गुल्फवत् ॥ ८ ॥**
**कूर्परं जानुवत्कौण्यं तयोर्विटपवत्पुनः ।**
**कक्ष्याक्षमध्ये कक्ष्याधृक् कुणित्वं तत्र जायते ॥ ९ ॥**

इत्येवमनेन तलहृदयादिप्रकारेण सक्थ्नोर्द्वयोः प्रत्येकमेकादश मर्माणि भवन्ति । तलहृदयकूर्चक्षिप्रकूर्चशिरोगुल्फेन्द्रवस्तिजान्वाण्युर्वीलोहिताक्षविट-पानीति । तथा बाह्वोः तेनैव प्रकारेण बाह्वोरपि तलहृदयादीन्येकादश मर्माणि भवन्ति । केवलं बाह्वोः केषाञ्चिन्नामविशेषः । तदेवोच्यते–मणिबन्ध इत्यादि । अत्र बाहुमर्मसु गुल्फवद् गुल्फेन तुल्यो मणिबन्धः संज्ञामात्रभेदात् । यथा जङ्घाचरणयोः सन्धौ गुल्फः तथा करप्रपाण्योर्मणिबन्धः । मणिबन्धम् മണിക്കെട്ട് । जानुवत् जानुना तुल्यं कूर्परम् । यथा जङ्घोर्वोः सङ्गमे जानु तथा प्रपाणिप्रबाहुमध्ये कूर्परम् । മുഴങ്ക । तयोः मणिबन्धकूर्पराख्ययोः मर्मणो-र्विद्धयोः कौण्यं प्रपाणिपाण्यङ्गुलिकुब्जत्वम् । कौण्यम् – കോട്ടം । 'कुकरे कुणिः' इत्यमरः । "खञ्जो विकृतपादः, कुणिः विकृतकरः" इतीन्दुः । विटपवदित्यादि । कक्ष्या चाक्षश्च कक्ष्याक्षौ तयोर्मध्ये विटपेन च तुल्यं कक्ष्या-धृक्संज्ञं मर्म । यथा ऊरुनिबन्धने विटपं वृषणवंक्षणयोर्मध्ये तथा बाहुनिबन्धने कक्ष्याधरं मर्म । തൈക്കുട്ടാങ്ങി । अक्षोऽसगलयोः सन्धिः । तत्र विद्धे कुणित्वं कुकरत्वं जायते । प्रपाणिपाण्यङ्गुलिकुब्जता इति ॥

शाखामर्माणि चतुश्चत्वारिंशदुक्त्वा अन्तराधिमर्माणि कथयति—

**स्थूलान्त्रबद्धः सद्योघ्नो विड्वातवमनो गुदः ।**

१, २. 'क्षा' इति मुद्रितपाठः ।

स्थूलान्त्रेत्यादि । स्थूलान्त्रसूक्ष्मान्त्रभेदाद् द्विधा आन्त्राणि । तत्र स्थूलान्त्रैर्बद्धः गुदो नाम मर्मविशेषः । स च (विड्वातवमनः) । 'विड्वातवहन' इत्यन्ये । स गुदो विद्धस्तत्क्षणादेव वतवर्चसी वमत्युद्गिरति निरस्यतीति विड्वातवमनः तत्कर्मा । बाहुलकात्कर्तरि ल्युट् । विड्वातौ धमत्युद्गिरतीति 'विड्वातधमनः' इति केचित्पठन्ति । स गुदो विद्धः तत्क्षणादेव हन्ति । सद्योघ्न इति "अमनुष्यकर्तृके च (पा० सू० ३-२-५३) इति टक् । गुदशब्दस्यात्र पुंस्त्वं चिन्त्यम् । न चार्धर्चादिष्वयमस्ति । गुदं - குழி । **संग्रहे**–''वातवर्चोनिरसनः स्थूलान्त्रप्रतिबद्धो गुदः । तत्रापि सद्योमरण''मिति ॥

**मूत्राशयो धनुर्वक्रो वस्तिरल्पास्रमांसगः ॥ १० ॥**
**एकाधोवदनो मध्ये कट्याः सद्यो निहन्त्यसून् ।**
**ऋतेऽश्मरीव्रणाद्विद्धस्तत्राप्युभयतश्च सः ॥ ११ ॥**

**मूत्रस्राव्येकतो भिन्नो व्रणो रोहेच्च यत्नतः ।**
**देहामपक्वस्थानानां मध्ये सर्वसिराश्रयः ॥ १२ ॥**
**नाभिः सोऽपि हि सद्योघ्नो**

मूत्राशय इत्यादि । मूत्रस्याशय आधारो मूत्राशयः, यत्र मूत्रं तिष्ठति, स धनुर्वक्रः चापकुटिलः पृष्ठतो वक्रः । अनेनास्य संस्थानमुक्तम् । स च वस्तिर्नाम मर्मविशेषः । अस्रं च मांसं च अस्रमांसे । अल्पेऽस्रमांसे गच्छति सः अल्पास्रमांसगः । "अन्येभ्योऽपि दृश्यते" (पा० सू० ३-२-७५) इति डः । तत्रस्थो न बहु(रक्त)मांसप्रदेशस्थ इत्यर्थः । तथैकमधोवदनं यस्यासौ एकाधोवदनः एकमुखश्चाधोमुखश्चायम् । कट्या मध्ये इति स्थाननिर्देशः । कट्या मध्यप्रदेशेऽसाववतिष्ठते । स विद्धः सद्यस्तत्क्षणादेवासून् प्राणान् निहन्ति । सर्वत्र न । अश्मरीव्रणादृते अश्मर्याहरणार्थं यो व्रणः क्रियते तं व्रणं वर्जयित्वा । तत्राप्यश्मरीव्रणे उभयत उभयपार्श्वतश्चेत् स विद्धः तदासौ सद्योऽसून् निहन्ति । अश्मरीव्रणेऽप्येकतो भिन्ने वस्तावेकपार्श्वतो विद्धे सति मूत्रस्रावी व्रणो भवति । स च यत्नत आदरेणोपक्रान्तो रोहति नान्यथा । देहेत्यादि । आमं च पक्वं च आमपक्वे स्थानं च स्थानं च स्थाने आमपक्वयोः स्थाने (आमपक्वस्थाने) । देहं च आमपक्वस्थाने च देहामपक्वस्थानानि तेषां देहामपक्वस्थानानां मध्ये । तत्रैक-

त्वाद्देहस्य देहमध्यप्रदेशे तथोभयोरामस्थानपकस्थानयोर्मध्ये अन्तराले नाभिर्नाम मर्म। सर्वासां सिराणामाश्रयः आधारः सोऽपि सद्योघ्नः। अपिः समुच्चये। हियंस्मादर्थे। न केवलं गुदबस्ती सद्योघ्नौ। यावन्नाभिरपि विद्धः सद्योघ्नः। नाभिशब्दस्य पुंस्त्वं चिन्त्यम्। संग्रहे–"पक्वामाशयमध्ये नाभिः, तत्रापि मरणम्।" इति॥

**द्वारमामाशयस्य च।**
**सत्त्वादिधाम हृदयं स्तनोरःकोष्ठमध्यगम्॥ १३॥**

द्वारमित्यादि। हृदयं नाम मर्म आमाशयस्य द्वारं मुखं, तेन हि द्वारेणान्नपानमामाशये प्रविशति। चशब्दात्तदपि सद्योघ्नम्। तच्च सत्त्वादीनां सत्त्वरजस्तमसां तथा विज्ञानस्येन्द्रियाणां चार्थपञ्चकस्य तथात्मनश्चेतसो धाम स्थानम्। तच्च स्तनोरःकोष्ठमध्य(गते? गम्। स्तनौ चोरश्च कोष्ठश्च स्तनोरःकोष्ठं तस्य मध्यं तत्र) गच्छति स्थितिं बध्नाति। कोष्ठवक्षसोः स्तनयोश्च मध्ये स्थितमित्यर्थः। संग्रहे–"कोष्ठवक्षसोः स्तनयोश्च मध्ये सत्त्वरजस्तमोधिष्ठानमामाशयद्वारं हृदयम्। तत्रापि सद्योमरणम्" इति॥



**स्तनरोहितमूलाख्ये द्व्यङ्गुले स्तनयोर्वदेत्।**
**ऊर्ध्वाधोऽस्रकफापूर्णकोष्ठो नश्येत्तयोः क्रमात्॥ १४॥**

स्तनेत्यादि। स्तनयोरुपरिष्टाद् द्व्यङ्गुले स्तनरोहितम्। स्तनयोरधो द्व्यङ्गुले स्तनमूलं स्तनमूलाख्यं मर्म। तयोः स्तनरोहितस्तनमूलाख्ययोः मर्मणोर्विद्धयोः पुरुषोऽसृक्कफापूर्णकोष्ठः क्रमाद्यथाक्रमेण नश्येत्। स्तनरोहिते विद्धे सति असृजा पूर्णकोष्ठो नरो नश्येत्। स्तनमूले विद्धे सति कफेन पूर्णकोष्ठो नश्येत्। संग्रहे–"स्तनयोरधस्ताद् द्व्यङ्गुलमुभयतः स्तनमूले। तयोः कफपूर्णकोष्ठस्य मरणम्। स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहिते। तयोः शोणितपूर्णकोष्ठस्य मरणम्" इति। चूचुकं स्तनमुखमाश्यामम्॥

**अपस्तम्भावुरःपार्श्वे नाड्यावनिलवाहिनी।**
**रक्तस्य पूर्णकोष्ठोऽत्र श्वासात्कासाच्च नश्यति॥ १५॥**

अपेत्यादि। उरसः पार्श्वे द्वे नाड्यावपस्तम्भौ नाम मर्मणी। अनिलवाहिनी वातवहे। अत्र मर्मद्वये विद्धे रक्तेन पूर्णकोष्ठः श्वासकासाभ्यां विपद्यते।

रक्तस्येति तृतीयार्थे षष्ठी । पाठ्येऽप्युक्तम्—"अपस्तम्भमुरःपार्श्वे – മാർവിലാ-കഴൽ" इति ।

इदानीं पृष्ठे वक्ति—

**पृष्ठवंशोरसोर्मध्ये तयोरेव च पार्श्वयोः**
**अधोंऽसकूटयोर्विद्यादपालापाख्यमर्मणी ॥ १६ ॥**
**तयोः कोष्ठेऽसृजा पूर्णे नश्येद् यातेन पूयताम् ।**

पृष्ठेत्यादि । पृष्ठवंशस्य तथोरसः अनयोर्मध्ये अन्तराले तयोरेव पृष्ठ-वंशोरसोरेव पार्श्वयोः उपरिभागयोः अंसकूटयोरधः अपालापाख्यमर्मणी द्वे विद्यात् । तयोर्विद्धयोः रक्तेन कोष्ठे पूर्णे पूयतां यातेन लोहितेन नश्येत् । यावद्रक्तं पूयतां न यातं तावज्जीवति न तु रक्तकोष्ठपूरणमात्रादेव म्रियत इति भावः । अपालपं – ഉഠിയാട്ടംകൊള്ളി । संग्रहे—"अंसकूटयोरधः पार्श्वयो-रुपरिभागयोरपालापौ । तयोः पूयत्वमापन्नेन रक्तेन मरणम्" इति । अत्रेन्दुः—"अंसपार्श्वान्तरयोर्मध्ये किञ्चित्पार्श्वभागे अपालापौ । तयोर्विद्धयोः न सद्यो मरणम् । अपि तु पूयत्वमापन्ने रक्ते" इति ।

**पार्श्वयोः पृष्ठवंशस्य श्रोणीकर्णौ प्रतिष्ठिते ॥ १७ ॥**
**वंशाश्रिते स्फिजोरूर्ध्वं कटीकतरुणे स्मृते ।**
**तत्र रक्तक्षयात्पाण्डुर्हीनरूपो विनश्यति ॥ १८ ॥**

पार्श्वयोरित्यादि । पृष्ठवंशस्य द्वयोः पार्श्वयोः प्रति श्रोणीकर्णौ स्थिते । असव्यपार्श्वस्थं त्वसव्ये सव्यपार्श्वस्थं सव्ये स्थितम् । श्रोण्याः कर्णाकृतित्वात् श्रोणीकर्णौ – മെൽകഴി । वंशाश्रिते वंशप्रतिबद्धे स्फिजोरूर्ध्वमुपरिष्टादस्थिनी कटीकतरुणे एतत्संज्ञे द्वे मर्मणी स्मृते उक्ते । तत्र तस्मिन् मर्मद्वये विद्धे रक्तक्षयात्पाण्डुर्विगतवर्णः सन् नरो नश्यति । कटीकतरुणं – കോണി । संग्रहे—"पृष्ठवंशमुभयतः प्रति श्रोणीकर्णावस्थिनी ते कटीकतरुणे मर्मणी" इति ॥

**पृष्ठवंशं ह्युभयतो यौ सन्धी कटिपार्श्वयोः ।**
**जघनस्य बहिर्भागे मर्मणी तौ कुकुन्दरौ ॥ १९ ॥**
**चेष्टाहानिरधःकाये स्पर्शाज्ञानं च तद्व्यधात् ।**

पृष्ठेत्यादि । पृष्ठवंशस्योभयोः पार्श्वयोः यौ सन्धी, कट्याः पश्चिमो भागो जघनं तस्य बहिर्भागे नान्तः कुकुन्दरौ निम्नाकारौ सन्धिमर्मणी । तद्व्यधात् तयोर्व्यधादधःशरीरे चेष्टाहानिः गमनाकुञ्चनप्रसारणादावधःकायकार्ये अशक्तिः सम्पद्यत इत्यर्थः । स्पर्शाज्ञानं च स्पर्शासंवित्तिर्भवति । **हाटको**ऽप्याह— "जघनस्य बहिर्भागे पृष्ठवंशस्य पार्श्वयोः निम्नाकारे मर्मणी कुकुन्दरे" इति । कुकुन्दरम् – ൭൧൧൨൭ । पृष्ठवंशमुभयतः इति "उभसर्वतसोः" (वा०) इत्यादिना द्वितीया ॥

**पार्श्वान्तरनिबद्धौ यावुपरि श्रोणिकर्णयोः ॥ २० ॥**
**आशयाच्छादनौ तौ तु नितम्बौ तरुणास्थिगौ ।**
**अधःशरीरे शोफोऽत्र दौर्बल्यं मरणं ततः ॥ २१ ॥**

पार्श्वेत्यादि । पृष्ठवंशस्य द्वयोः पार्श्वयोः श्रोणिकर्णयोरुपरिष्टात् पार्श्वान्तरे पार्श्वमध्ये निबद्धौ प्रतिबद्धौ लग्नौ पार्श्वान्तरनिबद्धौ यौ, तथा पक्वाशयस्याच्छादनौ तौ नितम्बौ मर्मणी नितम्बसंज्ञे मर्मणीत्यर्थः । तौ तरुणास्थिगौ तरुणसंज्ञे अस्थिनि स्थितौ । **अरुणदत्तस्तु**—"मूत्रादीनां ये आशया आधारा वस्त्यादयः तेषामाच्छादनौ आशयाच्छादनौ" इत्याह । (पार्श्वान्तरनिबद्धौ असव्यपार्श्वस्थौ सव्ये स्थितः निबद्धः सव्यश्च सव्ये ?) अत्रास्मिन् मर्मद्वये विद्धे सत्यधःकाये शोफो भवति । तथा दौर्बल्यं प्रकृतत्वादधःशरीर एव । दौर्बल्यमल्पबलत्वं स्वव्यापाराक्षमत्वं ततो दौर्बल्यादनन्तरं मरणं भवति । नितम्बम् – ൭൧൧ ॥

**पार्श्वान्तरनिबद्धौ च मध्ये जघनपार्श्वयोः ।**
**तिर्यगूर्ध्वं च निर्दिष्टौ पार्श्वसन्धी तयोर्व्यधात् ॥ २२ ॥**
**रक्तपूरितकोष्ठस्य शरीरान्तरसम्भवः ।**

पार्श्वान्तरे इत्यादि । पार्श्वयोरन्तरं मध्यं तत्र निबद्धौ संश्लिष्टौ सन्धिमर्मविशेषौ पार्श्वसन्धी इति निर्दिष्टौ । अथ त्वेकस्मिन् पार्श्वान्तरे एकः सन्धिः द्वितीये पार्श्वान्तरे द्वितीयः सन्धिः । क्व स्थितौ कथम्—जघनस्य पार्श्वे जघन-

---

१. 'आशयच्छादनौ' इति मुद्रिते ।

पार्श्वे तयोः जघनपार्श्वयोः मध्ये तिर्यगूर्ध्वं च स्थितौ । एवमेकस्मिन् जघनपार्श्वमध्ये एकः सन्धिः, द्वितीये द्वितीयः स्थित इति । **हाटको**ऽप्याह—"जघनपार्श्वयोर्मध्यभूते पार्श्वान्तरे तिर्यगूर्ध्वं च स्थितौ पार्श्वसन्धी मर्मणी" इति । तयोर्व्यधात् पुंसो रक्तपूरितकोष्ठस्य शरीरान्तरसम्भवोऽपरशरीरोत्पत्तिः मरणमित्यर्थः । **संग्रहे**—"पार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ये तिर्यगूर्ध्वं च पार्श्वसन्धी । तयोः शोणितपूर्णकोष्ठतया मरणम्" इति । **इन्दुः**—"पार्श्वान्तरप्रतिबद्धौ सव्यपार्श्वस्थः सव्ये प्रतिबद्धोऽपसव्यश्चापसव्ये । तत्र चाध ऊर्ध्वं च तिर्यक् च प्रतिबद्धौ पार्श्वसन्धी तौ जघनपार्श्वयोर्मध्ये भवतः" इति । पार्श्वसन्धिः ഒക്കവാരിച്ചേർ്.

**स्तनमूलार्जवे भागे पृष्ठवंशाश्रये सिरे ॥ २३ ॥**

**बृहत्यौ तत्र विद्धस्य मरणं रक्तसंक्षयात् ।**

स्तनेत्यादि । स्तनयोर्मूलं स्तनमूलम् । तस्यार्जवे भागे स्पष्टे उद्देशे पृष्ठवंशाश्रये सिरे पृष्ठवंशस्योभयपार्श्वप्रतिबद्धे सिरे बृहत्यौ एतत्संज्ञे मर्मणी । **हाटको**ऽपि—"स्तनमूलयोरार्जवे भागे पृष्ठवंशस्योभयपार्श्वप्रतिबद्धे सिरे बृहतीसंज्ञे मर्मणी" इत्याह । तत्र मर्मद्वये विद्धस्य मरणं भवति रक्तसंक्षयान्नान्यथा । **संग्रहे**—"स्तनमूलयोरार्जवेनोभयतः पृष्ठवंशं बृहत्यौ । तयोः शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैः मरणम्" इति । **इन्दुः**—"पूर्वोक्तयोः स्तनमूलयोः आर्जवेन तिर्यक् स्पष्टदिग्ग्रहणेन बृहत्यौ मर्मणी" इति । बृहती – വരി ।

**बाहुमूलाभिसंबद्धे पृष्ठवंशस्य पार्श्वयोः ॥ २४ ॥**

**अंसयोः फलके बाहुस्वापशोषौ तयोर्व्यधात् ।**

बाह्वित्यादि । बाह्वोर्मूले यत्र बाहू प्रतिष्ठितौ । मूलं हि प्रतिष्ठा वृक्षमूलवत् । पृष्ठवंशस्य पार्श्वद्वये बाहुमूलयोः आभिमुख्येन संबद्धे संश्लिष्टे । के ते – अंसयोः फलके अंसफलके । असमासनिर्देशः छन्दोऽनुरोधात् । फलकशब्दस्य च नपुंसकत्वं 'लोकाश्रयत्वाल्लिङ्गस्ये'ति । अंसफलकाख्ये द्वे मर्मणी । तयोर्व्यधे बाह्वोः (स्वापशोषौ भवतः) ॥

**ग्रीवामुभयतः स्नाव्नी ग्रीवाबाहुशिरोन्तरे ॥ २५ ॥**

**स्कन्धांसपीठसंबन्धावंसौ बाहुक्रियाहरौ ।**

(ग्रीवाया उभयोः) पार्श्वयोः स्नाव्नी द्वे अंसौ मर्मणी उच्येते। क स्थितौ–ग्रीवाबाहुशिरोन्तरे। ग्रीवाया बाह्वोः शिरसश्च मध्ये, तेषामन्तराले स्थितौ अंसौ नाम मर्मणी। किंप्रयोजनौ – स्कन्धांसपीठसंबन्धार्थौ। अंसयोः पीठे इव पीठे प्रतिष्ठाने, यत्रांसौ तिष्ठतः। स्कन्धौ चांसपीठे च तेषां बन्धो बन्धनं प्रयोजनं ययोस्तावेवम्। तौ विद्धौ बाहुक्रियाहरौ। बाह्वोः क्रिया आकुञ्चनप्रसारणादिका तां हरतः। अंसम् – തോളു്। संग्रहे–"ग्रीवाबाहुशिरोमध्येंऽसपीठस्कन्धबन्धनावंसौ। तयोः स्तब्धबाहुता" इति। इन्दुः–"अंसौ ग्रीवादिमध्यगौ स्कन्धयोरंसपीठयोश्च बन्धनार्थौ" इति। एवं गुदो बस्तिर्नाभिर्हृदयं द्वे स्तनमूले द्वे स्तनरोहिते द्वावपस्तम्भौ द्वावपालापौ द्वे कटीकतरुणे द्वे कुकुन्दरे द्वौ नितम्बौ द्वौ पार्श्वसन्धी द्वे बृहत्यौ द्वे अंसफलके द्वावंसाविति षड्विंशतिर्मर्माण्यन्तराधौ उच्यन्ते॥

**कण्ठनालीमुभयतः सिरा हनुसमाश्रिताः॥ २६॥**
**चतस्रस्तासु नीले द्वे मन्ये द्वे मर्मणी स्मृते।**
**स्वरप्रणाशवैकृत्यं रसाज्ञानं च तद्व्यधे॥ २७॥**

कण्ठेत्यादि। कण्ठनालीमुभयतः कण्ठनाल्या उभयोः पार्श्वयोः सिराः याः चतस्रः हन्वोः समाश्रिताः तासु मध्ये द्वे सिरे नीले नाम द्वे मर्मणी। കരിഞരമ്പു്। मन्ये नाम द्वे मर्मणी स्मृते तन्त्रकृद्भिरिति शेषः। कण्ठनाल्यामेकस्मिन् पार्श्वे एका नीला नाम्ना सिरा एका मन्या तथैव द्वितीये। तद्व्यधे तासां व्यधे स्वरनाशादयो भवन्ति। स्वरस्य प्रणाशः स्वरप्रणाशः स्वरहानिः। अथवा वैकृत्यम्। कस्य, प्रकृतत्वात्स्वरस्यैव। स्वरभावान्यथात्वमित्यर्थः। रसाज्ञानं रसानवबोधः। "स्वरनाशो मूकता" इति हाटकः इन्दुश्च। संग्रहे–"कण्ठनालीमुभयतश्चतस्रो धमन्यः। तासां द्वे नीले। द्वे मन्ये। तासु मूकता स्वरवैकृत्यं रसाज्ञता वा भवति" इति॥

**कण्ठनालीमुभयतो जिह्वानासागताः सिराः।**
**पृथक् चतस्रस्ताः सद्यो घ्नन्त्यसून् मातृकाह्वयाः॥ २८॥**

कण्ठेत्यादि। कण्ठनाल्या उभयोः पार्श्वयोः जिह्वागताः सिराः तथा नासागताः पृथक् प्रत्येकं एकस्मिन् पार्श्वे चतस्रः द्वितीयपार्श्वे चतस्रः ता मातृ-

काह्वयाः मातृकासंज्ञाः विद्धाः सद्यो घ्नन्ति । एतानि मातृकाख्यानि सिरा-मर्माणि । संग्रहे—"ग्रीवामुभयतश्चतस्रश्चतस्रः सिरा मातृकाः । तासु सद्यो-मरणम् ।" इति । मातृका - തള്ളഞരമ്പു ॥

**कृकाटिके शिरोग्रीवासन्धी तत्र चलं शिरः ।**

कृकाटिके इत्यादि । शिरश्च ग्रीवा च तयोः सन्धाने यौ सन्धी पार्श्वद्वये कृकाटिकाख्ये ते द्वे मर्मणी । तत्र तस्मिन् मर्मद्वये विद्धे चलं सकम्पं शिरो भवति । कृकाटिका - പിൻതല ॥

**अधस्तात्कर्णयोर्निम्ने विधुरे श्रुतिहारिणी ॥ २९ ॥**

अधस्तात्कर्णयोः कर्णपृष्ठयोरधो निम्ने नोन्नते विधुरे विधुराख्ये द्वे मर्मणी । विधुरा - ഉഴമാല । ते च विद्धे सती श्रुतिं शब्दश्रवणं हरतः । श्रुतिहारिणी बाधिर्यकारिणी इत्यर्थः ॥

**फणावुभयतो घ्राणमार्गं श्रोत्रपथानुगौ ।**
**अन्तर्गलस्थितौ वेधाद्गन्धविज्ञानहारिणौ ॥ ३० ॥**

फणावित्यादि । फणौ नाम मर्मविशेषौ घ्राणमार्गस्योभयोः पार्श्वयोः श्रोत्र-पथानुगौ श्रोत्रमार्गप्राप्तौ अन्तर्गलस्थितौ गलाभ्यन्तरे स्थितौ, फणाविव संस्थानं रूपमनयोः । फणाविति नाम । वेधाद् गन्धविज्ञानं गन्धोपलब्धिः तद्धरतः तौ गन्धविज्ञानहारिणौ । इन्दुनाप्युक्तं—"घ्राणस्रोतसोर्द्वयोः पार्श्वयोरन्तरालप्रदेशे[1] फणौ नाम मर्मणी । तौ च श्रोत्रस्रोतःप्रतिबद्धौ । तयोर्व्यधेन गन्धाज्ञानं भवति" इति । फणम् - തലഫ്ക്കി[2] ॥

**नेत्रयोर्बाह्यतोऽपाङ्गौ भ्रुवोः पुच्छान्तयोरधः ।**
**तथोपरि भ्रुवोर्निम्नावावर्तावान्ध्यमेषु तु ॥ ३१ ॥**

नेत्रयोरित्यादि । नेत्रयोर्द्वयोर्बाह्यतो बहिर्भागे भ्रुवोः पुच्छान्तयोरधः अपाङ्गौ नाम मर्मविशेषौ प्रसिद्धावेव । इन्दुरपि—"भ्रुवोः संबन्धिनोः पुच्छान्त-योरधः" इत्याह । तथोपरीति । तेनैवापाङ्गोद्दिष्टेन न्यायेन भ्रुवोः पुच्छान्तयोः उपरि निम्नावावर्तौ नाम मर्मविशेषौ । एषु तु अपाङ्गावर्तेषु चतुर्षु विद्धस्य नरस्य

१. 'योरन्तःशिरसि गलप्रदेशे' इति मुद्रिते । २. 'ഫ്ക്കി' घपाठः ।

आन्ध्यमदर्शनं भवति । अपाङ्गम् - കടക്കണ്ണ്" । आवर्तम् - പുരികച്ചുഴി ।
इन्दुरपि —"भ्रुवोः संबन्धिनोः पुच्छान्तयोः" इत्याह ॥

**अनुकर्णं ललाटान्ते शङ्खौ सद्योविनाशनौ ।**

अनुकर्णमित्यादि । अत्रापि भ्रुवोः पुच्छान्तयोरुपरि ललाटान्ते ललाटावसाने अनुकर्णं कर्णसमीपे शङ्खौ नाम मर्मविशेषौ । तौ विद्धौ पुरुषस्य सद्योविनाशनौ भवतः । शङ्खम् - തലച്ചുങ്ക" । संग्रहे-"भ्रुवोः पुच्छान्तयोरक्ष्णोर्बाह्यतोऽपाङ्गौ । तयोरान्ध्यम् । भ्रुवोः पुच्छान्तयोः उपर्यनुकर्णं ललाटे शङ्खौ । तयोः सद्योमरणम् । भ्रुवोरुपरि निम्नयोरावर्तौ । तयोरान्ध्यं दृष्ट्युपघातो वा" इति । इन्दुः-"भ्रुवोः संबन्धिनोः पुच्छान्तयोः (बाह्यान्तयोरध अक्ष्णोश्च बहिरपाङ्गौ मर्मणी । ललाटे भ्रुवोः पुच्छान्तयोरुपरि कर्णमनु कर्णं प्रति शङ्खौ नाम मर्मणी । तयोर्व्यधे सद्यो मरणम् । भ्रुवोरुपरि निम्नयोः प्रदेशयोरावर्तौ नाम्ना द्वे मर्मणी) तयोर्व्यधे आन्ध्यमदर्शनम् । अथवोपघातमात्रं दृष्टेः" इति ॥

**केशान्ते शङ्खयोरूर्ध्वमुत्क्षेपौ, स्थपनी पुनः ॥ ३२ ॥**
**भ्रुवोर्मध्ये, त्रयेऽप्यत्र शल्ये जीवेदनुद्धृते ।**
**स्वयं वा पतिते पाकात् सद्यो नश्यति तूद्धृते ॥ ३३ ॥**

केशान्त इत्यादि । केशावसाने शङ्खयोरूर्ध्वमुपरि उत्क्षेपौ मर्मणी । स्थपनी पुनः मर्म भ्रुवोः मध्ये । त्रयेऽप्यस्मिन् मर्मत्रये द्वावुत्क्षेपौ एका स्थपनी, एवम्भूते विद्धे पुरुषोऽनुद्धृते शल्ये जीवेत् । अथवा कालान्तरेण पाकात पाकेन हेतुना स्वयं वा पतिते शल्ये सति जीवेत् । नतूद्धरणेन हेतुना जीवेत्पुरुषः । सद्य इत्यादि । उद्धृते तु शल्ये सद्य एव नरो नश्यति । वायुकोपादिति भावः । इन्दुनाप्युक्तं-"सशल्योऽपि जीवति पाकाद्वा स्वयं पतिते शल्ये जीवति ।" इति ॥ उत्क्षेपम् - എട്ടനെററി । स्थपनी - കൊട്ടകൊള്ളി ।

**जिह्वाक्षिनासिकाश्रोत्रखचतुष्टयसङ्गमे ।**
**तालुन्यास्यानि चत्वारि स्रोतसां तेषु मर्मसु ॥ ३४ ॥**
**विद्धः शृंगाटकाख्येषु सद्यस्त्यजति जीवितम् ।**

जिह्वेत्यादि । जिह्वा चाक्षिणी च नासिका च श्रोत्रे च तदेवं, तस्य खानि, तेषां चतुष्टयं चत्वारि स्रोतांसि तस्य सङ्गमः सन्निपातो यस्मिन् तस्मिन् तालुनि, यत्र जिह्वादीनां तर्पणानि स्रोतांसि सन्निपत्यावतिष्ठन्ते, जिह्वादिस्रोतसां चत्वार्यास्यानि शृङ्गाटकाख्यानि । तेषु शृङ्गाटकाख्येषु मर्मसु विद्धः पुरुषः सद्यः जीवितं त्यजति विद्धमात्र एव प्राणैर्वियुज्यते । हाटकोऽप्याह–"जिह्वादिस्रोतसां चतुष्टयस्य सङ्गमः सन्निपातो यस्मिन् तस्मिन् तालुनि जिह्वादिस्रोतसां चत्वारि मुखानि शृङ्गाटकाख्यानि । तेषु विद्धः सद्यो जीवितं त्यजति जहाति ।" "जिह्वादीनां खानि सिरा इत्यर्थः" इत्यस्मद्गुरवः । संग्रहे–"जिह्वाघ्राणाक्षिश्रोत्रतर्पणीनां सिराणां तालुनि सन्निपातः, तासां मुखानि चत्वारि शृङ्गाटकसंज्ञानि । तेषु सद्यो मरणम्" इति । इन्दुः–"जिह्वादिसन्तर्पणीनां सिराणां तालुनि सन्निपातो भवति । तासां यानि बह्वीनामपि चत्वारि मुखानि तानि शृङ्गाटकाख्यानि मर्माणि । तेषां व्यथे सद्यो मरणम्" इति ॥

**कपाले सन्धयः पञ्च सीमन्तास्तिर्य[1]गूर्ध्वगाः[2] ॥ ३५ ॥**
**भ्रमोन्मादमनोनाशैस्तेषु विद्धेषु नश्यति ।**

कपाले इत्यादि । शिरःसंबन्धिनः पञ्च सन्धयः । पञ्चकपालानां ये संश्लेषार्थाः शिरस्यवतिष्ठन्ते तिर्यगूर्ध्वगाः त एव सीमन्ताख्याः मर्मविशेषाः । तेषु सीमन्ताख्येषु विद्धेषु भ्रमेण तथोन्मादेन मनोनाशेन चित्तविस्मृत्या नश्यति । संग्रहे–"पञ्च सन्धयः शिरसि तिर्यगूर्ध्वं च सीमन्ताः । तेषु उन्मादभ्रमचित्तनाशैर्मरणम्" इति । अत्रेन्दुः–"पञ्च शिरसि कपालानां सन्धयः पञ्च मर्माणि । तत्र द्वौ ललाटपार्श्वयोः । केशान्तावस्थितौ द्वौ । कृकाटिकापार्श्वयोरूर्ध्वगौ सन्धी । तयोरुपरि तिर्यगृजुसन्धिः" इति । सीमन्तम् - ഓട്ടിപ്പൊളത്തു° ।

**आन्तरो मस्तकस्योर्ध्वं सिरासन्धिसमागमः ॥ ३६ ॥**
**रोमावर्तोऽधिपो नाम मर्म सद्यो नि[3]हन्त्यसून् ।**

आन्तर इत्यादि । मस्तकस्याभ्यन्तरतो यः स्थितः तथोर्ध्वं प्रकृतत्वान्मस्तकस्योपरि सिरासन्धिसमागमः सिरासन्धीनां सन्निपातो रोमावर्तलक्षणः

---

१. 'न्ता नाम । तेषु' । २. 'न्धिः सीमन्तास्तेषु विद्धेषून्मादादिभिर्मरणम्' ।
३. 'हरन्त्यसून्' इति मुद्रिते ।

सोऽधिपो नाम मर्मविशेषः मर्मणामधिपो यथार्थनामा, तदायत्तानि हि सर्वाणि मर्माणीत्यर्थः । सोऽधिपो विद्धो नरस्य सद्योऽसून् निहन्ति पुरुषं मारयतीत्यर्थः । हाटकोऽप्याह--"अन्तर्मस्तकं (संविध्य:सर्वोर्ध्वे) सिरासन्धिसमागमो रोमावर्त-लक्षणोऽधिपतिर्नाम मर्म मर्मणामधिप इत्यन्वर्थसंज्ञः" इति । असद्गुरवोऽपि "रोमावर्त इति चिह्न"मित्युक्तवन्तः । संग्रहे--"मस्तकाभ्यन्तरेत उपरिष्टात् सिरा-सन्धिसन्निपातो रोमावर्तः सोऽधिपतिर्नाम । तत्रापि सद्यो मरणं भवती"ति । इन्दुः--"अन्तर्मस्तकं सर्वोर्ध्वसिरासन्धीनां सङ्गमो रोमावर्तो नाम मर्म । स एवा-धिपत्याख्यः ।" इति । एवं द्वे नीले द्वे मन्ये अष्टौ मातृकाः द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वौ शङ्खौ द्वावावर्तौ द्वावुत्क्षेपौ एका स्थपनी पञ्च सीमन्ताः चत्वारि शृङ्गाटकानि एकोऽधिपतिपर्याय आवर्तः इत्येतानि सप्तत्रिंश-च्छिरसि मर्माणि" इति ।

सप्तोत्तरस्य मर्मशतस्य लक्षणमुक्त्वा सामान्येन मर्मलक्षणमाह--

**विषमं स्पन्दनं यत्र पीडिते रुक् च मर्म तत् ॥ ३७ ॥**

विषममित्यादि । अन्यथा प्रोक्तमिन्दुना--"मर्मणां नाम स्थानं च ज्ञातं, लक्षणं न ज्ञातमतस्तद्विज्ञानार्थमाह--विषममित्यादि" इति । यत्र यस्मिन् देहदेशे विषमं स्पन्दनं स्फुरणं, न समं स्पन्दनं तन्मर्म । यत्र देहदेशे पीडिते सति रुक् च विषमा भवति तच्च मर्म । अत्रापि विषममिति संबध्यते । विषमं च विषमा च विषमम् । "नपुंसकमनपुंसकेनैकवच्च--' (पा० सू० १-२-६९) इति नपुंसकशेषः । तदेवं मर्मलक्षणं द्विधा मन्तव्यम् । कस्यचिन्मर्मणः सिराधमन्यादि-रूपस्य विषमं स्पन्दनं प्रायो लक्षणम् । मांसास्थिजातीयस्य मर्मणः पीडनात्प्रायः पीडोत्पत्तिर्लक्षणम् इति । संग्रहे--"सामान्यलक्षणं पुनर्मर्मणां पीडिते रुजोत्पत्तिः विषमं च स्पन्दन"मिति । इन्दुः--"सामान्यलक्षणं सर्वमर्मणामिदं लक्षणमित्यर्थः । विषममनेकरूप"मिति । मर्मविद्धस्य च लक्षणमुक्तं संग्रहे--"यथा सामान्येनैव च--

देहप्रसुप्तिर्गुरुता संमोहः शीतकामता ।
स्वेदो मूर्च्छा वमिर्दाहो मर्मविद्धस्य लक्षणम् ॥"

इति । इन्दुः--"सामान्येनैव चेत्यस्य देहप्रसुप्तिरित्यादिना सम्बन्धः । प्रसुप्तिः

१. 'रे उप' । २ 'वमिः श्वासो मर्म' इति मुद्रिते ।

छेदाद्यनवबोधः' इति । मरणकारित्वान्मर्म मरणसदृशदुःखदायित्वाद्वा इति मर्मशब्दस्य निर्वचनम् । अथवा मः प्राणस्तस्य गृहं मर्म ॥

इदानीं मर्मणां सप्रभेदं लक्षणं षट्प्रकारमाह मांसास्थीत्यादिना—

**मांसास्थिस्नायुधमनीसिरासन्धिसमागमः ।**
**स्यान्मर्मेति च तेनात्र सुतरां जीवितं स्थितम् ॥ ३८ ॥**

"........मर्मणां स्वरूपमाहे"त्युक्तवान् । "मांसेत्यादिना मर्मणां षट्प्रकारतामाहे"ति **सारकृत्** । मांसादीनां सन्ध्यन्तानां सजात्यपेक्षो यः समागमः सन्निपातः स मर्माख्यः मर्म इति तस्य नाम । तदेवम्—मांसपेशीसमागमो मांसमर्म, अस्थ्नां समागमोऽस्थिमर्म, स्नायूनां समागमः स्नायुमर्म इत्यादि । यतो मांसादीनां यः समागमः स एव मर्मेत्युच्यते तेन हेतुना अत्र सुतरां जीवितं स्थितम् । प्राणा व्यवस्थिताः ॥

ननु यदि मांसादीनां यः समागमो मर्मेत्यभिधीयते तदानीमनेकसङ्ख्याकानि मर्माणि शरीरे संभाव्येरन् । मांसपेश्यादिभावानामनेकसंख्याश्रयत्वात् । तथा च मांसपेशीशतानि पञ्च पुंसामुक्तानि । स्त्रीणां तु तानि विंशत्यधिकानि । एवमस्थ्यादीनि चाप्यनेकान्युक्तानि । ततश्च मर्मणामसंख्येयत्वं प्राप्नोति । एवं च सप्तोत्तरं मर्मशतं इति विरुध्यत इत्याह—

**बाहुल्येन तु निर्देशः षोढैवं मर्मकल्पना ।**
**प्राणायतनसामान्यादैक्यं वा मर्मणां मतम् ॥ ३९ ॥**

बाहुल्येनेत्यादि । सप्तोत्तरमेव मर्मणां शतमिति न, किं तर्हि पूर्वोक्तेन न्यायेन बहूनि मर्माणि । सप्तोत्तरं मर्मशतमित्ययं तु यो निर्देशः स बाहुल्येन भूयसा येषां मर्मणां मर्मत्वेन प्रसिद्धिः तद्विषय एव । भूयस्त्वमेषु जीवितायतनत्वेन । एवमनेन प्रकारेण मांसास्थ्यादीनां समागमो मर्मेति मर्मणां षोढा षड्विधा कल्पना भवति । कल्पनाशब्देनैतत्प्रतिपादयति— तदेवं मनुष्यस्य प्रसिद्धितो जीवितधामत्वेन मर्मणां कल्पना निरूपणा । **संग्रहे**—"तत् पुनः मांससिरास्नाय्वस्थिसन्धिसन्निपातस्तेन तस्मिन् पीड्यमाने विशेषतः प्राणाबाधः । बाहुल्येन तु निर्देशः । तस्मान्मांसाद्याश्रयतो मर्माणि पञ्चधा भिद्यन्ते ।" इति ।

**इन्दुः**—"तत्पुनर्मर्म मांसादिसन्निपातस्तेषां मिश्रीभावेन एकत्र अवस्थानं, तेन हेतुना तस्मिन् मर्मणि पीडितेऽधिकं प्राणानामाबाधो भवति। मांसादीनां पञ्चानां यद्यपि मिश्रीभावेन सर्वं मर्म भवति, तथापि योऽयं मांसमर्म सिरामर्मेत्यादिव्यपदेशः स बाहुल्यकृत एव। यत्र मांसस्य बाहुल्यं तत्र मांसेन व्यपदेशः। यत्र सिराणां तत्र सिराभिः। एवमन्यत्रापि वाच्यम्। एवं मांसादिभेदेन पञ्चधा मर्माणि" इति। यैर्धमनीस्थं मर्म न स्मृतं तेषां पक्षमाश्रित्य पञ्चधेत्युक्तम्। प्राणेत्यादि। अथवा न मर्मणां षोढा कल्पना। किं तर्हि प्राणायतनसामान्याद् जीवितस्याधिष्ठानमित्येवंलक्षणादैक्यमेकत्वं मर्मणां मतं न षट्त्वम्। एवमेकैव मर्मकल्पना। एवं संक्षेपविस्तरकौशलं मर्मसु दर्शयति। **हाटको**ऽप्याह—"प्राणायतनसामान्याज्जीविताधिष्ठानलक्षणैक्यान्मर्मणामैक्यं मतम्" इति॥

मांसादीनां सन्ध्यन्तानां यथास्वं प्रतिनियतानि मर्माणि संख्ययाभिधातुमाह—

**मांसजानि दशेन्द्राख्यतलहृत्स्तनरोहिताः।**

मांसजानीत्यादि। जङ्घयोरिन्द्राख्ये द्वे मर्मणी। तथा बाह्वोर्द्वे। एवं तलहृदाख्यानि मर्माणि चत्वारि पादयोर्द्वे हस्तयोर्द्वे इति। स्तनरोहिते द्वे प्रत्येकं स्तने एकैकम्। एवं दश मांसजानि। **अस्मद्गुरवो**ऽप्याहुः—"दश मांसमर्माणि यथा चतुर्षु करचरणेषु चत्वारि इन्द्राख्यानि इन्द्रवस्त्याख्यानि चत्वारि तलहृदयानि द्वे स्तनरोहिते" इति॥

**शङ्खौ कटीकतरुणे नितम्बावंसयोः फले॥ ४०॥**
**अस्थ्न्यष्टौ**

अस्थ्न्यष्टौ मर्माणि। शङ्खौ द्वे मर्मणी। कटीकतरुणे द्वे। नितम्बौ द्वौ। अंसफलके द्वे। इत्येवमष्टौ॥

**स्नावमर्माणि त्रयोविंशतिराणयः।**
**कूर्चकूर्चशिरोऽपाङ्गक्षिप्रोत्क्षेपांसवस्तयः॥ ४१॥**

स्नावमर्माणि त्रयोविंशतिः। कथम्। आणयः चत्वारि। प्रत्येकमूरुद्वये एकैकं बाह्वोश्च प्रत्येकमेकैकमेवं चत्वारि आणयः। कूर्चाख्यानि चत्वारि। हस्तयोर्द्वे पादयोर्द्वे। कूर्चशिरःसंज्ञानि चत्वारि, पादयोर्द्वे हस्तयोर्द्वे

इति । अपाङ्गाख्ये द्वे 'नेत्रयोर्बाह्यत' इत्यादिना निर्दिष्टे । क्षिप्राख्यानि चत्वारि पादयोर्द्वे हस्तयोर्द्वे इति । उत्क्षेपौ द्वौ । अंसाख्ये द्वे । बस्तिरेको 'मूत्राशय' इत्यादिनोक्तः । एवं स्नावमर्माणि त्रयोविंशतिः ॥

**गुदापस्तम्भविधुरशृङ्गाटानि नवादिशेत् ।**
**मर्माणि धमनीस्थानि**

गुदेत्यादि । गुदः एकं, अपस्तम्भाख्ये द्वे, विधुराख्ये द्वे, शृङ्गाटकाख्यानि चत्वारि एवं धमनीस्थानि धमन्याश्रितानि मर्माणि नव ॥

**सप्तत्रिंशत्सिराश्रयाः ॥ ४२ ॥**

**बृहत्यौ मातृका नीले मन्ये कक्ष्याधरौ फणौ ।**
**विटपे हृदयं नाभिः पार्श्वसन्धी स्तनाधरे ॥ ४३ ॥**
**अपालापौ स्थपन्युर्व्यश्चतस्रो लोहितानि च ।**

सिराश्रयाः मर्मविशेषाः सप्तत्रिंशत् । कथमित्याह—बृहत्यौ द्वे । मातृकाख्यान्यष्टौ । नीलाख्ये द्वे । मन्ये द्वे । कक्ष्याधरौ द्वौ । फणौ द्वौ । विटपे द्वे । हृदयमेकमेव । नाभिरेक एव । पार्श्वसन्धी द्वौ । स्तनाधरे स्तनमूले द्वे । अपालापौ द्वौ । स्थापनी एकैव । उर्व्यश्चतस्रः ऊर्वोः द्वयोः द्वे बाह्वोर्द्वे । लोहितानीति लोहिताक्षनामानि चत्वारि, पादयोर्द्वे हस्तयोर्द्वे ॥

सम्प्रति सन्धिमर्माण्याह—

**सन्धौ विंशतिरावर्तौ मणिबन्धौ कुकुन्दरौ ॥ ४४ ॥**
**सीमन्ताः कूर्परौ गुल्फौ कृकाट्यौ जानुनी पतिः ।**

सन्धावित्यादि । सन्धौ विंशतिर्मर्माणि । आवर्तकाख्ये द्वे, मणिबन्धौ द्वौ, कुकुन्दरे द्वे, सीमन्ताख्यानि पञ्च, कूर्परौ द्वौ । कूर्परशब्दः उभयलिङ्गः । गुल्फौ द्वे मर्मणी, कृकाट्यौ द्वे, जानुनी द्वे, पतिरधिपतिर्नाम मर्म एकम् । इत्येवं सप्तोत्तरं मर्मशतं मांसादिपरिकल्पनया कल्पितम् ॥

**मांसमर्म गुदोऽन्येषां स्नाव्नी कक्ष्याधरौ तथा ॥ ४५ ॥**

१-२. 'कक्षाधरौ' इति मुद्रिते ।

**विटपौ विधुराख्ये च शृङ्गाटानि सिरासु तु ।**
**अपस्तम्भावपाङ्गौ च धमनीस्थं न तैः स्मृतम् ॥ ४६ ॥**

अन्येषामाचार्याणां मतेन गुदो मांसमर्म न धमनीमर्म । स्नाव्वीत्यादि । तेषामेव मतेन कक्ष्याधरौ स्नावाश्रितौ न तु सिराश्रयौ । विटपौ विधुराख्ये च स्नावाश्रितौ । पूर्वमतेन तु विटपौ सिराश्रितौ विधुरे च धमन्याश्रिते । शृङ्गाटकानि चत्वार्यपि सिरास्वेव । तुरत्र ह्यवधारणे । न तु धमनीस्थानि । अपस्तम्भावपाङ्गौ च सिरास्वेव । एतद् धमनीस्थं तैः अन्यैराचार्यैर्न स्मृतम् । अपि तु स्नावाश्रितमभिहितम् ॥

इदानीं मांसादिजानां मर्मणां वेधे लक्षणमाह—

**विद्धेऽजस्रमसृक्स्रावो मांसधावनवत्तनुः ।**
**पाण्डुत्वमिन्द्रियाज्ञानं मरणं चाशु मांसजे ॥ ४७ ॥**

विद्ध इत्यादि । मांसजे मर्मणि विद्धे सत्यनवरतमसृक्स्रावो भवति । मांसधावनवन्मांसधावनोदकेन तुल्यः, तथा तनुः अच्छो भवति न बहलः । पाण्डुत्वं श्वेताभासत्वं शरीरस्य । इन्द्रियैश्चक्षुरादिभिः स्वविषयस्याज्ञानमनवबोधः आशु शीघ्रं मरणं च । इन्द्रबस्त्यादिके मांसजे मर्मणि विद्धे निरन्तरसृक्स्रावादिसर्वलिङ्गदर्शनानुमानेन मरणमनुमीयमानं बुद्ध्वा वैद्यः प्रत्याख्याय चिकित्सां प्रयोजयेत् । नियतायुषां केषाञ्चिन्मरणव्यभिचारादिति ॥

**मज्जान्वितोऽच्छो विच्छिन्नः स्रावो रुक् चास्थिमर्मणी ।**

अस्थिमर्मणि शङ्खादिके विद्धे मज्जान्वितो रक्तस्रावो विच्छिन्नो न मांसव्यथ इव निरन्तरः । तथा अच्छो न घनो भवति । 'रुक् चे'त्यनेनात्यर्थं पीडा भवतीति प्रतिपादयति । रुङ्मात्रस्य सर्वमर्मस्वपि सम्भवात् ॥

**आयामाक्षेपकस्तम्भा स्नावजेऽभ्यधिकं रुजा । ४८ ॥**
**यानस्थानासनाशक्तिर्वैकल्यमथवान्तकः ।**

स्नावजे कूर्चादिके मर्मणि विद्धे आयामादयो भवन्ति । आक्षेपकः । स्तम्भो यथास्वमङ्गानाम् । अतिरुजा च । तथा यानस्थानासनाशक्तिः यातुं स्थातुमासितुं च असामर्थ्यम् । वैकल्यं चाङ्गानाम् । अथवा अन्तको मरणं भवति ॥

**रक्तं सशब्दफेनोष्णं धमनीस्थे विचेतसः ॥ ४९ ॥**

धमनीस्थे अपस्तम्भादौ मर्मणि विद्धे सति विचेतसो मूर्च्छितस्य सतो रक्तं स्रवेत् । कीदृशम्—सशब्दफेनोष्णं सशब्दं सफेनं सोष्णं च । सशब्दस्यात्र प्रत्येकं सम्बन्धः ॥

**सिरामर्मव्यधे सान्द्रमजस्रं बह्वसृक्स्रवेत् ।**
**तत्क्षयात्तृड्भ्रमश्वासमोहहिध्माभिरन्तकः ॥ ५० ॥**

सिरामर्मणो बृहत्यादेः व्यधे सत्यसृक् सान्द्रं घनमजस्रं निरन्तरं बहु प्रभूतं स्रवति । तत्क्षयात् तस्यासृजः क्षयात् तृड्भ्रमादिभिरन्तको जीवितनाशः ॥

**वस्तु शूकैरिवाकीर्णं रूढे च कुणिखञ्जता ।**
**बलचेष्टाक्षयः शोषः पर्वशोफश्च सन्धिजे ॥ ५१ ॥**

वस्त्वित्यादि । सन्धिजे मर्मणि विद्धे वस्तु शूकैरिवाकीर्णं भवति । वस्तुशब्देनाधिष्ठानं विद्धदेश उच्यते । तत् शूकैः शालियवादिसम्बन्धिभिः व्याप्तमिव भवति । **पाठ्येऽप्युक्तं**—"वस्तु व्रणवस्तु त्वङ्मांसादी"ति । रूढे च तस्मिन् मर्मव्यधे कुणिता खञ्जता वा भवति । खञ्जता - കാൽകോട്ടുക । तथा बलचेष्टयोः क्षयः । तथा शोषोऽङ्गस्य, पर्वसु शोफः श्वयथुश्च सन्धिजे भवति ॥

इदानीमेषामेव मर्मणां व्यधे जीवितकालं नियमयति—

**नाभिशङ्खाधिपापानहृच्छृङ्गाटकवस्तयः ।**
**अष्टौ च मातृकाः सद्यो निघ्नन्त्येकान्नविंशतिः ॥ ५२ ॥**
**सप्ताहः परमस्तेषां कालः कालस्य कर्षणे ।**

नाभीत्यादि । इन्दुना तूक्तं—"तानि च मर्माणि मांसादिभेदेन षोढा प्रोक्तानि पुनरन्येन प्रकारेण सद्यःप्राणहरत्वादिना पञ्चधोच्यन्ते । कानिचित् सद्यःप्राणहराणि कानिचित्कालान्तरप्राणहराणि अन्यानि विशल्यघ्नानि अन्यानि वैकल्यजननानि अन्यानि रुजाकराणीति पञ्चप्रकाराणि" इति । तत्र नाभिशङ्खादीनि मर्माणि एकोनविंशतिः सद्यो निघ्नन्ति । नाभिरेकः शङ्खौ द्वौ अधिपतिरेकः, अपानोऽपि एकः, हृदेकं, शृङ्गाटकानि चत्वारि, वस्तिरेकः, अष्टौ च

मातृकाः एवमेकोनविंशतिरेतानि सद्यःप्राणहराणि । तेषां मर्मणां कालस्य मृत्योः कर्षणे सप्ताहः परमः कालः प्रकृष्टोऽवधिः । **संग्रहे**—"गुदबस्तिनाभिहृदयमातृकाशङ्खशृङ्गाटकाधिपतय एकोनविंशतिः सद्यःप्राणहराणि आग्नेयत्वात्तेषां सप्तरात्राभ्यन्तरः कालः" इति । आग्नेयत्वमाशुमरणे हेतुः । एकान्नविंशतिरिति, न विंशतिरिति 'सुप् सुपे'ति समासः । तत एकेन नविंशतिरिति 'तृतीये'ति योगविभागात्समासः । 'एकादिश्चैकस्य चादुक्' (पा०सू० ६-३-७६) इति नञः प्रकृतिभावः एकस्य चादुगागमः । ऊनार्थेऽत्र नञ् । एकोनविंशतिरित्यर्थः ॥

**त्रयस्त्रिंशदपस्तम्भतलहृत्पार्श्वसन्धयः ॥ ५३ ॥**
**कटीतरुणसीमन्तस्तनमूलेन्द्रवस्तयः ।**
**क्षिप्रापालापबृहतीनितम्बस्तनरोहिताः ॥ ५४ ॥**
**कालान्तरप्राणहरा मासमासार्धजीविताः ।**

त्रयस्त्रिंशदपस्तम्भादयः कालान्तरप्राणहराः कालान्तरं विलम्बितं प्राणहराः । मासं मासार्धं वा जीवितं येषु विद्धेषु इति मासमासार्धजीविताः । मासेन प्राणान् हरन्ति मासार्धेन वेत्यर्थः । प्रहारादिवशादनियमः । **संग्रहे** तूक्तं—"सौम्याग्नेयत्वात्तेषां मर्मणां पक्षाभ्यन्तरं कालः । तेष्वपि तु क्षिप्राणि कदाचिदाशु" इति । त्रयस्त्रिंशदिति 'त्रेस्त्रयः' (पा० सू० ६-३-४८) इति त्रयसादेशः । तत्र अपस्तम्भौ द्वौ, तलहृदयानि चत्वारि, पार्श्वसन्धी द्वौ, कटीतरुणे द्वे, सीमन्ताः पञ्च, स्तनमूले द्वे, इन्द्रवस्तयश्चत्वारः पादयोर्द्वौ बाह्वोर्द्वौ, क्षिप्राणि चत्वारि हस्तयोर्द्वे पादयोर्द्वे, अपालापबृहतीनितम्बस्तनरोहिताः प्रत्येकं द्वौ द्वाविति त्रयस्त्रिंशत् ॥

**उत्क्षेपौ स्थपनी त्रीणि विशल्यघ्नानि, तत्र हि ॥ ५५ ॥**
**वायुर्मांसवसामज्जमस्तुलुङ्गानि शोषयन् ।**
**शल्यापाये विनिर्गच्छन् श्वासात्कासाच्च हन्त्यसून् ॥ ५६ ॥**

उत्क्षेपौ द्वौ स्थपनी एका इत्येतानि त्रीणि विशल्यघ्नानि । ननु कोऽत्र हेतुरित्याह—तत्र हीत्यादिना । **हाटको**ऽप्याह—"विशल्यघ्नत्वे तेषां हेतुमाह तत्रेत्यादि" इति । हि यस्मात्तत्र व्यधे शल्यापाये वायुर्विनिर्गच्छन् निर्यान्

मांसादीन् शोषयन् श्वासकासाभ्यां प्राणान् हन्ति । अत्र च हेतौ शतृप्रत्ययः। निर्गमनेन हेतुना मांसादीनां शोषणं भवति । **संग्रहे**---"उत्क्षेपौ स्थपनी च त्रीणि विशल्यघ्नानि वायव्यत्वात् । शल्यमुखावरुद्धो हि यावदत्र वायुः तिष्ठति तावद् जीवति" इति । **इन्दुः**—"त्रीणि विशल्यघ्नानि । तानि वायव्यानि । शल्ये आकृष्टे वायोः व्रणेन निर्गमनान्न जीवत्यत एव विशल्यं घ्नन्ति न तु सशल्यम् । तत्र द्वावुत्क्षेपौ एका स्थपनीति त्रीणि" इति ॥

**फणावपाङ्गौ विधुरौ नीले मन्ये कृकाटिके ।**
**अंसांसफलकावर्तविटपोर्वीकुकुन्दराः ॥ ५७ ॥**
**सजानुलोहिताक्षाणि कक्ष्याध्रक्कूर्चकूर्पराः ।**
**वैकल्यमिति चत्वारि चत्वारिंशच्च कुर्वते ॥ ५८ ॥**
**हरन्ति तान्यपि प्राणान् कदाचिदभिघाततः ।**

फणावित्यादि । फणादीनि विटपान्तानि प्रत्येकं द्वौ द्वौ । उर्व्यश्चतस्रः । कुकुन्दरौ द्वौ । जानू द्वौ । लोहिताक्षाणि चत्वारि । आणयश्चतस्रः । कक्ष्याधरौ द्वौ । कूर्चाश्चत्वारः हस्तयोर्द्वौ पादयोर्द्वौ । कूर्परौ द्वावित्येवं चत्वारि चत्वारिंशच्चेति चतुश्चत्वारिंशन्मर्माणि वैकल्यं देहस्य कुर्वते । वैकल्यकराणि सौम्यत्वात् । "सोमो हि स्थैर्यशैत्याभ्यां प्राणान् धारयति" इति **संग्रहे** । तान्यपि चतुश्चत्वारिंशत् कदाचित्प्राणान् हरन्ति मारयन्ति अभिघाततोऽभिघातात् ॥

**अष्टौ कूर्चशिरोगुल्फमणिबन्धा रुजाकराः ॥ ५९ ॥**

अष्टावित्यादि । अष्टौ कूर्चशिरआदयो मर्मविशेषाः रुजाकराः । अग्नि-वायुसोमगुणबाहुल्यात् । अग्निवायू विशेषेण शूलकरौ सोमस्तु प्राणावलम्बकः । इति नैतानि प्राणहन्तॄणि । तत्र कूर्चशिरांसि चत्वारि हस्तयोर्द्वे पादयोर्द्वे । गुल्फौ द्वौ मणिबन्धौ द्वावित्यष्टौ । **संग्रहे**—"कूर्चशिरोगुल्फमणिबन्धनान्यष्टौ रुजाकराण्यग्निवायुसोमैबाहुल्यात् । अग्निवायू विशेषेण रुजाकरौ । सोमस्तु प्राणावलम्बकः इति । अन्ये त्वाहुः मांसादीनां पञ्चानामपि विवृद्धानां समवायात्

---

१. 'कक्षाध' । २. 'बन्धास्त्वष्टौ' । ३. 'सोमगुणबाहुल्यात्' ।
४. 'णानवलम्बत इत्युक्तम् । अन्ये' इति मुद्रिते ।

सद्यःप्राणहराणि । एकैकहीनानामल्पानां च क्रमादितराणि स्वभावत एव । अन्ये वदन्ति प्रतिनियतकर्माणि[1] मर्माणि चन्द्रसूर्यायस्कान्तोपलानामिवाम्बुवह्नि-काललोहसंश्लेषाः" इति । इन्दुः—"अन्ये त्वाचार्याः आग्नेयत्वं हेतुं परित्यज्य सद्यःप्राणहरत्वे पूर्वोक्तमांसादिपञ्चकस्यानूनाधिकभावेन[2] वृद्धस्य हेतुत्वं वदन्ति । यदा नाभ्यादीनामे[3]कोनविंशतेः मांसादीनां समानाधिकानां सन्निपातस्तदा सद्यः-प्राणहरत्वमित्यर्थः । आदिशब्देनास्थिस्नायुसिरासन्धीनां ग्रहणम् । इतराणि कालान्तरप्राणहरादीनि चत्वार्येकैकेन हीनानां मांसादीनां स्वल्पानां च सन्नि-पाताद्भवन्तीति । तेन मांसादीनामन्यतमेनैकेन हीनानां कालान्तरप्राणहराणि । द्विहीनानां विशल्यघ्नानि । त्रिहीनानां वैकल्यजननानि । एकस्यैव सद्भावाद् रुजाकराणि । अन्ये त्वाचार्याः न सौम्यत्वाग्नेयत्वादिकं हेतुं वदन्ति । नापि विशिष्टस्य मांसादेः सन्निपातम् । अपि तु स्वभावमेव हेतुत्वेन उद्दिशन्ति । यथा चन्द्रकान्तादीनामम्बुजन्मादा"विति ॥

तानि च मर्माणि पुनर्मानभेदेन पञ्चविधानीत्याह—

**तेषां विटपकक्षाधृगुर्व्यः कूर्चशिरांसि च ।**
**द्वादशाङ्गुलमानानि, द्व्यङ्गुले मणिबन्धने ॥ ६० ॥**
**गुल्फौ च स्तनमूले च, त्र्यङ्गुलं जानुकूर्परम् ।**

तेषामित्यादि । अरुणदत्तोऽप्याह—"इदानीं मर्मणां पृथग् यथायथं प्रमाणमभिधातुमाह तेषामित्यादि" इति । तेषां मर्मणां विटपादीनि द्वादश-मर्माणि अङ्गुलमानानि स्वाङ्गुलप्रमाणानि । द्वे द्वे चत्वारि चत्वारि इति द्वादश । मणिबन्धने मणिबन्धौ द्व्यङ्गुलप्रमाणौ गुल्फौ स्तनमूले च द्व्यङ्गुले प्रत्येकम् । एकः चशब्दः समुच्चयार्थो द्वितीयः पादपूरणे । त्र्यङ्गुलं त्र्यङ्गुलप्रमाणं जानु-द्वयं कूर्परद्वयं च ॥

**अपानवस्तिहृन्नाभिनीलाः सीमन्तमातृकाः ॥ ६१ ॥**
**कूर्चशृङ्गाटमन्याश्च त्रिंशदेकेन वर्जिताः ।**
**आत्मपाणितलोन्मानाः**

---

१. 'कर्माणि चन्द्र' । २. 'न विवृद्ध' । ३. 'गुदादीनां' इति मुद्रिते ।

अपानेत्यादि । अपानवस्त्यादयः त्रिंशद् एकेन वर्जिताः एकान्नत्रिंशद् आत्मपाणितलोन्मानाः स्वहस्ततलपरिमाणाः ॥

**शेषाण्यर्धाङ्गुलं वदेत् ॥ ६२ ॥**

**पञ्चाशत् षट् च मर्माणि तिलव्रीहिसमान्यपि ।**
**इष्टानि मर्माण्यन्येषां**

शेषाणि षट्पञ्चाशन्मर्माणि स्वेनाङ्गुलपरिमाणेनार्धाङ्गुलप्रमाणान्यादिशेत् । अन्येषां तन्त्रकृतां तिलप्रमाणानि व्रीहिप्रमाणानि च मर्माणि इष्टानि अभिमतानि । परमतमप्रतिषिद्धमनुमतमेवेत्यस्यापि तन्त्रकृत एतदेव मतमिति बोध्यम् ॥

इदानीं मर्माभिघातेन यथा मरणं सम्पद्यते तथा दर्शयति—

**चतुर्धोक्ताः सिरास्तु याः ॥ ६३ ॥**

**तर्पयन्ति वपुः कृत्स्नं ता मर्माण्याश्रितास्ततः ।**
**तत्क्षतात्क्षतजात्यर्थप्रवृत्तेर्धातुसंक्षये ॥ ६४ ॥**

**वृद्धश्चलो रुजस्तीव्राः प्रतनोति समीरयन् ।**
**तेजस्तदुद्धूतं धत्ते तृष्णाशोषमदभ्रमान् ॥ ६५ ॥**

**स्विन्नस्रस्तश्लथतनुं हरत्येनं ततोऽन्तकः ।**

चतुर्धेत्यादि । याः सिराः 'पादोऽस्रं वहते पृथगि'त्यादिना चतुर्धा प्रोक्ताः प्राङ् निर्दिष्टाः वातपित्तकफजुष्टशुद्धरक्तवाहिन्यः सप्तशतसंख्याः ताः कृत्स्नमशेषं शरीरं तर्पयन्ति । ताः मर्माण्याश्रिताः प्राप्ताः यत एवं सर्वाः सिराः मर्माणि प्राप्ताः ततः कारणान्मर्माश्रितत्वलक्षणात् । तेषां मर्मणां क्षतं व्रणं तत्क्षतं तस्मान्मर्मक्षतात् कारणात् क्षतजस्य रक्तस्यातिप्रवृत्तिः । मर्माभिघातेन रक्तवाहिनीनां सिराणां मुखविकासेन जीविताधिष्ठानस्यासृजः क्षयः । तस्याः क्षतजात्यर्थप्रवृत्तेः कारणाद्यो धातुसंक्षयः परम्पराक्रमयातो मांसादिधात्वपचयः । तस्मिन् धातुक्षये वृद्धः चलो वायुः तीव्रा अत्यन्तदुःखदायिनी रुजः शूलविशेषान् प्रतनोति करोति । किं कुर्वन्—तेजः पित्तं समीरयन् उदीरयन् । तत् तेज उद्धूतं बृहत्सम्पन्नं सत् तृष्णादीन् धत्ते करोति । ततोऽनन्तरं तृष्णादिभ्य एनं

मर्मविद्धमन्तको हरति । किंभूतम्—स्विन्ना स्रस्ता श्लथा तनुर्यस्य तम् । तदयमर्थः—मर्माभिघाते रक्तवाहिनीनां सिराणां मुखविकासो जायते । तद्विकासाज्जीविताधिष्ठानस्यासृजोऽत्यर्थं या निःसृतिस्तया धातुक्षयः । तत्क्षयाच्च जीवितनाशः आश्रयाभावात् ॥

इदानीं मर्माभिघाते चिकित्सामाह—

**वर्धयेत्सन्धितो गात्रं मर्मण्यभिहते द्रुतम् ॥ ६६ ॥**
**छेदनात्सन्धिदेशस्य सङ्कुचन्ति सिरा ह्यतः ।**
**जीवितं प्राणिनां तत्र रक्ते तिष्ठति तिष्ठति ॥ ६७ ॥**

वर्धयेदित्यादि । मर्मण्यभिहते सति गात्रं शरीरमाश्वेव सन्धितः सन्धिप्रदेशाद् वर्धयेत् छेदयेदित्यर्थः । हि यस्मात् सन्धिप्रदेशच्छेदनात् सिराः सङ्कुचन्ति संवृतमुखा भवन्ति । वर्धयेदिति 'वर्ध छेदनादौ' इति चौरादिकस्य रूपम् । अतः सिरासंकोचात्कारणान्न रक्तं बहिर्निःसरति । तत्र रक्ते तिष्ठति बहिरवहति जीवितं तिष्ठति ॥

तदनेन प्रकारेण मर्माभिघातक्षताद् (मरणं, न त्वमर्माभिघातक्षतात्। ) अत इदमाह—

**सुविक्षतोऽप्यतो जीवेदमर्मणि, न मर्मणि ।**
**प्राणघातिनि, जीवेत्तु कश्चिद् वैद्यगुणेण चेत् ॥ ६८ ॥**
**असमग्राभिघाताच्च सोऽपि वैकल्यमश्नुते ।**
**तस्मात् क्षारविषाग्न्यादीन् यत्नान्मर्मसु वर्जयेत् ॥ ६९ ॥**

सुविक्षत इत्यादि । यतो मर्माभिघातात्प्राणी म्रियते, नान्यथा क्षतमात्रादतोऽस्मात्कारणात् अमर्मणि सुविक्षतेऽपि सुष्ठु कृत्वा विशेषेण क्षतेऽपि शरशतैर्विद्धोऽपि जीवेत् । न तु मर्मविद्धो जीवेत् । किंभूते— प्राणघातिनि । द्विविधं हि मर्म, प्राणघात्येकमपरं वैकल्यकरम् । तत्र प्राणघातिनि कुशाग्रेणापि विद्धो न जीवति । अथ पुण्यबाहुल्यान्नियतत्वाच्चायुषः प्राणघातिन्यपि मर्मणि विद्धो वैद्यगुणेन च असमग्रस्यासकलस्य मर्मणोऽभिघाताच्च कश्चिद् यदि विद्धो

जीवेत् सोऽपि वैकल्यमश्नुते विकलतां प्राप्य जीवतीत्यर्थः। वैद्यशब्दः प्राधान्याद् द्रव्यादिपादत्रयमुपलक्षयति। वैद्यगुणेन पादत्रयसम्पत्त्या चेत्यर्थः। **पाठ्यकार**स्त्वाह—"'प्रणघातिनि जीवेत्तु कश्चिदि'त्यत्र प्राणघातिनीति पदं पूर्वेण न सम्बध्यते" इति। अस्मिन् पक्षे प्राणघातिनि मर्मणीति वाक्यशेषः। **संग्रहे** तूक्तम्—

"अमर्मविद्धोऽपि नरः छेदभेदादिपीडितः।
अतिनिःस्रुतरक्तश्च सद्यस्त्यजति जीवितम्॥

अतोऽन्यथा जीवति तु विद्धः शरशतैरपि।
पुण्यवान् नियतायुश्च न कथञ्चिन्न जीवति॥

तस्मादा चरमोच्छ्वासाच्चिकित्सेदेव यत्नतः।
तद्बन्धुमित्रानुमतः प्रत्याख्यायातुरं भिषक्॥"

इति। **इन्दुः**—"न केवलं मर्मविद्ध एव जीवितं त्यजति। यावदमर्मविद्धोऽपि रक्तस्यातिस्रुतेः सद्य एव जीवितं त्यजति। अतोऽन्यथा यथोक्तवैपरीत्ये मर्मव्यथे रक्तास्रुतौ च, शरशतैरपि विद्धो जीवति। तथा यश्च पुण्यवान् सुकर्मा यश्च नियतायुः स न कथञ्चिन्न जीवति, सर्वथा जीवतीत्यर्थः। नियतायुः यस्य बल(व)ता दैवेन कर्मणा च आयुः नियतकालं कृतम्। तस्माद्यतो क्षीणायुर्जीवत्यतो मर्मविद्धमातुरं प्रत्याख्याय आ चरमोच्छ्वासाच्चिकित्सेत्, तस्यातुरस्य बन्ध्वादीनामनुमतः सन्। एतावता सिद्ध्यभावेऽप्ययशो न लभते" इति। तस्मादित्यादि। तस्मान्मर्मसु क्षारादीन् यत्नात्तात्पर्येण वर्जयेत्परिहरेत्। अग्न्यादीनित्यत्रादिशब्देन भल्लातकरसकपिच्छुशूकादीनां ग्रहणम्॥

**मर्माभिघातः स्वल्पोऽपि प्रायशो बाधतेतराम्।**
**रोगा मर्माश्रितास्तद्वत् प्रक्रान्ता यत्नतोऽपि च॥ ७०॥**

एवं मर्माभिघातो मर्मण्यभिघातः स्वल्पोऽपि अतिशयेन अल्पोऽपि प्रायो बाहुल्येन बाधतेतराम् अतिशयेन बाधते पीडयति। न केवलं मर्माभिघातोऽतिबाधते यावद्रोगा अपि एवं मर्माश्रितास्तेऽपि यत्नतः तात्पर्येण प्रक्रान्ता

उपक्रान्ता अपि तद्वत् स्वल्पा अपि बाधन्तेतरामित्यर्थः । "प्रकान्ताश्चिकित्सितु-मारब्धाः" इतीन्दुः । संग्रहे--मर्मण्यभिहतस्य मुमूर्षोः मरणलक्षणमुक्तम्—

"विक्षिप्यते भृशं सीदन् शून्यं[1] भ्रमति वेपते ।
ऊर्ध्वं श्वसिति कृच्छ्रेण स्तब्धगात्रो[2] मुहुर्मुहुः ॥

हृदयं दह्यते चास्य नैकस्थानेऽवतिष्ठते ।
मर्मोपघातान्मरणमेतैर्लिङ्गैः समश्नुते ॥ इति ॥

इति शारीरे चतुर्थोऽध्यायः ॥

---



१. 'न्यो भ्र'. २. 'स्रस्तगात्रो' इति मुद्रिते ।

# पञ्चमोऽध्यायः ।

मर्मविभागादनन्तरं विकृतिविज्ञानीयः शारीर आरभ्यते । यतो मर्मविभागे मर्मशब्द उपात्तः । मरणकारित्वान्मर्मेत्युच्यते । विकृतेरनन्तरं च मरणं दृश्यते इत्ययमध्याय उच्यते ।

अथातो विकृतिविज्ञानीयं शारीरं व्याख्यास्यामः । प्रकृतेरन्यथात्वं स्वभावप्रच्युतिर्विकृतिः तस्या विज्ञानमवगमः स विद्यतेऽस्मिन्नध्याय इति "मतौ छः सूक्तसाम्नोः" (पा० सू० ५-२-५९) इति छः । तस्य "अध्यायानुवाकयोर्लुक्" (पा० सू० ५-२-६०) इति तस्य पाक्षिकत्वान्न लुक् । विकृतिविज्ञानीयः । तं शारीरमध्यायं व्याख्यास्यामः । शेषं पूर्ववत् । **सारकृताप्युक्तं**–

> "मर्माणि मृतिहेतूनि मृतिश्च विकृतेरनु ।
> तस्मान्मर्मविभागोर्ध्वं विकृतिज्ञानमुच्यते" ॥

इति । **हाटकस्त्वाह**—"मर्मविभागादनन्तरं विकृतिविज्ञानीय आरभ्यते । अत्रायं संबन्धः – पूर्वमायुष्मतां सम्भवः प्राकृतं शरीरसंस्थानं च वर्णितम् । सम्प्रत्यासन्नमृत्यूनां विकृतिलिङ्गं दर्शयितुमध्यायारम्भः" इति । **इन्दुना तूक्तं**– "शरीरमाधानात् प्रभृत्यपवर्गो यावदस्मिन् स्थाने निर्णीयते । तत्राङ्गं जीवितं च अनेकेन प्रकारेण निर्णीतम् । तस्य मृत्युसामन्तपरिकरपरिज्ञानार्थमध्यायारम्भः" । इति । **पाठ्यकारस्त्वाह**-"मर्मविद्धे मरणप्रसङ्गाद्रिष्टमाहे"ति । विकृतिः पुनरत्र रिष्टमेव विज्ञेयमत एवाह—

> **पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ।**
> **यथा भविष्यतो लिङ्गं रिष्टं मृत्योस्तथा ध्रुवम् ॥ १ ॥**

पुष्पमित्यादि । यथा फलस्य भविष्यतो भाविनः पुष्पं लिङ्गमग्नेर्भाविनो धूमः, वर्षस्य भाविनो जलदोदयः तथा एतेनैव दृष्टान्तेन मृत्योर्भविष्यतो रिष्टं लिङ्गं गमकं ध्रुवं निश्चितम् । बहुदृष्टान्तकथनेन रिष्टस्य निश्चयं ब्रूते । **सारकृताप्युक्तं**–"बहुदृष्टान्तकथनेन एतद् द्योतयति–रिष्टप्रादुर्भावेऽवश्यं मरण"-

---

१. 'ज्ञानं निर्णीतशेषमतस्तद्विज्ञानार्थं" इति मुद्रिते ।

मिति। तथा च सुश्रुतः—

"ध्रुवं हि रिष्टे मरणं ब्राह्मणैस्तत्किलामलैः।
रसायनतपोदानतत्परैश्च निवार्यते॥"

इति। अन्ये त्वाहुः—"प्रोक्तेषु दृष्टान्तेषु यथा व्यभिचारस्तथात्रापीति द्योतयितुं बहुदृष्टान्तकथनम्। तथा हि पाटलादौ" इति। "ध्रुवं स्थायिरिष्ट"मिति केचित्। ध्रुवशब्दनिर्देशादिदं द्योतयति—रिष्टच्छायानुकारि यत् तदाभासरूपं तावन्मात्रं मृत्योर्न लिङ्गमिति॥

अत एवाह—

**अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम्।**

अरिष्टमित्यादि। न विद्यते पूर्वं रिष्टं यस्य मरणस्य तदरिष्टं तथाविधं मरणं नास्ति। तथा, दृष्टं रिष्टं यस्य जीवितस्य तदेवंभूतं जीवितमपि नास्ति। यत् पुष्पदर्शनेऽपि पाटलवृक्षादौ फलसद्भावो न दृश्यते तत्तु क्वचिदेव न सर्वत्रेति नायं दोषोऽत्र चिन्त्यः। **चरके** त्वेवमुक्तं—

"पुष्पं यथा पूर्वरूपं फलस्येह भविष्यतः।
तथा लिङ्गमरिष्टाख्यं पूर्वरूपं मरिष्यतः॥

अप्येवं तु भवेत्पुष्पं फलेनाननुबन्धि यत्।
फलं चापि भवेत्किञ्चिद् यस्य पुष्पं न पूर्वजम्॥

न त्वरिष्टस्य जातस्य नाशोऽस्ति"

इत्यादि। ननु दृष्टरिष्टं जीवितं नास्तीत्ययुक्तमुक्तं व्यभिचारात्। वक्ष्यति हि—

'यं नरं सहसा रोगो दुर्बलं परिमुञ्चति।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते॥'

इत्याह—

**अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात्॥ २॥**

अरिष्ट इत्यादि। परमार्थत्वेन यद्रिष्टत्वेन निश्चयीकृतं तस्मिन्नरिष्टे रिष्टविज्ञानं रिष्टत्वावगमः। न च रिष्टेऽपि रिष्टविज्ञानं केषाञ्चिद्भवति। कुतो

---

१. 'तपोजप्यतत्प' इति मुद्रिते।

हेतोरित्याह—अनैपुणात् । निपुणस्य भावो नैपुणम् । "हायनान्तयुवादिभ्योऽण्" (पा० सू० ५-१-१३०) । न नैपुणमनैपुणं तस्मादनैपुणान्मिथ्याज्ञानादित्यर्थः । तदेवं यदभ्रान्तं रिष्टं तदव्यभिचारित्वान्मरणं निश्चितं सूचयति । यदन्यद्रिष्टच्छायानुकारि 'यं नरं सहसा रोग' इत्यादिलक्षणं तद् भ्रान्तमेव । यथा अधूमे बाष्पादौ धूम इति विज्ञानम् । न च तस्मिन् मिथ्याज्ञनादग्न्युपलब्धिर्निश्चिता भवति । तस्माद् युक्तमुक्तं—'अरिष्टं नास्ति मरण'मित्यादि । **हाटको**ऽप्याह— "अनैपुणान्मिथ्याज्ञानात् केषाञ्चिदरिष्टे रिष्टावगमो भवति । अधूमे बाष्पादौ धूमज्ञानवद्रिष्टाभावे रिष्टावगमः" इति । रिष्टेऽपि रिष्ट इत्यनवगमश्च भवति, तस्माद्युक्तमुक्तम् । अथवास्थायिरिष्टदर्शनेन मरणं नास्तीत्युक्तम् ॥

**कृष्णात्रेय**स्तु द्विधा रिष्टमिच्छति । तन्मतमाविष्कुर्वन्नाह—

**केचित्तु तद् द्विधेत्याहुः स्थाय्यस्थायिविभेदतः ।**

केचिदित्यादि । केचिदाचार्याः तद्रिष्टं द्विधा वदन्ति । कथमित्याह—स्थायीत्यादि । तृतीयार्थे तसिः । स्थाय्यस्थायिविभेदेन द्विप्रकारम् ॥

तत्र अस्थायिरिष्टभेदमाह—

**दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत् ॥ ३ ॥**
**स दोषाणां शमे शाम्येत् स्थाय्यवश्यं तु मृत्यवे ।**

दोषाणामित्यादि । अपिशब्दः समुच्चये भिन्नक्रमः । रिष्टाभासोऽपि दोषाणां बाहुल्यात् समुद्भवेत् । दोषाणां शमने दोषशान्तौ सत्यां स रिष्टाभासः शाम्येत् । न तु मरणाय सम्पद्यते । स्थायि तु रिष्टमवश्यं मृत्यवे मरणाय सम्पद्यते । ननु 'अरिष्टं नास्ति मरण'मित्ययुक्तमिवाभाति । रिष्टमन्तरेणाप्यकालमृत्यो राजचोराग्न्युदकादिभिर्दर्शनात् । अत्र च संचक्ष्महे—कालमृत्योरेव रिष्टपूर्वकत्वम् । तथा च वक्ष्यति—'सर्वे ते कालचोदिताः' इति । तथा 'वशगाः समवर्तिन' इति । समवर्ती तु कालमृत्युरेव । **हाटको**ऽप्याह—"स्थायिनो रिष्टस्य क्वचिद् व्यभिचारदर्शनादयुक्तमुक्तम् । दृश्यते हि राजचोराग्न्युदकादिभिः रिष्टमन्तरेणापि मृत्युः । ब्रूमः—कालमृत्योरेव रिष्टपूर्वकत्वम् । तथा च वक्ष्यति—'सर्वे ते कालचोदिताः तथा 'वशगाः समवर्तिनः' इति । समवर्ती कालमृत्युरेव ।" इति ।

किं तद्रिष्टमित्याह—

**रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ॥ ४ ॥**

**अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ।**

**विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥ ५ ॥**

रूपेत्यादि । रूपादिषु अन्येषु च भावेषु निमित्तमन्तरेण या विकृतिः सा समासेन रिष्टमिति जानीयात् । रूपं वर्णं च संस्थानं च । **अरुणदत्तो**ऽप्याह— 'रूपं गौरादिवर्णविशेषः' इति । पञ्च तावत्प्राकृताः प्रधानवर्णाः । गौरः श्यामः कृष्णो गौरश्यामः कृष्णश्याम इति । तद्भेदास्तु पद्मगौरादयो देहप्रकृतिवर्णाः । तत्र पद्मगौरश्चन्द्रगौरः शरगौर इत्येवमादयो गौरभेदाः । कपित्थश्यामो दूर्वाङ्कुरश्यामो नभःश्याम इत्येवमादयः श्यामभेदाः । प्रियङ्गुश्यामो जलश्यामो घृतश्याम इत्येवमादयो गौरश्यामभेदाः । कज्जलकृष्णः षट्पदकृष्णः इत्येवमादयः कृष्णभेदाः । अतसीकृष्णस्तमालकृष्ण इत्येवमादयः कृष्णश्यामभेदाः इति प्रकृतिवर्णाः । विकृतिवर्णास्तु नीलश्यामताम्रहारिद्रशुक्लादयः । श्यामोऽरुणलोहितः । ताम्रोऽग्निप्रख्यः । हारिद्रो हरितालसमवर्णः । शुक्लः शङ्खकुन्दादिप्रख्यः । तथा चक्षुषा यद् ग्राह्यवस्तुजं संस्थानादि तदपि रूपम् । इन्द्रियाणि चक्षुरादीनि । स्वरः शब्दः प्रतिपुरुषं विशिष्टो रवः । छाया वर्णप्रभाश्रया वक्ष्यमाणलक्षणा । प्रतिच्छाया प्रतिबिम्बम् । क्रिया देहवाङ्मनोव्यापारः । तत्र धावनप्लवनाद्यनेकरूपो व्यायामो नृत्तस्थानकादिः कायिको व्यापारः । गीताध्ययनादिः वाचिको व्यापारः । रागद्वेषभयेर्ष्यादिः मानसः । आदिशब्दः अन्येषामपि भावानां शरीरगतानां ग्रहणार्थः । रूपादीनां द्वन्द्वः । तेषु रूपादिषु भावेषु अन्येष्वपि च प्राकृतेषु भावेषु महदुपचितदीर्घादिषु या विकृतिः स्वभावप्रच्युतिः सा संक्षेपेण रिष्टम् । विस्तरतस्त्वनेकधा वक्ष्यमाणम् । प्रकृतौ भवाः प्राकृताः महत्त्वयुक्तानां शिरःप्रभृतीनां लघुत्वं दीर्घत्वयुक्तानामङ्गुल्यादीनामकस्माद्ध्रस्वत्वमित्यादिरूपम् ॥

विकृतिमाह—

**केशरोम निरभ्यङ्गं यस्याभ्यक्तमिवेक्ष्यते ।**

केशाश्च रोमाणि च तत् केशरोम यस्य निरभ्यङ्गमभ्यङ्गरहितमपि अभ्यक्तमिवेक्ष्यते दृश्यते स कालचोदित इति वचनविपरिणामेन सम्बन्धः। एवमुत्तरत्रापि। एतद्रूपविकृतेरुदाहृणम् ॥

इन्द्रियाणामधिष्ठानस्य विकृतिरिन्द्रियविकृतिरित्याह—

**यस्यात्यर्थं चले नेत्रे स्तब्धान्तर्गतनिर्गते ॥ ६ ॥**

**जिह्मे विस्तृतसंक्षिप्ते संक्षिप्तविनतभ्रुणी ।**

**उद्भ्रान्तदर्शने हीनदर्शने नकुलोपमे ॥ ७ ॥**

**कपोताभे अलाताभे स्रुते लुलितपक्ष्मणी ।**

**नासिकात्यर्थविवृता संवृता पिटकाचिता ॥ ८ ॥**

**उच्छूना स्फुटिता म्लाना**

यस्येत्यादि। नेत्रशब्देन नेत्राधिष्ठानं गृह्यते। नेन्द्रियम्। यस्य च नेत्रे लोचने अत्यर्थं चले अतिशयेन इतश्चेतश्च परिभ्रमतः। तथा यस्य नेत्रे स्तब्धे निश्चले। तथा यस्य नेत्रे अन्तर्गते अन्तःप्रविष्टे। तथा यस्य निर्गते बहिः (याते)। तथा यस्य जिह्मे कुटिले। तथा यस्य विस्तृते विस्तारं गते। तथा यस्य नेत्रे संक्षिप्ते संकुचिते। तथा संक्षिप्ते विशेषेण नते भ्रुवौ ययोस्ते संक्षिप्तविनतभ्रुणी। तथोद्भ्रान्तदर्शने विभ्रान्तदृष्टिनी। **हाटको**ऽपि—"उद्भ्रान्तदर्शने मिथ्याविषयदर्शने" इत्याह। तथा हीनदर्शने अल्पदर्शने नष्टदृष्टिनी इव। तथा नकुलोपमे नकुललोचनाभे। 'समुदायेषु हि प्रवृत्ताः शब्दाः अवयवेष्वपि वर्तन्ते' इति नकुलशब्दोऽत्र नकुललोचनविषयो वेद्यः। यथा च **नागानन्दनाटके**—"चक्षुस्तामरसानुकारि हरिणा वक्षस्थलं स्पर्धते" इति। अत्र हि हरिणवक्षसा वक्षस्थलं स्पर्धत इत्ययमर्थो वेद्यः। अथवा नकुललोचने उपमा ययोस्ते नकुलोपमे इत्युत्तरपदलोपी समासः। एवं कपोताभे कपोतलोचनाभे। तथा अलाताभे उल्मुकसदृशे। तथा स्रुते निमित्तमन्तरेणाश्रु परिस्रवतः, निर्निमित्ताश्रुस्रावे इत्यर्थः। तथा लुलिते वातोद्धूते इव पक्ष्मणी ययोस्ते लुलितपक्ष्मणी। तथा यस्य नासिका निर्निमित्तमत्यर्थमतिशयेन विवृता

अथवा संवृता सङ्कुचिता । तथा पिटकाचिता पिटकाभिर्व्याप्ता । तथा उच्छूना ऊर्ध्वं श्वयथुना आक्रान्ता । तथा स्फुटिता म्लाना च ॥

**यस्यौष्ठो यात्यधोऽधरः ।**
**ऊर्ध्वं द्वितीयः स्यातां वा पक्वजम्बूनिभावुभौ ॥ ९ ॥**

**दन्ताः सशर्कराः श्यावास्ताम्राः पुष्पितपङ्किताः ।**
**सहसैव पतेयुर्वा जिह्वा जिह्मा विसर्पिणी ॥ १० ॥**

**शूना शुष्का गुरुः श्यावा लिप्ता सुप्ता सकण्टका ।**

तथा यस्य ओष्ठो दन्तच्छदः अधरोऽनुत्तरोऽधो याति । द्वितीय उत्तरोष्ठो यस्योर्ध्वं याति । तथा यस्य च उभावोष्ठौ पक्वजम्बूफलनिभौ भवतः । **संग्रहे**—"यस्याधोऽधरोष्ठो यात्युत्तरोष्ठश्चोर्ध्वम् । उभौ वा पक्वजम्बूफलनिभौ" इति । तथा यस्य दन्ताः सशर्कराः । शर्कराभिराचिताः – ഇത്തിളേറിയിരിക്ക । तथा श्यावास्तथा ताम्राश्च वर्णतः । श्यावाः – കരിവാളിച്ചിരിക്ക । ताम्राः – ചെമ്പിച്ചിരിക്ക । तथा पुष्पिताः संजातपुष्पाः – പൂത്തിരിക്ക । तथा पङ्किताः संजातपङ्काः कर्दमोपलिप्ता इव – ചേറുചെയ്തിരിക്ക । तथा सहसैव झटित्येव यस्य वा दन्ताः पतेयुः । तथा यस्य जिह्वा जिह्वेन्द्रियाधिष्ठानं जिह्मा कुटिला । तथा विसर्पिणी कारणं विना विशेषेण सर्पते तच्छीला । तथा शूना निमित्तं विना शुष्का गुरुश्च । तथा श्यावा । तथा लिप्ता । तथा सुप्ता, सुप्तेव सुप्ता रसाज्ञानाद्विचेतनेत्यर्थः । **हाटकोऽपि**—'रसग्रहणाशक्ता' इत्याह । तथ सकण्टका कण्टकाचितेव ॥

**शिरः शिरोधरा वोढुं पृष्ठं वा भारमात्मनः ॥ ११ ॥**

**हनू वा पिण्डमास्यस्थं शक्नुवन्ति न यस्य च ।**
**यस्यानिमित्तमङ्गानि गुरूण्यतिलघूनि वा ॥ १२ ॥**

**विषदोषाद्विना यस्य खेभ्यो रक्तं प्रवर्तते ।**
**उत्सिक्तं मेहनं यस्य वृषणावतिनिःसृतौ ॥ १३ ॥**

**अतोऽन्यथा वा यस्य स्यात्सर्वे ते कालचोदिताः ।**

तथा यस्य पुंसः शिरोधरा ग्रीवा शिरो वोढुं न शक्नोति । यस्य पृष्ठं वा आत्मनो भारं पृष्ठस्य वोढव्यत्वेनोपर्यारूढं ग्रीवादिकं धारयितुं न शक्नोति । **हाटको**ऽपि–"पृष्ठं तु ग्रीवादिकं धारयितुं न शक्नोति" इत्याह । यस्य वा पुंसो हनू पिण्डं कवलमास्यस्थं वोढुं न शक्नुतः । य एवं शिरोधरादीनि त्रीण्यङ्गानि स्वमात्मीयं कायं वोढुं यस्य न शक्नुवन्ति स कालचोदित इति योज्यम् । यस्यानिमित्तं कारणं विना अङ्गान्यतिगुरूणि कदाचिदतिलघूनि वा भवन्ति । तथा यस्य विषदोषमन्तरेण खेभ्यः छिद्रेभ्यो रक्तं प्रवर्तते आयाति । यस्य मेहनं मेढ्रं लिङ्गमुत्सिक्तं स्तब्धमुद्भिन्नं वा । वृषणावतिनिःसृतौ चर्ममात्रशेषेण प्रलम्बौ । अतोऽन्यथा वा अत उक्तप्रकारादन्यथा विपरीतप्रकारेण मेहनवृषणौ यस्य । यथा---वृषणावुत्सिक्तावतिनिःसृतं मेहनमित्येवम् । 'केशरोम निरभ्यङ्ग'मित्यारभ्य याव'दतोऽन्यथा वा' इत्येतत्पर्यन्तं ग्रन्थोक्तं लक्षणं येषां पुरुषाणां जातं ते पुरुषाः सर्वे कालेन मृत्युना चोदिताः अन्तकेनात्मसात्कृता इत्यर्थः । 'उत्सिक्तं स्तब्धमन्तःप्रविष्ट'मिति **सारकृत्** । **सौश्रुते** चोक्तं– "स्रस्तमुष्कः प्रविष्टमेहनश्च" इति । नन्वत्र कालनियमो न कृतः । कियता कालेन मृत्युर्भवति मासेन उतार्धमासेनेति सन्देहादयुक्तमेतत् । अत्र ब्रूमः– अनिर्दिष्टकालानां संवत्सरावधिर्व्यवस्था वेद्या । तथा चाह–'वर्षान्तं तस्य जीवितं', तथा–'सोऽपि वर्षं न जीवति' इत्यादिवचनान्नास्ति वर्षादूर्ध्वं संजातरिष्टस्य जीवितमिति निश्चयः ॥

**यस्यापूर्वाः सिरालेखा बालेन्द्वाकृतयोऽपि वा ॥ १४ ॥**

**ललाटे वस्तिशीर्षे वा षण्मासान् न स जीवति ।**
**पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः ॥ १५ ॥**

**प्लवते प्लवमानस्य षण्मासं तस्य जीवितम् ।**

यस्येत्यादि । यस्य पुंसः स्वस्थस्यानिमित्तमेव ललाटे वस्तेर्वा शिरसि अपूर्वा अभिनवा न तु प्रागवस्थिताः सिरालेखाः सिराराजयो दृश्यन्ते । अथवा बालेन्द्वाकृतयश्चन्द्रकलासमानाः वक्राः स पुमान् षण्मासान् न जीवति । **पाठ्ये**ऽपि–'वस्तिशीर्षं वस्त्युपरिभागम्' इतीन्दुः । तथा यस्य पुंसः प्लवमानस्य

जलस्नानं कुर्वतः शरीरे पद्मिनीपत्रवत् पद्मिनीपत्रस्थिततोयवत् तोयं प्लवतेऽनवस्थितस्थितिर्भवति अस्यापि षण्मासं जीवितम् । पद्मिनीपत्रवदिति सप्तम्यर्थे वतिः न षष्ठ्यर्थे, शरीरे इति सप्तम्या निर्देशात् । तथा चोक्तं **भाष्यकृता**—"उपमाने यः संशयः स उपमेयाद्विनिवर्तते" इति ॥

**हरिताभाः सिरा यस्य रोमकूपाश्च संवृताः ॥ १६ ॥**
**सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ।**

यस्य सिरा हरिताभाः रोमकूपाश्च संवृताः स्युः स नरोऽम्लाभिलाषी सन् पित्तेन मृत्युं प्राप्नोति ।

**यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा ॥ १७ ॥**
**सस्नेहं मूर्ध्नि धूमो वा मासान्तं तस्य जीवितम् ।**

यस्य पुरुषस्य गोमयचूर्णसदृशं चूर्णं सस्नेहं मूर्ध्नि मुखे वा भवेत् तथा मूर्ध्नि धूमो यस्य वा भवति तस्य नरस्य मासान्तं जीवितं स्यात् । **संग्रहे**—"यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा । सस्नेहं मूर्ध्नि धूमो वा मासान्तं तस्य जीवितम्" ॥ इति ।

**मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्तका नवाः ॥ १८ ॥**
**मृत्युं स्वस्थस्य षड्रात्रात् त्रिरात्रादातुरस्य तु ।**
**जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति ॥ १९ ॥**
**खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ।**

मूर्ध्नीत्यादि । सीमन्ता आवर्तकाश्च शिरसि भ्रुवोर्वा नवा अभूतपूर्वाः स्वस्थस्य षड्रात्रान्मृत्युं कुर्वन्ति । आतुरस्य पुनः त्रिरात्रान्मृत्युं कुर्वन्ति, अनेकार्थत्वाद्धातूनां सूचयन्तीत्यर्थः । न तु विषवन्मरणे तेषां कर्तृत्वम् । तर्हि सूचयन्तीत्येव कस्मान्नोक्तम् । ब्रूमः—यदोत्पद्यते सीमन्ता आवर्तकास्तदा निश्चितं स्थायिरिष्टं समुत्पन्नमित्यवगन्तव्यमिति प्रतिपादनार्थं कुर्वन्तीत्युक्तम् । **हाटको**ऽप्याह—"नवा अपूर्वाः सीमन्तादयो मृत्युं कुर्वन्ति सूचयन्तीति यावत् । कुर्वन्तीति वचनं रिष्टस्य निश्चयेन मरणसूचकत्वमस्तीति प्रतिपाद-

यितुम्" इति । अरुणदत्तस्तु "सीमन्ता नामावर्तका मण्डलानि सीमन्तावर्तकाः" इत्युक्तवान् । तथा यस्य पुंसः जिह्वा श्यावा भवति, तथा मुखं पूतिगन्धि, तथा सव्यं वाममक्षि निमज्जति अन्तःप्रविशति, तथा यस्य खगाः पक्षिणश्च मूर्ध्नि शिरसि लीयन्ते श्लिष्यन्ति तं परिवर्जयेद् वैद्य इति शेषः ।

**यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ॥ २० ॥**
**आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ।**

यस्य स्नातानुलिप्तस्य पूर्वं स्नातः पश्चादनुलिप्तः तस्यार्द्रेषु सर्वगात्रेषु पूर्वमादौ भृशमुरः शुष्यति अतिशयेन वक्षः शोषमायाति सोऽर्धमासं पक्षं न जीवति । नन्वार्द्रेषु सर्वगात्रेषु इति न वक्तव्यं पुनरुक्तत्वात् । तथाहि—पूर्वं शुष्यत्युरो भृशम् आर्द्रेषु सर्वगात्रेष्वित्यर्थाद् गम्यत एव, अन्यथा पूर्वग्रहणमनर्थकं स्यात् । नैवम् । अत्र भृशग्रहणात् पूर्वमुरो भृशं शुष्यति न पुनरन्यान्यपि गात्राणि न शुष्यन्तीत्यायाति । नैतदिष्टं शास्त्रकृतः । अत एवार्द्रेष्वित्याह । तदयमर्थोऽत्राभिप्रेतो यथैवोरसो भृशं शोषस्तथैव शेषाणामङ्गानां भृशार्द्रता स्यादिति, एतच्च प्रतिपादयितुमार्द्रेष्वित्युक्तम् । सर्वगात्रेष्वार्द्रेषु सत्सु पूर्वमुरो भृशं शुष्यतीत्येतदाश्चर्यम् । आश्चर्यत्वादरिष्टम् ॥

**अकस्माद्युगपद् गात्रे वर्णौ प्राकृतवैकृतौ ॥ २१ ॥**
**तथैवोपचयग्लानिरौक्ष्यस्नेहादि मृत्यवे ।**
**यस्य स्फुटेयुरङ्गुल्यो नाकृष्टा न स जीवति ॥ २२ ॥**
**क्षवकासादिषु तथा यस्यापूर्वो ध्वनिर्भवेत् ।**
**ह्रस्वो दीर्घोऽति वोच्छ्वासः पूतिः सुरभिरेव वा ॥ २३ ॥**
**आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुषः ।**
**मलवस्त्रव्रणादौ वा वर्षान्तं तस्य जीवितम् ॥ २४ ॥**

अकस्मादित्यादि । तत्र प्राकृतो वर्णो गौरादिः । वैकृतस्तु वर्णो नीलादिः । तौ प्राकृतवैकृतौ वर्णौ विभक्तौ निमित्तमन्तरेणापि युगपत्तुल्यकालं देहे भवतः तौ मृत्यवे । इन्दुरपि—"शरीरे शरीरैकदेशे वा विभक्तौ प्रकृतिविकृतिवर्णौ मरणाये"त्याह । तथैवोपचयग्लान्यादयः परस्परप्रतिपक्षभूता युगपद्

यस्योत्पद्यन्ते तस्य मृत्यवे । आदिशब्देन शैत्यौष्ण्यादीनि गृह्यन्ते । (विरुद्धयोः युगपच्छरीरेऽकस्मात्सरणं मरणायेत्यर्थः?) यस्याकृष्टा अङ्गुल्यो न स्फुटेयुः न स जीवति । यस्य क्षवादिष्वपूर्वो ध्वनिरलौकिकः शब्दः स्यान्न स जीवति । यस्योच्छ्वासोऽतिह्रस्वोऽतिदीर्घो वा भवेद्, अथवा उच्छ्वासः पूतिगन्धिः सुरभिर्वा यस्य स न जीवति । आप्लुतानाप्लुते स्नातास्नाते काये यस्य मानुषमतिक्रान्तोऽतिमानुषो गन्धः सुरभिरसुरभिर्वा भवति, यस्य मलवस्त्रव्रणाद्ये वा अतिमानुषो गन्धः स्याद् वर्षान्तं तस्य जीवितम् । तत्क्षणादारभ्य संवत्सरादर्वागेव मृत्युभाग् जायत इत्यर्थः ॥

भजन्तेऽत्यङ्गसौरस्याद् यं यूकामक्षिकादयः ।
त्यजन्ति वातिवैरस्यात्सोऽपि वर्षं न जीवति ॥ २५ ॥
सततोष्मसु गात्रेषु शैत्यं यस्योपलक्ष्यते ।
शीतेषु भृशमौष्ण्यं वा स्वेदः स्तम्भोऽप्यहेतुकः ॥ २६ ॥

शोभनो रसो यस्य स सुरसः तस्य भावः सौरस्यम् । अतिशयेनाङ्गसौरस्याद्धेतोः यं यूकामक्षिकादयो भजन्ते, अथवा यमतिवैरस्यात्त्यजन्ति सोऽपि वर्षं न जीवति । तथा सततोष्मसु गात्रेषु अवयवेषु भृशं शैत्यमुपलक्ष्यते शीतेषु वा गात्रेषु भृशमौष्ण्यं यस्योपलक्ष्यते । भृशशब्दस्यात्र विषयद्वयेऽपि सम्बन्धः । यस्याहेतुको निर्निमित्तः स्वेदः तथा स्वेदविषयो यः स्तम्भः सोऽपि यस्य, वर्षं न जीवतीति योज्यम् ॥

यो जातशीतपिटकः शीताङ्गो वा विदह्यते ।
उष्णद्वेषी च शीतार्तः स प्रेताधिपगोचरः ॥ २७ ॥
उरस्यूष्मा भवेद् यस्य जठरे चातिशीतता ।
भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः ॥ २८ ॥
मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वाप्सु निमज्जति ।
निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति ॥ २९ ॥

यो जातेत्यादि । जाताः शीताः पिटकाः यस्य सः जातशीतपिटकः कफोद्भूतपिटकाक्रान्तदेहो यो विदह्यते विदाहमनुभवति । 'दाहं प्राप्नोति' इति

इन्दुः । शीताङ्गः सन् यो वा विदह्यते । तथा उष्णद्वेषी यः पुरुषः शीतार्तः सन्, स प्रेताधिपगोचरः मृत्युनात्मसात्क्रियत इत्यर्थः । उरसि यस्योष्मा औष्ण्यं भवेत् जठरे उदरे चातिशैत्यं, पुरीषं भिन्नं तृष्णा च भवति स प्रेततुल्यः प्राप्तमरणत्वादिति भावः । यस्य मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वा अप्सु निमज्जति त्रुटति, यस्य वा निष्ठ्यूतं निष्ठीवनमनेकवर्णं भवति असौ मासेन नश्यति । इन्दुरपि-"निष्ठ्यूतं मुखास्रावः" इत्युक्तवान् । पाठ्येऽप्युक्तं- "निष्ठ्यूतं - ഉപ്പീഴു" (इति) ॥

चेष्टादीनां विकृतिमाह—

**घनीभूतमिवाकाशमाकाशमिव यो घनम् ।**

घनीभूतमित्यादि । मरणाभिमुखः पुरुषो विपर्यासकारिभिर्दोषैः अघनादि घनादिरूपं मन्यते । घनादि त्वघनादि मन्यते तद्विपर्ययेण । अत एवोपमार्थमिवशब्दं प्रयुङ्क्ते । अघनो घनः सम्पन्नो घनीभूतः । च्विप्रत्ययान्तस्य "अस्य च्वौ" (पा० सू० ७-४-३२) इतीत्त्वम् । घनीभूतमिवान्तरिक्षमन्तरिक्षमिव घनं मेदिनीधर्ममन्तरिक्षमूर्ध्वस्थं यत्तदधःस्थं पातालस्थमिव पश्यति स नश्यतीति वक्ष्यमाणेन संबन्धः । सारकृताप्युक्तम्—"आकाशं घनीभूतमिव यः पश्यति पृथिव्यादिवद् घनतां प्राप्तमिव यः पश्यति स नश्यतीति सम्बन्धः । घनं च वस्तु पृथिव्यादिकमाकाशमिव पश्यति मेदिनीधर्ममाकाशे आकाशधर्मं मेदिन्यामित्यर्थः" इति ॥

**अमूर्तमिव मूर्तं च मूर्तं चामूर्तवत् स्थितम् ॥ ३० ॥**

**तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत् ।**

**अनेत्ररोगश्चन्द्रं च बहुरूपमलाञ्छनम् ॥ ३१ ॥**

अमूर्तमित्यादि । चशब्दो भिन्नक्रमः इवशब्दश्च । अमूर्तं च वातादिकं मूर्तमिव रूपवन्तमिव पश्यति । मूर्तं रूपवन्तं चाग्न्यादिकममूर्तवत् अमूर्तमिव स्थितं यः पश्यति । भेडोऽप्यधीते—

"यस्य दर्शनमायाति वायुरम्बरगोचरः ।
वह्निर्नायाति दीप्तोऽपि तस्यायुःक्षयमादिशेत् ॥"

इति । इन्दुनाप्युक्तं—"घनीभूतं कठिनीभूतमाकाशं शून्यमेवमादि सर्वं यो

विपरीतं पश्यति स नश्यती"ति। तथा तेजस्वि यद्वस्तु अग्न्यादिकं भास्वरं तदतेजः निस्तेजो यः पश्यति। तेजस्वीति "अस्मायामेधास्रजो विनिः" (पा०सू० ५-२-१२१) इति विनिः। तद्वच्चेति। तेजस्यतेजोदर्शनेन तुल्यं तद्वत्। शुक्लं कृष्णं यः पश्यति स नश्यतीति वक्ष्यमाणेन संबन्धः। तथा असच्च सत् अविद्यमानं च विद्यमानमिव यः पश्यति स नश्यति। नेत्रेषु रोगो नेत्ररोगः स विद्यते यस्य स नेत्ररोगी। तिमिरादिकमन्तरेण बहुरूपं चन्द्रं पश्यति। "लाञ्छनमिन्दोः चिह्नं शशः" इतीन्दुः। एषु च घनीभूतमिवेत्यादिषु विशिष्टेषु विपर्यासदर्शनमात्रलक्षणस्य एकस्मिन्नेवोदाहरणत्वेन रिष्टे दर्शयितुं युक्ते यदनेकरिष्टप्रदर्शनं तत् प्रपञ्चार्थं वेद्यम्। **चरके** चोक्तम्—

"इत्युक्तं लक्षणं सर्वमिन्द्रियेष्वशुभोदयम्।
[1]एतदेव पुनर्भूयो विस्तरेण निबोधत॥
घनीभूतमिवाकाशमाकाशमिव मेदिनीम्।
[2]वि(हीन?गीत)मुभयं वापि पश्यन् मरणमृच्छति॥
यस्य दर्शनमायाति वायुरम्बरगोचरः।
वह्निर्नायाति दीप्तोऽपि तस्यायुःक्षयमादिशेत्॥
जले सुविमले जालमजालावतते [3]नरः।
योऽग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम्॥
कृष्णं वा यदि वा शुक्लं [4]सोऽभ्रौ वसति तां समाम्।
मरीचीनसतो मेघान् मेघानप्यसतोऽम्बरे॥
विद्युतो वा विना मे[5]घान् पश्यन्मरणमृच्छति।"

इत्यादि। **पाठ्यकारस्त्वाह**—"घनीभूतमित्यादि। घनीभूतमिव मेघरूपमिव पश्यति। यः पुनः वर्तमानमेघं केवलमम्बरमिव पश्यति। पुनरमूर्तमिव मूर्तं चेति ब्रूते। असच्च सदिति। अत्र कोऽर्थ इति चेद्—घनीभूतमिति ऊर्ध्वं दूरादुद्दिश्य प्रोक्तम्। अमूर्तमित्यादि तिर्यगारात्। असच्च सदित्यधः समीपे" इति। अन्यथा व्याख्यायमाने पौनरुक्त्यं स्यादिति तस्याभिप्रायः।

---

१. 'तदेव तु पुनर्भूयो'। २. 'विगीतं ह्युभयं ह्येतत् पश्यन्'। ३. 'तथा'।
४. 'निशां वसति सप्तमीं'। ५. 'मेघैः' इति मुद्रिते।

सारकृताप्ययमर्थोऽसभ्य एवेति प्रोक्तम् । इन्द्रियान्यथात्वे बहुरूपता सौश्रुते चोक्ता—

तडित्वतोऽसितान् यैश्च निर्मले गगने घनान् ।
दिवा ज्योतींषि यश्चापि प्रदीप्तानीव पश्यति ॥
रात्रौ सूर्यं ज्वलन्तं वा वर्चो वा शशिनो दिवा ।
विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम् ॥
न पश्यति च नक्षत्रं यश्च देवीमरुन्धतीम् ।
अनिलं मूर्तिमन्तं च योऽन्तरिक्षे प्रपश्यति ॥
द्वन्द्वानि शीतोष्णादीनी कालावस्था दिशस्तथा ।
विपरीतेन गृह्णाति भावानन्यांश्च यो नरः ॥ इत्यादि ।

**जाग्रद्रक्षांसि गन्धर्वान् प्रेतानन्यांश्च तद्विधान् ।**
**रूपं व्याकृति तद्वच यः पश्यति स नश्यति ॥ ३२ ॥**

जाग्रदित्यादि । आसन्नमरणो नरो जाग्रदेव यथास्वरूपाणि रक्षःपिशाचादीनि यः पश्यति न विपर्ययवस्तुरूपाणि । यतस्तदानीं तैरुपास्यते । तथाच वक्ष्यति—

'यमदूतपिशाचाद्यैर्यत्परासुरुपास्यते'

इति । रक्षांसीति बहुवचननिर्देशो बहुराक्षसदर्शने सुतरामस्य रिष्टस्य परिपूर्णत्वमिति द्योतयितुम् । एकस्मिन्नपि हि राक्षसे दृष्टे भवत्येव रिष्टम् । जातौ वा बहुवचनम् । अन्यांश्च तद्विधान् राक्षसादिप्रकारान् यः पश्यति । तथा विकृता द्रष्टुं दुःशका आकृतिर्यस्य रूपस्य तद् रूपं व्याकृति रक्षःपिशाचादेर्व्यतिरिक्तं तदनेकविधं यः पश्यति स नश्यति ॥

**सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम् ।**
**ध्रुवमाकाशगङ्गां वा स न पश्यति तां समाम् ॥ ३३ ॥**

१. 'यो वा' । २. 'ज्वलितानीव' । ३. 'दिवा वा चन्द्रवर्चसम्' । ४. 'सनक्षत्रां' । ५. 'यश्चानिलं मूर्तिमन्तमन्तरिक्षं च पश्यति' । ६. द्वन्द्वान्युष्णहिमादीनि कालावस्था' इति मुद्रिते ।

सप्तर्षीणामित्यादि । यो नरोऽरुन्धतीं सप्तर्षीणां समीपस्थां न पश्यति स नरः तां समां न पश्यति । स तस्य संवत्सरस्यान्तरे म्रियत इत्यर्थः । सप्तर्षीणां समीपस्थामित्यरुन्धत्या विशेषणेन सप्तर्षिसमीपेऽरुन्धत्याः स्थितिर्भवतीति वेदयति । तथाचान्यैः सामान्येनैवोक्तम् । यथा—

"अरुन्धतीं ध्रुवं चैव सोमच्छायां महापथम् ।
यो न पश्येन्न पश्येत् स नरः संवत्सरात् परम् ॥"

इति । तथा यो ध्रुवं न पश्यति तथा आकाशगङ्गां यो न पश्यति स तां समां न पश्यति ॥

इदानीं श्रोत्रेन्द्रियस्य विकृतिमाचिख्यासुराह—

**मेघतोयौघनिर्घोषवीणापणववेणुजान् ।**
**शृणोत्यन्यांश्च यः शब्दानसतो न सतोऽपि वा ॥ ३४ ॥**
**निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकास्वनम् ।**

मेघेत्यादि । मेघादिजान् वेणुपर्यन्तान् शब्दांस्तथारूपान्महतो यः पुरुषोऽसतोऽपरैरनुपलभ्यमानान् शृणोति । तथा मेघादिजान् तथान्यांश्च शब्दान् सतो विद्यमानान् न शृणोति, तेषां मरणमादिशेदिति वक्ष्यमाणस्य वचनविपरिणामेनात्र सम्बन्धः । इन्दुनाप्युक्तम्—"असतोऽपि शब्दान् शृणोत्येवमादेः, तेषां मरणमादिशेदित्यनेन संबन्धः" इति । यो धुकधुकाशब्दं कर्णावङ्गुल्या निष्पीड्य न शृणुयात् । धुरुधुरास्वनमिति वा पाठः ॥

**तद्वद् गन्धरसस्पर्शान् मन्यते यो विपर्ययात् ॥ ३५ ॥**
**सर्वशो वा न यो यश्च दीपगन्धं न जिघ्रति ।**

तद्वदित्यादि । (तैर्मेघादिजैः शब्दैस्तुल्यस्तद्वत् । यथा मेघादिजान् शब्दान् योऽसतः शृणोति सतश्च न शृणोति तद्वद् यो गन्धरसस्पर्शान्) विपर्ययाद् वैपरीत्येन मन्यते न यथावस्तुजान् । गन्धादीनां स्वभाववैपरीत्यं यो न मन्यत इत्यर्थः । तत्र गन्धविपर्ययो यथा—सुगन्धि दुर्गन्धि मन्यते दुर्गन्धि सुगन्धिमित्यादि । रसविपर्ययो यथा—मधुरमम्लम् अम्लं मधुरमित्यादि । स्पर्शविपर्ययो यथा—मृदुस्पर्शं खरस्पर्शं मन्यते खरस्पर्शं मृदुस्पर्शमित्यादि ।

सर्वशो गन्धादीन् वा यो न मन्यते । यश्चेत्यादि । तत्कालनिर्वाणस्य दीपस्य गन्धं यो न जिघ्रति घ्राणेन्द्रियेण नानुभवति ॥

**विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसाः ॥ ३६ ॥**

**यः पांसुनेव कीर्णाङ्गो योऽङ्गघातं न वेत्ति वा ।**

विधिनेत्यादि । विधिना शास्त्रोक्तेन प्रयुक्ता रसा यस्य दोषाय रोगाय स्युः । अविधिना शास्त्रविधिव्यतिक्रमेण प्रयुक्ता रसाः स्वास्थ्याय स्युः * ॥

**अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ॥ ३७ ॥**

**जानात्यतीन्द्रियं यश्च तेषां मरणमादिशेत् ।**

अन्तरेणेत्यादि । तीव्रं तपः अन्तरेण उग्रं तपो विना यः पुरुषोऽतीन्द्रियं इन्द्रियेभ्योऽतिक्रान्तं वेत्ति । तथा योगं विधिपूर्वकमन्तरेण योऽतीन्द्रियं जानाति । तपः व्रतचर्यादिभिः कायक्लेशः । योगश्चित्तवृत्तिनिरोधः । विधिपूर्वको यथाशास्त्रं सम्यगुपदेशः । तथान्योऽपि योगो रसायनादिः । युज्यत इति योगो विधिविशेषः । शास्त्रोद्दिष्टरसायनादिनापि ह्यतीन्द्रियं दृश्यते दूरव्यवस्थितादि । इन्दुनाप्युक्तं—"विधिपूर्वको योगः पातञ्जलादिशास्त्रदृष्टेन विधिना सम्पादितः । तमन्तरेणातीन्द्रियमविषयमिन्द्रियाणां स्वर्गादि यो जानाति" इति । तेषां पूर्वोक्तानां सर्वेषां मरणमादिशेत् ॥

अधुना स्वरविकृतिमाह—

**हीनो दीनः स्वरोऽव्यक्तो यस्य स्याद्गद्गदोऽपि वा ॥ ३८ ॥**

**सहसा यो विमुह्येद्वा विवक्षुर्न स जीवति ।**

हीन इत्यादि । यस्य पुरुषस्य स्वरः शब्दो (निमित्तमन्तरेण हीनोऽथवा दीनो दैन्ययुक्तो भवति । अव्यक्तोऽस्फुटो यस्य स्यात् । गद्गदो घर्घरो वा यस्य भवति । यो वा विवक्षुः वक्तुमिच्छन् कारणमन्तरेण विमुह्येद्वक्तुं न शक्नोति स न जीवति) ॥

**स्वरस्य दुर्बलीभावं हानिं वा बलवर्णयोः ॥ ३९ ॥**

* 'यः पांसुने'त्यादेर्व्याख्या भ्रष्टेति प्रतिभाति ।

**रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ।**

(स्वरस्येति । स्वरस्य) शब्दस्य दौर्बल्यं दृष्ट्वा बलवर्णयोश्च हानिमयुक्त्या दृष्ट्वा मरणमादिशेत् । चशब्दः समुच्चये । रोगवृद्धिमयुक्त्यैव नरस्य दृष्ट्वा मरणमादिशेत् । अयुक्त्या निर्निमित्तमेवेत्यर्थः । **हाटको**ऽपि – "अयुक्त्या निर्निमित्तं रोगवृद्धि"मित्याह । अयुक्त्या रोगवृद्धिः या अयुक्त्या आहारादिपूर्विकया प्राप्ता ॥

**अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ॥ ४० ॥**
**श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत् ।**

(अपस्वरमिति । स्वभावस्वरादपगतं भ्रष्टमपस्वरं हीनस्वरं कृत्वा यो नरः) अहं मरिष्यामीत्येवमात्मनो मरणं भाषते न परस्य तं तथाभूतं दूरतो दूरादेव वर्जयेद् वैद्यो न चिकित्सेत् । **हाटको**ऽप्याह— "अपस्वरमन्यथाभूतस्वरं दीनस्वरं वा कृत्वा आत्मनो मरणं प्राप्त'महं मरिष्यामी'त्याभाषमाणं वर्जयेद् वैद्यः" इति । **इन्दुरपि**— "आत्मनो मरणं प्राप्तं दुष्टेन स्वरेण भाषमाणं वर्जये"दित्याह । तथा अस्य शब्दस्य अहं मरिष्यामीत्येवंभूतस्य यो नरः श्रोता तमपि वैद्यो दूरतः परिवर्जयेत् । **पाठ्यकार**स्त्वाह— "श्रोतारं चास्य शब्दस्येति । 'मम मरणं विद्यते ननु' इत्यपस्वरं प्रष्टारमित्यर्थः" इति ॥

स्वराश्रयं रिष्टमुक्त्वा छायाश्रयं रिष्टमभिधित्सुराह—

**संस्थानेन प्रमाणेन वर्णेन प्रभयापि वा ॥ ४१ ॥**
**छाया विवर्तते यस्य स्वप्नेऽपि प्रेत एव सः ।**

संस्थानेनेत्यादि । संस्थानं प्रतिपुरुषं विलक्षणं समविषमरूपम् । आकृतिरित्यर्थः । तत्र यदि शरीरस्य समं संस्थानं भवति छाया त्वस्य विषमा दृश्यते तदा रिष्टम् । तथा यदि शरीरस्य विषमं संस्थानं छाया तु समा भवति तदा रिष्टम् । तथा यदि दीर्घप्रमाणस्य सतो ह्रस्वा छाया भवति ह्रस्वप्रमाणस्य दीर्घा वा भवति तदपि रिष्टम् । एवं संस्थानेन प्रमाणेन च छायाविवृत्तिर्वेद्या । तथा यस्य नाभसी छाया आग्नेयी छाया या वर्णतो दृश्यते सा वर्णविवृत्तिः । एवं पृथिव्यादिमयीषु छायासु वर्णविवृत्तिर्योज्या । तथा यस्य यथाभूता प्रभा

सा अन्यथाभूता भवति सा प्रभाविवृत्तिः । एवं संस्थानाद्यन्यतमेन छाया यस्य विवर्तते अन्यथाभूता सम्पद्यते स्वप्नेऽपि स पुमान् प्रेत एव किं पुनर्जाग्रदवस्थायां न प्रेत इत्येवकारेण रिष्टस्याव्यभिचारित्वं सूचयति । उत्पन्नश्चेन्नरस्य छायान्यथाभावस्तदानीं स पुरुषो यमसात्कृतो मन्तव्य इत्यर्थः । **हाटको**ऽप्याह—“समसंस्थाने शरीरे छाया विषमा स्यात् । विषमसंस्थाने शरीरे छाया समा स्यात् । तथा दीर्घप्रमाणस्य ह्रस्वा ह्रस्वप्रमाणस्य दीर्घा । एवं संस्थानेन प्रमाणेन छायाविवृत्तिर्वेद्या । यदि नाभसी छाया आग्नेय्या वर्णं भजते, आग्नेयी वा नाभस्याः । एवमन्यभूतेष्वपि द्रष्टव्यम् । कान्तिर्यस्य तथाभूता प्रभा सा अन्यथा भवेत् सा प्रभाविवृत्तिः । **टिप्पणे**ऽप्युक्तं—“समं संस्थानं विषमा छाया दृश्यते एतत् संस्थानतो विवृत्तिः, विषमं संस्थानं समा छाया दृश्यते एतदपि । दीर्घस्य ह्रस्वा छाया दृश्यते ह्रस्वस्य दीर्घा च एतत्प्रमाणतो विवृत्तिः । यस्य आग्नेयी छाया सा नाभस्या वर्णेन दृश्यते नाभसी वा आग्नेय्या इत्यादि वर्णतो विवृत्तिः । यस्य या प्रभा तदन्यथाभावः प्रभाया विवृत्तिः” इति । **पाठ्ये**ऽप्युक्तं—“संस्थानं लक्षणम् । प्रमाणम् - നീളവും അളവും । वर्णम् - നിറം । प्रभा - ഒളി” । (इति) ।

अस्याश्च छायाया द्वैरूप्यं दर्शयितुमाह—

**आतपादर्शतोयादौ या संस्थानप्रमाणतः ॥ ४२ ॥**

**छायाङ्गात्संभवत्युक्ता प्रतिच्छायेति सा पुनः ।**

**वर्णप्रभाश्रया या तु सा छायैव शरीरगा ॥ ४३ ॥**

आतपेत्यादि । **पाठ्यकारो**ऽपि—“आतपादर्शेत्यादिना छायाद्वैरूप्यं स्वरूपं च ब्रूते” इत्याह । या शरीरादातपादर्शतोयघृतादौ शरीरसंस्थानप्रमाणानुरूपा संभवति प्रतिबिम्बरूपा सा प्रतिच्छाया इत्युच्यते । तस्या हि न वर्णप्रभे आश्रयः । यस्याः पुनः वर्णप्रभे आश्रयः छायायाः सा शरीरगैव शरीरस्थैव छाया न प्रतिच्छायावत् शरीरादन्यत्रातपादर्शतोयादौ कुत्रचिदपयाति प्रतिबिम्बकस्वरूपतया । **हाटको**ऽप्याह—“शरीरसंस्थानप्रमाणानुरूपा शरीरात् संभवति प्रतिबिम्बरूपा सा प्रतिच्छायेत्युच्यते । या पुनर्वर्णप्रभाश्रया छाया सा शरीरस्थैव । मरीचिरूपा सा वर्णं प्रभां च किञ्चित्प्रकाशयति पञ्चभूतात्मिका” इति ॥

**भवेद्यस्य प्रतिच्छाया छिन्ना भिन्नाधिकाकुला ।**
**विशिरा द्विशिरा जिह्मा विकृता यदि वान्यथा ॥ ४४ ॥**
**तं समाप्तायुषं विद्यान्न चेल्लक्ष्यनिमित्तजा ।**

भवेदित्यादि । यस्य पुंसः प्रतिच्छाया आतपादर्शादिषु प्रतिबिम्बं छिन्ना द्विधाभूता दृश्यते । अथवा भिन्ना किञ्चित्सच्छिद्रेव दृश्यते । तथा यस्याधिका दृश्यते न यथाप्रमाणा । यस्य वा आकुला चलस्वरूपा अनिश्चितरूपा भवति । यस्य वा विशिराः शिरोरहिता छाया । यस्य द्विशिराः । तथा यस्य जिह्मा कुटिला । विकृतेत्यादि । उक्तप्रकारादन्यथा अन्येन प्रकारेण वा यस्य विकृता दृश्यते आतपादर्शादौ तं पूर्वोक्तं सर्वमेव समाप्तायुषं क्षीणजीवितं विद्यात् । न चेदित्यादि । लक्षयितुं प्रत्यक्षादिभिः प्रमाणैः शक्यं लक्ष्यम् । शक्यार्थे कृत्यः । लक्ष्यं च तन्निमित्तं च तस्मात्तथाविधान्निमित्ताद्विकृता छाया यदि न भवति तदा रिष्टं नान्यथा । **हाटको**ऽप्याह—"तं समाप्तायुषं विद्यान्न चेल्लक्ष्यनिमित्तजा यदि न काचतिमिरादिकारणान्तरजा" इति । **पाठ्ये**ऽपि—"लक्ष्यमादर्शादी"त्युक्तम् ॥

**प्रतिच्छायामयी यस्य न चाक्ष्णीक्ष्येत कन्यका ॥ ४५ ॥**

प्रतिच्छायेत्यादि । प्रतिच्छायामयी कन्यका प्रतिबिम्बकुमारिकेति लोके प्रसिद्धा । आभिमुख्ये स्थितस्य यस्याक्ष्णि नेत्रे नेक्ष्येत नो चेल्लक्ष्यते तं समाप्तायुषं विद्यात् सद्वैद्यः । "कन्यका आकृतिः" इति **पाठ्ये** । **संग्रहे**—"यस्य दृष्टौ प्रतिच्छायामयी कुमारी न दृश्यते स परासुः" इति । **इन्दुः**—"यस्य दर्पणादौ प्रतिच्छायायां प्रतिबिम्बेऽक्ष्णि कुमारिका न दृश्यते स परासुः मृतकल्पः" इति ॥

इदानीं यस्य महाभूतस्य छाया यादृशी स्यात् तां कथयितुमाह—

**खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः ।**

खादीनामित्यादि । खादीनां महाभूतानां पञ्चानां पञ्च छाया भवन्ति । ननु खादीनां पञ्चत्वात् छायानामपि पञ्चत्वमर्थाल्लब्धमेव । तत्किं पञ्चग्रहणेन ।

अस्त्येवैतत् । किन्तु यथा खादिपञ्चभ्यो द्रव्यमेकं भूतोत्कर्षापकर्षभेदाचा-सङ्ख्येयत्वं दृष्टं तथा छायानामप्येकत्वं भूतोत्कर्षापकर्षभेदाच असङ्ख्येयत्वमा-शङ्क्य तदाशङ्कानिवृत्त्यर्थं पञ्चग्रहणम् । पञ्चैव छाया नोनाधिका इति । किंभूताः छायाः—विविधलक्षणाः विविधं लक्षणं वक्ष्यमाणं यासां ताः एवम् ॥

नाभसी निर्मलानीला सस्नेहा सप्रभेव च ॥ ४६ ॥

नाभसीत्यादि । आकाशजा छाया निर्मला शुद्धा । तथा आनीला ईषन्नीलेत्याकारप्रश्लेषोऽत्र वेद्यः । शुद्धवैडूर्यविमला तोयजेति वक्ष्यमाणत्वात् । तथा सस्नेहा किञ्चित्स्निग्धा । सप्रभेव सदीप्तिरिव । सप्रभेत्यनेन शोभनत्व-मुक्तम् । एतदेव स्फुटयितुमिवशब्दं तन्त्रकृत् प्रायुङ्क्त । अन्यथा छायाप्रभयोः भिन्नविषयत्वाद् अनुपपन्नमेतद्वाक्यं स्यात् । भेदश्चानयोरधुनैव वक्ष्यते ॥

वाताद्रजोरुणा श्यावा भस्मरूक्षा हतप्रभा ।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ ४७ ॥
शुद्धवैदूर्यविमला सुस्निग्धा तोयजा सुखा ।
स्थिरा स्निग्धा घना शुद्धा श्यामा श्वेता च पार्थिवी ॥ ४८ ॥

वाताद्रजोरुणादियुक्ता छाया भवति । आग्नेयी विशुद्धरक्तवर्णा दीप्ताभा । तथा दर्शनं प्रियं यस्याः सैवंविधा भवति । तोयजा छाया निर्मलवैदूर्यविमला सुष्ठु स्निग्धा सुखा सुखावहा । पार्थिवी छाया स्थिरादिगुणयुक्ता । ननु अग्नि-जलभुवां स्वयं वर्णादियोगादाग्नेय्यादिकानां छायानां तद्वर्णकथनमुपपन्नम् । नभोमारुतयोस्तु स्वयं वर्णाद्ययोगात् कथं तच्छायानां वर्णादियोगो युज्यत इति केचित् । तान् ब्रूमहे—अचिन्त्यत्वाद्धेतुफलस्यादोषः । तथा हि मधुरादयो रसाः कालादमूर्ताद् भवन्तो दृश्यन्ते यथा तथा छाये अप्येते भविष्यतः । तत्र यस्य नरस्य कर्मादिसहायं नभश्छायामुत्पादयति तस्य नाभसीति युज्यत एव । एवं वायव्यायामपि वाच्यम् । हाटकोऽप्याह—"नभोमारुतयोरमूर्तत्वेन वर्णाद्य-योगोऽपि छायावर्णकथनं पुरुषस्य कर्मादिसहाययोः छायोत्पादकशक्तिरनयोर-स्तीति अचिन्त्यत्वाद्धेतुफलभावस्य" इति ॥

इदानीमासां छायानां गुणनिर्देशमाह—

**वायवी रोगमरणक्लेशायान्याः सुखोदयाः ।**

वायव्या छाया रोगाद्यर्थं जायते । अन्याः छायाः सुखोदयाः सुखावहाः ॥

**प्रभोक्ता तैजसी सर्वा सा तु सप्तविधा स्मृता ॥ ४९ ॥**

प्रभा सर्वा सप्तप्रकारापि तैजस्याग्नेयी उक्ता तन्त्रकृद्भिः । सा तु प्रभा सप्तविधा स्मृता तन्त्रकृद्भिः ॥

तदेव सप्तविधत्वमाह रक्तेत्यादिना—

**रक्ता पीता सिता श्यामा हरिता पाण्डुरासिता ।**

**तासां याः स्युर्विकासिन्यः स्निग्धाश्च विमलाश्च याः ॥ ५० ॥**

**ताः शुभा मलिना रूक्षाः संक्षिप्ताश्चासुखोदयाः ।**

रक्ता – ചുവന്നതു് । पीता – മഞ്ഞളിച്ചതു് । सिता – വെളുത്തതു് । श्यामा – നെല്ലോലപ്പച്ചനിറം । हरिता – പച്ചയിൽ വെളുപ്പു കൂടിയതുപോലെ । पाण्डुरा – മഞ്ഞളും വെളുപ്പും കൂടിയതുപോലെ । असिता – നീലംപോലെ । तासामित्यादि । तासां पूर्वोक्तानां प्रभाणां मध्याद् याः प्रभाः विकासिन्यः विसृता इव तथा स्निग्धाः विमलाश्च स्युः ताः शुभाः कल्याणकारिण्यः । याश्च मलिनादिगुणयुक्ताः ताः अशुभोदयाः अमङ्गलकारिण्यः ॥

छायाप्रभयोरन्यत्वं प्रदर्शयितुं लक्षणमाह—

**वर्णमाक्रामति छाया प्रभा वर्णप्रकाशिनी ॥ ५१ ॥**

वर्णमित्यादि । छाया कान्तिः वर्णमाक्रामति रक्तादिवर्णं परिभूयावतिष्ठते । हाटकोऽप्याह—"वर्णमाक्रामति अतितिष्ठति तस्य शोभां किञ्चित्प्रकाशयति यात्मानं प्रकाशयति प्रभावत् ।" इति । प्रभा तु वर्णप्रकाशिनी वर्णं प्रकाशयितुं शीलमस्याः सा वर्णप्रकाशिनी तैजसत्वात् ।

छायाप्रभयोर्भेदे लक्षणान्तरमप्याह—

**आसन्ने लक्ष्यते छाया विकृष्टे भा प्रकाशते ।**

आसन्न इत्यादि । छाया आसन्ने निकटे लक्ष्यते । यथा चित्रस्य प्रभा

दूरादवभासते । यथा रत्नादीनां प्रभा विकृष्टे दूरे प्रदेशे प्रकाशते दूरादवभासत इत्यर्थः । छाया कान्तिः – തന്നിറത്തോ° । भाः प्रभा – ഒളി । **संग्रहे–** "छाया वर्णमाक्रामत्यासन्ना लक्ष्यते पञ्चभूतात्मिका च । प्रभा तु वर्णं प्रकाशयति विप्रकृष्टाल्लक्ष्यते तेजःप्रभैव च" । इति ॥

एवं छायाप्रभयोरन्यत्वं प्रदर्श्य तयोरेव व्याप्तिं प्रदर्शयति नाच्छाय इत्यादिना—

**नाच्छायो नाप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु ॥ ५२ ॥**
**नृणां शुभाशुभोत्पत्तिं काले छायासमाश्रयाः ।**

कश्चिदपि पुरुषः छायारहितः प्रभाहीनश्च नास्ति । विशेषास्तु नृणां शुभाशुभोत्पत्तिं काले विशिष्टे चिह्नयन्ति व्यञ्जयन्ति द्योतयन्तीत्यर्थः । किंभूताः विशेषाः—छायासमाश्रयाः छायाश्रिताः । **टिप्पणे** तूक्तं—"छायाप्रभाश्रिताः" इति वा पाठः । छायाश्रिताः प्रभाश्रिताश्च विशेषा उत्कर्षापकर्षा नृणां शुभाशुभोत्पत्तिं काले विशिष्टे चिह्नयन्ति" इति ।

**निकषन्निव यः पादौ च्युतांसः परिसर्पति ॥ ५३ ॥**

"निकषन्नित्यादिना क्रियाविकृतिरुच्यते" इति **सारकृत्** । निकषन्नित्यादि । वक्ष्यमाणाः सर्वे समवर्तिनो वशगा इति योज्यम् । अन्तकालकारित्वादस्य । निकषन् घर्षयन् इव यः पादौ च्युतांसः सन् भूमौ परिसर्पति ॥

**हीयते बलतः शश्वद् योऽन्नमश्नन् हितं बहु ।**
**योऽल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविद् ॥ ५४ ॥**

तथा योऽन्नमश्नन् भक्तं भक्षयन् बलान्नित्यं हीयते । किंभूतमन्नं—हितं पथ्यं, बहु भूरि । तथा योऽल्पाशी बहुविण्मूत्रः । तथा यो बह्वश्नाति नित्यमल्पविण्मूत्रश्च ॥

**योऽल्पाशी वा कफेनार्तो दीर्घं श्वसिति चेष्टते ।**
**दीर्घमुच्छ्वस्य यो ह्रस्वं निःश्वस्य परिताम्यति ॥ ५५ ॥**

यश्चाल्पाशी कफेनार्तः पीडितो दीर्घं श्वसिति बहु श्वासं मुञ्चति । तथा चेष्टते परिलुठति । तथा यो दीर्घमुच्छ्वस्य बहु ऊर्ध्वं श्वासं मुक्त्वा अनन्तरं

ह्रस्वं निःश्वस्य अल्पं श्वासं प्रत्यावृत्तमन्तः कृत्वा परिताम्यति दुःखायते । इन्दुरपि---"परिताम्यति वैक्लव्यं याती"त्याह ।

**ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते भृशम् ।**
**शिरो विक्षिपते कृच्छ्राद् योऽञ्चयित्वा प्रपाणिकौ ॥ ५६ ॥**

यश्चापि ह्रस्वं प्रश्वसिति । व्याविद्धं विषमं कृत्वा नाडीभिः भृशमतिशयेन स्पन्दते स्फुरति । यः प्रपाणिकौ पाण्योः पश्चाद्भागस्थितावयवविशेषौ अञ्चयित्वा कृच्छ्रेण शिरो मूर्धानं विक्षिपते । 'आकुञ्च्य' इतीन्दुः । पाठ्येऽपि--"प्रपाणिकः - ഞൊണരികൾ" (इति) । "प्रपाणिकः कूर्परमणिबन्धान्तरम्" इतीन्दुः ।

**यो ललाटात् स्रुतस्वेदः श्लथसन्धानबन्धनः ।**
**उत्थाप्यमानः संमुह्येद् यो बली दुर्बलोऽपि वा ॥ ५७ ॥**

यो ललाटात् स्रुतस्वेदः सन् शिथिलसन्धिबन्धो भवति । यः उत्थाप्यमानो बली दुर्बलोऽपि वा संमुह्येद् मोहमुपैति ।

**उत्तान एव स्वपिति यः पादौ विकरोति च ।**
**शयनासनकुड्यादौ योऽसदेव जिघृक्षति ॥ ५८ ॥**
**अहास्यहासी संमुह्यन् यो लेढि दशनच्छदौ ।**

यः उत्तान एव न जातुचित् पार्श्वाभ्यां स्वपिति । यश्च पादौ विकरोति इतस्ततो विक्षिपति । "विकरोति नानाकरोति" इति सारकृत् । टिप्पणेऽपि (विकरोतीत्युक्तम् ?) यः शयनादावसदविद्यमानमेव वस्तु जिघृक्षति ग्रहीतुमिच्छति । यः अहास्ये हास्यविषयस्याभावेऽप्यभीक्ष्णं हसन् संमुह्यन् दशनच्छदौ लेढि जिह्वया परिमृशति । इन्दुरपि----"अहास्ये वस्तुनि हासीत्यहास्यहासी" इत्युक्तवान् । सम्मुह्येदित्यपपाठः ॥

**उत्तरोष्ठं परिलिहन् फूत्कारांश्च करोति यः ॥ ५९ ॥**
**यमभिद्रवति च्छाया कृष्णा पीतारुणापि वा ।**
**भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ॥ ६० ॥**
**वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः ।**

यश्च उत्तरोष्ठं परिलिहन् फूत्कारान् नानाविधान् शब्दान् करोति । 'शूत्कारान्' इति वा पाठः । यं नरं कृष्णादिका छाया अभिद्रवति अभ्यागच्छति । 'अभिभवती'त्यरुणदत्तः । भिषगादिद्विषश्च ये नराः ते समवर्तिनो वशगाः । समं वर्तते रागद्वेषौ हित्वा समवर्ती वैवस्वतो यमः । सर्व एवेत्येतत् 'निकषन्निव यः पादौ' इत्यत आरभ्य यावद् 'भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये' इत्येतत्पर्यन्तस्य ग्रन्थस्य सम्बन्धार्थम् ॥

**योऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा ॥ ६१ ॥**

**बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते ।**

**निर्निमित्तं च यो मेधां शोभामुपचयं श्रियम् ॥ ६२ ॥**

**प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम् ।**

योऽणुज्योतिरित्यादि । यः पुमानणुज्योतिः स्तोकदृक् । केचित्त्वल्पतेजा इत्याहुः । **पाठचकारस्तु**–"अणुज्योतिरिति यस्य दीपदर्शनावस्थायामणुत्वप्रतीतिः" इत्याह । 'अणुज्योतिरतिस्वल्पप्रकाशः' इतीन्दुः । तथा अनेकाग्रो व्याकुलचेताः, चित्तवृत्तिरेकत्र न वर्तत इत्यर्थः । **इन्दुरपि**–"अनेकाग्रो [2]विक्षिप्तचित्तः" इत्याह । दुश्छायो विवर्णच्छायः । **हाटकोऽपि**–"दुश्छायोऽन्यवर्णच्छायः" इत्याह । "दुश्छायो निन्दितकान्तिः" इति **सारकृत्** । दुर्मनाः सदा सततमेव शोकाक्रान्तमानसः । **इन्दुना तूक्तं**–"सदा कारणं विनैवंविधः" इति । तथा यस्य पुंसः तन्नामोद्दिश्य बलिं प्रणीतं दत्तं बलिभुजो वायसादयो नोपभुञ्जते न खादन्ति स यमक्षयं प्राप्नोतीति सम्बन्धः । बलिभुज इत्यतिशयार्थम् । काका अपि नादन्ति किं पुनरन्ये इत्यर्थः । तथा यो नरो निर्निमित्तं मेधादिसञ्जननरसायनादिकारणमन्तरेण मेधादीन् प्राप्नोति । अतो वा मेधादिभ्यो विभ्रंशं प्राप्नोति सोऽन्तकगृहं प्राप्नोति । श्रीरत्र धनं राज्यं वा । उपचयः शरीरपुष्टिः । स यमक्षयं प्राप्नोतीति ॥

---

१. इतः पूर्वं – 'ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम् । उष्णोऽपरः प्रदेशश्च शरणं तस्य देवता ॥' इत्यधिकः श्लोकः मुद्रिते दृश्यते । २. 'व्याक्षिप्त' इति मुद्रिते ।

गुणदोषमयी यस्य स्वस्थस्य व्यथितस्य वा ॥ ६३ ॥
यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति ।

गुणेत्यादि । गुणमयी प्रकृतिः सत्त्वादिजा दोषमयी प्रकृतिः वातादिजा पूर्वोक्ता स्वस्थस्य आतुरस्य वा अन्यथात्वं याति स्वभावं हित्वा परमावधि षण्मासं स न जीवति ॥

भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ॥ ६४ ॥
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ।
मत्तवद् गतिवाक्कम्पमोहा मासान्मरिष्यतः ॥ ६५ ॥

षड्भिर्मासैर्मरिष्यतो नरस्य भक्त्यादीनि षड् अहेतुकं कारणमन्तरेण निवर्तन्ते । अहेतुकमिति निवर्तनक्रियाविशेषणम् । षडिति नियमार्थम् । यदा बुद्ध्यादीनि षड् निवर्तन्ते नै(कै)कं तदा रिष्टमित्यर्थः । "षट् पृथग्भूता" इतीन्दुः । मासेन मरिष्यतो (मत्तवद्) मत्तस्येव गतिवाक्कम्पमोहा भवन्ति ॥

नश्यत्यजानन् षडहात् केशोल्लुञ्छनवेदनाम् ।
न याति यस्य चाहारः कण्ठं कण्ठामयादृते ॥ ६६ ॥
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते ।
यस्य निद्रा भवेन्नित्यं नैव वा न स जीवति ॥ ६७ ॥
वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम् ।
चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः ॥ ६८ ॥
यैः पुरा रमते भावैररतिस्तैर्न जीवति ।

नश्यतीत्यादि । केशोल्लुञ्छनवेदनां कचोत्पाटनपीडामजानन् अविदन् षडहान्नश्यति । उल्लुञ्छनमुत्पाटनम् । यस्य आहारः कण्ठामयं विना कण्ठं न याति सोऽपि षडहान्नश्यति षडहान्तरे म्रियते । प्रेष्या भृत्याः यस्य प्रतीपतां प्रतिकूलतां यान्ति स नश्यति । यश्च प्रेताकार उपलक्ष्यते सोऽपि न जीवति । "प्रेताकृतिरुदीर्यते उच्यते" इतीन्दुः । यस्य नरस्य निद्रा नित्यं सततं भवति स न जीवति । यस्य नैव वा न कदाचिन्निद्रा भवति सोऽपि न जीवति ।

यस्य नरस्याकारणादश्रूणामश्रुस्रोतसां वक्त्रं मुखं द्वारमापूर्यते स न जीवति। अश्रूणामिति पूरणयोगे षष्ठी अश्रुभिरित्यर्थः। यस्य चरणौ भृशमत्यर्थं निर्निमित्तं स्विद्यतः स न जीवति। चक्षुरित्यादि। यमराज्यं यास्यतो नरस्य नयनमाकुलत्वं याति। यैर्भावैः पदार्थैः पुरा पूर्वं रमते सुखायते तैः पदार्थैर्न रतिर्भवति यस्य स न जीवति। इन्दुना तूक्तं—"तैर्भावैररतिः सन् न जीवति। न विद्यते रतिर्यस्यासावरति"रिति॥

**सहसा जायते यस्य विकारः सर्वलक्षणः॥ ६९॥**
**निवर्तते वा सहसा सहसा स विनश्यति।**

यस्य पुंसो विकारो ज्वरादिः सहसा कारणं विना सर्वलक्षणः सर्वलिङ्गोपेतो जायते। अथवा तादृशो विकारः सहसा शीघ्रमेव यस्य निवर्तते स पुरुषः सहसा अचिरादेव विनश्यति। हाटकोऽप्याह—"यस्य कारणं विना सहसा रोगो जायते अथवा निवर्तते स शीघ्रं विनश्यति" इति॥

अधुना प्रतिरोगं रिष्टमाह—

**ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिकः॥ ७०॥**
**सप्रलापभ्रमश्वासः क्षीणं शूनं हतानलम्।**
**अक्षामं सक्तवचनं रक्ताक्षं हृदि शूलिनम्॥ ७१॥**
**संशुष्ककासः पूर्वाह्णे योऽपराह्णेऽपि वा भवेत्।**
**बलमांसविहीनस्य श्लेष्मकाससमन्वितः॥ ७२॥**

ज्वर इत्यादि। प्रधानस्य ज्वरस्यैव पूर्वं तावद्विकृतिरुच्यते। **पाठ्यकारो**ऽप्याह—"ज्वरो निहन्तीत्यादिना व्याधिमुद्दिश्य विकृतिमाह" इति। ज्वरो बलवानित्यादिलक्षणः पुरुषं हन्ति। बलवान् हेत्वादिभिः बलवद्भिर्युक्त इत्यर्थः। गम्भीरोऽशेषधात्वन्तर्गतः। "अन्तर्वेगः" इतीन्दुः। दैर्घरात्रिको दीर्घकालानुबन्धी। हाटकोऽपि—"दीर्घवासरानुबन्धी" इत्याह। इन्दुरपि—"दैर्घरात्रिको बहुकालप्ररूढः" इत्याह। अन्ये तु रात्रिजागरकारीत्याहुः। तथा चोक्तं—

"दीर्घा हि जाग्रतो रात्रिर्दीर्घं श्रान्तस्य योजनम्।"

इत्यादि। तथा प्रलापादियुक्तः। कीदृशमातुरम्—क्षीणं, तथा शूनं हतानल-मक्षामं सक्तवचनं, तथा रक्तनेत्रं हृदयशूलान्वितम्। हन्तीति योज्यम्। यो ज्वरः संशुष्ककासः पूर्वाह्णे अथवा अपराह्णे वा भवेत् स द्विविधोऽपि हन्ति। तथा यः श्लेष्मकाससमन्वितो ज्वरो बलमांसविहीनस्य पुंसः स्यात् स तं हन्तीति रिष्टत्रयमेतत्। "अपराह्णे श्लेष्मकाससमन्वित इत्यनेन संबन्धः" इतीन्दुः। ननु—

> बलिभिर्हेतुभिर्युक्तो बहुभिर्बहुलक्षणः।
> ज्वरः प्राणान्तकृद् यश्च क्षिप्रमिन्द्रियनाशनः॥

इत्येष ज्वरस्य रिष्टप्रकारः कस्मान्नोक्तः। उच्यते—उक्तप्राय एवायं बलवानिति वचनात्॥

रक्तपित्तविकृतिलक्षणं रिष्टमधिकृत्याह—

> **रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनुःप्रभम्।**
> **ताम्रहारिद्रहरितं रूपं रक्तं प्रदर्शयेत्॥ ७३॥**
> **रोमकूपप्रविसृतं कण्ठास्यहृदये सजत्।**
> **वाससोऽरञ्जनं पूति वेगवच्चातिभूरि च॥ ७४॥**
> **वृद्धं पाण्डुज्वरच्छर्दिकासशोफातिसारिणम्।**

रक्तपित्तमीदृग्रूपं कर्तृभूतं नरं हन्ति। कीदृक्—भृशमत्यर्थं रक्तं लोहितवर्णं तथा भृशं कृष्णं च। भृशशब्दो हि द्वयोरपि युज्यते। तथा इन्द्रधनुःप्रभं नानावर्णमित्यर्थः। भृशे रक्तपित्ते रसमेदोमज्जादिमिश्रस्य रक्तस्य स्रवणान्नानावर्णत्वं सम्पद्यते। यच्च रक्तपित्तं विनापि वर्णैः रोमकूपेभ्यः समस्तेभ्यः प्रकर्षेण विसृतं प्रवृत्तं तच्च निहन्ति। तथा यच्च कण्ठे मुखे हृदये च तुल्यकालं सजत् संश्लिष्यत् सानुषङ्गं तच्च निहन्ति। इन्दुरपि—"कण्ठादिषु सजत् संगच्छदि"त्याह। वासस इत्यादि। वाससः अरञ्जनमित्यकारप्रश्लेषोऽत्र बोध्यः। वस्त्रस्य हि जीवशोणितं शुद्धशोणितरूपत्वान्न रञ्जनम्। एतेन रक्तं वस्त्रं समनन्तरं प्रक्षालितं शुद्धं सम्पद्यते न रागयुक्तम्। तथाप्यस्मिन् व्याधौ रक्त-

पित्ताभ्यां परस्परमविभागाद् वस्त्रस्य रञ्जनं प्राप्तम् । रक्तेन हि पित्तसहितेन वस्त्रं रज्यते नैतद्धौतं शुद्धं सम्पद्यते । तथा चोक्तं—

शुक्लं वा भावितं वस्त्रमवानं कोष्णवारिणा ।
प्रक्षालितं विवर्णं स्यात्पि(त्ते? त्तं) शुद्धं तु शोणि(तम्?ते) ॥

इति । **अरुणदत्तो**क्तिरेषा । अन्यथा प्रोक्तमिन्दुना---"वाससोऽरञ्जनं धौतस्यापि । रक्तपित्तं कर्तृ निहन्ति" इति । **हाटको**ऽपि--"वाससः अरञ्जनं वस्त्रस्य हि जीवशोणितं शुद्धशोणितरूपत्वान्न रञ्जनकृत् । जीवशोणितनिर्गमनान्मृत्युः" इति । वेगेन निर्गत्य रुद्धं पुनर्वेगेन प्रवर्तते इति वेगपदार्थः । तथा वृद्धमुद्रिक्तं सद्रक्तपित्तं पाण्ड्वादियुतं नरं हन्ति । वृद्धत्वमौषधादिभिरशान्तत्वमिति केचित् । "वृद्धोऽतिगतवयाः तं कर्म" इतीन्दुः ॥

**कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम् ॥ ७६ ॥**

कासश्वासौ ज्वरादिपञ्चविधोपद्रवयुक्तं हतः ॥

**यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम् ।**

यक्ष्मा राजयक्ष्मा पार्श्वरुजादियुक्तं नरं हन्ति ॥

**छर्दिर्वेगवती मूत्रशकृद्गन्धिः सचन्द्रिका ॥ ७७ ॥**
**सास्रविट्पूयरुक्कासश्वासवत्यनुषङ्गिणी ।**

छर्दिर्वेगवती महावेगेन प्रवर्तमाना नरं हन्ति । तथा मूत्रशकृद्गन्धिः मूत्रशकृतोरिव गन्धो यस्या इति "उपमानाच्च" (पा० सू० ५-४-१३७) इतीदादेशः । तथा सचन्द्रिका जले तैलबिन्दुसंस्थाना चन्द्रिकेत्युच्यते । सह अस्रविड्भ्यां वर्तत इति सास्रविट् । तथा पूयादिमती । तथा अनुषङ्गिणी चिरप्रसक्ता ॥

**तृष्णान्यरोगक्षपितं बहिर्जिह्वं विचेतनम् ॥ ७७ ॥**

तृष्णेत्यादि । तृष्णा अन्येन रोगेण ज्वरादिना क्षपितं हन्ति ॥

**मदात्ययोऽतिशीतार्तं क्षीणं तैलप्रभाननम् ।**
**अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनम् ॥ ७८ ॥**
**हृत्पार्श्वाङ्गरुजाच्छर्दिपायुपाकज्वरातुरम् ।**
**अतीसारो यकृत्पिण्डमांसधावनमेचकैः ॥ ७९ ॥**

**तुल्यस्तैलघृतक्षीरदधिमज्जवसासवैः ।**
**मस्तुलुङ्गमषीपूयवेसवाराम्बुमाक्षिकैः ॥ ८० ॥**

*अतीसारो यकृत्पिण्डादिभिर्माक्षिकान्तैस्तुल्यो हन्ति । "मांसधावनम् – മാംസം കഴുകിയ നീര് "मेचकम्" - മെഴുക इति पाठये । मेचको नीलवर्ण इति हाटकादयः । मस्तुलुङ्गं कपालमज्जा - തലച്ചോറ് । वेशवारः कुट्टितं मांसम् ॥

**अतिरक्तासितस्निग्धपूत्यच्छघनवेदनः ।**
**कर्बुरः प्रस्रवन् धातून् निष्पुरीषोऽथवातिविट् ॥ ८१ ॥**

**तन्तुमान् मक्षिकाक्रान्तो राजीमांश्चन्द्रकैर्युतः ।**
**शीर्णपायुवलिं मुक्तनालं पर्वास्थिशूलिनम् ॥ ८२ ॥**

**स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयन् ।**
**सतृड्श्वासज्वरच्छर्दिदाहानाहप्रवाहिकः ॥ ८३ ॥**

कर्बुरो नानावर्णः । प्रस्रवन् धातूनिति हेतुगर्भविशेषणम् । शीर्णपायुवलित्वादियुक्तमतीसारो निहन्ति । शीर्णा गुदवल्यो यस्य तम् । "शीर्णाः पायुर्वलयश्च यस्य तम्" इतीन्दुः । मुक्तो नालो नालक इव यस्य तं मुक्तनालम् । मुक्तबन्धनमित्यर्थः । इन्दुरपि – "मुक्तनालं स्रस्तगुदबन्ध"मित्याह । स्रस्तपायुं स्थानात् च्युतगुदम् । तथा बलेन क्षीणम् । पुनः प्रकृतत्वादतीसारो विशेष्यते । अन्नमुपवेशयन् तृडादिभिः सप्तभिः उपद्रवैर्युक्तः पूर्वोक्तविशेषणमातुरं हन्ति । इन्दुरपि—"सह तृडादिभिर्वर्तत इति स तथोक्तोऽतीसारः" इत्याह । प्रवाहिका निस्तानिका । पाठ्यकारस्तु—"कर्बुरः प्रस्रवन् धातूनिति पठति कर्बुरो ग्रहणीपर्याय इति वदन् ।"

**अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम् ।**
**मेहस्तृड्दाहपिटिकामांसकोथातिसारिणम् ॥ ८४ ॥**

तृडादियुक्तं मेहो हन्ति । मांसकोथो मांसक्लेदः ।

---

* मदात्ययइत्यादिपङ्क्तित्रयस्य व्याख्या भ्रष्टा स्यात् ।

पिटका मर्महृत्पृष्ठस्तनांसगुदमूर्धगाः ।
पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम् ॥ ८५ ॥
सर्वं च मांससङ्कोथदाहतृष्णामदज्वरैः ।
विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमैः ॥ ८६ ॥

पिटकाः शराविकाद्याः मर्मादिगाः । हृद्गुदस्य प्राधान्यात् पृथग् ग्रहणम् । मन्दोत्साहं प्रमेहिणं च ता घ्नन्ति । सर्वं च नरं मांससंकोथादिभिः क्रमान्तैर्युक्तं पिटका घ्नन्ति । न प्रमेहिणमेव । इन्दुनाप्युक्तं—"ताश्च पिटका मांससंकोथादिभिः कारणैः सर्वं विशेषानपेक्षया घ्नन्ति" इति । मर्मणां हृदय-कण्ठादीनां समन्ताद् रोधो मर्मरोधः ॥

गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः ।
सिराबद्धो ज्वरच्छर्दिहिध्माध्मानरुजान्वितः ॥ ८७ ॥
कासपीनसहृल्लासश्वासातीसारशोफवान् ।
विण्मूत्रसंग्रहश्वासशोफहिध्माज्वरभ्रमैः ॥ ८८ ॥
मूर्छाच्छर्द्यतिसारैश्च जठरं हन्ति दुर्बलम् ।
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ॥ ८९ ॥
विरेचनहृतानाहमानह्यन्तं पुनः पुनः ।

जठरमुदरं कर्तृभूतं विण्मूत्रसंग्रहादिभिः अतीसारान्तैर्हेतुभूतैर्हन्ति । दुर्बलत्वादियुक्तमातुरं हन्ति । कुटिल उपस्थो वस्तिमेढ्रवृषणादिरूपो यस्य तम् । "उपस्थं मेढ्र"मितीन्दुः । विरेचनहृतानाहं (पुनः) पुनरानह्यन्तं जठरं हन्ति ॥

पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनम् ॥ ९० ॥

पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनमातुरं हन्ति । दर्शनानि दृश्यानि रूपाणि । "दर्शनं नयन"मिति हाटकः ॥

तन्द्रेत्यादिना शोफरिष्टं ब्रूते—

तन्द्रादाहारुचिच्छर्दिमूर्छाध्मानातिसारवान् ।
अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् ॥ ९१ ॥

1. 'सङ्कोच' इति मुद्रिते ।

**नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि ।**
**राजीचितः स्रवंश्छर्दिज्वरश्वासातिसारिणम् ॥ ९२ ॥**

तन्द्रादियुक्तः शोफोऽनेकैरुपद्रवैः ज्वरश्वासादिभिर्युतः प्रथमं पादाभ्यां प्रसृतः नरं हन्ति । मुखात्प्रसृतः तन्द्रादियुक्तो नारीं हन्ति । न तु पुरुषम् । कुक्षिगुह्याभ्यां प्रसृत उभावपि स्त्रीपुंसौ हन्ति । तथा राजीभिः रेखाभिः दोषवर्णाभिः चितो व्याप्तः शोफः, तथा स्रवन् यथादोषं छर्द्यादियुतं पुरुषं हन्ति । इन्दुरपि---"स्रवन् छर्द्यादियुक्तं हन्ती"त्युक्तवान् ॥

**ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।**
**दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिनः ॥ ९३ ॥**

शोफान्ते स्वतन्त्रस्य शोफस्यान्ते शोफे निवृत्ते ज्वरातिसारौ । तयोः ज्वरातिसारयोः वा क्षये श्वयथुः शोफः । एवंविधा ज्वरातिसारशोफाः सर्वदेहिनोऽन्ताय मृत्यवे जायन्ते । दुर्बलस्य देहिनो विशेषेणान्ताय जायन्ते । इन्दुरपि—"अन्तो मरण"मित्याह ॥

**श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिण्डिके ।**
**सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत् ॥ ९४ ॥**

यस्य पुंसः श्वयथुः पादस्थः पिण्डिके च परिस्रस्ते सक्थिनी च सीदतः तं भिषक् परिवर्जयेत् ॥

**आननं हस्तपादं च विशेषाद् यस्य शुष्यतः ।**
**शूयेते वा विना देहात्स मासाद्याति पञ्चताम् ॥ ९५ ॥**

यस्याननादि विशेषाच्छुष्यति न तथा देहः, अथवा आननादि शूयते स नरो मासात् पञ्चतां याति । पञ्चभूतावशेषत्वं पञ्चत्वं बुध्यव्यक्ताहंकारप्रभृतिभिः वियोगः शरीरस्य, मरणमिति यावत् । इन्दुरप्याह—"यस्य देहो न तथा शुष्यति यथा[1] आननं हस्तपादं च । स पञ्चतां मरणाख्यां मासाद् याति ।

---

१. 'यथा हस्तपादं स' इति मुद्रिते ।

पञ्चता पञ्चभूतानां पृथग्भावः" इति। संग्रहेतूक्तं—

"उदरी यश्च शोफी वा स्वं न पश्यति मेहनम्।
यस्य वा जठरोन्नामात् परिधानं न तिष्ठति॥"

इति। अत्रापि मासाद् याति पञ्चतामित्यनुवर्तते॥

**विसर्पः कासवैवर्ण्यज्वरमूर्छाङ्गभङ्गवान्।**
**भ्रमास्यशोषहृल्लासदेहसादातिसारवान्॥ ९६॥**

विसर्प इत्यादौ हन्तीति स्थितम्॥

**कुष्ठं विशीर्यमाणाङ्गं रक्तनेत्रं हतस्वरम्।**
**मन्दाग्निं जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम्॥ ९७॥**

तृड्वन्तमतिसारिणं च कुष्ठं हन्ति॥

**वायुः सुप्तत्वचं भग्नं कफशोफरुजातुरम्।**
**वातास्रं मोहमूर्छायमदस्वप्नज्वरान्वितम्॥ ९८॥**

**शिरोग्रहारुचिश्वाससङ्कोचस्फोटकोथवत्।**
**शिरोरोगोऽरुचिश्वासमोहविड्भेदतृड्भ्रमैः॥ ९९॥**
**घ्नन्ति सर्वामयाः क्षीणस्वरधातुबलानलम्।**

वायुः सुप्तत्वगादिकं नरं हन्ति। वातास्रं वातशोणितं मोहादियुतं नरं हन्ति। मदमूर्छायौ वक्ष्येते। शिरोग्रहादिमद् वातास्रम्। स च ते आमयाश्च सर्वामयाः ज्वरादयः शिरोरोगादिभिः कारणभूतैः घ्नन्ति। क्षीणस्वरादिकं नरं सर्वामया घ्नन्ति॥

**वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी॥ १००॥**
**गुल्मी मेही च तान् क्षीणान् विकारेऽल्पेऽपि वर्जयेत्।**

वाताख्यो व्याधिराक्षेपकादिर्यस्य स नरो वातव्याधिः। पाठचकारोऽपि—"वातेन व्याधि(ना) संयुक्तः पुरुषो यः स वातव्याधिरित्युच्यते" इत्याह। तथा अपस्मारवान् कुष्ठवान् रक्तपित्ती क्षयवान् जठरी गुल्मवान् प्रमेही च तान्

वातव्याध्यादीन् पुरुषान् स्वल्पेऽपि विकारे सति क्षीणान् क्षीणदेहान् सतो वर्जयेत् ॥

**बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ॥ १०१ ॥**
**यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान् न स जीवति ।**

बलेत्यादि । बलमांसयोरत्यन्तं क्षयः रोगस्य वृद्धिः तथा अरोचकः एते यस्यातुरस्य लक्ष्यन्ते सः त्रीन् पक्षान् सार्धं मासं न जीवति ॥

सद्योरिष्टं लक्षयति—

**वाताष्ठीलातिसंवृद्धा तिष्ठन्ती दारुणा हृदि ॥ १०२ ॥**
**तृष्णयानुपरीतस्य सद्यो मुष्णाति जीवितम् ।**

वाताष्ठीला अष्ठीलारूपः पिण्डितो वायुः अतिसंवृद्धा अत्यन्तं प्रवृद्धा हृदि तिष्ठन्ती दारुणा अतिरुक्करी तृष्णयानुपरीतस्य परितः समन्तादितो व्याप्तः परीतः तस्य तृष्णायुक्तस्य पुंसः शीघ्रमेव जीवितं मुष्णाति जीवितहारिणी भवति । इन्दुरप्याह—"अष्ठीलेव प्रस्तरमयी वायुना वाताष्ठीला" इति ॥

**शैथिल्यं पिण्डिके वायुर्नीत्वा नासां च जिह्मताम् ॥ १०३ ॥**
**क्षीणस्यायम्य मन्ये वा सद्यो मुष्णाति जीवितम् ।**

वायुः पिण्डिके शैथिल्यं नीत्वा तथा नासां च जिह्मतां कुटिलतां नीत्वा तथा क्षीणस्य नरस्य मन्ये आयम्य आयामयित्वा द्राग् जीवितं मुष्णाति ॥

**नाभीगुदान्तरं गत्वा वंक्षणौ वा समाश्रयन् ॥ १०४ ॥**
**गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली ।**
**मलान् वस्तिशिरो नाभिं विबद्ध्य जनयन् रुजम् ॥ १०५ ॥**
**कुर्वन् वंक्षणयोः शूलं तृष्णां भिन्नपुरीषताम् ।**
**श्वासं वा जनयन् वायुर्गृहीत्वा गुदवंक्षणम् ॥ १०६ ॥**

नाभीत्यादि । नाभी(त्यादौ वायु)रिदमिदं कृत्वा सद्यो जीवितं मुष्णाति । वायुर्वा नाभिगुदयोरन्तरं मध्यं गत्वा वंक्षणौ समाश्रयन् जीवितं मुष्णाति । बली पवनः पायुं हृदयं च गृहीत्वा क्षीणदेहस्य पुंसः सद्यो मुष्णाति जीवितम् ॥

वायुः मलान् निबध्य वस्तिशिरो नाभिं च विबध्य रुजं जनयन् सद्यो मुष्णाति जीवितम् । वायुः वंक्षणयोः शूलं तृष्णां च कुर्वन् भिन्नपुरीषतां च विदधत् । अथवा श्वासं जनयन् गुदवंक्षणौ वा गृहीत्वा सद्यो मुष्णाति जीवितम् । अन्यथा प्रोक्तमिन्दुना—"(नाभि)गुदयोरन्तरं मध्यं गत्वा रुजं जनयन् । अथवा वंक्षणौ समाश्रयन् । अथवा क्षीणदेहस्य पायुहृदये पायुं हृदयं च गृहीत्वा मलादीन् विबध्य रुजं जनयन् सद्यो मुष्णाति जीवितम् । मला दोषाः शकृतादयश्च । अथवा गुदवंक्षणं गृहीत्वा वायुः वंक्षणयोः शूलं तृष्णां भिन्नपुरीषतां च कुर्वन् श्वासं जनयन् सद्यो मुष्णाति जीवितम्" इति । हाटकोऽप्येवमेवोक्तवान् । 'मलान् वस्तिशिरोनाभिनिबध्ये'ति केचित्पठन्ति ॥

**वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः ।**
**स्तिमितस्याततांक्षस्य सद्यो मुष्णाति जीवितम् ॥ १०७ ॥**

वितत्येत्यादि । अथवा मारुतः पर्शुकानामग्राणि प्रान्तानि वितत्य प्रस्तार्य, तथा उरो वक्षो गृहीत्वा स्तिमितस्य सान्द्राङ्गस्य सस्वेदस्य आतताक्षस्य प्रसारितनेत्रस्य पुरुषस्य सद्यो मुष्णाति जीवितम् ॥ चतुर्विंशतिः पर्शुकाः पार्श्वास्थीनि - വിലാക്കോൽ ॥

**सहसा ज्वरसन्तापस्तृष्णा मूर्छा बलक्षयः ।**
**विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते ॥ १०८ ॥**

सहसेत्यादि । सहसा झटिति ज्वरसन्तापादिसन्धिविश्लेषान्तं मुमूर्षोः सद्यो मरिष्यतः एवोपजायते नान्यस्य ॥

**गोसर्गे वदनाद् यस्य स्वेदः प्रच्यवते भृशम् ।**
**लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ १०९ ॥**

गोसर्गे गवां मोक्षकाले प्रत्युषसि, लेपज्वरः श्लेष्मज्वरः सामज्वरो वा, तेन तप्तस्य यस्य वदनात् स्वेदः प्रच्यवते तस्य दुर्लभं जीवितम् । लेपः श्लेष्मा । टिप्पणे तु—"लेपज्वरः शीतज्वरः" इत्युक्तम् । "लेपो मुखस्योपलेपः" इतीन्दुः । पाठ्येऽपि—"गोसर्गे प्रातः" इत्युक्तम् । इन्दुरप्याह—"गोसर्गो यस्मिन् काले

---

१. 'नाभीगुदस्यान्तरम्' ।

गावो भवनान्निःसरन्ति रात्र्यन्त इति यावदि"ति। दुर्लभमिति "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" (पा० सू० ३-३-१२६) इति खल्। "न सुदुर्भ्यां केवलाभ्याम्" (पा० सू० ७-१-६८) इति नुम्निषेधः। न तु रिष्टानां निश्चितानामिहाभिधानप्रस्तावात् किमिदमनिश्चितं दुर्लभमित्युक्तम्। नैवम्। एकान्तिक एवार्थे यद्दुर्लभशब्दः। तथा च वाल्मीकिना जगदे—

पुत्र वीक्षस्व पितरं सुदृष्टे च कुरु प्रियम्।
दुर्लभं जीवितं ह्यस्य पुनः पुत्रो भविष्यति॥

इति। तस्माद्दुर्लभशब्दस्येह नास्ति जीवितमित्येष निश्चित एवार्थः प्रसिद्धः॥

**प्रवालगुलिकाभासा यस्य गात्रे मसूरिकाः।**
**उत्पद्याशु विनश्यन्ति नचिरात्स विनश्यति॥ ११०॥**

प्रवालेत्यादि। मसूरिकाः मसूरसंस्थानाः पिटकाः प्रवालगुलिकाभासाः प्रवालगुलिका विद्रुमगुलिकाः ता इवाभासन्ते प्रवालगुलिकासदृश्यः, यस्य शरीरं उत्पद्य शीघ्रं विनश्यन्ति स नरो द्रागेव विनश्यति॥

**मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः।**
**अन्तर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः॥ १११॥**

मसूरेत्यादि। मसूरदलाकारास्तथा प्रवालसदृशाः तथा अन्तर्मध्ये वक्त्रं येषां ते अन्तर्वक्त्राः। तथा किणाभाः एते चतुष्प्रकारा अपि विस्फोटाः देहनाशनाः। विदलं दलम्। ഓലക°। इन्दुनाप्युक्तं--"मसूरविदलं (मसूरदलम्" इति)। "अन्तर्वक्त्रा मध्यनिम्नाः" इति हाटकः इन्दुश्च। पाठ्ये तु—"अन्तर्वक्त्रा मुखहीनाः" इत्युक्तम्। टिप्पणे पुनः "अन्तर्वक्त्रा मुखहीनाः" इत्युक्तम्। "किणः करादौ व्रणग्रन्थिः विस्फोटो ग्रन्थिः इतीन्दुः॥

**कामिलाक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता।**
**सन्त्रासश्चोष्णताङ्गे च यस्य तं परिवर्जयेत्॥ ११२॥**

यस्याक्ष्णोः कामिला पीताभासत्वं भवति मुखं पूर्णं स्वाभाविकम्। टिप्पणेऽपि—"पूर्णं प्रकृतिस्थ"मित्युक्तम्। शङ्खयोर्मुक्तमांसता मुक्तमांसत्वं

सन्त्रासं उष्णता चाङ्गे भवति, तमातुरं वर्जयेदयशः परिहृतये न चिकित्सेत् । इन्दुरपि—"अक्ष्णोः कामिलेत्यादिकं यस्य तं परिवर्जये"दित्याह ।

अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयम् ।
यो वातजो न शूलाय स्यान्न दाहाय पित्तजः ॥ ११३ ॥
कफजो न च पूयाय मर्मजश्च रुजे न यः ।
अचूर्णकीर्णः कीर्णाभो यत्राकस्माच्च दृश्यते ॥ ११४ ॥
रूपं शक्तिध्वजादीनां सर्वांस्तान्वर्जयेद् व्रणान् ।
विण्मूत्रमारुतवहं कृमिणं च भगन्दरम् ॥ ११५ ॥

तथा त्वक्समाश्रयं विघृष्टं नाम सद्योव्रणमकस्मात् कारणं विना झटिति अनुधावद्विसर्पवद्यस्य लक्ष्यते तमपि परिवर्जयेदिति सम्बन्धः । "यस्य कारणं विना त्वक्समाश्रयमनुधावल्लक्ष्यते" इति **हाटकः** । विघृष्टं नाम त्वक्समाश्रयोऽल्पो व्रणः सद्योव्रणविशेषः । **पाठ्यकारस्तु**—"अनुधावे"दिति पठति विसरेदित्यर्थं वदन् । यो व्रणो वातजो लिङ्गानुमितः शूलाय न भवति । पित्तजो न दाहाय कफजश्च न पूयाय मर्मजश्च न पीडायै । तथा यो व्रणश्चूर्णैरकीर्णः कीर्णाभः चूर्णव्याप्त इव दृश्यते । तथा यस्मिन् व्रणे कारणं विना शक्तिध्वजादीनां सम्बन्धिरूपमकस्माद्दृश्यते तान् सर्वान् व्रणान् वर्जयेत् । शक्तिः - വേൽ । ध्वजः - കൊടിമരം । आदिशब्देन तोमरखड्गशङ्ख-चक्रादिपरिग्रहः । संग्रहे तूक्तं—

"चन्दनोशीरमदिराकुणपध्वाङ्क्षगन्धयः ।
शैवालकुक्कुटशिखाकुङ्कुमालमषीप्रभाः ॥
अन्तर्दाहा निरूष्माणः प्राणनाशकरा व्रणाः ।"

इति । विण्मूत्रमारुतवहं विण्मूत्रमारुता येन निःसरन्ति कृमिजुष्टं च, तं च भगन्दरं वर्जयेत् । कृमिणमिति पामादित्वात् न प्रत्ययः । **पाठ्येऽपि** "कृमिणं कृमिमन्त"मित्युक्तम् ॥

घट्टयन् जानुना जानु पादावुद्यम्य पातयन् ।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ ११६ ॥

यश्चातुरो जानुना जानु घट्टयन् तथा पादावुद्यन्य उत्क्षिप्य पातयन् संक्षिपन् मुहुरात्मीयं वक्त्रमपास्यति अपक्षिपति न स जीवति । **पाठ्यकारस्तु**–'यो वास्यति' इति पठति अस्यति क्षिपतीति वदन् ॥

**दन्तैश्छिन्दन् नखाग्राणि तैश्चकेशांस्तृणानि च ।**
**भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन् ॥ ११७ ॥**
**हृष्टरोमा सान्द्रमूत्रः शुष्ककासी ज्वरी च यः ।**
**मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः ॥११८ ॥**
**मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति ।**

दन्तैरित्यादि । यश्चातुरो हृष्टरोमा सान्द्रमूत्रः तथा शुष्ककासी तथा ज्वरी स इदमिदं कुर्वन् न जीवति । दन्तैश्छिन्दन् नखाग्राणि तथा तैरेव दन्तैः केशान् छिन्दन् तथा तृणानि छिन्दन् । **इन्दुहाटकश्च**–"तैरिति नखाग्रैः केशान् छिन्दन्" इत्याहतुः । भुवं काष्ठेन विलिखन् लोष्ठं अपरेण लोष्ठेन ताडयन् मुहुः पुनः पुनः हसन् तथा मुहुः क्ष्वेलन् शब्दं कुर्वन् । **इन्दुरपि**--"क्ष्वेलन् व्याहरन्" इत्याह । क्ष्वेलनं (ഛേഛേ?) इति **पाठ्ये** । मुहुः शय्यां पादेन यो हन्ति तथा छिद्राणि परापराधान् विमृशन् उद्घोषयन् **इन्दुना** तूक्तम्--"छिद्राणि कर्णनासादीनि स्रोतांसि विमृशन् स्पृशन्" इति ॥

**मृत्यवे सहसार्तस्य तिलकव्यङ्गविप्लवः ॥ ११९ ॥**
**मुखे दन्तनखे पुष्पं जठरे विविधाः सिराः ।**

"आर्तस्य आतुरस्य मुखे वदने सहसा जाताः तिलकादयः तथा दन्तनखे जातं पुष्पं तथा जठरे विविधाः सिराः मृत्यवे मरणाय भवन्ति" इति **हाटकोक्तिः** । **अरुणदत्त**स्त्वाह--"आर्तस्यातुरस्य मुखे वदने जातास्तिलकव्यङ्गानां विप्लवो विनाशो मृत्यवे मरणाय । तथा दन्ताश्च नखाश्च तस्मिन् दन्तनखे सहसा पुष्पं जातमातुरस्य मृत्यवे । जठरे जाताः सहसा विविधा नानाविधा वर्णेन संस्थानेन च सिरा आर्तस्य मृत्यवे मरणं सूचयतीत्यर्थः" इति । **सारकृद**प्याह--"तिलकाश्च व्यङ्गाश्च विप्लवस्सहसार्तस्य मुखे जाता मृत्यवे" इति । **चरके**ऽप्येवमुक्तं–

१. ഛേഛേ घपाठः ।

"विप्लुव्यङ्गतिलकालकानां वानने जन्म आतुरस्याप्रशस्तमिति विद्या"दिति। विप्लुरिति व्यङ्गाकारः सहजो वर्णविशेष इव दृश्यते । पाठ्येऽप्युक्तं विप्लुः ळ०-इति । टिप्पणे पिप्लुरिति पाठः इत्युक्तम् ॥

ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवंक्षणम् ॥ १२० ॥
शर्म वानधिगच्छन्तं बुद्धिमान् परिवर्जयेत् ।
विकारा यस्य वर्धन्ते प्रकृतिः परिहीयते ॥ १२१ ॥
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ।

विकाराः शारीरमानसा व्याधयो ज्वरादयो यस्य तु सहसा झटित्यकस्माद् वर्धन्ते प्रकृतिः स्वभावः सहसा परिहीयते, यथा शूरः कातरः स्यादित्यादि । अथवा प्रकृतिः वातादिप्रकृतिः । यथा वातप्रकृतिः पित्तप्रकृतिर्भवेदित्यादि । तस्य सहसा शीघ्रमेव जीवितं मृत्युर्हरति ॥

यमुद्दिश्यातुरं वैद्यः सम्पादयितुमौषधम् ॥ १२२ ॥
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ।

यमातुरमुद्दिश्य वैद्यः औषधं सम्पादयितुं यतमानः सन् न शक्नोति तस्यातुरस्य जीवितं दुर्लभम् ॥

विज्ञातं बहुशः सिद्धं विधिवच्चावतारितम् ॥ १२३ ॥
न सिद्ध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ।

यस्यातुरस्य औषधं वीर्यादिभिः विज्ञातं बहुशः सिद्धं विधानेन चोपयुक्तं न सिद्ध्यति तस्य चिकित्सितं नास्ति ॥

भवेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ॥ १२४ ॥
अकस्माद्वर्णगन्धादेः स्वस्थोऽपि न स जीवति ।

यस्य औषधे कषायघृतलेहादौ तथा अन्ने भक्तसूपादिके कल्प्यमाने गन्धवर्णादेः विपर्ययोऽन्यथात्वमकस्मान्निमित्तं विना भवेत् स्वस्थोऽपि न जीवति ॥

निवाते सेन्धनं यस्य ज्योतिश्चाप्युपशाम्यति ॥ १२५ ॥

**आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।**
**अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ १२६ ॥**

यस्यातुरस्य गृहे निवाते वातरहिते सेन्धनमिन्धनसहितं ज्योतिरग्निरुपशाम्यति तस्य दुर्लभं जीवितम् । यस्यातुरस्य गृहे अमत्राणि भाजनानि अतिमात्रमत्यर्थं भिद्यन्ते अथवा पतन्ति तस्य दुर्लभं जीवितम् ॥

**यं नरं सहसा रोगो दुर्बलं परिमुञ्चति ।**
**संशयं प्राप्तमात्रेयो जीवतं तस्य मन्यते ॥ १२७ ॥**

यं नरं दुर्बलं संशयप्राप्तं सन्तं सहसा झटित्येव रोगः परिमुञ्चति तस्य नरस्य आत्रेयो जीवितं (न) मन्यते प्रतिपद्यते इति यदुक्तमरुणदत्तेन तच्चिन्त्यम् । इन्दुना तूक्तं—"यं दुर्बलं नरं सहसा रोगः परिमुञ्चति तस्य नरस्य आत्रेयो धन्वन्तरिः संशयप्राप्तं जीवितं मन्यते । संशयप्राप्तमिति वचनं कदाचिज्जीवितमपि तस्य सम्भाव्यत इति प्रदर्शनार्थ"मिति । पाठ्येऽपि—"संशयप्राप्तमित्यादिना संशयं नाम तन्त्रयुक्तिं दर्शयती"त्युक्तम् । संशयो नाम तन्त्रयुक्तिः साकाङ्क्षितमनिश्चितवस्तुविज्ञानम् । ([1]आगमकात्र कथमात्रेयस्यापि संशयवचनानिश्चितार्थं देवव्यासः ?) तस्मादस्यानाप्तत्वम्—ब्रूमः । व्याधिस्वभावेन वचनाददोषः । कश्चन व्याधिरेकान्तेन मरणात्मकः । कश्चन साध्यः । कश्चित्तु मरणात्मकः सन् कदाचित्सिध्यति । तद्यथा रोहिणीका ।

"त्रिरात्रं परमेवास्य जन्तोर्भवति जीवितम् ।
कुशलेन त्वनुक्रान्तः क्षिप्रं सम्पद्यते सुखी ॥"

इति । तदुभयथापि स्यात्संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते इति । अतस्तस्मिन्ननिश्चितमरणे तथा अनेकविकारे यद्येकान्तं परिगृह्य ब्रूयात् पञ्चत्वमापद्यते इति । अज्ञः स्यादथ शिष्यन् जीविष्यतीति एवमेकान्तं परिगृह्णानो न ह्यविज्ञानाद्यतस्तस्य व्याधेः स्वभावः संशयितत्वं तदेव प्रतिज्ञानाद्याथात्म्यप्रकाशनात्सम्यग्व्यापित्वं लभते चेति ॥

---

1. आगम ... कथमात्रेयस्यापि संशयवचनं निश्चितार्था एवाप्ता(?)घपाठः ।

**कथयेन्नैव पृष्टोऽपि दुःश्रवं मरणं भिषक् ।**
**गतासोर्बन्धुमित्राणां न चेच्छेत्तं चिकित्सितुम् ॥ १२८ ॥**

कथयेदित्यादि । गतासोः यानि बन्धुमित्राणि तेषां प्रकृतत्वात् गतासुसम्बन्धि मरणं दुःश्रवं पृष्टोऽपि वैद्यो न कथयेत् । किमुतापृष्टः । तथाहि वैद्योक्तदुःश्रवमरणशब्दश्रवणात् सन्ताप उत्पद्यते तत्सुहृदाम् । एवं च भिषजः परोपतापकरणात् पापेन योगः स्यात् । न च तं गतासुं चिकित्सितुं वैद्य इच्छेत् । तथाविधातुरचिकित्सनाद् वैद्यस्य अयशःसंयोगः स्यात् । गतासुरिति भाविनि भूतवदुपचारात् भविष्यति क्तो वेद्यः । यथा वृष्टो देवः, सम्पन्नाश्शाल्य इति । हाटकोऽप्याह—"गतासोर्मरणं तस्य मित्राणां बन्धूनां पृष्टोऽपि न कथयेत् । एषां सन्तापोत्पादनेन पापी स्यात् ।" इति । इन्दुनाप्युक्तं—"गतासोर्मुमूषोर्बन्धुभ्यो मित्रेभ्यश्च भिषङ् मरणं न कथयेत् । तं च गतासुं चिकित्सितुं नेच्छेत् ।" इति ।

चिकित्सानैष्फल्याच्च तं नोपक्रामेदिति प्रतिपादयन्नाह—

**यमदूतपिशाचाद्यैर्यत्परासुरुपास्यते ।**
**घ्नद्भिरौषधवीर्याणि तस्मात्त परिवर्जयेत् ॥ १२९ ॥**

यमेत्यादि । यमदूतपिशाचरक्षःप्रभृतिभिर्यद्यस्मात् परासुरुपास्यते । परासुः मृतकल्पः, परं असवो यस्येति कृत्वा । किंभूतैः । औषधानां रसायनादीनां वीर्याणि शक्तीः घ्नद्भिः । तस्मात्तं परिवर्जयेत् । अन्यथा वैद्यो यशसा परिहीयते ।

इदानीं रिष्टज्ञानादरस्य हेतुमाह—

**आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम् ।**
**रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक् ॥ १३० ॥**

आयुरित्यादि । यद् यस्माद् आयुर्ज्ञे जीवितोदन्तपरिज्ञानवति भिषजि आयुर्वेदफलं कृत्स्नं सकलं प्रतिष्ठितं तस्माद्रिष्टज्ञानादृतः भिषग् भवेत । आयुर्वे-

दस्य ह्येतत् फलं यदायुषः परिज्ञानं परिपालनं च, तच्चोभयं रिष्टज्ञानाज्जायते तस्मादत्रादरः कार्यः ॥

**मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात् ।**
**तयोरप्यक्षयाद् दृष्टं विषमापरिहारिणाम् ॥ १३१ ॥**

मरणमित्यादि। आयुश्च पुण्यं चोभयं च, प्रकृतत्वादायुःपुण्ययोः। तेषामायुःपुण्योभयानां क्षयः आयुःपुण्योभयक्षयः। तस्मात् प्राणिनां शरीरिणां मरणं दृष्टमुपलब्धं मुनीन्द्रैः। हाटकोऽपि—"आयुषः पुण्यस्य तदुभयस्य च क्षयान्मरणं दृष्ट"मित्याह। तत्र सर्वोपकरणसम्पन्नानामपि सम्यग् व्याप्यमानमथवा उपभोगवशेन यथोचितप्रमाणायुःक्षयाद्यस्य मरणं जायते तदायुःक्षयादिति बोध्यम्। ज्योतिःशास्त्रविद्भिः परिकलितनियतायुषामन्येषां च यदाहाराद्यभावे मरणं तत् पुण्यक्षयादिति बोध्यम्। यत्रायुःक्षयो लक्षितो दृश्यते तथैव च पुण्यक्षयः तदुभयक्षयान्मरणं बोध्यम्। न चैतदेव हेतुत्रयमायुःपुण्योभयलक्षणं शरीरिणां मरणे कारणं, किं तर्ह्यन्यदपि विद्यत इत्याह--तयोरित्यादि। नन्वायुःपुण्योभयलक्षणात्मकं त्रितयं प्रकृतं ततश्च तेषामिति निर्देशः प्राप्तः। नैतदेवम्। इह त्वायुःपुण्ययोरेव परामर्शः सर्वनाम्ना युक्तो न तु तृतीयस्य हेतोस्तदात्मकत्वादुभयस्य। अतः तयोरप्यक्षयादिति युक्तो द्वयोर्निर्देशः। तयोरायुःपुण्ययोः क्षयं विनापि विषमापरिहारिणां तन्निमित्तं मरणं दृष्टं यस्माद्दीर्घायुरुपेतानां तथा पुण्यवत्त्वलक्षणसर्वोपकरणसम्पन्नानां च (आ? अ)सेव्यो(द्भ्रान्तम्? द्भूतम्।) चण्डमातङ्गगोमहिषदुर्गाम्बुवेगश्वभ्रप्रपातकेसरिसरीसृपादिसेवनं यद्विषम तत्परिहर्तुं शीलं येषां न विद्यते ते विषमापरिहारिणः, तेषां यन्मरणं तद्विषमापरिहरणाद्भवति। यद्यप्यायुःक्षयादेव सर्वं मरणं तथापि पुण्यक्षयविषमापरिहरणमायुःक्षयस्यैव कारणम्। कारणकारणमपि परम्परया कारणमित्युक्तं जीवितरक्षार्थम्। रथविनाशे च अवयवविभागस्य कारणत्वेऽपि तत्कारणभूतवाहकजवविषमस्थलगमनकठिनशिलासंश्लेषणादयोऽपि गृह्यन्ते तद्वदिहाप्युक्तम्। तदेवं विद्यमाना-(र्थे? युष्ट्वे) तथा सर्वोपकरणसम्पन्नत्वे विषममपरिहरतां यन्मरणं तद्विषमापरिहारिणां बोध्यम्। बाह्यवाहकदोषादिकारणरथविनाशसदृशमिति। 'मरणं प्राणिनां दृष्ट'मित्यादिनैतद् द्योतयति—आयुःपुण्यविनाशाद्यन्मरणं प्राप्नोति तस्यैव

रूपेन्द्रियादि लक्षणं यत्पुनरकाण्डे तस्य यत्किञ्चनापि लक्ष्यते प्रायेणेति। तदुक्तं संग्रहे–

"एकोत्तरं मृत्युशतं ब्रुवते वेदवादिनः ।
तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ॥"

इति। चरकेऽप्युक्तं—"काले शीतमकाले शीतं काले तपत्यकाले तपति काले मृत्युरकाले मृत्युः" इति ॥

इति हृदयबोधिकायां शारीरस्थाने पञ्चमोऽध्यायः ॥





# षष्ठोऽध्यायः ।

विकृतिविज्ञानीयाध्यायादनन्तरं दूतादिविज्ञानीयाध्याय आरभ्यते । तस्य चायं सम्बन्धः । दूतादिविज्ञानमपि विकृतिवदायुष इदन्तापरिज्ञानार्थ-मुपयुज्यत इति तदर्थमध्यायारम्भः । **अरुणदत्तो**प्याह—"उक्तमायुःप्रमाणं स्वस्थातुराणां रूपेन्द्रियस्वरच्छायादिविकृतिलक्षणैः प्रतिनियतविशिष्टव्याधि-लक्षणैरपि । अयं पुनरध्यायो दूताद्याश्रयैः निमित्तैरातुरगतं शुभाशुभं सूचयितुमारभ्यते" इति । दूतादिभिरप्यातुरगतं शुभाशुभं ज्ञातुं पार्यते । तदुक्तं च **सौश्रुते**—

"दूतदर्शनसम्भाषावेषाश्चेष्टितमेव च ।
कथयन्त्यातुरगतं शुभं वा यदि वाशुभम् ॥"

इति । **संग्रहे**—"निर्दिष्टं रिष्टमातुराश्रयम् । दूतस्यापि जातिवेषभाषाचेष्टित-देशकाला वैद्यस्य च तत्सङ्गमसङ्कल्पप्रस्थानप्रयाणप्रवेशा ग्रहचारोऽपूर्वस(ङ्गम? म्भवः) स्वप्नदर्शनानि च रोगिणः शुभाशुभं सूचयन्ति" इति । **अत्रेन्दुः**—"निर्दिष्टमित्यादिना शास्त्रकारः स्वयमध्यायप्रयोजनं कथयति । दूतजात्यादयोऽपि रोगिणः शुभाशुभं सूचयन्तीति संबन्धः । जातिः ब्राह्मणादिका । भाषा वचनम् । चेष्टितं क्रिया । देशः उष्णशीतादिको विकारसमानासमानः तद्वत्कालोऽपि च । तत्सङ्गमार्थं सङ्कल्पः । तदिति दूतस्य व्यपदेशः । प्रस्थानं स्ववेश्मनो निर्गमनम् । प्रयाणं पथि । प्रवेशः आतुरवेश्मनि । ग्रहाणां चारो राशिगमनम् । अपूर्व-स(ङ्गमो? म्भवो) वैद्यस्यातुरसङ्गमे प्रथममयत्नेनोत्पत्तिः (अभूतपूर्वस्य शुभाशुभ-सूचकस्य)" इति । **सारकृता**प्युक्तं—

"रूपादिसंश्रितं रिष्टं प्रोच्य दूतादिसंश्रितम् ।
शुभाशुभं ब्रवीत्यद्य षष्ठाध्यायेऽर्थवित्तमः ॥" इति ॥

---

१. 'वैद्यस्य च तत्सङ्गमे यः सङ्कल्पः तदिति' इति मुद्रितपाठः ।

**अथातो दूतादिविज्ञानीयं शरीरं व्याख्यास्यामः ।**

दूतः आतुरेण प्रेषितः स्त्रीपुरुषादिरातुरगृहाद् वैद्यसकाशमागत आतुरावस्थावेदकः । दूत आदिर्येषां ते दूतादयः । आदिग्रहणाद् वैद्यस्य गृहान्निर्गच्छतः पथि गच्छतो यावदातुरगृहप्रवेशः प्रविष्टस्यापि यानि शुभाशुभसूचकानि निमित्तानि दृश्यन्ते श्रूयन्ते च तेषां परिग्रहः । दूतादीनां विज्ञानं दूतादिविज्ञानम् । एते दूतादयः शुभा एते अशुभा इति विशिष्टं निश्चितं ज्ञानमवबोधः परिच्छेद इत्यर्थः । तस्मै हितो दूतादिविज्ञानीयः । शेषं पूर्ववत् ।

**पाषण्डाश्रमवर्णानां सवर्णाः कर्मसिद्धये ।**
**त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ १ ॥**

पाषण्डेत्यादि । "पाषण्डास्त्वनेकधा विभक्ता आर्हतकादयः" इति **पाठ्ये** । "पाषण्डाश्चतुर्विंशतिभेदभिन्ना बौद्धादयः" इति **टिप्पणे** । पाषण्डाः (ग्रन्थादयः ?) षण्णवतिः" इति **सारकृत्** । "पाषण्डः षण्णवतिभेदभिन्नो व्रात्यविशेषः" **इत्यरुणदत्तः** । "पाषण्डा लिङ्गिनः" इतीन्दुः । आश्रमाः ब्रह्मचारिगृहिवानप्रस्थभिक्षवः इति चत्वारः । वर्णाः ब्राह्मणक्षत्रियविट्शूद्राः इति चत्वारः । ते च प्रतिलोमानुलोमतया बहवः । तेषां पाषण्डादीनां ये सवर्णाः समानवर्णाः तुल्यजात्यादियुक्ताः दूतास्ते कर्मसिद्धये कर्मसिद्ध्यर्थं, कर्मसिद्धिं सूचयन्तीत्यर्थः । यथा बौद्धस्य बौद्धः ब्रह्मचारिणो ब्रह्मचारी दूतो गृहस्थस्य गृहस्थः भिक्षोर्भिक्षुः सवर्णः ब्राह्मणस्य ब्राह्मणः सवर्णो यावत् शूद्रस्य शूद्रः इति । त एव पाषण्डादयो विपरीताः विजातीयाः सवर्णा ये न भवन्ति ते कर्मविपत्तये चिकित्सानैष्फल्याय, चिकित्सानैष्फल्यं सूचयन्तीत्यर्थः ॥

**दीनं भीतं द्रुतं त्रस्तं रूक्षामङ्गलवादिनम् ।**
**शस्त्रिणं दण्डिनं खण्डं मुण्डश्मश्रुं जटाधरम् ॥ २ ॥**
**अमङ्गलाह्वयं क्रूरकर्माणं मलिनं स्त्रियम् ।**
**अनेकव्याधितं व्यङ्गं रक्तमाल्यानुलेपनम् ॥ ३ ॥**

---

१. 'आर्हतादयः इ' घपाठः । २. 'पाषण्डा...इति चत्वारः' omits घपाठः ।

**तैलपङ्काङ्कितं जीर्णविवर्णार्द्रैकवाससम् ।**
**खरोष्ट्रमहिषारूढं काष्ठलोष्टादिमर्दिनम् ॥ ४ ॥**
**नानुगच्छेद्भिषग् दूतमाह्वयन्तं च दूरतः ।**

(दीनमित्यादि।) सवर्णमपि दूतं दीनभीतादिविशेषणविशिष्टं यावत्काष्ठ-लेष्टादिमर्दिनं भिषग् नानुगच्छेत्। चिकित्सानैष्फल्यात्। रूक्षवादिनम्। अमङ्गलवादिनं मरिष्यत्यसौ न जीवतीत्याद्यमङ्गलवादिनम्। षण्डं 'क्लीबः षण्डो नपुंसके' इत्यमरः। मुण्डं कृतवपनं श्मश्रु मुखव्यञ्जनं यस्य स एवम्। मुण्ड-श्मश्रुश्चासौ जटाधरश्च तम्। "मुण्डं श्मश्रुजटाधर"मिति वा पाठः। श्मश्रु-धरं जटाधरं च। संग्रहे—"तत्रातुराद्वर्णोत्तमोऽन्याश्रमः पाषण्डः षण्डो मुण्डो जटिलः स्त्री व्याधितोऽनेकः" इत्यादि। तथा अमङ्गलोऽकल्याणः आह्वयो नाम यस्य तम्। स्त्रियमिति दूतम्। तथा अनेकं (अ?)युग्मम्। "अनेको युगपद् बहवो दूताः" इतीन्दुः। व्यङ्गं हीनाङ्गम्। तैलपङ्काभ्यामङ्कितं दिग्धम्। तथा जीर्णादिकं वासो यस्य तम्। तथा दूरादाह्वयन्तमाकारयन्तं नानुयायात्॥

एवम्भूते वैद्ये दूतागमनममङ्गलमित्याह—

**अशस्तचिन्तावचने नग्ने छिन्दति भिन्दति ॥ ५ ॥**
**जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्यपि ।**
**सुप्ते मुक्तकचेऽभ्यक्ते रुदत्यप्रयते तथा ॥ ६ ॥**
**वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ।**

अशस्तेत्यादि। चिन्ता च वचनं च चिन्तावचने। अशस्ते चिन्ता-वचने यस्य इति मत्वर्थे बहुव्रीहिः। अशस्तचिन्तां कुर्वति वैद्ये अशस्तवचनं तथोच्चारयति मनुष्याणां मुमूर्षतामासन्नमृत्यूनां सम्बन्धिनो दूता आयान्ति। मुमूर्षतामिति 'आशङ्कायामुपसंख्यानम्' इति सन्। 'म्रियतेर्लुङ्लिङोश्च' (पा० सू० १-३-६१) इति नियमात् परस्मैपदम्। छिन्दति भिन्दति किञ्चित्। तथा पावकमग्निं पिण्डान् जुह्वाने पितृभ्यश्च निर्वपति प्रयच्छति यावदप्रयतेऽशुचौ।

---

१. 'ण्डी' इति मुद्रिते

पाठ्येऽपि—"अप्रयतेऽशुद्धे" इत्युक्तम् । मनुष्याणामित्युपलक्षणं स्त्र्यादयोऽपीह गृह्यन्त एव ॥

**विकारसामान्यगुणे देशे कालेऽथवा भिषक् ॥ ७ ॥**

**दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ।**

विकारेत्यादि । विकाराणां ज्वरादीनां सामान्यस्तुल्यो गुणो यस्यासौ विकारसामान्यगुणः तस्मिन् विकारसामान्यगुणे तथाविधे देशे काले वा दूतमभ्यागतं सम्मुखमागच्छन्तं दृष्ट्वा भिषक् तमातुरं दूतस्य प्रेषकं नोपाचरेत् । यथा कफजे ज्वरादावामये घृतोदकादिद्रवसमीपे आनूपे वा देशे, काले मध्याह्ने आगतो दूतोऽशुभः । वातरोगे परुषसिकतापाषाणशर्करादिविशिष्टे देशे, काले सायाह्ने दूतोऽशुभः । विपरीतस्त्वतः शुभः । छर्दिमेहातिसारादिषु सेतुभङ्गोऽशुभः । एष्वेव सेतुबन्धः शुभः । **हाटको**ऽप्याह—"विकारसामान्यगुणो देशः कफजस्य ज्वरादेः घृतोदकादिद्रव्यसंयुक्तो देश आनूपो वा । सदृशः कालः प्रत्यूषः । पैत्तिके वह्न्यादिसन्तप्तो देशः । कालो मध्याह्नः इत्यादि" इति । **इन्दु**नाप्युक्तं—"श्लेष्मामयेषु घृतोदकादि[1]द्रवसमीपस्थं वैद्यं दूत उपसर्पन् अशुभः । पित्तामयेषु तु तथा शुभः । छर्द्यादिषु सेतुभङ्गे वैद्यं दूत उपसर्पन् अशुभः । तेष्वेव सेतुबन्धे शुभः" इत्यादि ॥

**स्पृशन्तो नाभिनासास्यकेशरोमनखद्विजान् ॥ ८ ॥**

**गुह्यपृष्ठस्तनग्रीवाजठरानामिकाङ्गुलीः ।**

**कार्पासबुससीसास्थिकपाल[2]मुसलोपलम् ॥ ९ ॥**

**मार्जनीशूर्पचैलान्तभस्माङ्गारदशातुषान् ।**

**रज्जूपानत्तुलापाशमन्यद्वा भग्नविच्युतम् ॥ १० ॥**

**तत्पूर्वदर्शने दूता व्याहरन्ति मरिष्यताम् ।**

स्पृशन्त इत्यादि । तत्पूर्वदर्शने, तदित्यनेन वैद्यः परामृश्यते तस्य वैद्यस्य पूर्वदर्शनं तत्पूर्वदर्शनं तस्मिन् काल एव सति मरिष्यतामासन्नमरणानां

१. 'दिसमीपस्थ'मिति मुद्रिते । २. 'पलाल' इति व्याख्यानुसारी पाठः ।

सम्बन्धिनो दूताः नाभ्यादि स्पृशन्तो व्याहरन्ति । 'लक्षणहेत्वोः क्रियायाः' (पा० सू० ३-२-१२६) इति हेतावत्र शतृप्रत्ययः । नाभ्यादिस्पर्शनं मुमूर्षुदूतव्याहारस्य हेतुः । मुमूर्षोर्वयं दूता इति लक्षणेन प्रतिपादयन्तीत्यर्थः । अनामिकाङ्गुलिः कनीयसीनिकटे स्थिताङ्गुलिः । बुसं - പതിര് । पलालं - വൈക്കോൽ । मुसलं - ഉലക്ക । मार्जनी - ചൂൽ । इन्दुरपि— "मार्जनी रोधनी"त्याह । शूर्पम् - മുറം । चेलान्तम् - തുണിയരുവ് । भस्म - വെണ്ണീറ് । अङ्गारम् - കരിക്കട്ട । दशा वस्त्रवर्त्तिः - തിരി । तुषा - ഉമി । उपानत् चर्मपादुका - ചെരിപ്പ് । तुलापाशम् - തുലാക്കോൽ കയറ് । न केवलं नाभ्यादि स्पृशन्तः अपरमपि भग्नविच्युतं स्पृशन्त इति योज्यम् । "भग्नविच्युम् - മുറിഞ്ഞുകിടക്കുന്നത്" इति पाठये ॥

**तथार्धरात्रे मध्याह्ने सन्ध्ययोः पूर्ववासरे ॥ ११ ॥**
**षष्ठीचतुर्थीनवमीराहुकेतूदयादिषु ।**
**भरणीकृत्तिकाश्लेषापूर्वाद्रापित्र्यनैर्ऋते ॥ १२ ॥**

तथा नाभ्यादिकमस्पृशन्तोऽप्यर्धरात्रादिष्वाग(च्छ)न्तो मरिष्यतां दूता व्याहरन्ति । अर्धरात्र इति 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' (पा० सू० ५-४-८७) इति समासान्तः । राहुकेतूदयादिषु इत्यत्र आदिशब्देन उत्पातदर्शनकृष्णचतुर्दश्यादयो गृह्यन्ते । पूर्वम् - പൂരം । आर्द्रा - തിരുവാതിര । पित्र्यम् - മകം । नैर्ऋतम् - മൂലം । हाटकोऽपि—"पित्र्यनैर्ऋते माघमूलाख्ययोर्नक्षत्रयोः" इत्याह । **पाठ्यकारस्तु**—"पितृनैर्ऋते" इति पठति । पितृनैर्ऋतम् - മകം । अन्येऽपि - पितृ - മകം नैर्ऋतम् - മൂലം इत्याहुः । **संग्रहे**—"मध्याह्नोभयसन्ध्यार्धरात्रचतुर्थीषष्ठीनवमीपर्वदिनेषु ग्रहोपरागोत्पातदर्शनभरणीकृत्तिकार्द्राश्लेषामघामूलपूर्वासु चाशुभः" इति । "उभयसन्ध्या पूर्वा परा चे"तीन्दुः ॥

**यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ।**
**पश्येन्निमित्तमशुभं तं च नानुव्रजेद्भिषक् ॥ १३ ॥**

यस्मिन्नित्यादि । यस्मिन् दूते आतुरसंश्रयं आतुरप्रतिबद्धमातुरमुद्दिश्य वाक्यं ब्रुवति सति अशुभं निमित्तं भिषक् पश्येत् तं दूतमातुरचिकित्सार्थमागतं

नानुव्रजेत् । संग्रहे—"यस्मिन् व्याधिताश्रयं कथयति दूते भिषगशुभमिन्द्रियार्थ-मुपलक्षयेत् संकल्पयेद्वा तं च नानुयायात्" इति । अत्रेन्दुः—"यस्मिन् व्याधिताश्रयमातुरमुद्दिश्य दूते कथयति अशुभमिन्द्रियार्थं शब्दस्पर्शादिकं भिषग् अनुभवति वा संकल्पयति वा तं दूतं नानुयायात्" इति ॥

किं तदशुभं निमित्तमित्याह—

**तद्यथा विकलः प्रेतः प्रेतालङ्कार एव वा ।**
**छिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा ॥ १४ ॥**
**रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान् ।**
**स्पर्शो वा विपुलः क्रूरो यद्वान्यदपि तादृशम् ॥ १५ ॥**
**तत्सर्वमभितो वाक्यं वाक्यकालेऽथवा पुनः ।**
**दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १६ ॥**

तद्यथेत्यादि । तद्यथाशब्दोऽशुभनिमित्त(संदर्शन)संबन्धार्थः । विकलोऽङ्गहीनः काणकुब्जादिकः । प्रेतो मृत एव । पाठ्यकारस्तु—"या काचन पिशाचजाति"रित्युक्तवान् । प्रेतालङ्कारो यो मृतस्यानुलेपनवस्त्रादिनालङ्कारो विधीयते । (प्रेतालङ्कारो भग्नविच्युतादिरिति पाठ्ये?) छिन्नं रज्ज्वादिकम् । दग्धं वस्त्रादिकम् । विनष्टं वा घटभाजनादिकम् । तद्वादीनि छिन्नदग्धविनष्टवाचकानि वचांसि वचनानि श्रोत्रेण श्रूयन्ते । रसो वा कटुकस्तीव्र इत्यनेन तदाधारद्रव्य(मातुर ? मनाहार)प्रतिबद्धमुपलक्ष्यते । रसो हि रसनेन्द्रियग्राह्य एव । तस्मात् कटुकरसाधिष्ठितद्रव्यं मरिचादि कटुकरसशब्देन गृह्यते । लोके हि रसेन द्रव्यं व्यपदिश्यत एव । यथा—इदं मधु(र ? रं) द्रव्यमिदम(मृत ? म्ल)मिति । तथैवमुत्कटकटुकरसाधिष्ठितं द्रव्यं यदा चक्षुषा गृह्यते वैद्येन तदा न शुभः । तीव्रग्रहणाच्चातीव्रस्य कुठेरादे(र ? र्निरा)सः । हाटकोऽपि—"रसो वा कटुकस्तीव्र इत्येतदाधारद्रव्यमातुरप्रतिबद्धमुपलक्ष्यते मरिचादि" इत्याह । गन्धो वा कौणपो महान् दुर्गन्धोऽतिशयेन तत्कालं घ्राणेन्द्रियेण गृह्यमाणः । स्पर्शो वा अग्न्यादिसम्बन्धी विपुलो विस्तीर्णः क्रूरोऽतिदुःसहः । तत्काल एव स्पर्शनेन्द्रियेण गृह्यते सोऽशुभः । यद्वेति । अथवा अपरमपि यत् तादृशं विकलाद्य-

शुभनिमित्तसदृशम (न्निष्टं? निदिष्टं) (वि?)रक्त(रक? कर)वीरकुसुमादिकमेतान्य-शुभानि । तत्सर्वममितो वाक्यं वाक्यमभितः आतुराश्रयाद्वाक्यादग्रे अथवा वाक्यकाले आतुराश्रयवा(क्याद्य?क्य)मध्ये विकलाद्यशुभनिमित्तं तदानीमप्य-शुभम् । अशुभसूचकत्वात् । विकलादिदर्शनकाले दूतमभ्यागतमाभिमुख्येन तत्काल एवागतं दृष्ट्वा येन असौ प्रेषितो दूतः तमातुरं नोपाचरेत् न चिकित्सेत् ॥

अन्यदप्यशुभनिमित्तमाह—

> हाहाक्रन्दितमुत्क्रुष्टं रुदितं स्खलनं क्षुतम् ।
> वस्त्रातपत्रपादत्रव्यसनं व्यसनीक्षणम् ॥ १७ ॥
> चैत्यध्वजानां पात्राणां पूर्णानां च निमज्जनम् ।
> हतानिष्टप्रवादाश्च दूषणं भस्मपांसुभिः ॥ १८ ॥
> पथच्छेदोऽहिमार्जारगोधासरलवानरैः ।

हाहेत्यादि । हाहाक्रन्दितमशोभनमिति वक्ष्यमाणेन संबन्धः । हाहेति क्रन्दितं क्वणितम् । हाहाक्रन्दितम् - (പൃയൽ?) । उच्चैः कृत्वा क्रुष्ट(मात्रं? मुत्क्रुष्टम् । ) - (വിളി?) വിളിക്കാറംക । आक्रुष्टमाक्रोशः - മറയിടുക । स्खलनं स्खलितं वैद्यस्य वा अन्यस्य वा । स्खलितं - ഇടറുക । क्षुतम् - (പുകക ? തുമ്മക) । वस्त्रादीनां वैद्यसम्बन्धिनां व्यसनं विनाशः । व्यसनिनामापद्गतानामीक्षणमालोकनमशोभनमिति सर्वत्र योज्यम् । चैत्यादीनां निमज्जनं पतनं त्रुटनं वा । तथा हत इत्येवंरूपाणामनिष्टानाममङ्गलानां प्रवादा उच्चैरुच्चरितानि। दूषणं भस्मपांसुभिः वैद्यस्य पथि गच्छतो भस्मना पांसुभिर्वा दूषणमवकिरणमशोभनम् । कर्मसिद्ध्यभावादातुरस्यापि मरणसूचकत्वात् । एवमन्यत्राप्युभयोरशोभनत्वं योज्यम् । सर्पादिभिः पथः छेदो मार्गस्य छेदः । सरला सर्पसदृशी रक्तवर्णा द्विमुखी प्राणिजातिः चक्रमण्डल इत्यपरपर्यायः । कुरटी इति भाषा । सरलं - ഓന്ത് इति केचित् । അരണ इत्यन्ये ॥

---

१. 'सरठ' इति मुद्रिते । २. 'चक्रलण्ड' इति सुन्दर्याम् ।

दीप्तां प्रतिदिशं वाचं क्रूराणां मृगपक्षिणाम् ॥ १९ ॥

कृष्णधान्यगुडोदश्विल्लवणासवचर्मणाम् ।
सर्षपाणां वसातैलतृणपङ्केन्धनस्य च ॥ २० ॥

क्लीबक्रूरश्वपाकानां जालवागुरयोरपि ।
छर्दितस्य पुरीषस्य पूतिदुर्दर्शनस्य च ॥ २१ ॥

निःसारस्य व्यवायस्य कार्पासादेररेरपि ।
शयनासनयानानामुत्तमानां तु दर्शनम् ॥ २२ ॥

न्युब्जानामितरेषां च पात्रादीनामशोभनम् ।

दीप्तामित्यादि । यस्यां दिशि सूर्यः स्थितः सा दीप्ता भण्यते । आदित्याध्युषिता दिग् दीप्ता । तथा चोक्तम्—

"अङ्गारिण्यर्कनिर्मुक्ता दीप्ता यस्यां दिवाकरः ।
प्रधूपितैष्यत्सूर्या[1] वै शान्ताः पञ्चेतरा दिशः ॥

इति । दीप्तां दिशां प्रति या वाचो वाण्यः क्रूराणां क्रव्यभुजां मृगाणां द्वीपिसृगालादीनां पक्षिणां च श्येनादीनां ता अशोभना इति लिङ्गविपरिणामेन सम्बन्धः । संग्रहेप्युक्तं–"तथा दीप्तायां च दिशि क्रूरपक्षिमृगध्वनयः" इति । अत्रेन्दुः–"तथेत्यादिकं चिकित्साप्रतिषेधायेत्यनेन सम्बध्यते । दीप्तां दिशं प्रति क्रूराणां मृगपक्षिणां च ध्वनयः । (रज्ज्वा ? प्राच्या)दिप्रत्ययहेतुत्वेनानुमितैकापि सती दिग्व्यवहारार्थमधिष्ठातृदेवताविशेषनियमवशात् प्रविभक्तेवाष्टधा विभज्यते । तत्र विषुवति सूर्यो यत उदेति सा सहस्राक्षाधिष्ठिता ऐन्द्री नाम दिक् । तदभिमुखस्य दक्षिणपार्श्वे वैवस्वताक्रान्तमूर्तिर्याम्या नाम । तस्यैव पश्चात् पत्या यादसा(म)धिष्ठिता वारुणी नाम । तस्यैव वामतो राजराजस्वीकृता कौबेरी नाम । तासामन्तराले विदिशः । तत्र दक्षिणपूर्वा चैत्रभानवी । दक्षिण-पश्चिमा नैर्ऋती । पश्चिमोत्तरा पावनी । उत्तरपूर्वा ऐशानी । आसा-मष्टानां ककुभां भगवान् सहस्ररश्मिः पूर्वादिक्रमेण अहोरात्रभागेष्वष्टा-स्वेवावरोधवेश्मस्विव दक्षिणः कामी क्रमेणैव भोक्तृत्वमनुभवति । तत्र पूर्वे

1. 'मि' इति सर्वाङ्गसुन्दर्याम् ।

दिनस्य यामे शातक्रतवीमाशामवलम्बते भगवान् । द्वितीये जातवेदसीं तृतीये समदर्शिलाञ्छनां चतुर्थे रक्षोमालिनीम् । प्रथमे निशायामे वरुणाश्वासितां द्वितीये (समीरणनायिकां तृतीये) पुण्यजनाक्षिप्तां चतुर्थे वृषभध्वजपा(वि ? लि)-तामिति । तासां च सम्प्रति रविर्यामुपभुङ्क्ते सा स्वाधीनभर्तृकेव दीप्ता । यामुपभुज्य यातः सा प्रोषितभर्तृकेवाङ्गारिता । यां यास्यति सा वासकसज्जेव धूपिता । शेषाः परित्यक्ततत्समागमाशाः प्रव्रजिता इव शान्ताः । तत्रात्मान-मवधिं कृत्वा दीप्तायां क्रूरमृगपक्षिवाचः क्रूरा मृगाः सृगालसिंहादयः पक्षिणो गृध्रोलूकादयः । क्रव्यादाः क्रूराः । स्थलशाल्यादिभुजो मृगपक्षिणः सौम्या" इति । कृष्णेत्यादि । कृष्णधान्यादीनां वैद्यस्य यद्दर्शनं पथि गच्छतः आतुरगृहे प्रविशतो वा तदशोभनमशुभसूचकत्वात् । कृष्णधान्यम् – കരിവരക" । उदश्वित् तक्रम् । മോര" । सर्षपो रक्ताभासः । क्रूरो निष्ठुरवाची । श्वपाक-श्चण्डालः । जालमानायः । वागुरा मृगबन्धनी । "जालं मत्स्यग्राही । वागुरा मृगग्राही"ति टिप्पणे । पाठ्येप्युक्तं–"जालम् – വല । वागुरम् വീവലമെന്താലും ? इति केचित् । पूतिः दुर्गन्धिः । दुर्दर्शनः करालाकृतिः । निःसारस्य व्यपेतसारस्य । व्यवायस्य मैथुनस्य । कार्पासादेरित्यादिशब्देन बुससीसास्थिकपालमुसलादेर्दूतचिन्तानिर्दिष्टस्य ग्रहणम् । कार्पासादेः पदार्थस्य दर्शनं पथि गच्छतः आतुरगृहं प्रविशतो वा अशोभनम् । अरेरपि दर्शन-मशोभनम् । प्रकृतत्वाद् वैद्यस्यात्मशत्रुदर्शनम् । तथा शयनादीनामुत्तानाना-मूर्ध्वमुखस्थितपादानां दर्शनम् । उत्तानत्वमूर्ध्वमुखस्थितपादत्वम् । संग्रहे– "कण्टकोर्ध्वपादयानशयनासनादि" इति । "ऊर्ध्वगाः पादाः येषां यानादीना"मितीन्दुः । न्युब्जानामधोमुखानामितरेषां घटशरावोदञ्चनादीनां दर्शनमशोभनम् । पाठ्येऽपि–"न्युब्जम् – കമിഴ്ക"इत्युक्तम् ॥

**पुंसंज्ञाः पक्षिणो वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः ॥ २३ ॥**

पुंसंज्ञाः पुंनामानः पक्षिणो भासशिखिगोनर्दवर्तकादयः वामस्थिताः प्रशस्ताः । इन्दुनाप्युक्तं–"स्त्रीव्यञ्जना अपि पुंनामानः पुरुषाभिधानाः पक्षिणः शुकचाषादयस्ते वामाः शुभाः प्रस्थानादिष्वि"ति । स्त्रीसंज्ञाः स्त्रीनामानो बला-

१. 'धूमिता' इति मुद्रिते इन्दुव्याख्याने पाठः ।

काशारिकावर्त्तिकावरटागिरिवर्त्तिका(शामुका?)दयः पक्षिणः (दक्षिण)स्थिताः शुभाः। "वामा वामस्थिताः दक्षिणा दक्षिणस्थिताः" इति **हाटकः** ॥

**प्रदक्षिणं खगमृगा यान्तो नैवं श्वजम्बुकाः।**
**अयुग्माश्च मृगाः शस्ताः शस्ता नित्यं च दर्शने ॥ २४ ॥**
**चाषभासभरद्वाजनकुलच्छागबर्हिणः।**

प्रदक्षिणमित्यादि। प्रदक्षिणं यान्तो वामा दक्षिणं गच्छन्तः खगमृगाः शुभाः। खगाः काकपारा(व)तादयः। मृगाः हरिणैणादयः (गजपः?)। (याना? यान्तः)। नैवं श्वजम्बुकाः। किंतर्हि दक्षिणाद्वामं गच्छन्तः शुभा इत्यर्थः। अयुग्माश्च मृगाः शस्ता इति दक्षिणाद्वामगामिन इत्येके। चाषादयो मयूरान्ताः नित्यं दर्शने शस्ताः। नित्यमिति वामतो दक्षिणतो वा। भरद्वाजः - ഉചമ്പാത്ത്°। टिप्पणेऽपि–'भरद्वाजश्चकोरः' इत्युक्तम् ॥

**अशुभं सर्वथोलूकविडालसरलेक्षणम् ॥ २५ ॥**

सर्वथा सर्वप्रकारेण वामतो दक्षिणतो वा युग्मानामयुग्मानां वा उलूकादीनां दर्शनमशुभम्। कीर्तने तु प्रशस्ताः इत्येके ॥

**प्रशस्ताः कीर्तने कोलगोधाहिशशजाहकाः।**
**न दर्शने न विरुते वानरर्क्षावतोऽन्यथा ॥ २६ ॥**

कोलादयो दर्शने न प्रशस्ताः। विरुतेऽपि न प्रशस्ताः। वानरश्च ऋक्षश्च (दर्शने विरुते शस्तौ)। अत उक्तादन्यथा विपरीतौ प्रशस्तौ। ऋक्षवानरयोर्दर्शनं विरुतं च प्रशस्तम्। तयोः कीर्तनं न प्रशस्तमित्यर्थः। **संग्रहे**– "सर्वत्र दक्षिणाद्वामगमनमनिष्टं श्वसृगालयोः विपरीतं मृगविहङ्गमयोः। सर्वथापि दर्शनं भरद्वाजचाषभासनकुलानाम्। शशसर्पाजाविगोधाजाहकसूकराणां तु कीर्तनमनिष्टम्। (न) दर्शनं विरुतं वा(नरर्क्षयोः?) इति। विरुतं वाशितम् ॥

**धनुरैन्द्रं च लालाटमशुभं शुभमन्यतः।**

ऐन्द्रं धनुः लालाटं ललाटाभिमुखं स्थितमशुभम्। अन्यतः तिर्यक् पृष्ठतो वा स्थितं शुभम्। लालाटमिति भवार्थे अण्। ललाटशब्देन ललाटसमीपदेशो लक्ष्यते ॥

---

१. 'विपरीतमृक्षवानरयोः' इति मुद्रिते।

**अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ॥ २७ ॥**

पात्राणि अग्निपूर्णानि अशोभनानि । तथा भिन्नानि विशिखानि (शून्यानि रिक्तानि?) अशुभानीति वचनविपरिणामेन सम्बन्धः ॥

वैद्यस्यातुरगृहप्रवेशे शुभाशुभनिमित्तसूचकान्याह—

**दध्यक्षतादि निर्गच्छद् वक्ष्यमाणं च मङ्गलम् ।**
**वैद्यो मरिष्यतां वेश्म प्रविशन्नेव पश्यति ॥ २८ ॥**

दध्यक्षतेत्यादि । आदिशब्देनेक्षुनिष्पावादीनां परिग्रहः । दध्यक्षतादी यस्य मङ्गलस्य तदेवम् । वैद्यः प्रविशन्नेव तत्काल एव दध्यक्षतादि यद्वक्ष्यमाणं मङ्गलं निर्गच्छद् आतुरगृहाद् निर्गच्छद् निःसरद् मरिष्यतामासन्नमरणानां वेश्म प्रविशन्नेव पश्यति ॥

**दूताद्यसाधु दृष्ट्वैवं त्यजेदार्तमतोऽन्यथा ।**
**करुणाशुद्धसन्तानो यत्नतः समुपाचरेत् ॥ २९ ॥**

एवं पूर्वोक्तेन प्रकारेण असाध्वशुभं पूर्वनिर्दिष्टं दृष्ट्वा अर्तमातुरं त्यजेन्न चिकित्सेत् । आदिशब्देन शकुनादिपरिग्रहः । अतोऽन्यथेति । दूतादि शुभं दृष्ट्वा तमातुरं वैद्यो यत्नेन समुपाचरेत् । किंभूतः । करुणाशुद्धसन्तानः । करुणया शुद्धं निर्मलं सन्तानं मनो यस्य पुंसः एवम्भूतः सन् ।

अथ तदेव दध्यक्षताद्याह—

**दध्यक्षतेक्षुनिष्पावप्रियङ्गुमधुसर्पिषाम् ।**
**यावकाञ्जनभृङ्गारघण्टादीपसरोरुहाम् ॥ ३० ॥**
**दूर्वार्द्रमत्स्यमांसानां लाजानां फलभक्ष्ययोः ।**
**रत्नेभपूर्णकुम्भानां कन्यायाः स्यन्दनस्य च ॥ ३१ ॥**
**नरस्य वर्धमानस्य देवतानां नृपस्य च ।**
**शुक्लानां सुमनोवालचामराम्बरवाजिनाम् ॥ ३२ ॥**
**शङ्खसाधुद्विजोष्णीषतोरणस्वस्तिकस्य च ।**
**भूमेः समुद्धृतायाश्च वह्नेः प्रज्वलितस्य च ॥ ३३ ॥**

मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्साया बडवायाः स्त्रिया अपि ॥ ३४ ॥

जीवञ्जीवकसारङ्गसारसप्रियवादिनाम् ।
रुचकादर्शसिद्धार्थरोचनानां च दर्शनम् ॥ ३५ ॥

गन्धः सुसुरभिर्वर्णः सुशुक्लो मधुरो रसः ।
गोपतेरनुकूलस्य स्वरस्तद्वद् गवामपि ॥ ३६ ॥

मृगपक्षिनराणां च शोभिनां शोभना गिरः ।
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ॥ ३७ ॥

भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिःस्वनाः ।
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ॥ ३८ ॥

पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ।

दध्यक्षतेत्यादि । दध्यक्षतादीनां दर्शनं पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणमिति वक्ष्यमाणेन सम्बन्धः । अक्षता यवाः । "अक्षता अखण्डास्तण्डुलाः" इति सारकृत् । धान्यमेवाखण्डितमक्षतशब्दवाच्यमित्यपरे । यावकमालक्तकः - ചെമ്പഞ്ഞി । भृङ्गारः कनकालुका । "भृङ्गरः - പൊന്ന്" इति पाठ्ये । घण्टा - കടമണി । दीपम् - വിളക്ക് । सरोरुहम् താമരപ്പൂ । आर्द्रमत्स्याः । आर्द्रमांसम् । आर्द्रग्रहणमत्र शुष्कपरिहारार्थम् । भक्षो मोदकादिः । रत्नं पद्मरागादिकम् । इभो हस्ती । नरस्य वर्धमानस्य शौर्यत्यागप्रज्ञाराजसत्कारादिभिर्वर्धमानः प्रतिदिनमुपचयं गतस्तथाविधस्य पुरुषस्य दर्शनं शुभम् । शुक्लानां सुमनःप्रभृतीनां दर्शनं शुभम् । वालचामरं केशप्रकीर्णम् । वाजी तुरङ्गः । उष्णीषं शिरोवेष्टनम् തലത്തൊപ്പി । तोरणम् - ഇരട്ടക്കൊടി । अन्ये लोकप्रसिद्धं तोरणमेव (इति) । स्वस्तिकम् - കൊടിക്കൂറ । मनोज्ञस्य हृदयहारिणोऽन्नपानस्य । पूर्णस्य शकटस्य च नृभिरिति संबन्धः । नरैः पूर्णस्य सम्भृतस्य शकटस्य रथस्य दर्शनम् । धेन्वा इत्यादि । स्त्रिया अपीत्यपिशब्दः समुच्चये । यथा धेन्वाः सवत्साया दर्शनमेवं बडवायाः सवत्सायाः स्त्रियाश्च सवत्सायाः सापत्याया इति । "दृतेर्धेन्वाः सवत्सायाः" इति केचित्पठन्ति । दृतिश्चर्म-

भक्षिका। पाठ्येऽपि–"തോൽത്തുരുത്തി" इत्युक्तम्। सारङ्ग इति चात(क)-मृगकरेणूनां नाम। अत्र चातक एवानुमीयते। प्रियवादी कोकिलः-കുയിൽ। शतपत्रो मयूरः –മയിൽ। दार्वाघाट इत्यपरे। अन्ये सरोरुह-विशेष इति वदन्ति। रुचको वलयः आभरणविशेषः। रुचकम् –വട്ടക്കണ്ണാടി इत्युक्तम्। आदर्शम् –കണ്ണാടി। सिद्धार्थो गौरसर्षपः। रोचना गोरोचना। गन्धः सुष्ठु सुरभिः। सुशुक्लः वर्णः सुष्ठु शुक्लः सितः। रसो मधुरः। गोपतेः वृषभस्य अनुकूलस्य स्वरः स्वनः (न) प्रतिकूलस्य कुपितस्य शब्दः। यां दिशं प्रति गच्छति तदभिमुखस्य गोपतेरिति केचित्। तद्वद् गोपतिना तुल्यो गवामप्यनुकूलानां शब्द इत्यर्थः। शोभिनां प्रशस्तानां मृगपक्षिनराणां प्रशस्ता गिरो विद्यादारोग्यलक्षणमिति योज्यम्। मृगपक्षिनरा ह्यशोभिनोऽपि सृगालोलूक-चण्डालादयः सन्ति। तद्व्यवच्छेदनार्थं शोभिनामिति। पताका वैजयन्ती। अभिष्टुतिः प्रयाणकाले जनैः स्तुतिः जयजयेत्यादिशब्दपूर्वा अभिमुखमुच्चारिता। तथा भेर्यादीनां शब्दाः। पुण्याहनिःस्वनाः प्रशस्तशब्दाः आरोग्याय। न तु अप्रशस्तनिःस्वनाः प्रेतपटहादिजाः। वेदाध्ययनस्य वेदपाठस्य ये शब्दाः ते च शुभाः। प्रदक्षिणोऽनुकूलो वायुः सुखः सुखावहः पथि वेश्मप्रवेशे च तदारोग्यलक्षणं विद्यात्। संग्रहे तु दध्यादिकमष्टोत्तरं मङ्गलशतमुक्तम्। "प्रस्थानगमनप्रवेशेषु दधिघृतमधुलाजपुष्पाक्षतोदुम्बराश्वत्थमुक्तामणिच्छत्रदूर्वा-ङ्कुरादर्शकन्याध्वजस्यन्दनाष्टापदाक्षतनृपश्रीतरुभद्रपीठानि मत्स्या हया (नावसी?) हंसचापौ वृषः केसरी दक्षिणावर्तशङ्खाब्जसिद्धार्थकरोचनाः स्वस्तिकस्तोरणं कीचका वेणवो वरवधूर्मदासिक्तगण्डो गजस्तोयलम्बोऽम्बुदः पूर्णकुम्भो हरिद्रात्रिरिन्द्रः फलान्यार्द्रमांसं सितं चामरं गौः सवत्साङ्गना पुत्रिणी मानुषं वर्धमानं सहस्रं नराणां प्रयुक्तानि यानानि धन्वन्तरिर्वाम(गो? नो) ब्राह्मणो भूमिरभ्युद्धृता सिद्धमन्नं वराहश्च तोयोत्थितस्त्रिनयनमधुसूदनस्कन्दपद्मासना लोकपालास्सुराः खं दिशोऽग्निः सरांसि स्रवन्त्यः समुद्रा मखा मारुतो ज्योतिषं धर्मशास्त्राणि तीर्थानि (काव्यं) धर्मकामार्थामृतं बालखिल्यादयो वेदवाक्यं निधिः कौस्तुभः काञ्चनं माणिभद्रः सुमेरुः प्रियङ्गुः प्रदीपो वचा मोदकाः

---

१. 'वचामोदकौ' इति मुद्रिते।

दितिरदि[1](तिरुन्ध)ती ऋद्धिः सावित्र्युमाकाशगङ्गा शची देवसेना स्वधा शान्तिर्लक्ष्मीः सरस्वत्यपत्यं क्षमा स्वस्तिशब्दो वषट्कार ओङ्कारपुण्याहधर्मक्रिया-श्चैतदष्टोत्तरं मङ्गलानां शतं दर्शनात् कीर्तनाच्चाशुभानि व्यपोह्यार्थसिद्धिं दिशन्त्युत्तमाम्" इति । अत्रेन्दुः—"वैद्यस्यान्यस्य च दध्यादिकं मङ्गलाना-मष्टोत्तरशतं दर्शनादिभ्योऽशुभानि व्यपोह्य उत्तमामर्थसिद्धिं दिशन्ति । स्यन्दनं रथादि । अष्टापदं चतुरङ्गफलकम् । अक्षाः पाशाः । श्रीतरुः बिल्ववृक्षः । भद्रपीठं देवासनं चतुष्कोणम् । स्वस्तिकोऽलङ्कारविशेषः[2] । कीचका वेणवः ये वायुना शब्दायन्ते । वरवधूः उत्तमा स्त्री । वर्धमानमलङ्कारविशेषः । याना-न्यश्वादीनि प्रयुक्तानि । बोधकरणेन (धन्वन्तरिश्चित्रादिकृतः) । वामनो यः कश्चित् । तथा ब्राह्मणः । वराहः सूकरस्तोयमध्यादुत्थितः सन् । अमृतं श(ब्द) एव । माणिभद्रो यक्षविशेषः । दितिरसुरमाता । अदितिः सूर्यमाता । देवसेना(स्तस्य ? त्[3]तत्संज्ञा) । स्वधा पितॄणाम् । शान्तिः धर्मस्य । अपत्यं स्वस्य । क्षमा धर्मस्य । स्वस्तीत्ययं शब्दः ।" (इति) ॥

**इत्युक्तं दूतशकुनं स्वप्नानूर्ध्वं प्रवक्ष्यति[4] ॥ ३९ ॥**

इत्युक्तमित्यादि । इत्येवमर्थे समाप्तौ वा । दूतः स्त्रीपुरुषादिर्य आतुरेण प्रेष्यते । तथा चेतनाचेतनरूपः शुभाशुभसूचको दूतलक्षणवर्जितो लोकप्रसि-(द्धया ? द्धः) शकुन उक्तो यथा हाहाक्रन्दितमित्यादि । दूतशकुनमित्येवमुक्त-मभिहितम् । अतो दूतशकुनादूर्ध्वमनन्तरं स्वप्नान् प्रवक्ष्यति सम्यग् वदिष्यति तन्त्रकार इति शेषः । स्वप्नलक्षणं संग्रहे कथितं यथा—

"सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा ।
विषयेभ्यस्तदा स्वप्नान् नानारूपान् प्रपश्यति ॥"

इति । तथा—

"श्लेष्मावृतेषु स्रोतःसु श्रमादुपरतेषु च ।
इन्द्रियेषु स्वकर्मभ्यो निद्रा विशति तामसी ॥"

इति निद्रालक्षणम् ॥

---

१. 'दितिरृद्धिः' घपाठः । २. 'स्वस्तिक आकारविशेष' इति मुद्रिते ।
३. 'स्कन्दस्य' घपाठः । ४. 'प्रचक्षते' इति मुद्रिते ।

**स्वप्ने मद्यं सह प्रेतैर्यः पिबन् कृष्यते शुना ।**
**स मर्त्यो मृत्युना शीघ्रं ज्वररूपेण नीयते ॥ ४० ॥**

स्वप्न इत्यादि । यो मर्त्यः पुरुषः स्वप्ने स्वप्नावस्थायां प्रेतैः सह मद्यं पिबन् शुना कृष्यते स मृत्युना ज्वररूपेण शीघ्रमचिरात्कतिपयैरेव दिवसैः नीयते लोकान्तरमिति शेषः । ज्वरेण हन्यत इत्यर्थः । प्रेताः निकृष्टा भूतविशेषाः ।

**रक्तमाल्यवपुर्वस्त्रो यो हसन् ह्रियते स्त्रिया ।**
**सोऽस्रपित्तेन**

रक्तेत्यादि । रक्तमाल्यो रक्तशरीरो रक्तवस्त्रश्च यो मर्त्यो हसन् स्त्रिया स्वप्ने ह्रियते आकृष्यते आक्रम्यते सोऽस्रपित्तेन मृत्युना शीघ्रं नीयते ।

**महिषश्ववराहोष्ट्रगर्दभैः ॥ ४१ ॥**
**यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा ।**

यो महिषादिभिः कारणभूतैः याम्यां दिशं स्वप्ने प्रयाति तस्य यक्ष्मणा राजयक्ष्मणा मरणं भवति ॥

**लता कण्टकिनी वंशस्तालो वा हृदि जायते ॥ ४२ ॥**
**यस्य तस्याशु गुल्मेन**

लतेत्यादि । मर्त्य इति प्रथमान्तोऽपि इहार्थवशात् षष्ठ्यन्तः सम्बध्यते । यस्य मर्त्यस्य स्वप्ने कण्टकिनी लता कण्टकयुक्ता लता हृदि हृदये जायते वंशो वाथ तालो वा तस्य शीघ्रं गुल्मेन मरणं भवेत् । संग्रहेऽप्येवमुक्तं—"यस्य कण्टकिनी लता वंशस्तालो वा हृदि जायते स गुल्मेन । यस्य शिरसि स शिरोरोगेण शस्त्रेण वा शिरश्छेदेन" इति । अलेन्दुः—"यस्य कण्टकिलतादिकं जायते स गुल्मेन हन्यत इति सम्बन्धः । यस्य पुंसः कण्टकिलतादिकं शिरसि जायते स शिरोरोगेण हन्यते" इति ॥

**यस्य वह्निमनर्चिषम् ।**
**जुह्वतो घृतसिक्तस्य नग्नस्योरसि जायते ॥ ४३ ॥**
**पद्मं स नश्येत्कुष्ठेन**

यस्य मर्त्यस्य नग्नस्य घृतसिक्तस्य आज्याभ्यक्तस्य वह्निमनर्चिषं ज्वाला-रहितं जुह्वतः उरसि पद्मं जायते स नरः कुष्ठेन नश्येत् ॥

**चण्डालैः सह यः पिबेत् ।**
**स्नेहं बहुविधं स्वप्ने स प्रमेहेण नश्यति ॥ ४४ ॥**

चण्डालैः सह बहुविधमनेकप्रकारं स्नेहं घृततैलादिकं यो मर्त्यः स्वप्ने पिबेत् स प्रमेहेण नश्यति । स्वप्ने प्रकृतेऽपि पुनः स्वप्नग्रहणं कृतं स्पष्टार्थम् ॥

**उन्मादेन जले मज्जेद्यो नृत्यन् राक्षसैः सह ।**

उन्मादेन स नश्यति यो राक्षसैः सह नृत्यन् जले मज्जेत् ।

**अपस्मारेण यो मर्त्यो नृत्यन् प्रेतेन नीयते ॥ ४५ ॥**

स मर्त्योऽपस्मारेण नश्यति यो नृत्यन् सह प्रेतेन स्वप्ने नीयते ॥

**यानं खरोष्ट्रमार्जारकपिशार्दूलसूकरैः ।**
**यस्य प्रेतैः सृगालैर्वा स मृत्योर्वर्तते मुखे ॥ ४६ ॥**

यस्य नरस्य स्वप्ने खरादिभिर्यानं स मृत्योर्मुखाभ्यन्तरे वर्तते अत्यासन्न-विनाशत्वात् ॥

**अपूपशष्कुलीर्जग्ध्वा विबुद्धस्तद्विधं वमेत् ।**
**न जीवति**

अपूपान् शष्कुलीर्वा जग्ध्वा भक्षयित्वा एवं स्वप्ने दृष्ट्वा विबुद्धः सन् तद्विधं तथाविधं स्वप्ने जग्ध्वापूपशष्कुलीप्रायमेव वमेत् स न जीवति । **अस्मद्गुरूणां** तु 'वमन्' इति पाठः ।

**अक्षिरोगाय सूर्येन्दुग्रहणेक्षणम् ॥ ४७ ॥**

सूर्याचन्द्रमसोर्ग्रहणदर्शनमक्षिरोगाय ॥

**सूर्याचन्द्रमसोः पातदर्शनं दृग्विनाशनम् ।**

सूर्याचन्द्रमसोः पातदर्शनं मर्त्यस्य दृष्टिविनाशनम् । सूर्याचन्द्रमसोरिति **'देवताद्वन्द्वे च'** (पा० सू० ६-३-२६) इत्यानङादेशः ॥

**मूर्ध्नि वंशलतादीनां सम्भवो वयसां तथा ॥ ४८ ॥**

निलयो मुण्डता काकगृध्राद्यैः परिवारणम् ।
तथा प्रेतपिशाचस्त्रीद्रमिलान्ध्रगवाशनैः ॥ ४९ ॥
सङ्गो वेत्रलतावंशतृणकण्टकसङ्कटे ।
श्वभ्रश्मशानशयनं शयनं पांसुभस्मनोः ॥ ५० ॥
मज्जनं जलपङ्कादौ शीघ्रेण स्रोतसा हृतिः ।
नृत्यवादित्रगीतानि रक्तस्रग्वस्त्रधारणम् ॥ ५१ ॥
वयोऽङ्गवृद्धिरभ्यङ्गो विवाहः श्मश्रुकर्म च ।
पक्वान्नस्नेहमद्याशः प्रच्छर्दनविरेचने ॥ ५२ ॥
हिरण्यलोहयोर्लाभः कलिर्बन्धपराजयौ ।
उपानद्युगनाशश्च प्रपातः पादचर्मणोः ॥ ५३ ॥
हर्षो भृशं प्रकुपितैः पितृभिश्चावभर्त्सनम् ।
प्रदीपग्रहनक्षत्रदन्तदैवतचक्षुषाम् ॥ ५४ ॥
पतनं वा विनाशो वा भेदनं पर्वतस्य च ।
कानने रक्तकुसुमे पापकर्मनिवेशने ॥ ५५ ॥
चिन्तान्धकारसंबाधे जनन्यां च प्रवेशनम् ।
पातः प्रासादशैलादेर्मत्स्येन ग्रसनं तथा ॥ ५६ ॥
काषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ।
रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते ॥ ५७ ॥

मूर्ध्नीत्यादि । जातु नेष्यते इति वक्ष्यमाणेन संबन्धः । वंशलतादीनां मूर्ध्नि शिरसि संभवो जातु नेष्यते । एवमग्रेऽपि योज्यम् । तथा वयसां पक्षिणां मूर्ध्नि निलयो निलयनम् । तथा मुण्डता कृतमुण्डनत्वम् । काकाद्यैः परिवारणं परिवृतत्वम् । न केवलं काकाद्यैः प्रेताद्यैश्चेति तथाशब्दस्यार्थः । आन्ध्रद्रमिलौ दाक्षिणात्यजनपदनामनी । गवाशनाः गोमांसभक्षाः चण्डाला इत्यर्थः । **पाठ्येऽ**प्युक्तं–"द्रमिलाः – തമിഴർ । आन्ध्राः मद्रदेशे पार्वतीयाः । गवाशनाः श्वपचाः" इति । "द्रमिलाः पञ्चद्रमिलाः" इति **टिप्पणे** । वेत्रादिसङ्कटे वेत्रा-

१. 'ध्नि सं' घपाठः । २. 'ഉമിഴർ ന' घपाठः ।

दिभिः संवृते देशे स्थितस्य सङ्गो द्वारालाभः तत्रैव निःसरणमपश्यतः । वेत्रं काष्ठविशेषः । श्वभ्रे श्मशाने च शयनं स्वपनम् । पांसौ भस्मनि च पतनम् । जलपङ्कादिके मज्जनं (ध्वंसनम्?) आदिशब्देन कूपकलुषोदकादयो गृह्यन्ते । स्रोतसा शीघ्रेण हृतिः हरणम् । नृत्तं च वादित्रं च गीतं च तानि । स्रक् च वस्त्रं च स्रग्वस्त्रे, रक्ते च (ते स्रग्वस्त्रे च) तयोर्धारणम् । वयश्चाङ्गं च तयोर्वृद्धिः । तयोर्वृद्धिर्यथा बाल्ये यौवनं वार्द्धकं वा । अभ्यङ्गोऽभ्यञ्जनम् । विवाहः परिणयः । श्मश्रुकर्म मुखव्यञ्जनमुण्डनम् । पकान्नं मण्डकादि । स्नेहः तैलादिः । मद्यं शी(ध्वादि)ः । तेषामाशो भक्षणम् । प्रच्छर्दनं वमिः । विरेचनं विरेकः । हिरण्यस्य, लोहस्य च रूप्यादेर्लाभः । कलिरनर्थः । बन्धो बन्धनम् । पराजयः परिभवः । उपानद्युगस्य नाशः । पादस्य चर्मणश्च प्रकर्षेण पतनम् । पाठ्ये तूक्तं–पादचर्म – ഉള്ളംകാൽതോൽ । अन्ये तु उपानद्विशेषं वदन्ति" इति । भृशमतिशयेन हर्षः । पितृभिः प्रकुपितैः अ(व)भर्त्सनम् । प्रदीपादीनां पतनमथवा विनाशः । पर्वतस्य च भेदनम् । कानने वने रक्तकुसुमे प्रवेशनमिति संबन्धः । पापकर्मणां पापिनां निवेशने गृहे प्रवेशनम् । चितायामन्धकारसंबाधे तमःसङ्कटे जनन्यां च प्रवेशनम् । जननी माता । चितायामन्धकारे संबाधे च प्रवेशनमिति वा । संग्रहे—"रक्तकुसुमवतीं भूमिं गुहामन्धकारचितां पापकर्मालयं संबाधं जननीं वा प्रविशति" इति । "संबाधः सङ्कट" इतीन्दुः । प्रासादात् शैलाद् वा पातः पतनम् । आदिशब्देनोच्चवृक्षादेः ग्रहणम् । मत्स्येन ग्रसनं निगरणम् । कषायेण रक्तं वस्त्रं काषायं तद्विद्यते येषामितीनिः । तेषां काषायिणां कषायरक्तवस्त्रावृतानाम् । तथा असौम्यानां दुर्दर्शनानां तथा नग्नानां विवस्त्राणां, दण्डधारिणां दण्डिनां तथा रक्ताक्षाणां रक्तनयनानां कृष्णानां कृष्णवर्णानां च नृणां दर्शनं न कदाचिदिष्यते स्वप्ने । अशुभसूचकत्वात् ॥

**कृष्णा पापाननाचारा दीर्घकेशनखस्तनी ।**
**विरागमाल्यवसना स्वप्नकालनिशा मता ॥ ५८ ॥**
**मनोवहानां पूर्णत्वात्स्रोतसां प्रबलैर्मलैः ।**
**दृश्यन्ते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ॥ ५९ ॥**

---

१. 'बुडन'मिति मुद्रितसुन्दर्याम् । २. 'माद्वीकादि' घपाठः । ३. 'पर्वतात्' घपाठः ।

**अरोगः संशयं प्राप्य कश्चिदेव विमुच्यते ।**

कृष्णेत्यादि । एवंविधा स्त्री स्वप्ने कालनिशा मता कालरात्रिरूपा मता । पापमाननमाचारश्च यस्याः सैवम् । तथा दीर्घाः केशनखाः स्तनौ च यस्याः सैवम् । 'स्वाङ्गाच्चोपसर्जनात्-' (पा० सू० ४-१-५४) इति ङीष् । विरागमाल्यवसना विविधो रागो यस्य तदेवंभूतं माल्यवसनं यस्याः सैवम् । यथोक्तस्वप्नदर्शने कारणं निरूपयति—मनोवहानामित्यादि । मनश्चेतो वहन्ति यानि विशेषेण हृदाश्रितानि स्रोतांसि तानि मनोवहानि, तेषां मनोवहानां स्रोतसां प्रबलैः बलवद्भिर्मलैः मलिनीकरणस्वभावैः वातपित्तश्लेष्मभिः पूर्णत्वाद् दारुणाः घोराः अप्रशस्ताः स्वप्ना दृश्यन्ते अनुभूयन्ते । यैः स्वप्नैः दृष्टैः रोगी आतुरः पञ्चतां याति मरणं प्राप्नोति । तथास्वभावत्वात् तेषां स्वप्नानाम् । अरोग इत्यादि । स्वस्थो नरः संशयं जीवितसन्देहं प्राप्य कश्चिदेव बहूनां मध्यात् पुण्यवान् नियतायुश्च विमुच्यते मरणादिति शेषः ॥

स्वप्नभेदानिदानीमाह—

**दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा ॥ ६० ॥**
**भाविको दोषजश्चेति स्वप्नः सप्तविधो मतः ।**

दृष्ट इत्यादि । चः समुच्चये । इतिः प्रकारे । दृष्टादिना प्रकारेण स्वप्नः सप्तविधो मतः, सप्त स्वप्ना इत्यर्थः । दृष्टः स उच्यते यः 'पूर्वं जाग्रदवस्थायां किञ्चिद्वस्तुजातं दृष्ट्वा तदानीं सुप्तावस्थायां तादृशं वस्तुजातं संविचिरूपतयानुभूयते । (*यश्च शब्दमात्रेण वस्तुजातं श्रोत्रेन्द्रियेण गृह्यते तदिदानीं सुप्तावस्थायां तादृक्संविचिरूपतयानुभूयते स श्रुत उच्यते । यस्तु जाग्रदवस्थायां यथायथमिन्द्रियैरनुभूयते सोऽनुभूत उच्यते । यस्मिन् दृष्टे श्रुतेऽनुभूते वा) यत्पूर्वं जाग्रदवस्थायां वस्तुजातं मनसा प्रार्थ्यते तथैव च सुप्तावस्थायामन्तः संविद्रूपतयानुभूयते स प्रार्थितः उच्यते । प्रार्थितो मनोरथविषयीकृत इत्यर्थः । कल्पितः संकल्पितः । जाग्रदवस्थायां वस्तुजातमन्तःसंवित्तावुपारूढं तदानीं सुप्तावस्थायां तादृशमनुभूयते स कल्पित उच्यते । (भाविको ? यश्चाहेतुको

---

१. 'चक्षुषा जा' । २. 'रूपेणानु' । ३. 'तादृगनु' घपाठः ।

* कोष्ठरेखान्तर्गतो भागः सर्वाङ्गसुन्दराव्याख्यातः समुद्धृत्य योजिता ।

दृष्टश्रुतादिभ्यः स्वप्नेभ्योऽन्यो विलक्षणः भविष्यदावेदयति स भाविक उच्यते । दोषजो वातादिजो यः प्रकृत्यनुरूपः पूर्वमुक्तः । **संग्रहे**—"स्वप्नस्तु स्वयमन्येन वा दृष्टः शुभाशुभहेतुः सप्तविधो भवति । दृष्टः श्रुतोऽनुभूतः प्रार्थितः संकल्पितो भाविको दोषजश्चे"ति । **इन्दुः**—"स्वप्नश्च शुभाशुभहेतुः स्वयं दृष्टः उपभोक्त्रा अन्येन वा तमुद्दिश्य दृष्टः । स च दृष्टादिभेदेन सप्तविधः । दृष्टश्चक्षुषा गृहीतस्य स्वयमेव स्वापे दर्शनम् । श्रुतस्याख्यायिकारूपेण स्वापे दर्शनं श्रुतः । अनुभूतः स्वसंवेदादिना[1] । प्रार्थितः आकाङ्क्षितः । इदं कथं नु मे स्यादिति कल्पितः संकल्पितः । इदं मयावश्यं कर्तव्यमिति संकल्पितस्य दर्शनम् । भाविकः स्वभावादागतः । दोषजो वातादिसामर्थ्यात् नभोगमनादिः" इति ॥

**तत्राद्या[2] निष्फलाः पञ्च यथास्वप्रकृतिर्दिवा ।**
**विस्मृतो दीर्घह्रस्वोऽति, पूर्वरात्रे चिरात् फलम् ॥ ६२ ॥**
**दृष्टः करोति तुच्छं च**

तत्रेत्यादि । तत्र तेषु स्वप्नेषु मध्ये[3] आद्या आदिपठिता दृष्टश्रुतादयः पञ्च निष्फलाः । नैते यथानुरूपं फलं शुभमशुभं वा ददति । (भाविक)दोषजौ सफलौ । दोषजोऽपि यथास्वप्रकृतिर्यः स्वप्नः सोऽपि निष्फलः । नासौ यथानुरूपं फलं शुभाशुभलक्षणं ददाति । यथा वातप्रकृतेर्वातजः पित्तप्रकृतेः पित्तजः । एवं कफे द्वन्द्वेऽपि वाच्यम् । तथा दिवा दृष्टो यः स्वप्नः सोऽपि पञ्चविधव्यतिरिक्तोऽपि निष्फलः । तथा विस्मृतो निष्फलः । विस्मृतो यः साधु न स्मर्यते । तथातिदीर्घोऽतिह्रस्वो यः स्वप्नः स पञ्चविधव्यतिरिक्तो निष्फलः । "नातिसुप्तदृष्टश्च निष्फलः" इति **संग्रहे** । पूर्वरात्रे निशादौ दृष्टः स्वप्नः सफलोऽपि शुभाशुभं फलं चिरात् चिरेण कालेन तथा तुच्छमल्पं च करोति, न यथापरिभाषितम् । केचित्त्वाहुः—चशब्दो विकल्पार्थे । चिरेण चिरकालेन तुच्छं वेत्यर्थः । पूर्वरात्रे अहः सर्वैकदेश (५-४-८७) इत्यच्समासान्तः ।

**गोसर्गे तदहर्महत् ॥ ६३ ॥**
**निद्रया चानुपहतः प्रतीपैर्वचनैस्तथा ।**

1. 'वेदनादिना' घपाठः । 2. 'तेष्वाद्या' इति मुद्रिते । 3. 'मध्यात्' घपाठः ।

गोसर्ग इत्यादि । गोसर्गे गवां मोक्षकाले प्रत्युषसि दृष्टः स्वप्नः तदहः तस्मिन्नेवाहनि फलं महत् करोतीति योज्यम् । तदहरित्यहः शब्दः सप्तम्यर्थ-वृत्तिरव्ययः । संग्रहे—"पूर्वरात्रेऽल्पं चिराच्च फलं करोति । गोसर्गे महत् सद्यश्च । निद्रया चानुपहतः...." इति । शुभस्वप्नो दृष्टो निद्रया यद्यनुपहतो यस्मिन् स्वप्ने दृष्टे[1] तदनन्तरं न सुप्यते स स्वप्नो महत् फलं करोति । अन्यथा स्वल्पम् । प्रतीपैर्दृष्टः स्वप्नः प्रतिकूलैर्वचनैश्चानुपहतो न व्यवहतः[2] शुभः स्वप्नो दृष्टो महत् फलं करोति । हाटकोऽप्याह—"निद्रया चानुपहतो दृष्टः स्वप्नः प्रतिकूलै-र्वचनैश्चानुपहतः शुभः स्वप्नो महत् फलं करोति ।" इति ॥

एवं शुभस्वप्नं प्रत्युक्त्वा अशुभस्वप्नं प्रत्याह—

**याति पापोऽल्पफलतां दानहोमजपादिभिः ॥ ६४ ॥**

यातीत्यादि । पापोऽशुभः स्वप्नो दानादिभिः अल्पफलतां याति । अहितान्मनोनिग्रहो यमः । आदिशब्देन (यम)नियमप्रायश्चित्तादयो गृह्यन्ते ॥

**अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ।**
**पश्येत् सौम्यं शुभं तस्य शुभमेव फलं भवेत् ॥ ६५ ॥**

अकल्याणमित्यशुभसूचकत्वादशुभं स्वप्नं दृष्ट्वा तत्रैव तस्मिन्नेवावस-रेऽशुभस्वप्नदर्शनसमनन्तरकाले सौम्यमक्रूरं शुभसूचकत्वात् शुभं स्वप्नं यः पश्येत् तस्य नरस्य तस्य वा स्वप्नस्य शुभमेव कल्याणरूपमेव फलं भवेत् । न पूर्वदृष्टा-शुभफलमित्येव शब्दार्थः । अपि शब्दात् कल्याणं स्वप्नं दृष्ट्वा यः तत्रैव स्वप्न-मध्ये तत्रैव रात्रौ सुप्तोऽशुभं च स्वप्नं पश्येत् तस्य अशुभमेव फलं भवेत् । न पूर्वदृष्टशुभफलमिति बोध्यम् । नन्वेवं सति स्वप्नानामनिश्चितफलत्वं प्राप्नोति । ततश्च 'स्वप्ने मद्यं सह प्रेतै'रित्यादि यदुक्तं तदन्यथापि स्यात् । यतोऽशुभ-लक्षणोऽप्येवं दानादिभिश्चान्यथा सम्पद्यते । (शुभलक्षणोऽप्येवं जातीयश्चान्यथा सम्पद्यते ।?) ततश्चानिश्चितफलत्वान्मरणं प्रति नासौ निश्चितो हेतुः । एव-मन्येऽपि ये स्वप्नाः प्रतिनियताः रक्तपित्तादीनां व्याधीनां हेतवो निर्दिष्टाः (ते हेतवो नैव बोद्धव्याः ।? तेऽपि तथैव बोद्धव्याः) । अत्राचक्ष्महे--निश्चि-

---

१. 'दृष्टेऽनन्तरं' । २. 'व्याहतः' घपाठः ।

तानिश्चितफलत्वात् स्वप्नानामदोषः। तथाहि। केचित् स्वप्ना निश्चितफल-स्वभावाः। यथा 'स्वप्ने मद्यं सह प्रेतै'रित्यादयः। केचिदनिश्चितफलस्वभावाः यथा 'मूर्ध्नि वंशलतादीना'मित्यारभ्य यावत् 'रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते' इत्येवमन्तेन ग्रन्थेन निर्दिष्टाः। तत्र ये निश्चितफलस्वभावास्ते न कथञ्चिदन्यथा कर्तुं पार्यन्ते। प्राक्तनस्य कर्मणस्तथा रूपस्य बलवत्त्वात्। ये त्वनिश्चितफलस्वभावाः 'मूर्ध्नि वंशलतादीना'मित्यादयस्तेषां स्वप्नान्तरदर्शना-दिभिरन्यथापि सद्भावः सम्भाव्यते इति॥

पश्येत्सौम्यमित्युक्तमतस्तानेव सौम्यान् स्वप्नान् दर्शयति—

**देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान्।**
**साधून् यशस्विनो वह्निमिद्धं स्वच्छान् जलाशयान्॥ ६६॥**

**कन्यां कुमारकान् गौरान् शुक्लवस्त्रान् सुतेजसः।**
**नराशनं दीप्ततनुं समन्ताद्रुधिरोक्षितम्॥ ६७॥**

**यः पश्येल्लभते यो वा छत्रादर्शविषामिषम्।**
**शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम्॥ ६८॥**

**शैलप्रासादसफलवृक्षसिंहनरद्विपान्।**
**आरोहेद्गोऽश्वयानं च तरेन्नदह्रदोदधीन्॥ ॥ ६९॥**

**पूर्वोत्तरेण गमनमगम्यागमनं मृतम्।**
**संबाधनिःसृतिर्देवैः पितृभिश्चाभिनन्दनम्॥ ७०॥**

**रोदनं पतितोत्थानं द्विषतां चावमर्दनम्।**
**यस्य स्यादायुरारोग्यं वित्तं बहु च सोऽश्नुते॥ ७१॥**

देवानित्यादि। कुमारकाः बालकाः। विषं वत्सनाभिः। आमिषं मांसम्। सुमनसः पुष्पाणि। शुक्लशब्दो वस्त्रमित्यत्रापि संबध्यते। अर्थव-शाच्चास्य नपुंसकत्वमेकत्वं च बोद्धव्यम्। यो देवादीन् पश्येत् यो वा छत्रा-दीन् लभते यश्च शैलादीनारोहेद् यश्च नदादीनि तरेत् यस्य वा पूर्वोत्तरगमना-

दिकं स्यात् स पुरुषः आयुरादीनश्नुते प्राप्नोति। नराशनो राक्षसाः तं रुधिरेणोक्षितं सिक्तम्। 'अमेध्यालेपन'मित्यत्र 'मेध्यमालेपन'मिति केचित्पठन्ति। ह्रदो गम्भीरः। अगम्या सकुल्या (तज्जा? अन्त्यजा) तिश्च। मृतिः मरणम्॥

'आरोग्यमश्नुते' इत्युक्तम्। अतस्तदेवारोग्यं लक्षयितुमाह—

**मङ्गलाचारसम्पन्नः परिवारस्तथातुरः।**
**श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः॥ ७२॥**

**सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु।**
**चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम्॥ ७३॥**

मङ्गलेत्यादि।

"प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्।
(ए)तत्तु मङ्गलं प्रोक्तमृषिभि(स्तत्त्वद)र्शिभिः॥"

आचरणमाचारः सद्वृत्तानुष्ठानम्। मङ्गलाचाराभ्यां सम्पन्नो युक्तः परिवारः। तथा श्रद्दधानः अवश्यं मे व्याधिरयं (अनेन भेषजेन) नश्यतीत्येवमातुरः श्रद्दधानः। तथा अनुकूलो दक्षिणः। तथा प्रभूतस्य द्रव्यस्य संग्रहः संग्रहणम्। तथा सत्त्वलक्षणयोः संयोगः। **सारकृद**पि—("सत्त्वलक्षणसंयोगज्ञापकत्वादि देहस्य नीरोगतालक्षणं च"?) इत्याह। तथा वैद्यद्विजादिषु भक्तिः। चिकित्सायामुपक्रमेऽनिर्वेदः सोत्साहता तदेतदारोग्यस्य लक्षणम्। इन्दुनाप्युक्तं—"मङ्गलाचारसम्पन्नादिकमारोग्यलक्षणम्। प्रभूतानां द्रव्याणां संग्रहः। सत्त्वलक्षणानि शौचास्तिक्यादीनि" इति। "मङ्गलाचारसम्पन्नपरिवारः" इति वा पाठः। **संग्रहे**तूक्तं—

"दृष्ट्वा स्वप्नान् दारुणान् शोभनान् वा
प्रातः स्नातः सर्षपानग्निवर्णान्।
हुत्वा सावित्र्या सर्पिषाक्तांस्तिलान् वा
पूतः पापैर्मुच्यते व्याधिभिश्च॥" इति॥

---

१. 'म्पदादि'। २. 'म्यस्य ल' घपाठः।

कस्मादिदं स्थानं शारीरमुच्यते इत्यस्य स्थानस्य नामनिर्वचनं दर्शयति—

इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम् ।
शरीरस्य ततः स्थानं शारीरमिदमुच्यते ॥ ७४ ॥

इत्यत्रेत्यादि । इति(:) परिसमाप्तौ पूर्वोक्तपरामर्शे वा । अत्र अस्मिन् स्थाने यतो यस्माच्छरीरस्य जन्ममरणं सम्यगुदाहृतं सम्यक् प्रदर्शितम् । जन्म गर्भावक्रान्त्यादिभिश्चतुर्भिरध्यायैः सम्यगुदाहृतम् । प्रसक्तानुप्रसक्तिकया मरणमपि विकृतिविज्ञानीयेन दूतादिविज्ञानीयेन च प्रदर्शितम् । ततः शरीरस्य जन्ममरणोदाहरणात्कारणादिदं स्थानं शारीरमुच्यते । यद्यपि सर्वं स्थानं शरीरमधिकृत्यैव तथापीदं स्थानं साक्षाज्जन्ममरणचिन्तनाच्छरीरस्य प्राधान्येन शारीरस्थानमुच्यते इति । इन्दुनाप्युक्तं—"तत्रेत्यादिना स्थाननाम निरूप्यते । अस्मिन् स्थाने शरीरस्य जन्मनः प्रभृति मरणं यावद्यतः सम्यगुदाहृतं प्रदर्शितं अतः स्थानमिदं शारीरमुच्यते" इति ॥

इति हृदयबोधिकायामष्टाङ्गहृदयदीपिकायां शारीरस्थाने षष्ठोऽध्यायः ।
शारीरस्थानं समाप्तम् ।

# निदानस्थानम् ।

## प्रथमोऽध्यायः ।

हेतुलिङ्गौषधस्कन्धलक्षणोऽयं ग्रन्थो ग्रन्थकृता प्रणीतः । तानि च हेतुलिङ्गौषधानि सूत्रस्थाने सूचितानि । शरीरलक्षणञ्चाधारमथानुपपाद्य तानि विस्तरेणोपदेष्टुं न शक्यन्ते । तस्माच्छारीरस्थानादनन्तरमारब्धवान् हेतुलिङ्गौषधानीति । हेतुलिङ्गाभ्यामामयं परीक्ष्य अनन्तरं यथायोगमामयप्रशमार्थमौषधं दातुमुचितम् । तस्माद् हेतुलिङ्गयोरेव प्रागुद्देशो युक्तो न त्वौषधस्येति चिकित्सितस्थानात्प्रागिदमेव स्थानमुपदेष्टुं युक्तम् । तथा चोक्तं मुनिना—

"रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।"

इति । तस्मादौषधाद्धेतुलिङ्गयोरेवामयं प्रति प्राधान्यमिति निदानस्थानारम्भः । तत्र च पूर्वं सर्वरोगनिदानमेवारब्धुं युक्तं प्राधान्यात् । तच्च सर्वरोगकारणनिर्देशात् । तथा हि वातादय एव कुपिताः सर्वरोगकारणम् । वक्ष्यति हि—

"सर्वेषामेव रोगाणां निदानं कुपिता मलाः ।"

इति । तेषां च कोपकारणमस्मिन् निर्दिश्यत इत्याह 'अथात' इत्यादि ।

**इन्दुनात्वेवमुक्तं**—"सूत्रस्थाने स्वस्थवृत्तं निर्णीतम् । आतुरवृत्तं तु बह्वभिधेयत्वात्सूत्रितम् । तस्य चातुरवृत्तस्य स्वस्थवृत्तस्य च शरीरपरायत्तत्वाद् द्वितीयस्थाने जन्मनः प्रभृति शरीरं निर्णीतम् । सम्प्रति[1] व्याधिनिर्णयस्यावसरः । तेषां च व्याधीनां निर्णयेऽयं क्रमः । प्रथमं तेषां कारणं प्रदर्शयितव्यम् । तदनु[2] लक्षणम् । एतावता च अधिगतस्वरूपविशेषाणां यथास्वं प्रतीकारः । अतो निदानलक्षणपरिज्ञानार्थं तृतीयस्थानारम्भः[3] । चिकित्सितं तु बहुवक्तव्यत्वात् चतुर्थे वक्ष्यते । निदान[4]प्राधान्यात् स्थानव्यप-

१. 'ति तु व्या' । २. 'नु लक्षणानि' । ३. 'स्थानस्यारम्भः' ।
४. 'नप्रधानत्वात् स्थानस्य निदानव्यपदेशः' इति मुद्रिते ।

देशकत्वम् । निदानं च द्विविधम् । किञ्चित् सकलरोगानुयातम् । किञ्चिद्विशिष्ट-रोगाश्रयम् । तत्तु प्रत्यध्यायं निर्देक्ष्यते । सकलरोगव्यापकनिदानपरिज्ञानार्थं प्रथमाध्याय आरभ्यते—

**अथातः सर्वरोगनिदानं व्याख्यास्यामः ।**

अथेत्यादयः शब्दाः सर्वे आयुष्कामीयवद् व्याख्यातव्याः । सर्वे च ते रोगाश्च सर्वरोगा ज्वरादय उक्तानुक्ताः तेषां निदानं सर्वरोगनिदानम् । निश्चयेन व्याधिरनेन दीयत इति निदानं कारणं, तदभिधीयतेऽस्मिन्नध्याय इत्यध्यायस्य निदानसंज्ञा । अभिधेयेनाभि(धे? धा)यकमपि व्यपदिशन्ति कवयः । तत्र रोगाणां सामान्यनिदानं विभणिषुः तावद्रोगाणामेव पर्यायान् वदति । रोग-पर्यायश्रवणेन हि शिष्याणां तत्र तत्र शास्त्रप्रदेशेषु सन्देहो न भवति ॥

**रोगः पाप्मा ज्वरो व्याधिर्विकारो दुःखमामयः ।**
**यक्ष्मातङ्कगदाबाधशब्दाः पर्यायवाचिनः ॥ १ ॥**

रोग इत्यादि । पाठ्यकारोऽप्याह—"अथ हेतुलिङ्गानां प्रतिनिर्देशार्थं निदानस्थानमाह । तत्रापि पूर्वं सर्वव्याधिहेतुभूतानां दोषाणां निदानपरिज्ञानार्थ-मध्यायः । अपि च सर्वरोगाणां निदानपूर्वरूपरूपोपशयसम्प्राप्तिपरिज्ञानार्थं पुनः शास्त्रव्यवहारार्थं च उपदिशत्यस्मिन्नेव यत् तस्मात् सर्वरोगनिदानसंज्ञितमध्यायं व्याख्यास्यामः । तत्रापि पूर्वमेव रोगस्य पर्यायकथनेन रोगस्वरूपमेवादौ वक्ति" इति । रोगादयः शब्दाः पर्यायवाचिनः एकार्थाः । एषां शब्दानामनुगतार्था-भिधायित्वं (न) रूढिमात्रम् । रोग इति । रुजतीति रोगः । पापस्य कर्मणः फलमिति पाप्मा । ज्वरयतीति ज्वरः सर्वकायमनःसन्तापकर इत्यर्थः । 'ज्वर सन्तापे' इति धातुः । अथवा ज्वर इव ज्वरः । सर्वेभ्यो रोगेभ्यो ज्वरः प्रधानः उक्तः । प्राधान्यं च दुःसहत्वं दुरुपक्रमत्वं च । एवं च रोगः पादापचारात् प्रधानकाष्ठां दुःसहतां दुरुपक्रमतां च प्राप्नोतीति । विविधमाधिं जनयतीति व्याधिः । विकृतिं जनयतीति विकारः । अवश्यमुत्पन्नो व्याधिर्बुद्धीन्द्रियाणा-मेकस्य द्वयोर्बहूनां वा विकृतिं जनयति । दुःखकरत्वाद् दुःखम् । अनेनोपताप-करमनुभवं गमयति । अथवा खानामिन्द्रियाणां दौस्थ्यन्तनोतीति दुःखम् ।

---

१. 'मोऽध्या' इति मुद्रिते ।

आमाद् यातीत्यामयः । सर्वे रोगाः किलामसमुत्थाः । प्रायेण हि लोकोऽखिल एवापथ्यविषमविरुद्धातिमात्राद्यशनो भवति । तत्र चावश्यमामसमुद्भवाद् बाहुल्येनामसमुद्भा व्याधयः । बाहुल्यमङ्गीकृत्य शब्दप्रवृत्तिः । यक्ष्मेव यक्ष्मा । यथा राजयक्ष्मा रोगसमूह इत्युक्तस्तथा सर्वरोगो रोगस्य समूह इत्येतद् द्योतयति । तथा च सर्वेऽपि रोगा लक्षणभूतैश्चान्यैर्विकारैर्युक्ता उत्पद्यन्ते । यथा ज्वरस्यारोचकालस्यादयः । आतङ्क इति 'तकि कृच्छ्रजीवने' इत्यस्य धातोराङ्पूर्वस्य रूपम् । रोगोपतप्तत्वाद्धि स्त्रीपानभोजनादिभ्यो निवृत्ताः कृच्छ्रेण जीवन्ति । गर इव गदः अक्षरसाम्यान्निब्रूयादिति । अथवा गररूपत्वाद् गदः । अनेककारणजन्यत्वात् । तथा हि (सेगो? गरो)ऽनेककारणस्तथा गदोऽपीत्यर्थः । आसमन्तात् कायमनसी बाधत इत्याबाधः । इत्येवमेषां रोगादिशब्दानां प्रवृत्तिनिमित्तप्रत्यर्थभेददर्शनात् कथमुक्तं पर्यायवाचिन इति । तत्राचक्ष्महे एवमेवैतत् । किन्तु पीडाकारित्वसामान्यं प्रवृत्तिनिमित्तमुररीकृत्य पर्यायवाचिन इत्युक्तम् ॥

**निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।**
**संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ २ ॥**

निदानमित्यादि । विशेषेण ज्ञानमवगतिर्विज्ञानम् । तद् रोगाणां विज्ञानं हि निदानादिभेदभिन्नं पञ्चधा स्मृतं मुनीन्द्रैरिति शेषः । निदानादिविज्ञानेन सर्वे रोगा विशेषेणावबुध्यन्त इत्यर्थः । उपशयस्तथेति । यथा निदानादयो रोगाणां विज्ञानं तथोपशयोऽपीति तुल्यकक्ष्यतां द्योतयितुं तथाशब्दस्तन्त्रकृत्प्रयुक्तः । एवं सम्प्राप्तिश्चेत्यत्र चशब्दोऽपि । इति परिसमाप्तौ एतावदेव रोगाणां विज्ञानमिति । निश्चितज्ञानकारणत्वाद् विज्ञानं कारणे कार्योपचारात् । संख्याग्रहणं नियमार्थम् । न त्वतोऽप्यन्ये रोगावबोधहेतवः सन्तीत्यर्थः । निदानं कारणं ज्वरादीनां वातादयः । वातादीनां प्रतिषिद्धानुष्ठानम् । तदुभयं रोगविशेषावच्छेदे हेतुः । यथा यत्र स्तम्भपारुष्यादि दृश्यते यत्र वा लघुरूक्षादिगुणयुक्ताहारसेवा अतिव्यायामादिकं वा तत्र कदाचिदपि कफकारणता रोगस्य वक्तुं न पार्यते । प्रतिरोगमपि च विशिष्टकारणत्वमाम्नातम् । यथा अर्शसामतिव्यवाययानसंक्षोभकठिनोत्कुटिकासनादि । प्रमेहे च नवधान्यादि । तेन यथोक्तेन रोगस्येदन्ता परिच्छिद्यते । निदानं द्विविधं रोगाणाम्

आसन्नं विप्रकृष्टं च। तत्रासन्नं रोगाणां वातादयः प्रकुपिताः। विप्रकृष्टं कारणं वातादिचयप्रकोपकरमाहारविहारादि। निदानं चैकमप्यनेकस्य रोगस्य कारणं सम्भाव्यते कदाचित्। अतो व्याध्युपलम्भाय पूर्वरूपादीन्युपात्तानि। तस्मान्निदानादयः संप्राप्त्यन्ताः रोगविशेषानवगमयन्ति वातिकोऽयं ज्वर इत्यादि। रोगाश्च त्रिविधाः। आग्नेयाः सौम्या (वायव्याश्चेति)। ते पुनर्द्विविधाश्च। राजसास्तामसाश्चेति॥

निदानादीनां पर्यायं लक्षणं चाह—

**निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः।**
**निदानमाहुः पर्यायैः**

निमित्तमित्यादि। निमित्तादिभिः पर्यायै निदानमाहुः मुनयः।

**प्राग्रूपं येन लक्ष्यते॥ ३॥**

**उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः।**

प्राग्रूपमित्यादि। उत्पित्सुरुत्पत्तुमारब्ध आमयो रोगो येन लक्ष्यते ज्ञायते तत्प्राग्रूपं पूर्वरूपम्। दोषविशेषेणानधिष्ठितः व्यक्तरूपेण दोषेणेत्यनुक्तमपि बोद्धव्यम्। असंप्राप्तदोषविशेषलक्षण इत्यर्थः। पूर्वरूपस्य सर्वदोषसाधारणत्वात्। आगमो हि—"पूर्वरूपं हि सर्वदोषसाधारणम्। न पूर्वरूपेण प्रतिदोषं व्याधिर्निश्चीयते। किं तर्हि ज्वरो भविष्यति। रूपं तु प्रतिदोषनिश्चयमावहति" इति। पूर्वरूपं दोषविशेषानपेक्षं व्याधिविशेषस्य भविष्यतो गमकम्। लिङ्गमित्यादिना प्राग्रूपस्य अव्यक्तलक्षणसंज्ञा च विद्यत इति दर्शयति—

**लिङ्गमव्यक्तमल्पत्वाद् व्याधीनां तद्यथायथम्॥ ४॥**

तत् प्राग्रूपमल्पत्वात् सूक्ष्मत्वाद् अनासादितबलत्वाद् व्याधीनां यथायथमात्मीयमात्मीयमव्यक्तलिङ्गमस्पष्टलक्षणं व्याध्युत्पत्तेः पूर्वमेव यदव्यक्तं लिङ्गं तत् पूर्वरूपमित्यर्थः। तच्च प्रतिरोगं वक्ष्यते। अल्पत्वादव्यक्तमिति। अल्पत्वं प्राग्रूपस्य। व्याधीनामित्यन्ये॥

---

१. 'षमवे' क, ख, घ। २. 'धाः। रा' ग, घ।
३. 'षानधि' क। ४. 'त् अना' ग पाठः।

**तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।**

दोषविशेषेणानधिष्ठितत्वाद् व्याधीनां यथायथं लिङ्गमित्युक्तम् । तदेव प्राग्रूपं व्यक्ततां यातं यत्तद् दोषाधिष्ठितं सद् रूपमित्यभिधीयते । "तदेवाव्यक्तं लिङ्गं पूर्वरूपसंज्ञम् । व्यक्ततां यातं रूपमित्यभिधीयते" इत्यरुणदत्तः ॥

**संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ ५ ॥**

संस्थानादयो रूपस्य पर्यायाः । इमे पर्यायाः प्राग्रूपस्यापि योज्याः । असद्गुरवस्तु–"तदेव प्राग्रूपं व्यक्ततां यातं सद्रूपं रूपसंज्ञम् । तच्च रूपं संस्थानं लिङ्गं लक्षणं व्यञ्जनमाकृतिः इत्यभिधीयते" इत्यन्वयं वदन्ति । संग्रहेऽप्युक्तं–"स्पष्टं पुना रूपम् । तस्य शब्दान्तराणि लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनमिति" इति । तच्च रूपं निदानेन किञ्चिदधिगतदोषेषु पूर्वरूपेण दोषविशेषं विना विशेषे ज्ञाते दोषविशेषाधिगमायावश्यमुपयुज्यते दोषविशेष-निश्चयाय च । एषां च किञ्चिन्निदानादिसंयोगसंस्कारवशादाश्रितैर्विरुद्धैर्विरुद्ध-कार्यकरैश्च गुणैरनेककार्यहेतुतासम्भावनयोपशयोऽपि विशेषावगमत्वहेतुतायां निक्षिप्तः ॥

तस्मादुपशमप्रदर्शनार्थमाह—

**हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् ।**
**औषधान्नविहाराणामुपयोगं सुखावहम् ॥ ६ ॥**
**विद्यादुपशयं**

हेत्वित्यादि । औषधान्नविहाराणामुपयोगं सुखावहमुपशयं विद्यात् । औषधं हरीतक्यादि । अन्नं रक्तशाल्यादि । विहारो वाग्देहमनोनिर्वर्तितो व्यापारः । तेषामुप(शये ? योगो य)स्सुखावहः तमुपशयं विद्यात् । किंभूतानां–हेत्वित्यादि । त्रिविधाः औषधाहारविहाराः । हेतुविपरीता व्याधिविपरीता विपरीतार्थकारिणश्चेति । हेतुश्च व्याधिश्च हेतुव्याधी तयोः विपर्यस्ताः विपरीताः हेतुव्याधिविपर्यस्ताः । विपर्यस्तमर्थं प्रयोजनं कर्तुं शीलं येषां ते विपर्यस्तार्थका-

१. 'नयानेकत्र तथा वा पाठाच्च विशेषाधिगमसम्भावनयो–' ग पाठः ।
२. 'स्तार्थं' कपाठः ।

रिणः। निदानरोगयोर्विपरीताः तद्विपरीतार्थकारिणश्चेत्यर्थः। तेषां हेतुविपरीतं गुरुस्निग्धजे व्याधौ लघुरूक्षमौषधमन्नं वा। विहारो जागरोत्थे(व्याधौ) स्वापः। व्यायामोत्थे आसनमित्यादि। व्याधिविपरीतमौषधादि ज्वरेषु तावत् पर्पटकादि रक्तशाल्यादि व्यायाम वर्जनादि च। एवमन्येष्वपि बोद्धव्यम्। हेतुव्याध्यो-र्[1]विपर्यस्तमविपरीतमर्थं करोतीति विपर्यस्तार्थकारि तदौषधादि हेतुविपर्यस्तार्थ-कारि मद्योत्थे मद्यम्। प्लुत्थेऽग्निप्रतपनम् इत्यादि। व्याधिविपर्यस्तार्थकारि छर्द्यां वमनमहृद्यमन्नम्। अतीसारे विरेक इत्यादि। सर्वव्याधौ मन्त्रौषधिमणि-मङ्गलबल्युपहारहोमनियमप्रायश्चित्तादि॥

**व्याधेः स हि सात्म्यमिति स्मृतः।**

हि यस्मादेवंभूत उपशयः तस्मात्स उपशयो व्याधेः सात्म्यमिति स्मृतः, ऋषिभिः। उपशयस्य व्याधिसात्म्यमिति संज्ञा। "औषधादीनां य उपशयो योगो व्याधेः सुखावहः तमुपशयं विद्यादि"त्यरुणदत्तः॥

उपशयप्रसङ्गादनुपशयोऽपि लक्ष्यत इत्याह—

**विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः॥ ७॥**

विपरीत इत्यादि। उपशयलक्षणाद्विपरीतलक्षणः असुखावहः औषधादी-नामुप(श? यो)गोऽनुपशयः। स च व्याध्यसात्म्यमिति संज्ञितः। अनुपशयस्य व्याधेरसात्म्यमिति संज्ञा। अनुपशयेन च व्याधेः स्वरूपविशेषः परिच्छिद्यते। सर्वश्चायमुपशयो वै(द्य)परीक्षायां विकारविशेषाधिगतेः कारणसामग्रीमनुप्रविशति। अथवा गूढलिङ्ग आबाधे आश(ङ्काबाध? ङ्कितामय) परिहारेण यत्नेनाप्युपशया[2]-नुपशयहेत्वाहारादिकं प्रयुक्तं (न तु? तत्तु) कर्मनि(ष्ठा? ष्णा)तस्य भिष(जा?जो)-वधारणे यत्तामावोढुमलम्। एवमेतन्निदानादिचतुष्टयं रोगविशेषावच्छेदाय पर्याप्तम्। अथ कदाचिन्निदानादीनि साधारणत्वाद् व्यामोहादन्यतो वा निमि-त्तादातङ्कस्य स्वरूपमसमर्थानि प्रदर्शयितुं ततः संप्राप्त्या व्याधिविशेषं भिषग-वच्छेत्। संप्राप्तिर्हि गदानां निदानादिभिरनधिगतानामपि सर्वेण स्वरूपविशेषेण

---

१. 'रपि विपर्यस्तमपि विपरीत' ख. ङ। 'रविपर्यस्तमपि विपरीत' घपाठः।

२. 'शय हे' क. ख. पाठः।

सर्वनिराकाङ्क्षतामावहते इत्यतः संप्राप्तिं प्रदर्शयितुमाह—

**यथा दुष्टेन दोषेण यथा चानुविसर्पता ।**
**निर्वृत्तिरामयस्यासौ संप्राप्तिर्जातिरागतिः ॥ ८ ॥**

यथेत्यादि । यथा येन प्रकारेण दुष्टेन प्रकुपितेन दोषेण वाताद्यन्यतमेन यथा च सन्निवेशविशेषेण अनुविसर्पता देहमनुधावता आमयस्य या निर्वृत्ति-र्निष्पत्तिः निर्दिष्टा असौ निर्वृत्तिः सम्प्राप्तिः । सा जातिरागतिश्चेत्युच्यते । **अरुणदत्तो**ऽप्याह—"यथा दुष्टेन (यथोक्तप्रकारेण कषायादिभिः सञ्चयादिक्रमेण दुष्टेन कुपितेन वातेन कट्वम्लादिभिर्दुष्टेन पित्तेन स्वाद्वम्लादिभिर्दुष्टेन श्लेष्मणा वा यथा चानुविसर्पता) यथोक्तप्रकारेण प्रसरता आमयस्य निवृत्तिर्भवति असौ निर्वृत्तिः । संप्राप्तिर्जातिरागतिरिति पर्यायाः" इति । **संग्रहे**—"संप्राप्तिः पुनरेवं दुष्टो दोषस्तेन चैवमारब्धो व्याधिः तत्पर्यायाः जातिरागतिर्निर्वृत्तिर्निष्पत्तिः" इति । **इन्दु**रेवमस्य व्याख्यामकरोत् । "एवं दुष्टो दोष इति । एवमित्यनेन प्रकारेण । प्रकारश्चाहितविशेषसेवनाद् बहुरूपः । तथा च तदेवैकं द्रव्यं तमेव चैकं स्वकार्यभूतमन्यतमं दोषं प्रकृत्यादिनानाविधविशेषापेक्षया कदाचि-ल्लाघवेन कोपयति । कदाचिद्रौक्ष्येण । कदाचित्काठिन्येन । कदाचिदजीर्णेन । कदाचिद्दोषान्तरप्रकोपेन । कदाचिच्छैत्येन कदाचिदन्येन वा यथासम्भवं गुण-विशेषेणेति । तथा किञ्चिद् द्रव्यमूर्ध्वभागिकं भवति तदन्यथा दोषं कोपयति । किञ्चिदधोभागिकं तदन्यथा(न्दु? अन्यद्दु)भयभागिकं त(त्त?)द्रूपान्तरेण एत(सा)च्च कार्यविशेषादेवं दुष्टो दोष इति ज्ञायते । न हि मरिचस्य रौक्ष्येण यो दुष्टो वायुर्यश्च तस्यैव लाघवेन तावेकरूपौ भवितुमर्हतः । रौक्ष्येण हि कुपितो रौक्ष्यमेवात्मगुणमुपबृंहयंस्तदनुगुणान्येव काठिन्योपशोषणादीनि कुरुते । लघवेन च कुपितः पवनो रूपमनुवर्धयन् लाघवादीनि प्रदर्शयति । एवं सर्वमप्यूह्यम् । सम्मोहभयाद् विस्तरेण न प्रतन्यते" इत्यादि ॥

**संख्याविकल्पप्राधान्यबलकालविशेषतः ।**
**सा भिद्यते यथात्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥ ९ ॥**

---

१. 'न्यद् द्विभा' ग पाठः ।

संख्येत्यादि । सा संप्राप्तिः संख्यादिवि(शेषतः संख्यादिभिर्विशेषैः भिद्यते संख्यादिविशेषाद् भेद उच्यते यथात्रैव वक्ष्यन्ते अष्टौ ज्वरा इति । अत्रैवेति ज्वराध्याये । ज्वर)ग्रहणमुपलक्षणम् । अष्टौ ज्वराः, त्रिविधं रक्तपित्तं, पञ्च कासाः इत्यादयः । संख्याभेदास्तु तत्र तत्रैव बोद्धव्याः । एतदुक्तं भवति । ज्वरोऽसौ गुल्मोऽयं कुष्ठमिदमिति स्पष्टनिर्वृत्ताकृतिः संख्यादिभेदैर्भिद्यते । विकल्प्यविशेषाद् भेदः ॥

**दोषाणां समवेतानां विकल्पोंऽशांशकल्पना ।**

दोषाणां वातादीनां समवेतानामेकस्मिन् व्याधौ संघटितानां या अंशांश-कल्पना भागेन कार्यानुमेयेन निरूपणा स विकल्पः[३] विविधः कल्पो विकल्पः विशेष इत्यर्थः । अंशश्चांशश्च अंशांशौ ताभ्यां कल्पना । यथा अस्मिन् व्याधौ वातः कुपितः कदाचिदेकेन (गुणेनाधिकेन) रूक्षेण कदाचिल्लघुना कदाचिच्छीतेन कदाचिद् द्वाभ्यामित्यादि । बहुवचनोपादानादेव समवेतानामित्यर्थे लब्धे समवेतग्रहणं पृथग् द्वन्द्वशः समस्तानामपि च अंशांशकल्पना विकल्प इति प्रतिपाद-नार्थम् । अथवा अंशस्यांशः अंशांशः । व्याधेरंशो दोषः तस्य अंशा रूक्षादयः, शेषं पूर्ववद् व्याख्येयम् ॥

---

१. 'दाः तत्र' । २. 'ख्या भे' गपाठः । ३. 'ल्पः विशेषः' कपाठः ।

४. इतः परं मवेत इत्यतः पूर्वं अधोनिर्दिश्यमानाः श्लोका क, ग पाठयोः लिखितः । अस्य प्रकृतोपयोगित्वं न विद्मः । ख, घ, ङ पाठेषु न दृश्यन्ते ते यथा—

विश्वाजमोजसिन्धूत्थचित्रात्वग्भिस्समाभया ।
तक्रेणोष्णाम्बुना वापि पीतातीसारनाशनी ॥
वत्सकातिविषादीप्यविश्वमुस्ताश्रृतं जलम् ।
सामे पुराणेऽतीसारे सास्रक्शूले च पाययेत् ॥
अङ्गारदग्धं स्नुगतं सिन्धुमुष्णाम्बुना पिबेत् ॥
शूलवानथवा तद्वत् सिन्धुदीप्यकणाभयाः ॥
वटरोहोपला तं क पं? चूर्णं मधुप्लुतम् ।
वक्त्रच्छिद्रगतं वक्त्रे न्यस्तं तृष्णां विनाशयेत् ॥
पाषदार्वीजातिदलद्राक्षामृतफलत्रयैः ।
साधितं समधुक्वाथकवलं मुखपाकहृत् ॥
कृष्णातिविषतिक्तेन्द्रदारुपाठापयोमुचाम् ।
क्वाथमात्रे शृतं क्षौद्री सर्वकर्णगदापहाः ॥

स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ॥ १० ॥

स्वातन्त्र्येत्यादि । स्वतन्त्रपरतन्त्रयोर्व्याध्योर्लक्षणमुक्तं—

"यथास्वजन्मोपशयाः स्वतन्त्राः स्पष्टलक्षणाः ।
विपरीतास्ततोऽन्ये तु"

इति । स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेद् जानीयात् । प्राधान्यमित्युक्तेऽप्राधान्यमपि गृह्यते । प्राधान्याप्राधान्ये आदिशेदित्यर्थः । स्वतन्त्रस्य

---

पथ्यागोक्षुरदुस्पर्शराजवृक्षशिलाभिदाम् ।
कषायः समधुः पीतो मूत्रकृच्छ्रमपोहति ॥
गृञ्जनत्वक्कणाक्वाथः शर्कराश्मरिपातनः ।
ऐन्द्रीमूलं कुबेराक्षिशुङ्गं वा वृद्धिमान् पिबेत् ॥
शाकोटक्वाथमृत्क्षौद्रक्षीराशी श्लीपदी पिबेत् ।
मेब्यास्तु पञ्च सस्तैलं समधूच्छिष्टसैन्धवम् ॥
पादरोगं हरेत्सर्पिः जल्वुकुक्कुटजं तथा ।
पृथगक्षाः पलं यष्ट्योः पलार्धं कृमिहृत् पयः ॥
प्रस्थं तदंघ्रि क्षौद्राज्यं खलतेस्याद्रसक्रिया ।
शुण्ठीसौवर्चलाहिङ्गुचूर्णं शुण्ठीरसेर्पितम् ॥
गुल्मं हरेद्यवक्वाथे सविट्बन्धाग्निमांश्च तत् ।
सौवर्चलाग्निहिङ्गूनां सदीप्यानां रजोयुतम् ॥
विल्वदीप्यकयुक्तं वा तक्रं गुल्मातुरः पिबेत् ।
धात्रीपटोलमुद्गानां क्वाथः साज्यो विसर्पहृत् ॥
शुण्ठिदारुनवाक्षीरक्वाथो मूत्रान्वितः पुरम् ।
सव्योषायोरजः क्षारः फलक्वाथश्च शोफनुत् ॥
गुलसिक्तत्रिवृद्विश्वं सैन्धवांशरजोन्वितम् ।
सत्रिवृद्धानलक्वाथः सगुलःस्याद्विरेचनः ॥
द्राक्षाक्वाथस्तृवृत्पर्णं गुलयुक्तं तु रेचनम् ।
धात्रीव्योषविलङ्गैलापत्रमुस्तास्त्वचः समाः ॥
अष्टभागं त्रिवृत् खण्डं षड्भागश्च सैन्धवम् ? ।
तच्चूर्णं मधुना लीढ्वा शीताश्चानुपिबेदपः ॥
सजतुच तृवृत्कृष्णान्तृवृत्पादाच तद्रजः ।
मधुना पक्कितं लेह्यमेतौ यौगौ विरेचकौ ॥
शुण्ठी पारावतशकृत् कुष्ठं मधु वचाञ्जनम् ।
गोरोचना च तैर्लिप्तशिखो योषित्प्रियो भवेत् ॥

व्याधेः प्राधान्यं स्वनि(र्दि)ष्टोपक्रमसाध्यत्वात् । परतन्त्रस्य व्याधेरप्राधान्यं प्रधानव्याध्युपक्रमेण प्राप्यस्तस्याप्युपक्रमः स्यादिति । यद्यपि प्राधान्यविशेषात् संप्राप्तिर्भिद्यत इत्युक्तं तथाप्यप्राधान्यविशेषादप्यसौ संप्राप्तिर्भिद्यते इत्यर्थादुक्तं भवत्येव । प्राधान्याप्राधान्ययोः परस्परसापेक्षत्वात्[1] । तथाहि अप्राधान्यमपेक्ष्य प्राधान्यं वक्तुं .युज्यते प्राधान्यं चापेक्ष्याप्राधान्यमपीति व्याधेः प्राधान्ये उक्तेऽर्थात् संप्राप्तिप्राधान्यमप्युक्तं वेदितव्यम् ॥

हेत्वादिकार्त्स्न्यावयवैर्बलाबलविशेषणम् ।

हेत्वादिकार्त्स्न्यावयवैः व्याधेः बलाबलविशेषणमादिशेत् । आदिशब्देन प्राग्रूपादीनां ग्रहणम् । यथास्वमुक्तैर्हेत्वादिभिः सर्वैरुपेतो व्याधिर्बलवान् । अवयवैः कतिपयैरुपेतो दुर्बल इत्यर्थः । केचिद् बलाबलविशेषणमिति प्रथमान्तमाहुः । तत्र भवतीति वाक्यशेषः ॥

---

आतङ्कविनिर्यासमरिचैर्मधुपेषितैः ।
कदलीफलतोयाढ्यैर्लिप्तस्सद्रावयेत्स्त्रियम् ॥

मागधी मधुकं क्षौद्रहरिद्रा मनतीफलम् ?
बस्तमूत्रेण पिष्ट्वा तन्मेढ्रलोपावतीकुरु ? ॥

पिप्पलीतण्डुलान्यष्टौ मरिचानि च विंशतिः ।
बृहतीरस इत्येष लेपोऽयं मरणान्तिकः ॥

पटोलत्रिफलाक्षौद्रलेपादपि[2] तथा भवेत्
सरणीलिङ्गनिर्यासमनुजस्तेनसर्पिषा ॥

ध्वजमनुलिप्यायां भुक्ते सा नारी नान्यमिच्छति ? ।
हिमं कपित्थस्वरसे मागधी मधुकं मधु ॥

तेषां लेपप्रयुक्तस्तु दम्पत्योस्तुष्टिमावहेत् ।
रसं भूमिकदम्बस्य शर्करा मधुसंयुतम् ॥

योनौ प्रलेपयेन्नारी पतिस्तिष्ठति दासवत् ।

सितात्तिमूलं मधुकेन्द्रियं च कुष्ठं वचाङ्गाणितमेव षट्कम् ।
एतानि पीत्वा पुरुषोऽङ्गना वा पदे पदे गच्छति रोदमाना ॥

पुलंचारी भूकदम्बा च शिल्पी भूप्रोता वत्सराजस्य जाया ? ।
एतैस्साकं रात्रिचूर्णेनलिप्त्वा देहे नृणां प्राणवश्यं करोति ॥

१. 'रापेक्ष' ग । २. 'कटु' ग पाठः ।

**नक्तंदिनर्तुभुक्तांशैर्व्याधिकालं यथामलम् ॥ ११ ॥**

यथामलं यथादोषं नक्तंदिनर्तुभुक्तांशैर्व्याधिकालं व्याधेः कालमादिशेत्। यथा श्लेष्मज्वरस्य रात्रिमुखे पूर्वाह्णे वसन्तर्तौ आहारे च भुक्तमात्रे बलवत्ता भवति। एवं मरुत्पित्तयोरपि निरूप्यम्। आयुष्कामीये—

वायोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात्।

इति यदुक्तं तदेवार्थजातमनेनाप्युच्यते। 'व्याधिकालो यथामल'मिति वा **पाठः** ॥

**इति प्रोक्तो निदानार्थस्तं व्यासेनोपदेक्ष्यति।**

इत्यनन्तरोक्तेन प्रकारेण संक्षेपाख्येन निदानार्थः निदानस्थानस्यार्थः प्रोक्तः। प्रशब्देनोत्कर्षवाचकेन (वराक्षेप?) इति सूचितः। "निदानार्थो व्याधिकारणस्वरूपम्" इतीन्दुः। तं निदानार्थं संक्षेपोक्तं व्यासेन विस्तरेण असाधारण्येन प्रतिरोगं पृथगध्यायेषु तन्त्रकृदुपदेक्ष्यति अभिधास्यति। 'उपदेक्ष्यते' इति **पाठे** स्वरितेत्त्वादात्मनेपदम्। अथवा 'स व्यासेनोपदेक्ष्यते' इति **पाठः**। निदानार्थः समासेनोक्तो व्यासेनोच्यत इत्यर्थः ॥

सर्वरोगाणां सामान्यनिदानमाह—

**सर्वेषामेव रोगाणां निदानं कुपिता मलाः।**

सर्वेषामित्यादि। तच्च निदानं द्विविधम्। किञ्चित् पुराकल्पेऽसतां रोगाणां स्वरूपप्रतिलम्भहेतुः। किञ्चिद् दृष्टादृष्टाशुभकर्मकृतां शरीरे तत्सम्भवनिमित्तम्। पुराकल्पे च द्विविधो रोगाणां सम्भवहेतुः सामान्यविशेषभेदेन। तत्तु ग्रन्थविस्तारभयादत्र नोच्यते। **संग्रहे** तूक्तम्—"इह कृतयुगे विगतरागद्वेषादि द्वन्द्वा जितलोभश्रमक्लमालस्यतया निष्परिग्रहाः पुरुषा बभूवुः। तेषां पुण्यबलेन पृथिव्यादीनां[1] सर्वगुणसमुदायादचिन्त्यरसवीर्यादिसमुदितानि सस्यान्योषधयश्चासन्। ते तानि जितेन्द्रियत्वात् काले मात्रया चोपयुञ्जाना सत्यार्जवानृशंस्यादिगुणयोगाच्च सुरसदृशतेजसो रूपाकृतिप्रमाणप्रसादोपचयसंहननसत्त्वसारसम्पन्ना जितेन्द्रिया दीर्घायुषो नीरुजश्च बभूवुः। अस्य व्याख्या--"इह मनुष्यलोके विग(तः ता) रागद्वेषादयो द्वन्द्वाः क्लेशाः येषां ते तथोक्ताः।

---

'१. पृथ्व्यादीनां' गपाठः।

जितानि लोभश्रमादीनि यैः। निष्परिग्रहाः स्वच्छन्दचारिणः तथाविधाः पुरुषाः बभूवुः कृतयुगे। तेषामित्यादि। प्रथमयुगे पृथिव्यादीनां सर्वगुणसमु(दा ? द)-याद् हेतोः अचिन्त्यान्यतर्क्यो(भि?ण्य)तिश(या?यिता)नि रसादीनि येषां सस्यादीनाम्। ते पुरुषास्तानि सस्यानि ओषधीश्चोपयुञ्जानाः सत्यार्जवादिगुणयोगाच्च सुरसमानतेजसो रूपादिसम्पन्ना दीर्घायुषो नीरुजश्च बभूवुः। प्रसादो निर्मलत्वम्। उपचयो महत्त्वम्। संहननं काठिन्यम्। साराणि त्वग्रक्तादीन्युक्तानि।" एषा व्याख्या॥

*भ्रश्यति तु कृतयुगे युगस्वभावात् क्रमेण परिहीयमाणसर्वगुणेषु पृथिव्यादिषु शरी(रगुणेषु?रेषु) च धर्मातिक्रमात् पुरुषेष्ववश्यंभाविनो निरपे(क्षा ? क्ष)-रूक्षाभिरुपेक्षितादेव ताभिर्ज्वरादयः प्रादुरभवन्निति सर्वरोगाणां सामान्यतः सम्भवः। अस्य व्याख्या—"पुराकल्पे च द्विविधो रोगाणां सम्भवहेतुः सामान्यविशेषभेदेन। तयोः पूर्वं सामान्येनोच्यते भ्रश्यतीत्यादिना। ततः कृतयुगे भ्रश्यति पुरुषेषु ज्वरादयः क्रमेण प्रादुरभवन्। कथमित्याह—पृथिव्यादिषु युगस्वभावाद् भ्रश्यमानगुणेषु शरीरगुणेषु च भ्रश्यमानेषु। किंभूता ज्वरादयः। आह—(क ? ध)र्मातिक्रमान्निरपेक्षाभी रूक्षादिभिश्च निःस्नेहाभिर्देवताभिरुपेक्षिता ज्वरादयः प्रादुरभवन्नविहितप्रतिक्रिया इति सामान्येन रोगाणामुत्पत्तिः। ज्वरा-(दय)स्त्वित्यादिना विशेषेणोच्यते। एषा व्याख्या॥

ज्वरस्तु स्थाणुशापात् (प्राचेतसत्वमुपगतस्य) प्रजापतेः क्रतौ भागमकल्पयतस्तद्विनाशार्थं पूर्वजन्मावमानितया रुद्राण्या प्रेरितस्य पशुपतेर्दिव्यमब्दसहस्रं परिरक्षितवतः क्रोधमतिचिरकालसम्भृतो व्रतान्ते रोषाग्निः किङ्कररूपेण किल पिण्डितमूर्तिर्वीरभद्रनामा भस्मप्रहरणस्त्रिशिरोक्षिबाहुपादः पिङ्गललोचनो दंष्ट्री शङ्कुकर्णः कृष्णतनुरुत्तमाङ्गान्निश्चचार। स देवीनिर्मितया सह भद्रकाल्या प्रतिरोमकूपनिःसृतैः विविधविकृताकृतिभिरनन्तैर्भयानककेक्रियावपुर्भिरनुचरैः परिवृतश्चतुर्युगान्तकैराम्भोदसहस्रनिनादोऽनुनादयन् रोदसी ज्वालगर्भेण परीतः कल(कल)रवेण महाभूतसंप्लवकारिणा विधाय दानववधमश्वमेधाध्वरविध्वंसं च

१. 'कर्यातिशयानि' गपाठः। *संग्रहग्रन्थांशोऽयम्।

२. 'कवाक्यक्रिया'। ३. 'करकालाम्भोद' मुद्रिते।

प्राञ्जलिर्विज्ञापयामास शिवम् । शिं(वं ? व)भूतोऽस्मि देवदेवैः पितामहप्रभृतिभिर्जगतः पित्रा धात्रा चाभिष्टूयमानः । सम्प्रत्यहं किं करवाणीति । शूली कोपमादिदेश । यस्मात्त्रिदशैरप्यज(य्यं ? य्य) व्रतविघ्नं चिकीर्षु( दैं ? दै)त्यसैन्यं द(क्षं ? क्षो)दक्षहव्यं च त्वया जीर्णमतो जगतोऽस्य सस्थावरस्य जरयिता ज्वरो भवान् भवतु । त्वं हि सर्वरोगाणां प्रथमः प्रवरो जन्ममरणेषु तमोमयतया महामोहः प्राग्जन्मनो विस्मारयितापचारान्तरेषु चोष्मायमाणत्वात् सन्तापात्मा द्वये(ष्विति ? ष्वपि) ध्रुवो ज्वरो भवे(दि ?)ति । सोऽयमेवमुमापतिनानुगृहीतो नानानामभिः सर्वतो विचरति । तद्यथा । पाकलो गजेषु । अभितापो वाजिषु । अलर्कः कुक्कुरेषु । इन्द्रमदो जलजेषु । ज्योति(रौ ? रो)षधीषु । चूर्णको धान्येषु । अप्सु नीलिका । भूमावूषरः । मनुष्येषु ज्वरः इति । तत्सहजाश्चाङ्गमर्दारोचकशिरोव्यथाश्रमक्लमग्लानितृष्णासन्तापादयः । तत्सन्तापाच्च रक्तपित्तम् । तत्रैव च यज्ञे कोधभयाद् भूतानां परितो विद्रवतां लङ्घनप्लवनाद्यैर्देहविक्षोभणैर्गुल्मविद्रधिवृद्ध्यादयो (हविःप्राशान्मेहकुष्ठार्शःशोफातीसारादयो भ(यन्त्वा ? योत्था)सशोकाशुचिसंस्पर्शैरुन्मादापस्मारग्रहादयो रोहिण्यतिप्रसङ्गा-(च्छेषदुहितृसङ्गाच्च प्रजापति)कोधान्नक्षत्रराजस्य यक्ष्मा तत्सहोद्भवाश्च कासश्वासादयः । सोऽपि हि न विना ज्वरेणानुबध्नातीति सकलोऽपि रोगग्रामो ज्वरपूर्वको ज्वरशब्दवाच्यश्चेति । अस्य व्याख्या न क्रियते इतिहासेन सुबोधत्वात् । शङ्काकारौ कर्णौ यस्य सः शङ्कुकर्णः । रोदसी द्यावापृथिव्योरन्तरालम् । संप्लवः उपप्लवः । शूली भगवान् महेश्वरः । अपचारान्तरेषु (अपथ्यविशेषेषु) । द्वयेष्वपीत्युक्तेषु जन्ममरणेषु अपचारान्तरेषु । ध्रुवः अवश्यंभावी । तेन च ज्वरेण सह तदा जाता अरोचकादयः ज्वरेण विना नानुबध्नाति अनुबध्नतावश्यंभावी ज्वर इत्यर्थः ॥

सर्वेषामेव रोगाणां निदानं हेतुः कुपिता मलाः । दोषा वातादयः ॥

**तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ।**

---

१. 'शिवीभूतो' । २. 'त्रा च धात्राभि' । ३. 'तं शूली क्रोधमादि' ।
४. 'तोऽनुभुवि विच' । ५. 'वृद्धिजठरादयो' । ६. 'दसंभोगकृताच्च' ।
७. 'स्य राजयक्ष्मा' । ८. 'वाच्यो वा' इति मुद्रिते ।

तत्प्रकोपस्य तु निदानं विविधाहितसेवनं प्रोक्तं नानाविधापथ्यनिषेवणं दोषाणां कोपस्य हेतुः प्रोक्तः ॥

अहितं किमित्याह—

**अहितं त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ॥ १३ ॥**

अहितमित्यादि । त्रयाणां कालार्थकर्मणां त्रिविधो हीनमिथ्यातिमात्र-लक्षणो योगः प्राक् सूत्रस्थाने उदाहृतः तदहितमित्युच्यते । त्रयाणां दोषाणा-मित्यन्ये ॥

प्रतिदोषमहितमाह—

**तिक्तोषणकषायाल्परूक्षप्रमितभोजनैः ।**
**धारणोदीरणनिशाजागरात्युच्चभाषणैः ॥ १४ ॥**
**क्रियातियोगभीशोकचिन्ताव्यायाममैथुनैः ।**
**ग्रीष्माहोरात्रिभुक्तान्ते प्रकुप्यति समीरणः ॥ १५ ॥**

तिक्तोषणेत्यादि । तिक्तादिभिरतिसेवितैः समीरणः प्रकुप्यति । अल्प-प्रमितभोजनयोः पर्यायशब्दत्वाद् द्वयोरपि उपादानमयुक्तम् । नैतदस्ति । भिन्नार्थत्वादेतयोः तथाहमल्पभोजनं हीनभोजनमुच्यते । प्रमितभोजनं तदुच्यते यदतिक्रान्तवेलं भुक्तम् । तथा चागमः—

"धान्यं पुलाकनिष्पन्नं ज्ञेयं परिमिताशनम् ।
अतीतकालभुक्तं तु प्रमिताशनमुच्यते ॥"

इति । 'रूक्षाप्रमितभोजनैः' इति केचित्पठन्ति अप्रमितभोजनमतिमात्रभोजन-मिति वदन्तः । तदयुक्तं प्रायशो वातकोपप्रस्तावे सन्निपातकोपप्रसङ्गात् । धारणोदीरणं वातादीनाम् । तेन अप्राप्तवेगोदीरणेन प्राप्तवेगधारणेन चेत्यर्थः । क्रियातियोगो वमनविरेचनास्थापनादिक्रियाणामतिसेवनम् । नन्वास्थापनेन वायोः कोपोऽनुपपन्नः । तथा हि वाते वस्तिरिष्यते इत्युक्तम् । नैतदेवम् । आस्था-पनातियोगो हि पित्तश्लेष्मादीनामपचयकृत् । तदपचयाच्च वायोः कोपः । तथा चोक्तं—"वायोर्धातुक्षयात्कोपः" इति । तस्माद्युक्तो वायोरास्थापनातियोगेन

१. 'नशब्दयोः'

कोपः ।. तन्त्रकृताप्युक्तं---

'स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ॥'

इति । **हाटको**ऽपि--"क्रियाः पञ्च कर्माणि" इत्याह । क्रियातियोगो व्यायामाद्यतियोगः इति केचित् । अन्तशब्दस्य ग्रीष्मादिभिः सम्बन्धः । अत्र ग्रीष्मान्त (इत्यन्त) शब्दः समीपवचनो बोध्यः । ग्रीष्मसमीपे वर्षाख्ये काले प्रकोप इ(त्य ? ति) युज्यते । अन्यथा---

"चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु"

इत्येतद्व्याहन्यते । अह्नोऽन्ते अपराह्णे राज्यन्ते प्रत्युषसि भुक्तान्ते जीर्णान्ते । **अरुणदत्तः**--"ग्रीष्मे अहःप्रभृतीनामन्ते च" इत्याह । **संग्रहे**ऽपि--"ग्रीष्मवर्षापराह्णापररात्राहारपरिणामान्तेषु" इत्युक्तम् ॥

**पित्तं कट्वम्लतीक्ष्णोष्णपटुक्रोधविदाहिभिः ।**
**शरन्मध्याह्नरात्र्यर्धविदाहसमयेषु च ॥ १६ ॥**

कट्वम्लादिभिरतिसेवितैः पित्तं कुप्यति । रात्र्यर्धमर्धरात्रः । विदाहकालः पच्यमानावस्था ॥

**स्वाद्वम्ललवणस्निग्धगुर्वभिष्यन्दिशीतलैः ।**
**आस्यास्वप्नसुखाजीर्णदिवास्वप्नातिबृंहणैः ॥ १७ ॥**
**प्रच्छर्दनाद्ययोगेन भुक्तमात्रवसन्तयोः ।**
**पूर्वाह्णे पूर्वरात्रे च श्लेष्मा**

स्वाद्वम्ललवणादिभिरतिसेवितैः श्लेष्मा कुप्यति । आस्या अत्यासनम् । स्वप्नसुखमतिस्वप्नसुखम् । अतिबृंहणमतिसन्तर्पणोपयोगः । प्रच्छर्दनादीनामयोगः हीनयोगः, तेन (द ? दुर्व)मनादिना ॥

**द्वन्द्वं तु सङ्करात् ॥ १८ ॥**

द्वन्द्वमित्यादि । तिक्तादीनां सङ्करान्मिश्रीभावाद् द्वन्द्वं दोषाणां संसर्गः कुप्यति ॥

**मिश्रीभावात्समस्तानां सन्निपातस्तथा पुनः ।**
**सङ्कीर्णाजीर्णविषमविरुद्धाध्यशनादिभिः ॥ १९ ॥**

व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः ।
पिण्याकमृद्यवसुरापूतिशुष्ककृशामिषैः ॥ २० ॥

दोषत्रयकरैस्तैस्तैस्तथान्नपरिवृ[1]त्तितः ।
ऋतो[2]र्दुष्टात्पुरोवाताद् ग्रहावेशाद् विषाद् गरात् ॥ २१ ॥

दु[3]ष्टामात्पर्वताश्लेषाद्ग्रहैर्जन्मर्क्षपीडनात् ।
मिथ्यायोगाच्च विविधात्पापानां च निषेवणात् ॥ २२ ॥

स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ।

तिक्तादीनां सर्वेषां सङ्करात् सन्निपातः कुप्यति । तथा उक्तेन प्रकारेण पुनरपि सङ्कीर्णाशना(दिंमि ? दिभिर्मि )थ्योपचारान्तैश्च सन्निपातः प्रकुप्यतीति संबन्धः । "तथा पुनरित्यत्र तथेति समुच्चये" इति हाटकः । अशनशब्दः प्रत्येकमभिसम्बध्यते । सङ्कीर्णाशनमजीर्णाशनमित्यादि । सङ्कीर्णाशनं पथ्यापथ्यमिश्रभोजनमित्यर्थः । "नानाजातीयभोजन"मितीन्दुः । अजीर्णे अशनमजीर्णाशनम् । विषमाशनादीनां लक्षणान्युक्तानि । अध्यशनादिभिरित्यत्र आदिशब्देन पर्युषितक्लिन्नासात्म्यादिभोजनं गृह्यते । व्यापन्नशब्देन विकृतपर्यायेण मद्यपानीययोः सम्बन्धः । मद्यस्य व्यापन्नत्वं गन्धरसादिभिः स्वगुणैर्वैपरीत्यम् । पानीयस्य व्यापन्नत्वमव्यक्तरसादित्वम् । आमिषशब्दस्य पूत्यादिभिः सम्बन्धः । अन्यैश्च दोषत्रयकरैस्तैस्तैर्भावैः मन्दकफाणितसर्षपचणकादिभिः । मन्दकमजातं दधि । तथेति । नैतावत्सेवितैरन्नपरिवृत्तितश्च । अन्नपरिवृत्तिर्देशाद्यपेक्षया भुज्यमानं त्यक्त्वा विजातीयान्नसेवनम् । अन्नपरिवृत्तिः पुनः पुनरपथ्यान्नाभ्यासः इति केचित् । "अन्नपरिवृत्तिः पथ्यापथ्यसम्मिश्रण"मिति पाठ्ये । ऋतोर्दुष्टाद् ऋतु (तु ? दु)ष्टिः ऋतु(चा ? व्या)पत् सा च ऋतूनां हीनयोगमिथ्यायोगातियोगाः । ग्रहावेशाद् ग्रहाणां देवदानवादिभेदाद[4]ष्टादशानां भूतानामावेशाद् विषाद् विषस्पर्शाद् गराद् गरो वक्ष्यमाणलक्षणः । "विषाद् दूषीविषोपयोगा"दित्यरुणदत्तः । दुष्टामाद् दुष्टाजीर्णात् पर्वताश्लेषात्पर्वतनिषेवणात् । ग्रहैर्जन्मर्क्षपीडनात् सूर्याङ्गारकादिभिर्ग्रहैर्जन्मनक्षत्रस्य पीडनाद् विविधा-

---

१. 'वर्त्ततः' । २. 'धातोर्दु' । ३. 'दुष्टान्नात्' । ४. 'दानामष्टा' इति मुद्रिते ।

न्मिथ्यायोगाच्च अयथोक्तवमनादियोगादाहारयोगाद्वा मिथ्यायुक्तात् । पुरुषाणामेवं स्त्रीणामे(व ? भिः) प्रसववैषम्याच्च प्रसवे मिथ्योपचाराच्च ॥

प्रतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः ॥ २३ ॥
रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ।

प्रतिरोगमित्यादि । इति उक्तेन प्रकारेण एभिः क्रुद्धाः कुपिताः दोषा वातादयः प्रतिरोगमाशु देहे विकुर्वते विकारं जनयन्ति । किं कृत्वा । रसायनीः रसाधारभूता नाडीः प्रपद्य । किंभूताः । रोगाधिष्ठानगामिनीः रोगस्याधिष्ठानानि रसरुधिरादीनि । तानि गन्तुं शीलं यासां ताः तथाविधा नाडीः प्राप्य देहजो दोषः सम्पद्यत इति यावत् । इन्दुनाप्युक्तं–"रसायन्यो रसवाहिन्यः[1] सिराः । रोगस्याधिष्ठानं स्थानं यतो रोगः प्रभवति तत्र या रसायन्यो गच्छन्ति ताः प्रपद्य तमेव रोगं कुर्वते यथा व(स्व ?)स्ति(नामभिः ? गामिनीः) कृच्छ्रमेहावेवं सर्वत्र[2]" इति ॥

इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने प्रथमोऽध्यायः ॥

---

१. 'हिन्यो धमन्यः' । २. 'त्र सर्वरोगसाधारणवस्तुकथनमिति' इति मुद्रिते ।

# द्वितीयोऽध्यायः ।

सर्वरोगाणां सामान्येन निदानमुक्त्वा ज्वरादिविशेषेण निदानमुच्यते । अत्रापि ज्वरस्य प्राधान्यात् पूर्वमध्याय आरभ्यते । प्राधान्यं च स्वयमेव वक्ति—"ज्वरो रोगपति"रिति । उक्तं हि—

"मघवानिव देवानां ज्योतिषामिव भास्करः ।
चन्द्रमा इव ताराणां व्याधीनामीश्वरो ज्वरः ॥" इति ।

**अथातो ज्वरनिदानमध्यायं व्याख्यास्यामः ।**

(अथात इति ।) ज्वरस्य निदानं ज्वरनिदानम् । शेषं पूर्ववत् । यद्यपि प्रागूरूपसम्प्राप्त्यादिकमुच्यते तथापि निदानेन प्राधान्याद् व्यपदेशः ॥

ज्वरप्रभाववर्णनमुखेन तत्स्वरूपमुत्पत्तिं चाह—

**ज्वरो रोगपतिः पाप्मा मृत्युरोजोशनोऽन्तकः ।**
**क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ॥ १ ॥**

**जन्मान्तयोर्मोहमयः सन्तापात्मापचारजः ।**
**विविधैर्नामभिः क्रूरो नानाजातिषु वर्तते ॥ २ ॥**

ज्वर इत्यादि । **पाठ्यकारो**ऽपि—"ज्वरो रोगपतिरित्यादिना ज्वरस्तुतिः । तत्पर्याया इति केचिदि"त्याह । रोगाणां पतिः प्रधानो रोगपतिः । पाप्मा पापभावः । मृत्युरिति जीवहरणात् । "मरणात्मकत्वान्मृत्युः" इति **हाटकः** । "मरणे सदा सन्निहितत्वान्मृत्युः" इत्यन्ये । नृणामोजस्तेजो बलं चाश्नातीत्योजोशनः । अन्तको यमः मरणहेतुत्वसामान्यात् । दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः क्रोधः इत्यन्वयः । रुद्रोर्ध्वनयनोद्भवः क्रोधः कृतयुगे । अनेन पुराकल्पेऽसतो ज्वरस्य स्वरूपप्रतिलम्भहेतुरुक्तः । **संग्रहे** तु विस्तरेणोक्तः "ज्वरस्तु स्थाणुशापा"दित्यादिना । किंभूतः क्रोधः । दक्षाध्वरध्वंसी दक्षयज्ञमथनशीलः । जन्मान्तयोः प्राणिनां जन्मकाले मरणकाले च मोहमयः मोहलक्षणः । (न? स)तु

---

१. 'परूपसम्प्रा' । २. 'योनिषु' इति मुद्रिते ।

सन्तापात्मा । चरकेऽप्युक्तं–"ज्वरस्तु खलु महेश्वरकोपप्रभवः सर्वरोगाधिपतिर्नानाजातिषु बहुविधैः शब्दैरभिधीयते । सर्वप्राणभृतश्च सज्वरा एव जायन्ते स महामोहस्तेनाभिभूताः प्राग्दैहिकं कर्म किमपि न स्मरन्ति । सर्वप्राणिनां हि ज्वर एवान्ते प्रणानादत्ते" इति । प्राग्दैहिकं गर्भे (दने? देहे) अनुभूतं सुखं दुःखं वा न किञ्चित् स्मरन्ति का कथा जात्यन्तरेषु । शुद्धसत्त्वस्तु नाभिभूयते । ज्वरेण सह जन्ममात्रमेव तस्य । जातमात्राणां चोपरमति । अन्तकाले स एव ज्वरः प्राणानादत्ते इति । सन्तापात्मा सन्तापस्वभावः । अपचारजः कलियुगे अहिताहारविहारप्रभवः । स क्रूरो ज्वरो विविधैर्नामभिः नानाजातिषु हस्त्यश्वादिषु वर्तते । यथा पाकलो गजेषु, तापो वाजिषु, अलर्कः कुक्कुरेषु, इन्द्रमदो मत्स्येषु, ज्योतिरोषधीषु, तरुषु ग्रन्थिः, पशुषु उपसर्गः, गोरकः इति च, चूर्णको धान्येषु, अप्सु नीलिका, भूम्यामूषरः, मनुष्येषु ज्वरः इत्यादि । ये गजतुरगादीनां रोगास्ते तद्विधैर्नानाविधैर्नामभिरभिधीयन्ते तान्यपि ज्वरस्यैव नामानि । येऽपि नृणां रक्तपित्तादयो रोगास्तेऽपि तस्यैव पर्यायशब्दाः । अत एवोक्तं "रोगः पाप्मा ज्वरो व्याधि"रित्यादि । संग्रहे–"सकलोऽपि रोगग्रामो ज्वरपूर्वको ज्वरशब्दवाच्यश्च" इति ॥

अपचारजो ज्वरः किमेकविधः उतानेकविध इत्याह—

**स जायतेऽष्टधा दोषैः पृथङ् मिश्रैः समागतैः ।**
**आगन्तुश्च**

स जायत इत्यादि । स एवम्भूतो ज्वरो दोषैरष्टधा जायते वातादिभिरष्टप्रकारो भवति । मनुष्याणामिति शेषः । कथम् । पृथग् दोषैस्त्रयः मिश्रैः संसृष्टैः दोषैस्त्रयः । समागतैर्दोषैः सन्निपातेनैकः । आगन्तुश्चेति । आगन्तुना सह अष्टविधत्वम् । कथं दोषैरष्टधा जायत इत्युक्तम् । उच्यते–दोषैः सप्त-

---

१. "यः सर्वप्राणिनां प्राणहरो देहेन्द्रियमनस्तापकरः प्रज्ञाबलवर्णहर्षोत्साहसादनार्त्तिश्रममोहाहारोपरोधसंजननो ज्वरयति शरीराणीति ज्वरः । नान्ये व्याधयस्तथा दारुणा बहूपद्रवा दुश्चिकित्स्या यथायमिति सर्वरोगाधिपतिर्ज्वरो नानातिर्यग्योनिषु बहुविधैः शब्दैरभिधीयते सर्वप्राणभृतश्च सज्वारा एव जायन्ते सज्वरा एव म्रियन्ते समहामोहास्तेनाभिभूतः प्राग्दैहिकं देहिनः कर्म किञ्चिन्न स्मरन्ति सर्वप्राणिभ्यश्च ज्वर एव प्राणानादत्ते" इति मुद्रिते ।
२. 'स्वरूपः' ।

विधत्वे सत्यागन्तुना अष्टविधत्वमिति दोषप्राधान्यादुक्तमित्यवगन्तव्यम् । तत्रापि कालान्तरेण दोषसंबन्धाद्वा । आगन्तुकारणस्य यद्यपि बहुविधत्वं तथापि आगन्तुसामान्यात् तत्कृतो ज्वर एकविध एवेत्यष्टधेत्युक्तम् । आगमो हि—"आगन्तुरष्टमात्कारणात् । आगन्तूनामभिघाताभिषङ्गादीनामनेकविधत्वेऽपि एकविधज्वरकारणस्य यद्यपि बहुविधत्वं तथाप्यन्यतन्त्रप्रसिद्धसंख्यानुरोधेनो(क्तं वि ? क्तमवि)शेषेणे"ति । तत्र प्रथमं तावत् दो(षा ? षजा) निश्चीयन्ते पश्चादागन्तुकारणम् ।

सम्प्राप्तिमाह—

मलास्तत्र स्वैः स्वैर्दुष्टाः प्रदूषणैः ॥ ३ ॥

**आमाशयं प्रविश्याममनुगम्य पिधाय च ।**
**स्रोतांसि पक्तिस्थानाच्च निरस्य ज्वलनं बहिः ॥ ४ ॥**

**सह तेनाभिसर्पन्तस्तपन्तः सकलं वपुः ।**
**कुर्वन्तो गात्रमत्युष्णं ज्वरं निर्वर्तयन्ति ते ॥ ५ ॥**

**स्रोतोविबन्धात्प्रायेण ततः स्वेदो न जायते ।**

मला इत्यादि । तत्र ज्वरविषये ते मला दोषा ज्वरं निर्वर्तयन्तीति सम्बन्धः । हाटकस्तु—"तत्रेति निर्धारणे । तेष्वष्टज्वरेषु मध्ये निदानादुत्पत्तिर्निर्धार्यते" इत्याह । ज्वरं निर्वर्तयन्ति स्वयमेव ज्वररूपेण परिणमयन्तीत्यर्थः । अनेन दोषव्यतिरिक्तो ज्वरो नेति सूचयति । स्वैःस्वैरात्मीयैः । प्रदूषणैः दूष्यन्ते एभिरिति प्रदूषणानि कोपनानि तिक्तोषणादीनि वायोः कट्वम्लादीनि पित्तस्य इत्यादि । तैर्दुष्टाः प्रकुपिताः आमाशयं प्रविश्य आममाहाररसमामाशयस्थमनुगम्य तेनानुगता रसस्वेदवहानि स्रोतांसि पिधाय च्छादयित्वा । "स्रोतांसि रसादिवाहीनि" इति केचित् । ज्वलनमग्निं पक्तिस्थानाद् बहिर्निरस्य बहिः क्षिप्त्वा पक्तिस्थानादित्युक्तत्वाद् जाठराग्नेर्बहिर्निरसनं नेतरेषाम् । पक्तिग्रहणमत्र जठराग्नेरेवेति निःसन्देहेन ग्रहणार्थम् । अन्यथा त्रयोदशाग्नीनां

---

१. 'तादीनामनेक' । २. 'णत्वमस्तीत्यागन्तुरष्टम उक्त इति । इन्दुनाप्युक्तम्—"आगन्तुकारणस्य यद्यपि बहुविधत्वं" ग पाठः । ३. 'वहानि' ग. घ. ङ ।

सन्देहो भवति । तेन निरस्तवह्निना सह एकलोलीभूताः सकलं वपुरभिसर्पन्तो गच्छन्तः तपन्तः गात्रं सकलं अत्युष्णमत्युष्णस्पर्शं कुर्वन्तस्ते दोषाः ज्वरं निर्वर्तयन्ति उत्पादयन्ति । अत्युष्णग्रहणेन अत्युष्णगात्रत्वं ज्वरस्य चिह्नम् । नोष्णमात्रत्वम् । तथाहि निरामयस्यापि जीवतः प्राणिनो गात्रमुष्णं भवत्येव । जाठराग्निरूष्मस्वरूपो न ज्वालाजटिलः । यदि ज्वालाजटिलस्तेनामाशयस्यापि दाहस्ततो निर्गत्य शरीरं सकलमभिसर्पता तस्यापि दाहो भवति । तस्मादूष्ममात्रः । **आगमो** हि—"ऊष्माणं (बहिर्धासान्निरस्य ? बहिर्निरस्य)" इति । प्रदूषणैर्दुष्टा इति ग्रहणं दुष्टानामेव ज्वरारम्भकत्वमिति नियमार्थम् । **आगमटीकाल**—"अत्युल्बणाः सर्वे दोषा ज्वरादीन् कुर्वन्तीति द्रष्टव्यम् । केषांचिद्धीनदोषारब्धानामदर्शनात् । अत्र क्षीणानां दोषाणां स्वस्थानात्परस्थानं गन्तुं पक्तिस्थानादूष्माणं बहिर्निरसितुं सकलं शरीरमभिसर्तुं वा सामर्थ्यात् ज्वराद्युत्पत्तौ न शक्तिरस्तीति । तर्हि कतमांस्ते क्षीणाः कुर्वन्ति । अन्याननेकप्रकारान् । न हि सर्वविकाराणां नामास्ति । किं लक्षणं तेषामिति चेत् । स्वकर्मगुणहानिः कर्मोच्छ्वासा"दिति । प्रतिरोगं निदानसम्प्राप्तिकीर्तनं हेतुविपरीतौषधप्रयोगेण संप्राप्त्यन्यथाकरणाय । **इन्दुना**प्युक्तं—"अत्र च प्रतिरोगमध्यायेषु यत्पृथङ्निदानकीर्तनं तद् व्याधेः स्वरूपाधिगमाय चिकित्सास्थाने हेतुविपरीतौषधपरिज्ञानार्थं[1] च । संप्राप्तेरपि कीर्तनं व्याधिपरिज्ञानाय चिकित्साकाले तथाविधसंप्राप्त्यन्यथाकरणेन तत्संप्राप्तिकस्य रोगस्य विनाशो भवतीति प्रबोधाय[2] च । तथा च विपुलमतिर्वैद्योऽपचारस्वरूपविशेषात् तत्कार्यविशेषात् दोषकार्यविशेषेभ्यश्च दोषाणां सम्प्राप्तौ ज्ञातायां गूढलिङ्गस्यापि व्याधेः स्वरूपमवगच्छत्येव । तथा[2] प्रदर्शितायाः संप्राप्तेः स्वाध्यायोक्ता[3] चिकित्सा । प्रकारान्तरेणापि यदि विनाशं कर्तुं पार्यते ततोऽवश्यमेव रोगोपशमः । सर्वस्यामपि चिकित्सायां सम्प्राप्तिविनाशनमेव प्रधानं प्रयोजनम् । तथा चोक्तं ज्वरे[4]—

> "आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधाय यत् ।
> विदधाति ज्वरं दोषस्तस्मात्कुर्वीत लङ्घनम् ।"

---

१. 'बोधनाय' ग. घ. ङ । २. 'तथा प्रतिरोगप्र' । ३. 'क्तात् चिकित्सितात्' । ४. 'ज्वरचिकित्सिते' इति मुद्रिते ।

इति" (इति)। शीतगुणेन वायुनोत्पन्ने ज्वरे शरीरसन्तापो न युक्तः। य(द्य)प्यूष्मा शरीरमभिसृतः तथापि वायुरेव बलिष्ठः। स्वाशयान्निरस्तेन पक्त्रा संपर्काद् योगवाहित्वेन दाहकृदिति चेत्। तन्न। श्लेष्मणि योगवाहित्वाभावात्। तत्कार्ये ज्वरे कथं देहे सन्तापः। तस्माद्यत्किञ्चिदेतत्। प्रब्रूमः। ज्वरस्यायं प्रभावो येन शीतगुणेन दोषेणोत्पन्नोऽपि सन्तापयति शरीरमिति। तस्मादनवद्यम्। यत एवं रोमकूपादिस्रोतांसि पिदधाति ततः स्रोतोविबन्धाद् हेतोः प्रायेण स्वेदो न जायते। क्वचित्पित्तज्वरादौ स्वेदो जायत एवेति प्रायोग्रहणम्।

पूर्वरूपं लक्षयितुमाह—

**तस्य प्राग्रूपमालस्यमरतिर्गात्रगौरवम्॥ ६॥**

**आस्यवैरस्यमरुचिर्जृम्भा सास्राकुलाक्षता।**
**अङ्गमर्दोऽविपाकोऽल्पप्राणता बहुनिद्रता॥ ७॥**

**रोमहर्षो विनमनं पिण्डिकोद्वेष्टनं क्लमः।**
**हितोपदेशेष्वक्षान्तिः प्रीतिरम्लपटूषणे॥ ८॥**

**द्वेषः स्वादुषु भक्ष्येषु तथा बालेषु तृड् भृशम्।**
**शब्दाग्निशीतवाताम्बुच्छायोष्णेष्वनिमित्ततः॥ ९॥**

**इच्छा द्वेषश्च तदनु ज्वरस्य व्यक्तता भवेत्।**

तस्येत्यादि। तस्य उत्पित्सोर्ज्वरस्य प्राग्रूपं पूर्वरूपमेतदालस्यादि। आलस्यं (कायस्य) कर्मस्वनुद्यमः। मनोवाक्कायानामित्यन्ये। अरतिः शयनासनादौ क्वचिदनवस्थितिः। जृम्भा समुखविकासो गात्रस्य विनामः। सास्रे अश्रुसहिते आकुले चक्षुषी यस्य तस्य भावः सास्राकुलाक्षता। अङ्गमर्दोऽङ्गानां मृद्यमानप्रतीतिः। तोद इत्यर्थः। अविपाकोऽन्नादीनां पूर्ववदपक्तिः। अल्पप्राणता अल्पबलत्वम्। चेष्टास्वशक्तत्वमित्यर्थः। विनमनमङ्गानां विनामः ऋजुभाव इत्यर्थः। विनमनम् – മൂരിവിടക। पिण्डिकोद्वेष्टनं जङ्घापिण्डनिस्तोदः – കാൽവണ്ണ ഉഴലുക। हितोपदेशेषु शास्त्रेष्वक्षान्तिरक्षमा, तदुपदिष्टं न क्षमते। हितानां गुरुमित्रादीनामुपदेशेषु इति केचित्। अम्लादिषु प्रीतिः। मधुरेषु भक्ष्येषु द्वेषः। तथा बालेषु द्वेषः। बालं दृष्ट्वा भृशमत्यर्थं द्वेषो भवतीत्यन्ये।

शब्दादिष्वनिमित्ततः कारणं विना इच्छा द्वेषश्च भवतः। कदाचिद्वेणुवीणादिशब्दं शृणोति कदाचिद् द्वेष्टि। एवमन्येष्वपि। एतत्सर्वं प्राग्रूपम्। तदनु तस्य प्राग्रूपस्य पश्चाद् ज्वरस्य व्यक्तता भवेत्। व्यक्तता स्पष्टलिङ्गोत्पत्तिः वातिकोऽयं पैत्तिकोऽयमित्यादि॥

इदानीं वातज्वरस्य लक्षणान्याह—

**आगमापगमक्षोभमृदुतावेदनोष्मणाम्॥ १०॥**
**वैषम्यं तत्र तत्राङ्गे तास्तास्युर्वेदनाश्चलाः।**
**पादयोः सुप्तता स्तम्भः पिण्डिकोद्वेष्टनं श्रमः॥ ११॥**
**विश्लेष इव सन्धीनां साद ऊर्वोः कटीग्रहः।**
**पृष्ठं क्षोदमिवाप्नोति निष्पीड्यत इवोदरम्॥ १२॥**
**छिद्यन्त इव चास्थीनि पार्श्वगानि विशेषतः।**
**हृदयस्य ग्रहस्तोदः प्राजनेनेव वक्षसः॥ १३॥**
**स्कन्धयोर्मथनं बाह्वोर्भेदः पीडनमंसयोः।**
**अशक्तिर्भक्षणे हन्वोर्जृम्भणं कर्णयोः स्वनः॥ १४॥**
**निस्तोदः शङ्खयोर्मूर्ध्नि वेदना विरसास्यता।**
**कषायास्यत्वमथवा मलानामप्रवर्तनम्॥ १५॥**
**रूक्षारुणत्वगास्याक्षिनखमूत्रपुरीषता।**
**प्रसेकारोचकाश्रद्धाविपाकास्वेदजागराः॥ १६॥**
**कण्ठौष्ठशोषतृट् शुष्कौ छर्दिकासौ विषादिता।**
**हर्षो रोमाङ्गदन्तेषु वेपथुः क्षवथोर्ग्रहः॥ १७॥**
**भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे।**

आगमेत्यादि। आगमादीनां वैषम्यमनिलज्वरे रूपं भवतीति सम्बन्धः। आगमः सन्तापारम्भः तस्य वैषम्यं ज्वरे विशति। कदाचिदस्य शिरस्यौष्ण्यमारभते कदाचिदंसयोः कदाचित्पृष्ठे इत्यादि। एवमपगमेऽपि। अपगमो विसर्गः। क्षणेन तीव्रोपहतिः क्षणेन मृदुः क्षणेन दुःसहो भवति कदाचित्पादा-

वुष्णतरौ कदाचिच्छिर इत्यादि । एवमागमादीनां देहदेशविशेषतः कालविशेषतश्च वैषम्यमनेकरूपत्वं भवति । तत्र तत्र वाय्वाश्रयेऽङ्गे तास्ता वायुकारणावेदनाश्चलाः स्युः । कालतो वा अथवा वेदनानामूष्मणश्च वातवशात् कदाचिदागमो भवति कदाचिदपगमो नित्यसद्भावो वा कदाचित् । कदाचित् क्षोभो भवति कदाचिन्मृदुत्वम् । अथवा आगमे ज्वरारम्भकाले अपगमे मुक्तिकाले च वेदनोष्मणां क्षोभो मृदुता च क्रमेण भवतः । **आगमे**—"वेदनोष्मणां क्षोभोऽपगमे मृदुता चे"ति । तत्र तत्राङ्गे वैषम्यं विषमस्वभावः । कचिदुष्णं कचिच्छीतमित्यादि । वेदनाश्चलाः स्युः न स्थिराः । भूत्वा भूत्वा [1]विनश्यन्तीत्यर्थः । पादयोः सुप्तता स्पर्शाज्ञानम् । पादयोरेव स्तम्भश्चेष्टाहानिः । पिण्डिकोद्वेष्टनं प्राग्रूपस्वरूपमेव । सन्धीनां विश्लेष इव । (प्र?) (विश्लेषः) शैथिल्यम् । कटीग्रहः कट्या बन्धवत् प्रतिभासः । पार्श्वगान्यस्थीन्यतिशयेन भिद्यन्त इव । प्राजनेनेव वक्षसस्तोदः । प्राजनं प्रतोदः । प्राजनं - ꠅꠂꠃꠄ꠆ꠇ इति **पाठ्ये** । प्राजनेनेति पाठे प्राजनमङ्कुशः । व्राजनेनेति केचित्पठन्ति । विरसास्यता अव्यक्तरसत्वम् । मधुराद्यन्यतमं रसं न निश्चिनोतीत्यर्थः । "विरसास्यतां[2] विशेषानास्येयदुष्टरसत्वम्" इतीन्दुः । "दुष्टास्यता" इत्यरुणदत्तः । अथवा कषायास्यत्वं भवति । मलानां मूत्रशकृत्स्वेदानामप्रवर्तनम् । यदि प्रवृत्तिः तदा रूक्षारुणमूत्रपुरीषता त्वगादीनां रूक्षारुणता । प्रसेको लालास्रावः । पानीयस्य[3] निष्ठीवनं प्रसेक इति च । अरोचकाश्रद्धयोः को विशेष इति चेद् ब्रूमः । अरोचकेन वक्त्रस्थमपि न भुङ्क्ते । अश्रद्धया तु केवलं नाभिलषति, मुखस्थं तु भक्षयेदेव इत्यनयोर्विशेषः । अविपाकः उपयुक्तस्यान्नस्य । जागरो रात्रावपि स्वप्नाभावः । छर्देः कासस्य च शुष्कत्वमन्नकफादीनां बहिःप्रवर्तनासमर्थत्वम् । विषादिता खेदं[4]भावः । रोमादिषु हर्षः क्षवथोर्ग्रहः निग्रहः अभाव इति यावत् । प्रलापोऽसम्बन्धवचनम् । घर्मेच्छा उष्णाभिलाषः । विनामोऽङ्गानामृजुभावः മുരിവിടക । विनामो वेष्टनं वा । सर्वत्र च रूपकीर्तनं व्याधिस्वरूपविशेषपरिज्ञानाय पृथक् चिकित्सितप्रतिविधानाय च ॥

---

१. 'प्रणश्य' ग. घ. ङ. । २. 'ता आस्यविरसत्वं विशे' इति मुद्रिते ।
३. 'स्यैव नि' ग. घ. ङ. । ४. 'खेदीभावः ग. ।

युगपद् व्याप्तिरङ्गानां प्रलापः कटुवक्त्रता ॥ १८ ॥
नासास्यपाकः शीतेच्छा भ्रमो मूर्च्छा मदोऽरतिः ।
विट्स्रंसः पित्तवमनं रक्तष्ठीवनमम्लकः ॥ १९ ॥
रक्तकोठोद्गमः पीतहरितत्वं त्वगादिषु ।
स्वेदो निःश्वासवैगन्ध्यमतितृष्णा च पित्तजे ॥ २० ॥

युगपदित्यादि । युगपद् ज्वरव्याप्त्यादि पित्तजे ज्वरे भवतीति संबन्धः । शिरःप्रभृतीनां सर्वेषामङ्गानां युगपत्तुल्यकालं ज्वरसन्तापेन व्याप्तिः । नासास्ययोः पाको व्रणभवः । भ्रमोऽक्षिभ्रमः । [1]ച്ചഴലി । मूर्च्छा मोहः । मदो व्याधिविशेषो वक्ष्यमाणलक्षणः । मदो नाम चित्तविकारः, पित्तकार्य इति च । मदं ഓചാരിക്ക । विट्स्रंसः पुरीषस्य निःसरणम् । अम्लकः പുളിതേക്ക । निर्मुखाः पिटकप्रायाः कोठाः । [3]വട്ടപ്പുണൽ? । तेषामुद्गमः उद्भवः । त्वगास्याक्ष्यादिषु (पीतत्वं) हरितत्वं वा । पित्तं द्रवत्वादग्निं विनाश्य ज्वरं करोति । तथा चागमः—"द्रवत्वादग्निमुपहत्य ज्वरमभिनिर्वर्तयति पित्तं द्रवत्वात् स्थानान्तरस्थतस्योष्मणो बाह्यस्येवाग्नेरुष्णमिवोदकं मान्द्यमेव करोति न तूष्णेन गुणेन पक्तिसामर्थ्यम् । ऊष्मा हि स्वदेशस्थितः स्थानविशेषात् पक्तुं समर्थः न स्थानान्तरनिरस्तः । उपलभ्यापि तुल्यजातीयं पित्तोष्माणं नैव पाकं कर्तुमलं किन्तु पित्तोष्मणा उष्णतरो भूत्वा दाहाधिकं ज्वरं करोति" इति ॥

विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता ।
प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः ॥ २१ ॥
हृल्लासः छर्दनं कासः स्तम्भः श्वैत्यं त्वगादिषु ।
अङ्गेषु शीतपिटिकास्तन्द्रोदर्दः कफोद्भवे ॥ २२ ॥

विशेषादित्यादि । कफोद्भवे ज्वरे इतरज्वरेभ्यो विशेषादरुचिर्भवति । अरुचेः सर्वज्वरसामान्याद्विशेषादित्युक्तम् । अरुणदत्तस्तु—"विशेषादरुच्यादयो भवन्ति कफज्वरे" इत्याह । इन्दुरपि—"सातिशया अरुचिजाड्यादयो

---

१. ച്ചഴച്ചിൽ ग. । २. 'पिटकाप्रायाः' घ. । ३. വട്ടപ്പുണ്ണ് ग. ।
४. 'रस्योष्मणो', ग. 'रस्य तस्योष्मणो' घ. ।

रोगाः कफज्वरे भवन्ती'त्याह । जाड्यमपटुत्वम् । स्रोतोरोधो मूत्रादीनां रोधः । अल्पवेगता ज्वरस्य । हृल्लेपः हृदयमन्तस्तिमितमिव भवति । "हृल्लेपो हृदये लिप्तप्रतीतिः" इति पाठ्ये । हृल्लासो हृदयोत्क्लेशयुक्तः प्रसेकः । നെഞ്ഞുകലിക്ക । छर्दनं यथासम्भवं कफादीनाम् । स्तम्भः स्तब्धाङ्गता । श्वैत्यं त्वगादिषु । आदिशब्देन आस्याक्षिनखादीनां ग्रहणम् । अङ्गेषु शीतस्पर्शः पिटकाश्च । अथवा शीतपिटका रोमाञ्चः । उदर्दः श्वासस्य यथावद् बहिर्निस्सरणाभावभवोऽन्तर्बाधाविशेषः, अथवा उदर्दलक्षणं तन्त्रान्तरे निगदितं—

"शीतपानीयसंस्पर्शात् शीतकाले विशेषतः ।
श्वयथुः शिशिरार्तानामुदर्दः कफसम्भवः ॥"

इति । उदर्दः – മുഞ്ഞി इति पाठ्ये । उरसोऽभिष्यन्द इति च ।

एवं दोषाणां पृथग्लिङ्गमभिधाय सामान्यलिङ्गं कथयति—

**काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ।**
**निदानोक्तानुपशयो विपरीतोपशायिता ॥ २३ ॥**

काल इत्यादि । यथास्वं कोपकालेषु वर्षाशरद्वसन्तेषु अपराह्णमध्याह्नपूर्वाह्णादिषु च सर्वेषां वातपित्तकफज्वराणां प्रवृत्तिरागमनं भवति, उत्पन्नानां वृद्धिराधिक्यमेव वा भवति । इदमपि रूपं, तथा निदानोक्तानुपशयः निदानत्वेनोक्तानां वातज्वरे तिक्तादीनां पित्तज्वरे कट्वादीनां कफज्वरे मधुरादीनां चानुपशयोऽसुखावहत्वं यथास्वविपरीतानां चोपशायिता सुखानुबन्धित्वं च वातिकादीनां रूपम् । नन्वेकस्यानुपदेशोऽत्र कर्तव्यः । अन्येन सिद्धत्वात् । ब्रूमः – अर्थापत्तेरनैकान्तिकत्वात् । किञ्च क्वचिदपि विपरीतमप्युत्पत्तेश्छर्धतिसारेषु अविपरीतमसंग्रहणं तथा मद्योत्थानां मद्यमेवोपशेत इति ।

पृथग्दोषाणां लिङ्गमुक्त्वा मिश्रदोषाणां चाह—

**यथास्वलिङ्गसंसर्गे ज्वरः संसर्गजोऽपि च ।**

यथास्वमित्यादि । यथास्वं लिङ्गसंसर्गे सति ज्वरः तत्संसर्गजो विज्ञेयः । तेन वातपित्तज्वरलिङ्गमिश्रीभावे वातपित्तज्वरो विज्ञेयः । वातकफज्वरलिङ्गसंसर्गे वातकफज्वरः । एवं पित्तकफेऽपीति यथास्वशब्दार्थः । अपिचेति समुच्चये ।

१. 'हृदयक्लेश' ग. घ. ङ ।

शिरोऽर्तिमूर्च्छावमिदाहमोह-
कण्ठास्यशोषारतिपर्वभेदाः ।
उन्निद्रतातृड्भ्रमरोमहर्षा
जृम्भातिवाक्त्वं च चलात्सपित्तात् ॥ २४ ॥

शिरोर्त्तीत्यादि । सपित्तादनिलादुत्पन्नस्य ज्वरस्य वातपित्तज्वरस्येमानि लिङ्गानि भवन्ति । उन्निद्रता अपगतनिद्रता ഉറക്കംവരായ്ക । अतिवाक्त्वं च अतिप्रलापिता ॥

तापहान्यरुचिपर्वशिरोरुक्-
पीनसश्वसनकासविबन्धाः ।
शीतजाड्यतिमिरभ्रमतन्द्राः
श्लेष्मवातजनितज्वरलिङ्गम् ॥ २५ ॥

तापहान्यादि सर्वं वातश्लेष्मज्वरलिङ्गं भवति । स्रोतउपलेपेन दोषादीनामवहनं विबन्धः । तिमिरोऽन्धभावः रूपाद्यनुपलब्धिः । भ्रमोऽक्षिभ्रमः ॥

शीतस्तम्भस्वेददाहाव्यवस्था-
स्तृष्णा कासः श्लेष्मपित्तप्रवृत्तिः ।
मोहस्तन्द्रालिप्ततिक्तास्यता च
ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ २६ ॥

शीतेत्यादि । शीताद्यव्यवस्थादि सर्वं पित्तश्लेष्मज्वरस्य रूपं लक्षणं विज्ञेयम् । शीतादीनामव्यवस्था अनियमः । श्लेष्मपित्तयोर्युगपत् पृथग्वा प्रवृत्तिरूर्ध्वमधो वा भवति । "छर्द्यां श्लेष्मादिप्रवृत्तिः" इति **हाटकः** । आस्योपलेपः तिक्तास्यता च ॥

सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः ।
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥ २७ ॥

सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा ।
गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम् ॥ २८ ॥

साश्रुणी कलुषे रक्ते भुग्ने लुलितपक्ष्मणी ।
अक्षिणी पिण्डिकापार्श्वमूर्धपर्वास्थिरुग्भ्रमः ॥ २९ ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवाचितः ।
परिदग्धा खरा जिह्वा गुरुस्रस्ताङ्गसन्धिता ॥ ३० ॥
रक्तपित्तकफष्ठीवो लोलनं शिरसोऽतिरुक् ।
कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् ॥ ३१ ॥
हृद्व्यथा मलसंसर्गः प्रवृत्तिर्वाल्पशोऽति वा ।
स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता ॥ ३२ ॥
दोषपाकश्चिरात्तन्द्रा प्रततं कण्ठकूजनम् ।
सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम् ॥ ३३ ॥

सर्वजः सन्निपातजो ज्वरः सर्वैः पृथक्संसर्गोक्तैर्लक्षणैः विज्ञेयः । अत्र च सन्निपातज्वरे अयं विशेषः । मुहुर्मुहुः दाहोऽङ्गदाहः । तद्वन्मुहुर्मुहुः शीतं भवति । दिवा अह्नि महानिद्रा सततनिद्रा भवति । निशि जागरणं च भवति । सदा वा दिवसे निशि च निद्रा भवति । नैव वा सदा निद्रा । अतिस्वेदः नैव वा स्वेदः । "मोहः स्वेदोऽति नैव वे"ति वा पाठः । मोहो विभ्रमः । गीतादिविकृतेहाप्रवर्तनं विकृतगीतादिचेष्टाप्रवर्तनम् । अक्षिणी चास्य साश्रुणी स्रुताश्रुणी । कलुषे आविले भुग्ने कनीनिकापाङ्गयोरनार्जवे लुलितपक्ष्मणी शीर्णपक्ष्मणीति यावत् । पिण्डिकादीनां रुक् च भवति । पिण्डिका जङ्घाकाण्डस्य पश्चिमे भागे पिण्डाकृति कठिनं मांसम् । कर्णौ सस्वनौ सशब्दौ । जिह्वा परिदग्धा परितो दग्धेव भवति । खरा खरस्पर्शा गुरुश्च भवति । स्तब्धाङ्गत्वं विशेषेण स्तब्धसन्धित्वं च भवति । "गुरुस्रस्ताङ्गसन्धिता" इति वा पाठः । गुर्वङ्गता स्रस्तसन्धिता च । शिरसो लोलनं चलनम् । चञ्चलत्वमित्यर्थः । अतीव तृट् । श्यावानां रक्तानां कोठानां मण्डलानां वा दर्शनमङ्गे भवति । कोठाः निर्मुखाः पिटकाः । मलानां संसर्गोऽप्रवृत्तिः । अथवा संप्राप्त्यादिविशेषवशेन मलानामल्पशो स्तोकं स्तोकं प्रवृत्तिः । अथवा अतिप्रवृत्तिः । दोषपाक-

---

१. 'भुग्ने लुलि' ग. घ. ङ. पाठः ।

श्चिरात् षडहाद्दोषपाकः, ततश्चिरादित्यर्थः । एभिर्लक्षणैर्युक्तं तं सन्निपातमभिन्यासं विद्याद् अभिन्यासाख्यं ज्वरविशेषं विद्यात् । तमेव हृतौजसाख्यं च ब्रूयात् । तस्य सन्निपातज्वरस्य अभिन्यासहृतौजसौ पर्यायौ । हृतौजसशब्दः सन्निपात-पर्यायोऽकारान्तः । उक्तं च **संग्रहे**—

"चयकाष्ठामुपारुह्य कुर्वते ते ह्युपेक्षिताः ।
प्रायशः सुचिरेणापि भेषजद्वेषिणो गदान् ।
अतिस्थौल्याग्निसदनमेहकुष्ठहृतौजसान् ॥" इत्यादि ॥

**दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ।**
**असाध्यः सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा ॥ ३४ ॥**

स च पूर्वोक्तः सन्निपातज्वरो दोषे वातादौ विबद्धे स्थिरे स्तब्धत्वान्निश्चले अग्नौ च विशेषेण नष्टे, अग्निनाशस्य सर्वज्वरसाधारणत्वात् । यदि सर्वसम्पूर्ण-लक्षणः सम्पूर्णसर्वलक्षणो भवति तदा सोऽसाध्यो भवति । अन्यथा दोषे चले बलवति चाग्नौ न्यूनलक्षणश्च यदि भवति तदा कृच्छ्रसाध्यः स्यात् । वैकल्यदोऽपि वा भवेत् । यस्य कस्यचिदङ्गस्य वैकल्यहेतुर्वा भवेदित्यर्थः ॥

किमेष एव सन्निपातज्वरप्रकारः उतान्योऽपि सम्भवतीत्याह—

**अन्यच्च सन्निपातोत्थो यत्र पित्तं पृथक् स्थितम् ।**
**त्वचि कोष्ठेऽथवा दाहं विदधाति पुरोऽनु वा ॥ ३५ ॥**

अन्यच्चेत्यादि । अन्यदित्ययं[1] निपातः । अपरोऽयं सन्निपातविशेषोत्थो ज्वरो यदा दोषैरेवं संनिविष्टैर्भवति तदैवंस्वरूपो भवति । कीदृगित्युच्यते । यत्र यस्मिन् सन्निपातज्वरे दोषत्रयेऽपि कुपिते पित्तं त्वचि कोष्ठे वा वातकफाभ्यां पृथक् स्थितं पुरोऽनु वा दाहं विदधाति करोति । त्वचि स्थितं पुरः पूर्वं दाहं विदधाति, कोष्ठे स्थितमनु पश्चाद्दाहं विदधाति ॥

**तद्वद्वातकफौ शीतं, दाहादिर्दुस्तरस्तयोः ।**

तद्वदिति । यथा पित्तं दाहं विदधाति तथा वातकफौ त्वचि कोष्ठे वा पित्तेन पृथक् स्थितौ पुरोऽनु वा शीतं विधत्तः । एतदुक्तं भवति—यदा पित्तं

---

१. 'अन्यशब्दार्थोऽन्यदित्ययं निपातसिद्ध इत्यर्थः' । इति सर्वाङ्गसुन्दरी ।

त्वचि पृथग्वर्तते कोष्ठे वातकफौ तदा ज्वरवेगकाले पित्तं पूर्वं दाहं विदधाति वातकफौ पश्चात् शीतं विधत्तः । यदा पुनस्त्वचि वातकफौ वर्तेते कोष्ठे पित्तं तदा पूर्वं शीतं विधत्तः पश्चाद् दाहं विदधाति । तयोः शीतादिदाहाद्योः ज्वरयोः दाहादिर्दुस्तरः कृच्छ्रसाध्यः । "अन्यश्च सन्निपातोत्थः" इति केचित् पठन्ति ॥

शीतादिदाहादिसन्निपातज्वरयोः कार्यभेदं दर्शयति—

**शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते ॥ ३६ ॥**
**शीते शान्तेऽम्लको मूर्च्छा मदस्तृष्णा च जायते ।**

शीतादावित्यादि । तत्र सन्निपातज्वरे शीतादौ कोष्ठस्थेनोदीर्णेन पित्तेन कफे स्यन्दिते विलीने शोषिते च सति शीते शान्ते पित्ताधिक्यादम्लकादिकं जायते । दाह उपजायत इत्यर्थाल्लभ्यते । अम्लकः अम्लोद्गारः ॥

**दाहादौ पुनरन्ते स्युस्तन्द्राष्ठीववमिक्लमाः ॥ ३७ ॥**

दाहादौ सन्निपाते पुनः, दाह आदिर्यस्मिन् स दाहादिः शीतावसान इत्यर्थाद् गम्यते । कोष्ठे वातकफावुदीर्णौ दाहं शमयतः । अन्ते दाहस्यान्ते कफकार्याणि तन्द्रादीनि भवन्ति ॥

इति दोषैः सप्तविधो ज्वर उक्तः । आगन्तुरष्टम उच्यते—

**आगन्तुरभिघाताभिषङ्गशापाभिचारतः ।**
**चतुर्धात्र क्षतच्छेददाहाद्यैरभिघातजः ॥ ३८ ॥**
**श्रमाच्च तस्मिन् पवनः प्रायो रक्तं प्रदूषयन् ।**
**सव्यथाशोफवैवर्ण्यं सरुजं कुरुते ज्वरम् ॥ ३९ ॥**

आगन्तुरित्यादि । आगन्तुज्वरः अभिघातादिभेदेन चतुर्धा चतुर्विधो भवति । अत्र एषु चतुर्षु मध्ये क्षतादिभिर्यो ज्वरः सोऽभिघातजः, श्रमाच्च यो ज्वरः सोऽप्यभिघातजः । क्षतं पतनादिभिः । छेदः शस्त्रादिभिः । दाहोऽग्न्यादिभिः । आदिग्रहणादन्येऽप्येवंविधा वेदितव्याः । श्रमोऽध्वगमनादिभिः । एभिः कथं ज्वरो भवतीत्याह—तस्मिन्नित्यादि । तस्मिन्नभिघातजे ज्वरे पवनः स्वभावात् प्रायो रक्तं प्रदूषयन् व्यथादिभिर्युक्तं ज्वरं कुरुते । प्रायोग्रहणं क्वचिद् व्यभिचारप्रदर्शनार्थम् ॥

**ग्रहावेशौषधिविषक्रोधभीशोककामजः ।**
**अभिषङ्गाद्,**

ग्रहाः देवादयो वक्ष्यमाणाः तेषामावेशः । ओषधिरित्योषधिगन्ध उच्यते । यो ग्रहादिजो ज्वरः सोऽभिषङ्गाद्विज्ञेयः । ग्रहावेशाद्यभिषङ्गः । "अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च" इति **वैजयन्ती विश्वप्रकाशिका** च ॥

ग्रहावेशादीनां लक्षणं निर्दिशति—

**ग्रहेणास्मिन्नकस्माद्धासरोदने ॥ ४० ॥**

ग्रहेण जातेऽस्मिन् ज्वरे अकस्मान्निमित्तेन विना हासरोदने भवतः ॥

**ओषधीगन्धजे मूर्च्छा शिरोरुग्वेपथुः क्षवः ।**
**विषान्मूर्च्छातिसारास्यश्यावतादाहहृद्ग्रहाः ॥ ४१ ॥**

**क्रोधात् कम्पः शिरोरुक् च प्रलापो भयशोकजे ।**
**कामाद् भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः ॥ ४२ ॥**

**ग्रहादौ सन्निपातस्य भयादौ मरुतस्त्रये ।**
**कोपः कोपेऽपि पित्तस्य, यौ तु शापाभिचारजौ ॥ ४३ ॥**

**सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ।**

ग्रहादौ त्रये ग्रहौषधिविषलक्षणे सन्निपातस्य कोपो भवति । भयादौ त्रये भीशोककामाख्ये मरुतो वायोः कोपो भवति । क्रोधे पित्तस्य कोपः । अपिशब्दाद् वायोरपि । यौ तु शापाभिचारजौ शापेनाभिचारेण च जातौ ज्वरौ तावुभौ सन्निपातेन भवतः । घोरौ तीव्रौ असह्यतमौ अतिशयेनासह्याविति मतौ । आगमकर्तॄणामिति शेषः । शापोऽपराधाद् गुर्वादिकृता परुषोक्तिः ॥

**तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते ॥ ४४ ॥**

**पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ।**
**सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्धते ज्वरः ॥ ४५ ॥**

तत्र तयोराभिचारजे त्वाभिचारिकैर्मन्त्रैरथर्ववेदोक्तैः 'अमुं दह' इति हूयमानस्य, यन्नामोद्देशेन समित्सर्षपहविरादिप्रक्षेपः स हूयमान उच्यते, तस्य पूर्वं प्रथममेव चेतस्तप्यते, (ततो देहस्तप्यते।) ततो विस्फोटादिभिः ग्रस्तस्याविष्टस्य प्रत्यहं ज्वरो वर्धते। स्यादत्रागन्तोरपि वाताद्यनुरोधान्निजत्वापत्तिः। उच्यते। आगन्तोरपि दोषकार्यमस्ति। किन्तु ग्रहावेशादिभिः ज्वरो भवति। पश्चाद्दोषस्तमनुवर्तयिष्यतीति। **आगम**श्चात्र–"स किञ्चित्कालमागन्तुः केवलो भूत्वा दोषैरनुबध्यते" इति ॥

**इति ज्वरोऽष्टधा दृष्टः समासाद् द्विविधस्तु सः ।**
**शारीरो मानसः सौम्यस्तीक्ष्णोऽन्तर्बहिराश्रयः ॥ ४६ ॥**
**प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः ।**

इत्येवं त्रिदोषागन्तुभेदाद् ज्वरोऽष्टधा दृष्टः। तन्त्रकारैरिति शेषः। एवमपि भवन् स ज्वरः समासात् संक्षेपेण द्विविधः। एवमेवं द्विविधो भवति। शारीरो मानस इत्येवं द्विविधः। सौम्यस्तीक्ष्ण इत्येवं द्विविधः। अन्तराश्रयो बहिराश्रय इत्येवं द्विविधः। तथा प्राकृतो वैकृत इत्येवं द्विविधः। साध्योऽसाध्य इत्येवं द्विविधः। सामो निरामक इत्येवं च द्विविधः। **अरुणदत्त**स्तु इति ज्वरः समासादष्टधा दृष्ट इत्यन्वयं वदति ॥

एषां शारीरादीनां लक्षणमुच्यते–

**पूर्वं शरीरे शारीरे तापो मनसि मानसे ॥ ४७ ॥**

पूर्वमित्यादि। शारीरे ज्वरे प्रथमं शरीरे तापो भवति पश्चान्मनसि। पूर्वशब्दस्य संबन्धिशब्दत्वात्। एवं मानसेऽपि ज्वरे पूर्वं मनसि तापः पश्चाच्छरीरे सन्तापः ॥

सौम्यतीक्ष्णौ[1]वाचष्टे—

**पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ।**
**दाहः पित्तयुते मिश्रं मिश्रे,**

१. 'क्ष्णौ व्याचष्टे' ग पाठः।

पवन इत्यादि। पवने श्लेष्मयुक्ते पवनस्य योगवाहित्वाद् ज्वरे शीतं भवेत्। अर्थात्स एव सौम्यः श्लेष्मणः सौम्यत्वात्। एवं पित्तयुते पवने योगवाहित्वाद्दाहो भवेत्। अर्थात् स ज्वरस्तीक्ष्णः। मिश्रे श्लेष्मयुते (पित्तयुते) च पवने मिश्रं शीतं दाहश्च भवेत्। मुहुर्दाहो मुहुः शीतमिति। अस्य ज्वरस्योभयात्मकत्वात् सौम्यतीक्ष्णद्वयाव्यतिरेकः। इन्दुरपि—"मिश्रे तूत्कर्षेण व्यपदेशात् सौम्यतीक्ष्णद्वयादव्यतिरेकः।" इत्याह॥

अन्तराश्रयस्य लक्षणमाह--

**अन्तःसंश्रये पुनः॥ ४८॥**

**ज्वरेऽधिकविकाराः स्युरन्तःक्षोभो मलग्रहः।**

अन्तःसंश्रये पुनर्ज्वरेऽधिकं विकाराः दोषोपद्रवाः स्युः। सत्यपि सर्वाङ्गोपतापे अधिकमन्तःक्षोभस्तीव्रदाहत्वम्। इन्दुस्तु--"अन्तरधिकं विकाराः स्युः। अन्तरधिकं क्षोभश्च" इत्यन्वयं वदति। मलग्रहो मलबन्धश्च भवति॥

**बहिरेव बहिर्वेगे तापोऽपि च सुसाधता॥ ४९॥**

बहिर्वेगे बहिर्वेगवति ज्वरे तु बहिरेव विकाराः स्युः। नान्तर्विकाराः[1]। तापोऽपि च बहिरेव भवति। सारकृत्तु—"अपिचेत्यन्तःक्षोभमलग्रहावपि स्तः इति समुच्चिनोति" इत्याह। तत्रैव सुसाधता सुखसाध्यत्वमर्थाल्लभ्यते। अन्तर्वेगस्य सुदुःसाधतेति।

प्राकृतवैकृतौ लक्षयति—

**वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्।**
**वैकृतोऽन्यः स दुःसाध्यः प्रायश्च प्राकृतोऽनिलात्॥ ५०॥**

वार्षादिषु त्रिषु यथाक्रमं वाताद्यैर्दोषैः यो ज्वरो जायते स प्राकृत उच्यते। वर्षासु यो वातज्वरः स प्राकृतः। शरदि पित्तजः वसन्ते कफजश्च। अत उक्तादन्यो वैकृतः, वर्षादिभ्योऽन्यकाले जातो वर्षादिष्वन्यदोषकृतो वैकृत इत्यर्थः। स वैकृतो दुःसाधो भवति। प्राकृतस्तु सुसाध इत्यर्थाद् गम्यते। प्रायो बाहुल्येन प्राकृतोऽपि योऽनिलाज्जायते सोऽपि दुःसाधः। प्रायोग्रहणं कदाचिद्दैवानुकूल्यवशात् सुसाध एव भवतीति॥

---

१. 'नान्तरिकाः' ग पाठः।

यः प्राकृतो वातादिभिरुक्तः स प्राधान्यापेक्षया यस्माद्दोषान्तरमपि तत्रा-नुबलं भवतीत्यस्य प्रदर्शनार्थमुच्यते—

**वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् ।**
**कुर्यात्, पित्तं च शरदि तस्य चानुबलं कफः ॥ ५१ ॥**
**तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।**
**कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ ५२ ॥**

वर्षास्वित्यादि । वर्षासु दुष्टो मारुतः पित्तश्लेष्मभ्यामन्वितो ज्वरं कुर्याद्, नानन्वितः । शरदि च पित्तं दुष्टं ज्वरं कुर्यात् । तस्य च पित्तस्य ज्वरं कर्तुमभ्युद्यतस्य शरद्यनुबलं सहायं कफो भवति । 'अनुबलः' इति केचित् पठन्ति । तत्प्रकृत्या तयोर्वर्षाशरदुद्भूतयोर्वातपित्तज्वरयोः स्वभावेन वर्षाशरदुपलक्षितविसर्गकालस्वभावाच्च तत्र वातपित्तज्वरयोः अनशनाद् भयं नास्ति । वातिकेऽपि वर्षासु पित्तश्लेष्मानुगतत्वाद् अनशनाद् भयं नास्ति । तथा शरदि पैत्तिकेऽपि कफानुबन्धत्वादनशनाद् भयं नास्ति । तत्र लङ्घनं विधेयमेवेत्यर्थः । विसर्गाच्च, वर्षाशरदुपलक्षितो हि कालो विसर्गः । स तु सोमस्वभावः । तस्मिन् लङ्घनात् प्रत्यपायशङ्का तथा न भवति यथा अन्यस्मिन् । वसन्ते कफो दुष्टो ज्वरं कुर्यात् । तमपि तं च कफमनु वातपित्तं भवेत् । वातपित्ते तस्यानुबले भवतः । तत्र कफज्वरे पुनरनशनाद् भयमस्त्येव कालस्याग्नेयत्वाद् वातपित्तानुबलत्वाच्च । इन्दुनाप्युक्तं—"प्रकृत्या आदानाच्चेत्यपिशब्दाल्लभ्यते । तथा कफजेऽप्यति-लङ्घनाद् यत्नतो रक्षेदित्यर्थादवगम्यते" इति ॥

साध्योऽसाध्य इति द्वैविध्यमुच्यते—

**बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ।**
**सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः ॥ ५३ ॥**

बलवत्स्वित्यादि । बलवत्सु अल्पदोषेषु पुरुषेषु यो ज्वरोऽनुपद्रवश्च भ्रम-प्रलापाद्युपद्रवरहितः स साध्यः । यस्त्वसाध्यः (स) प्राक् शारीरस्थाने विकृतिज्ञाने विकृतिविज्ञानीयेऽध्याये सर्वथा यादृशस्य नरस्य यादृशो ज्वर इति सर्वेण प्रकारेण उदाहृतः उक्तः—"ज्वरो निहन्ति बलवान्" इत्यादिना ॥

सामो निराम इति द्वैविध्यमाह—

**ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता ।**
**न प्रवृत्तिर्न विड् जीर्णा न क्षुत्सामज्वराकृतिः ॥ ५४ ॥**

ज्वरोपद्रवेत्यादि । ज्वरोपद्रवाणामङ्गमर्दादीनां तीक्ष्णत्वं वेगित्वम् । अग्लानिर्ग्लान्यभावः । बहुमूत्रता बहुशः बहुः प्रभूता च मूत्रप्रवृत्तिः । न प्रवृत्तिः पुरीषस्य अथ चेत् प्रवर्तते विट् सा जीर्णा न भवति । एषां लिङ्गानां संहतिः सामज्वराकृतिः आमान्वितस्य ज्वरस्य लक्षणम् ॥

ज्वरवेग इत्यादिना पच्यमानस्य लक्षणं वक्ति—

**ज्वरवेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ।**
**मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ५५ ॥**

ननु सामो निराम इत्युक्तं, कथं पच्यमानस्य प्रसङ्गः । उच्यते--आद्यन्तपरिग्रहान्मध्यस्य परिग्रहः इति । आमपक्वग्रहणादेव पच्यमानस्य ग्रहणमपि भवति । "पच्यमानता सामत्वादन्या" इतीन्दुः । ज्वरवेगो ज्वरस्यातिवेगः । अधिकं तृष्णा । भ्रमो मोहः, अक्षिभ्रमो वा । उत्क्लेशः अङ्गानामाकुलत्वम् । कोष्ठसंक्षोभो वा । एतत्सर्वं पच्यमानस्य ज्वरस्य लक्षणं भवति ॥

**पक्वतामविपर्यासात् सप्तरात्रं च लङ्घनात् ।**

पक्वता जीर्णता निरामत्वम् । सा जीर्णता ज्वरस्य आमविपर्यासात् सामज्वरोक्तलक्षणानां ज्वरोपद्रवतीक्ष्णत्वादीनां विपर्यासाद् वैपरीत्याद् बोध्या । यथा ज्वरोपद्रवमान्द्यमङ्गानां कार्श्यमल्पमूत्रत्वं जीर्णस्य मलस्य प्रवृत्तिः क्षुत्सम्भवश्च । "जीर्णतामविपर्यासा"दिति वा पाठः । न केवलमेभिरेव जीर्णता विज्ञेया, यावत्सप्तरात्रं लङ्घनाच्च ज्वरस्य जीर्णता विज्ञेया । अत्यन्तसंयोगे द्वितीया । सप्तरात्रं लङ्घयित्वा ततोऽनन्तरं यः कालोऽष्टमदिनादिः तदा ज्वरस्य जीर्णता भवति । तथा चागमटीका—

"सप्ताहेन च पच्यन्ते सप्तधातुगता मलाः ।
निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि ॥"

इति। तेनैतदुक्तं भवति—सप्तमादह्नः पूर्वमामलिङ्गाभावेऽपि यथासम्भवेन लङ्घनेन लङ्घितस्य जीर्णज्वरोक्तं न किञ्चिद् विधेयं, तथा सप्ताहादूर्ध्वमप्याम-लक्षणसद्भावे जीर्णज्वरोक्तं प्रतिषिध्यत इत्युभयमामविपर्यासः, सप्तरात्रं लङ्घनं च जीर्णतालक्षणं ग्राह्यमिति॥

बहुभिर्भेदैः ज्वरस्य द्वैविध्यमुक्त्वा प्रकारान्तरेण पञ्चविधत्वमुच्यते—

**ज्वरः पञ्चविधः प्रोक्तो मलकालबलाबलात्॥ ५६॥**
**प्रायशः सन्निपातेन भूयसा तूपदिश्यते।**
**सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ॥ ५७॥**

ज्वर इत्यादि। एकोऽपि ज्वरो दुष्टानां मलानां वातादीनां बलवत्त्वा-दबलवत्त्वाच्च पञ्चविधो भवति। मलशब्दो दोषवाची। तथा ज्वरकारणदोषकोपे यः कालो निमित्ततां याति तस्य बलवत्त्वादबलवत्त्वाच्च पञ्चविधो भवति। तथा च प्रदर्शयिष्यते मलानां बलाबलम्—तुल्यदूष्यादिवर्धिताः सन्ततं कुर्युरित्यादि। तथा—

'सविपक्षो ज्वरं कुर्याद्विषमं क्षयवृद्धिभाक्।'

इति। कालस्य बलाबलं संग्रहे उक्तं—"यथोत्तरं मन्दगतिर्मन्दशक्तिः" इत्यादि। बलशब्दो द्विविधसंबन्धार्थः। सन्ततो ज्वरो मलकालबलाद् भवति। बलवन्तो दोषाः सन्ततज्वरं कुर्वन्ति। विषमज्वराश्चत्वारो मलकालबलाद् बलवन्तो भवन्ति। स च पञ्चविधो ज्वरः सन्ततादिः प्रायः सन्निपातेन भवति। तुरवधारणे। भूयसैव दोषेण व्यपदिश्यते 'सन्ततो मारुता'दित्यादि। सन्नि-पातेऽपि किञ्चिद्दोषाणां तारतम्यमस्तीति भूयसा इत्युक्तम्। तन्त्रान्तरे चोक्तं—"स ततो मारुतात् प्रायः" इत्यादि। तुर्व्यतिरेके वा। योऽयं वक्ष्यमाणलक्षणः सन्ततादिः स प्रायेण सान्निपातिको भवति। प्रायोग्रहणं व्यभिचारसूचनार्थम्। यथोक्तरूपेभ्यः सन्ततादिभ्योऽन्यस्मात् परिदृश्यमानाद्व्यतिरेकः। मूर्च्छा-द्यनुबन्धाः द्विदोषजा इति केचित्। उक्तं च—

"मूर्च्छानुबन्धा विषमज्वरा ये प्रायेण ते द्वन्द्वसमुत्थितास्तु"

इति। सन्तत इत्यादिना पञ्चानां नामान्युच्यन्ते। सन्ततसततशब्दयोरेकार्थत्वात् पारिभाषिकमेतत् संज्ञाद्वयम्॥

धातुमूत्रेत्यादिना सन्ततस्योत्पत्तिरुच्यते----

धातुमूत्रशकृद्वाहिस्रोतसां व्यापिनो मलाः ।
तापयन्तस्तनुं सर्वां तुल्यदूष्यादिवर्धिताः ॥ ५८ ॥

बलिनो गुरवस्तब्धा विशेषेण रसाश्रिताः ।
सन्ततं निष्प्रतिद्वन्द्वा ज्वरं कुर्युः सुदुःसहम् ॥ ५९ ॥

सन्तताख्यो ज्वरः केवलं दोषबलादेव भवति । यथा एवम्भूता मला वातादयो दोषा दुष्टाः सन्ततज्वरं कुर्युः सुदुःसहमिति सम्बन्धः । धात्वादिवाहिनां स्रोतसां व्यापिनः धात्वादिवाहीनि स्रोतांसि व्यापिनः । सर्वां तनुं तापयन्तः क्लेशयन्तः । तथा तुल्यैर्दूष्यादिभिर्वर्धिताः । दूष्या धातवो रसरक्तमांसादयः । आदिशब्देन देशकालादिपरिग्रहः । तैर्वर्धिताः । अत एव निष्प्रतिद्वन्द्वाः प्रतीकाररहिताः । यथा वाताधिका दोषाः दूष्येऽस्थिनि देशे जाङ्गले अबलस्य पुरुषस्य काले वर्षास्वग्नौ विषमे वातप्रकृतेर्वृद्धस्य हीन(स)त्त्वस्य रूक्षादिसात्म्यस्येत्येवमादि । प्रतिपक्षैरखण्डितशक्तित्वाद् बलिनः । सामत्वाद् गुरवः । स्तब्धा इति । स्तब्धा निश्चलाः ऊर्ध्वमधश्च अनिस्सरणात् । विशेषेण रसाश्रिताः अतिशयेन रसाख्यं धातुमाश्रिताः । धातुदूषणादेवैषां ज्वरकारणशक्तिः । न रसवद् रक्तादीन् दूषयन्तीति विशेषग्रहणम् । निष्प्रतिद्वन्द्वमिति केचित् पठन्ति निरुपक्रममिति वदन्तः । सुदुःसहं सुतरामसह्यम् ॥

मलं ज्वरोष्मा धातून् वा स शीघ्रं क्षपयेत् ततः ।
सर्वाकारं रसादीनां शुद्ध्याशुद्ध्यापि वा क्रमात् ॥ ६० ॥
वातपित्तकफैः सप्तदशद्वादशवासरान् ।
प्रायोऽनुयाति मर्यादां मोक्षाय च वधाय च ॥ ६१ ॥
इत्यग्निवेशस्य मतं

स ज्वरोष्मा ज्वरस्योष्मा सकलवस्तुक्षपणस्वभावः तस्मिन् सन्तते दृष्टादृष्टकारणविशेषवैचित्र्यात् सर्वप्रकारेण रसादीनां शुद्ध्या धातुमलेष्वेकलोलीभूतेषु कदाचिन्मलान् शीघ्रं क्षपयेत् नाशयेत् । अशुद्ध्या वा रसादीनां कदाचिद्धातून् क्षपयेद् ऊष्मणः क्षपणधर्मत्वात् । शुद्धिश्च निरामलक्षणेन विज्ञायते ।

तच्च 'निरामाणां विपर्यय' इति सूत्रोक्तम् अरुद्धस्रोतस्त्वं सप्राणत्वं शरीरलघुत्वं वातानुलोमनत्वमग्नेः पाटवमित्यादि किञ्चिदुत्पद्यमानमुपलभ्य निश्चीयते। ज्वरोष्मणो मलक्षपणोद्यतत्वमशुद्धिश्च 'स्रोतोरोधबलभ्रंशे'त्यादिना सूत्रोक्तेन सामलक्षणेन विज्ञायते। सामलक्षणमुपलभ्य निश्चीयते धातुक्षपणोद्यतत्वम्। ततो हेतोर्वातादिभिरुत्पन्नः क्रमात् सप्तादिवासरान् दिवसान् मर्यादां कृत्वा मोक्षाय च वधाय च मरणाय तां मर्यादां प्रायोऽनुयाति। रसादीनां शुद्ध्या मलान् क्षपयन् सप्तादिवासरान् मोक्षाय मर्यादामनुयाति। रसादीनां तु सर्वाकारया अशुद्ध्या धातून् क्षपयन् वधाय मर्यादामनुयाति। ज्वरोष्मा वाताधिकः सप्त वासरान्, पित्ताधिको दश, श्लेष्माधिको द्वादश इति क्रमार्थः। **अरुणदत्तस्त्वेवमाह**—"ततः स ज्वरोष्मा मलान् धातून् वा शीघ्रं क्षपयेत्। सर्वाकारमित्यादि। सर्वाकारं निरवशेषं रसादीनां शुद्ध्याशुद्ध्यापि वा क्रमात् सन्ततादयः स्युः। क्रमादिति। रसाश्रितः सन्ततं, रक्ताश्रितः सततमित्येवमादि वक्ष्यमाणप्रकारो वेदितव्यः। तत्र सन्ततो ज्वरो वातपित्तकफैरुत्पन्नः सप्त वा दश वा द्वादश वा वासरान् मर्यादां कृत्वा तां मर्यादां प्रायोऽनुयाति मोक्षाय च वधाय च। प्रायोग्रहणाद् विरम्य पुनरप्येवमनुयाति मोक्षाय च वधाय च। अतिवेगप्रवृत्तश्चेद्वधाय अन्यथा मोक्षायेति बोद्धव्यम्। अथवा क्रमाद्वातपित्तकफैरिति योजयितव्यम्। यथा वाताधिके सप्त वासराः पित्ताधिके दश श्लेष्माधिके द्वादशेति। इत्येवमुक्तप्रकारं सप्तवासरादिस्वरूपं भगवतोऽग्निवेशस्य मतमभिप्रायः॥

**हारीतस्य पुनः स्मृतिः।**
**द्विगुणा सप्तमी यावन्नवम्येकादशी तथा॥ ६२॥**

**एषा त्रिदोषमर्यादा मोक्षाय च वधाय च।**

हारीतस्य पुनः स्मृतिः हारीतः पुनरेवमनुजानाति। द्विगुणा या सप्तमी चतुर्दश दिनानि या तु द्विगुणा नवमी अष्टादश दिनानि या च द्विगुणैकादशी द्वाविंशतिदिवसाः एषा त्रिदोषमर्यादा क्रमात् पूर्ववन्मोक्षाय च वधाय च। वाताधिकः सन्ततज्वरः चतुर्दश दिवसान् मोक्षाय च वधाय च मर्यादामनुयाति। अष्टादश पित्ताधिकः। द्वाविंशतिं श्लेष्माधिकः इति॥

**शुद्ध्यशुद्धौ ज्वरः कालं दीर्घमप्यनुवर्तते ॥ ६३ ॥**

यदा तु रसादीनां मध्ये केषांचित् शुद्धिरशुद्धिश्च केषांचित् तदा सन्ततो ज्वरो न मुञ्चति नापि मारयति केवलं दीर्घकालमनुवर्तते ॥

एवं सन्ततस्य लक्षणमाख्याय सततादीनां निदानं स्वरूपं विषमज्वर-संज्ञानिमित्तं सन्तताद्विशिष्टतां चाह—

**कृशानां व्याधिमुक्तानां मिथ्याहारादिसेविनाम् ।**
**अल्पोऽपि दोषो दूष्यादेर्लब्ध्वान्यतमतो बलम् ॥ ६४ ॥**
**सविपक्षो ज्वरं कुर्याद्विषमं क्षयवृद्धिभाक् ।**

कृशानामित्यादि । ये कृशा व्याधिमुक्ताश्च मिथ्याहारादिसेविनश्च । आदिशब्देन विहारौषधादिपरिग्रहः । ईदृशानां पुंसामल्पोऽपि हीनबलोऽपि दोषो वाताद्यन्यतमो दूष्यादेः प्रागुक्तादन्यतमतो बलं लब्ध्वा पश्चात् सविपक्षः सप्रतिपक्षः सप्रत्यनीकः औषधादिदोषविपरीतदोषसंयुक्त इत्यर्थः । क्षयवृद्धि-भाक् कदाचित् क्षीणः कदाचिद् वृद्धः । विषमं विषमसंज्ञं सततादिचतुष्टय-रूपं ज्वरं कुर्यात् । दूष्यादेरित्यादिशब्दो देशकालादिग्रहणाय । अन्यतमग्रहणं चोपलक्षणार्थम् । कदाचिदेकस्माद् दूष्यात् कदाचिद् दूष्यदेशाभ्यां कदाचिद् दूष्यदेशकालेभ्यो बलं लब्ध्वेत्यादि योज्यम् । 'कृशाना'मित्यादिना 'विषमारम्भ-क्रियाकालोऽनुषङ्गवानि'त्येवमन्तेन ग्रन्थेन सततादीनां चतुर्णां ज्वराणां साधारणं रूपं सन्तताच्च विशिष्टता प्रदर्श्यते । कृशानामिति स्वाभाविकं दौर्बल्यम् । व्याधिमुक्तानामित्यवस्थान्तरकृतं दौर्बल्यम् । मिथ्याहारादिसेविनामित्याहार-विहारकृतं गृहीतम् । **भोजेनाप्युक्तम्** ।

"दुर्बलो ज्वरमुक्तश्च यस्त्वपथ्यं निषेवते ।
अल्पोऽप्यहितसम्भूतो दोषस्तस्याभिवर्धते ॥
विषमोऽल्पश्च वातेन स दोषस्त्वीरितः पुनः ।
कालेष्वनियतः कुर्याज्जन्तूनां विषमज्वरम् ॥
स द्वितीये तृतीये वा चतुर्थे वाह्नि जायते ।
भूयिष्ठं श्लेष्मवाताभ्यां दीर्घकालानुबन्धवान् ॥"

इति। भालुकिनाप्युक्तम्—

"यः स्यादनियतः कालाच्छीतोष्णाभ्यां तथैव च।
वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः॥
स द्वितीये तृतीये वा चतुर्थे वाह्नि जायते।"

इत्यादि। क्षयवृद्धिभा(से? क्त्वे स)विपक्षता हेतुः, सदृशदूष्यादिप्रसादात् कदाचिद् वृद्ध्यन्वितः प्रत्यनीकसान्निध्यात् कदाचित् क्षयान्वित इति। क्षयवृद्धिभागिति ज्वरविशेषणमित्यन्ये॥

सततादीनां चतुर्णां विच्छिन्नसन्तापत्वे कारणमाह—

**दोषः प्रवर्तते तेषां स्वे काले ज्वरयन् बली॥ ६५॥**
**निवर्तते पुनश्चैष प्रत्यनीकबलाबलः।**

दोष इत्यादि। तेषां कृशादीनां दोषो वाताद्यन्यतमः स्वे काले यो यस्यात्मीयः कालो वयोहोरात्रिभुक्तानामन्तमध्यादिलक्षणः, तस्मिन्। बली ज्वरयन् सन्तापमुत्पादयन् प्रवर्तते स्वकर्म दर्शयति। पुनश्चैष सततादेरुत्पादको दोषः प्रत्यनीकबलाबलो निवर्तते॥

क्षीणे दोष इत्यादिना उक्त(वि)शिष्टमन्तरा निवृत्तिं दर्शयति—

**क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते॥ ६६॥**
**लीनत्वात् कार्श्यवैवर्ण्यजाड्यादीनादधाति सः।**

विषमज्वरकारणे दोषे वेगं कृत्वा क्षीणे सति स विषमज्वरः सूक्ष्मो भूत्वा रसादिषु धातुषु एव लीयते सर्वं देहं मुक्त्वा रसादिष्वेव लीनो भवति न पुनर्विनश्यति। लीनत्वाच्च स ज्वरः कार्श्यादीनादधाति करोति नैव स्वास्थ्यम्। सारकृत्तु—"क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते इत्यत्र हेतुरुच्यते लीनत्वादित्यादिना" इत्याह॥

**आसन्नविवृतास्यत्वात् स्रोतसां रसवाहिनाम्॥ ६७॥**
**आशु सर्वस्य वपुषो व्याप्तिर्दोषेण जायते।**
**सन्ततः सततस्तेन**

"आसन्नविवृतास्यत्वादित्यादिना सन्ततस्याविच्छिन्नसन्तापत्वे कारण-मुच्यते सततादीनां विच्छिन्नसन्तापत्वे च" इति **सारकृत्**। इह हि धातु-वहानि स्रोतांस्युक्तानि, तानि च प्रतानसदृशानि क्रमेण मूले मूले स्थूलानि अग्रे अग्रे सूक्ष्माणि। तत्र रसवाहिनां स्रोतसां यस्मान्महानिम्नासन्नत्वं विवृतास्यत्वं स्थूलास्यत्वं च तस्मात् तत्र प्रविष्टेन दोषेण आशु शीघ्रमेव सर्वस्य वपुषो व्याप्ति-र्जायते। दोषेण सर्वदेहावयवेष्वासन्नेभ्यः स्रोतोमुखेभ्यो सर्वस्य वपुषो व्याप्तिर्जायत इत्यर्थः। सर्वदेहव्यापिना दोषेण सन्तताख्यो ज्वरो भवति। तेन कारणेन सन्ततो ज्वरः सततो निरन्तरो भवति॥

**विपरीतो विपर्ययात् ॥ ६८ ॥**

उक्तलक्षणविपर्ययात् सततादिविषमज्वरः सन्ततात् विपरीतः न निरन्तरं ज्वरयति। विपर्ययादिति। दूरदूरतरास्यत्वात् संवृतास्यत्वाच्चेत्यर्थः। रक्तादि-वाहिस्रोतांसि दूरदूरतरास्यानि सूक्ष्मसूक्ष्मतरास्यानि च। तानि गतैर्दोषैश्चिरेण कायस्य व्याप्तिः। तत्रापि निःशेषस्य कायस्य न व्याप्तिः। ततो ज्वरस्य विच्छिन्न-कालत्वमिति। एतदुक्तं भवति—बलवान् दोषो दूष्यादीनां सर्वेषां सदृशानां बलं लब्ध्वा निष्प्रतिपक्षः सन् अविच्छिन्नोष्माणं सन्तताख्यं ज्वरमेकरूपं कुरुते। एतद्वैपरीत्ये विषमज्वरं सततादिकम्। तत्र यदा दूष्यादीनि प्रभूतानि सदृशानि प्राप्नोति न सर्वाणि तदा सततज्वरं करोति। यानि त्वसदृशानि तानि प्रतिपक्षाणि। यदा तु तत ऊनानि सदृशानि प्राप्नोति तदा क्रमेणान्येद्युरादीनि कुरुत इति। एतदुक्तं भवति—प्रभूतो दोषोऽतिस्थूलमुखेषु रसवाहिस्रोतःसु महानिम्ननिकटेषु च यस्माच्छीघ्रं गच्छन् सन्ततज्वरमभिनिर्वर्तयति। अल्पस्तु दोषः सूक्ष्ममुखेषु महानिम्नदूरेषु च रक्तादिमार्गेषु शनैः शनैश्च गच्छन् सततज्वरं कुरुते। ततोऽप्यल्पः सूक्ष्मतरास्येषु दूरदूरतरेषु च गच्छन् अन्येद्युमभिनिर्वर्तयति। ततोऽप्यल्पः सूक्ष्मतमास्येषु दूरतरेषु च गच्छन् अतिमन्दगतिरतिचिरेण गच्छन् तृतीयक-मभिनिर्वर्तयति। ततोऽप्यतिशयेन चतुर्थके वाच्यम्। अत एवं व्याप्तेश्चिरेण दोषस्य वेगात् सन्तापस्य विच्छेदः॥

**विषमो विषमारम्भक्रियाकालोऽनुषङ्गवान्।**

विच्छिन्नसन्तापत्वाद्विषमो नैकरूपः । अतश्च विषमो यतो विषमारम्भ-क्रियाकालः । अनेनैतद्दर्शयति । यथा सन्ततः स्वेन रूपेण दुःसाधः तथा सन्ततादिविपरीतरूपोऽपि विषमोऽनेन रूपेण दुःसाधः । तेन विषम इत्यस्य संज्ञाया द्वयं प्रवृत्तिनिमित्तम् अनेकरूपता कृच्छ्रसाध्यता च । अनेन विषमज्वरस्यानुगताभिधानत्वं स्वरूपं च प्रतिपादितम् । विषमारम्भक्रियाकालो ज्वरो विषम-संज्ञः । विषमः असमः आरम्भः प्रथमा प्रवृत्तिः यस्य स विषमारम्भः । यथा चतुर्थके कफेन हेतुना पूर्वं जङ्घाभ्यां प्रभावं दर्शयेत् । 'शिरसश्चानिलात्पूर्वं प्रभावं दर्शये'दिति विषमारम्भः । विषमा क्रिया दोषस्यौषधस्य वा । दोषस्य (यथा) 'ग्राही पित्तानिलान्मूर्ध्नः' इत्यादि । कश्चिद्दाहकृत् कश्चिच्छीत(कृद्) इत्यादि । औषधस्य यथा चिकित्सिते उक्तं मांसं मेध्यमन्नेन सह सेवित्वोल्लिखेदिति । अत्र विषमत्वं सन्तर्पणम् (अपतर्पणं) च । विषमकालोऽनियम-पूर्वाह्णाद्यागमनकालः । तथाच यः सततादिरेकस्मिन्नहनि पूर्वाह्णे भूतः सोऽन्यस्मिन्नपराह्णेऽपि भवन् दृष्टः इत्येतत् त्रयं विषमसंज्ञाया हेतुः । **अरुणदत्त**स्तु—"मन्द-वेगातिवेगादित्वमारम्भविषमत्वम् । क्रियाविषमत्वं प्रलापाद्यनवस्था अयथाकाल-(प्रवृत्तिः काल)विषमत्व"मित्याह । अनुषङ्गवान् यः स्वल्पेनैव हेतुना निवृत्तः पुनरनुषज्यते । दीर्घकालानुबन्धीति यावत् । अतश्च वैषम्यम् । एतदपि संज्ञा-हेतुः । अतश्च वैषम्यं बलवता दोषेणोत्पन्नोऽपि सन्ततो ज्वरः प्रथमान्येव रसवाहिस्रोतांसि स्थूलमुखानि शीघ्रं प्रविष्टेन भेषजेन शीघ्रमेवोपशाम्यति-सततादिस्तु अल्पदोषोत्पन्नोऽपि रक्तादिवाहिस्रोतांसि दूरसूक्ष्माणि चिरेण चिरतरेण च प्रविशता भेषजेन चिरेणैवोपशाम्यतीति ।

सततादीनां विशेषलक्षणमाह—

**दोषो रक्ताश्रितः प्रायः करोति सततं ज्वरम् ॥ ६९ ॥**

**अहोरात्रस्य स द्विः स्यात्,**

दोष इत्यादि । प्रायो बाहुल्येन रक्ताश्रितो दोषः सततज्वरं करोति । रक्ताश्रय इति वा पाठः । प्रायोग्रहणात् रसाश्रितत्वमपि सूचयति । रक्ताश्रित-त्वस्य सकलज्वरसाधारणत्वाद् विशेषेण रक्ताश्रय इत्यर्थः । एवं सर्वेषु ज्वरेषु

वाच्यम्। **अरुणदत्त**स्त्वाह---रसाश्रयो दोषः सन्ततज्वरं कुर्यादित्युक्तम्। रक्ताश्रयो दोषः प्रायः सततज्वरं कुर्यात्। प्रायोग्रहणात् कदाचित् सन्ततज्वरं कुर्यादिति बोध्यम्" इति। रक्तवाहीनि स्रोतांसि दूराणि संवृतास्यानि च। अत एव सततज्वरः अहोरात्रस्य मध्ये द्विः स्याद् द्वौ वारौ स्यात्। अहश्च रात्रिश्च अहोरात्रः "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे (पा० सू० २-३-६४) इति षष्ठी। रात्रौ द्विरुत्पद्यते अह्नि चेति द्विरुत्पत्तौ नियमः। काले त्वनियमः। उत वा अह्नि सकृद् रात्रौ सकृदुत्पद्यते" इति। **सारकृद**प्याह---"अह्न्येकवारं रात्रावेकवारमिति नायं नियमः। किं तर्हि, कदाचिदह्न्येव वारद्वयं कदाचिद् द्वयोरपि वारद्वय"मिति॥

**सकृदन्येद्युराश्रितः।**

**तस्मिन् मांसवहा नाडीः,**

अन्येद्युर्नाम विषमज्वरः अहोरात्रस्य सकृदेकवारं स्यात्। कदाचिदह्न्येकवारं कदाचिद्रात्रावेकवारमित्युत्पत्तौ नियमः। अहोरात्रे त्वनियमः। तस्मिन्नन्येद्युके सर्वधात्वाश्रयोऽपि दोषो विशेषेण मांसवहा नाडीराश्रितः। रक्तवाहिस्रोतोभ्यो विदूराणि संवृतास्यानि च मांसवाहीनि स्रोतांसि। तेन सततादप्यन्येद्युर्विप्रकृष्टो भवति। ततोऽपि च मेदोवाहीनि स्रोतांसीत्यादि। **अरुणदत्त**स्तु—"मांसवहा नाडीराश्रितो ज्वरस्तस्मिन्नहोरात्रे सकृत् स्यादि"ति॥

**मेदोनाडीस्तृतीयके॥ ७०॥**

**ग्राही पित्तानिलान्मूर्ध्नस्त्रिकस्य कफपित्ततः।**
**सपृष्ठस्यानिलकफात् स चैकाहान्तरः स्मृतः॥ ७१॥**

तृतीयके विषमज्वरे दोषो विशेषेण मेदोनाडीराश्रितः। मेदोनाडीराश्रितो दोषस्तृतीयकं कुरुत इत्यर्थः। स च तृतीयकस्त्रिविधः संसर्गभेदात्। यथा स च तृतीयकाख्यो विषमज्वरः पित्तानिलात् पित्तानिलाभ्यामुत्पन्नो मूर्ध्नो ग्राही मूर्धानं गृह्णन्निव भवति तस्मिन् वेदनां जनयति। तत्र पूर्वमुत्पद्यत इत्यर्थः। तत्र च आगन्तुत्वात्तु दोषस्य वैषम्यम्। कफपित्ताभ्यामधिकाभ्यामुत्पन्नस्त्रिकस्य

---

१. 'रं कदाचिद्रात्रावेक' ग पाठः।

ग्रीवासन्धेर्ग्राही भवति । त्रिकं – തിരെളള്ള്" इति **पाठ्ये** । अनिलकफात्तु वातश्लेष्मभ्यां स ज्वरः पृष्ठस्य ग्राही । "पृष्ठस्य पृष्ठसहितस्य त्रिकस्य" इति **हाटकः** । **तन्त्रान्तरेऽप्युक्तम्**—

"कफपित्तात् त्रिकग्राही पृष्ठग्राही कफानिलात् ।
वातपित्ताच्छिरोग्राहीत्येवं स्यात् त्रिविधो ज्वरः ॥"

इति । सर्वत्र च दोषस्यागन्तुत्वादल्पबलत्वम् । स च तृतीयक एकाहान्तरो भवतीति स्मृतः । एकं दिनं ज्वरयित्वा एकं दिनं विमुच्य पुनरुदेतीत्यर्थः ।

**चतुर्थको मले मेदोमज्जास्थ्यन्यतमस्थिते ।**
**मज्जस्थ एवेत्यपरे प्रभावं स तु दर्शयेत् ॥ ७२ ॥**
**द्विधा कफेन जङ्घाभ्यां स पूर्वं शिरसोऽनिलात् ।**

चतुर्थकस्तु ज्वरो मले दोषे मेदआदीनामन्यतमस्मिन् स्थिते सति भवति । कदाचिन्मेदस्थे अथवा अस्थिस्थे अथवा मज्जस्थे इति । एकं दिनं ज्वरयित्वा पुनः द्व्यहं विमुच्य पुनर्ज्वरयति स चतुर्थकः । स च द्विधा द्विप्रकारो भवति । मेदसि अस्थि्न मज्जनि वा स्थितेन कफेनाधिकेन प्रथमं जङ्घाभ्यां जायते पश्चादन्येभ्योऽङ्गेभ्यः । अनिलात् पूर्वं शिरसो जायते । रोगस्वभावात् पित्तस्यानुद्रेकः । **आगमटीकात्र**–"अत्र च जङ्घे वायोः स्थानम् । शिरः श्लेष्मणः । अतः परस्थानस्थौ वातकफौ चतुर्थकं जनयतः । अत्र पैत्तिकचतुर्थकानुक्तिरसम्भवा"दिति ॥

**अस्थिमज्जोभयगते चतुर्थकविपर्ययः ॥ ७३ ॥**
**त्रिधा**

अस्थि मज्जा च अस्थिमज्जानौ तयोरुभयं तत्र गते दोषे सति चतुर्थकविपर्ययो नाम्ना विषमज्वरो भवति । विपरीतत्वं विपर्ययः । स च त्रिधा त्रिप्रकारः सन्निपातोद्भवत्वेऽपि वातादिभिरधिकैरिति ॥

**द्व्यहं ज्वरयति दिनमेकं तु मुञ्चति ।**

द्व्यहं ज्वरयति द्विधातुस्थितदोषोत्पन्नत्वात् । द्विदिने ज्वरयित्वा दिनमेकं विमुच्य ज्वरयति । अस्य च दोषाश्रयानतिवृत्तेदिनसङ्ख्यानतिक्रमाच्च

उद्देशे चतुर्थकान्तर्भावः। केवलमुभयाश्रितत्वं द्व्यहं ज्वरकरणं च विशेषः। **सारकृद**प्याह—"अनिर्दिष्टस्य चतुर्थकविपर्ययस्य निर्देशः चतुर्थकेऽन्तर्भावात् प्लीहोदरे यकृदुदरवत्" इति। **आगमटीका**त्र—"चतुर्थक आद्यन्ते[1] अभिज्वरयति मध्ये विमुञ्चति अयं च मध्ये ज्वरयति आद्यन्ते विमुञ्चतीति एष विपर्ययः। अस्य चात्रैवावरुद्धत्वाद् न सन्ततादीनां पञ्चत्वहानिरिति। दोषे उभयधातुगते सत्येवं चतुर्थकविपर्ययो नाम विषमज्वरविशेषो भवति। एवं कस्यचिदाशङ्का भवति—एवं मज्जाश्रिते दोषे चतुर्थे दिवसे ज्वरो भवति। एवं शुक्रस्थिते दोषे पञ्चमे दिवसे प्राप्तो न कश्चिद्विषमज्वरो दृष्टः इति। अत्र परिहाररूपेणोक्तं **संग्रहे**—

"अतिलीनस्तु मन्दत्वाद् भवत्यह्नि न पञ्चमे"

इति। अतिलीनः सन् अतिमन्दगतिश्च संस्कारभ्रंशादपचयाच्च दोषो (ज्वरं) नाभिनिर्वर्तयति। अनेनैव षष्ठादिषु शङ्का निरस्ता। मज्जानं यावत् प्राप्तः चतुर्थो यावद्दोषस्य शक्तिर्भवत्यत्र स्वभावो हेतुः। यत्त शुक्रस्थे ज्वरे तमसो दर्शनादि लक्षणमुक्तं **संग्रहे** तच्च शुक्रमेवाधिष्ठाय दोषस्य ज्वरकारणत्वं न धातुव्याप्तिक्रमेणेति। इत्युक्ताः सन्ततादयो ज्वराः। **अरुणदत्त**स्तु—"सन्ततादयः पञ्च विषमज्वरसंज्ञा" इत्याह। उक्तं च **तन्त्रान्तरे**—

"धातुस्थानगतैर्दोषैः जायन्ते विषमज्वराः।
सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ॥"

इत्यादि॥

ननु एषां च सन्ततादीनां एवंरूपता दृष्टा यत् सन्तताद्यन्यतमरूपो भूत्वान्यतमरूपो भवतीति। तथाहि सन्ततज्वरः तत्स्वरूपमुज्झित्वा सतताद्यन्यतमत्वमेति। तथा सततादयोऽपि। अस्य व्यतिरेकस्य को हेतुरिति पृष्ट इदमाह—

**बलाबलेन दोषाणामन्नचेष्टादिजन्मना॥ ७४॥**

**ज्वरः स्यान्मनसस्तद्वत् कर्मणश्च तदा तदा।**
**दोषदूष्यर्त्वहोरात्रप्रभृतीनां बलाज्ज्वरः॥ ७५॥**

---

१. 'न्ते च द्व्यमभि' ग।

**मनसो विषयाणां च कालं तं तं प्रपद्यते ।**

बलाबलेनेत्यादि । दोषाणां वातादीनामन्नचेष्टादिजन्मना आहारविहारादिसम्भूतेन बलाबलेन मनसश्च बलाबलेन पूर्वजन्मकृतस्य च कर्मणो बलाबलेन तदा तदा ज्वरः स्यात् । 'कर्मणां चे'ति वा पाठः । एतदुक्तं भवति । दोषोऽल्पबलः स(त? न्त)ताद्यन्यतमभूमिकास्थोऽन्नाद्यन्यतमस्माद् बलं लब्ध्वा पूर्वां पूर्वतरां वा भूमिकामासादयति । ततो बलवान् दोषोऽन्नाद्यन्यतमजन्मना अबलवत्त्वेन पूर्वां[2] भूमिकामपहाय उत्तरामुत्तरतरां वा भूमिकां गृह्णाति । आदिशब्देन देशकालादीनां ग्रहणम् । दोषादीनां बलेन सततज्वरः सन्ततो भवति । तेषामबलेन सन्ततः सततो भवति । तथा चतुर्थकः सन्ततो भवति । सन्ततश्चतुर्थको भवतीति अत्र सर्वत्र योज्यम् । **अरुणदत्तस्तु**—अन्नचेष्टादिजन्मनामिति दोषविशेषणत्वेन पठति ॥

धातूनित्यादिना ज्वरस्य मोक्षकाललक्षणमाह—

**धातून् प्रक्षोभयन् दोषो मोक्षकाले बलीयते[3] ॥ ७६ ॥**
**ततो नरः श्वसन् स्विद्यन् कूजन् वमति वेष्टते[4] ।**
**वेपते प्रलपत्युष्णैः शीतैश्चाङ्गैर्हतप्रभः ॥ ७७ ॥**
**विसंज्ञो ज्वरवेगार्तः सक्रोध इव वीक्षते ।**
**सदोषशब्दं च शकृद् द्रवं सृजति वेगवत् ॥ ७८ ॥**

सर्वास्मिंश्च ज्वरे ज्वरकारणदोषो मोक्षकाले ज्वरस्य मुक्तिकाले धातून् रसादीन् प्रक्षोभयन् प्रचालयन् बलीयते बलवान् भवति प्रवृद्धवेगो भवति । बलीयतीति वा पाठः । ततो धातुक्षोभादनन्तरं नरो ज्वरी इदं कुरुते । श्वसन् वेगाच्छ्वासं मुञ्चन् स्विद्यन् अतिस्वेदनः कूजन् अव्यक्तशब्दं कुर्वन् । 'कूजन् हौहेति शब्दं कुर्वन्' इत्यरुणदत्तः[5] । पित्तं लालां श्लेष्माणं वा वमति । वेष्टते भूमौ शय्यायां च[6] लुठति । वेपते[7] उच्चैः प्रलपति असम्बन्धं ब्रूते ।

---

१. 'तथा' ग. घ. ङ । २. 'र्वां पूर्वतरां वा भू' इति मुद्रिते इन्दौ । ३. 'विलीयते' इति मुद्रितपाठः । ४. 'चेष्टते' इति मुद्रितपाठः । ५. 'हेत्यादि' । ६. 'च परिलु' । ७. 'कम्पते' ग. घ. ङ ।

उष्णै: कैश्चिच्छीतैः कैश्चिदङ्गैरुपलक्षितः । तुल्यकालमुष्णैः शीतैरङ्गैरिति वेद्यम् । हतप्रभो नष्टकान्तिः । कदाचिद्विसंज्ञश्च भवति । सदोषयुक्तं श्लेष्मादिदोषयुक्तं सशब्दं द्रवं शकृद् वेगवत्सृजति । "अत्र दोषशब्देनामो विवक्षितः" इति **सारकृत्** ।

ज्वरेण मुच्यमानस्य म्रियमाणस्य चोभयोः ।
दृश्यन्ते यानि लिङ्गानि तानि तुल्यानि निर्दिशेत् ॥"

इति **भालुकिः** ।

एवं ज्वरमोक्षणकालमुक्त्वा ज्वरे शान्ते लक्षणमाह—

**देहो लघुर्व्यपगतक्लममोहतापः**
**पाको मुखे करणसौष्ठवमव्यथत्वम् ।**
**स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा**
**कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ ७९ ॥**

देह इत्यादि । देहलघुत्वादीनि विगतज्वरस्य पुरुषस्य लक्षणानि चिह्नानि । मुखे पाकः ईषद्व्रणसम्भवः । 'पाकः शोषः' इति **सारकृत्** । करणानामिन्द्रियाणां चक्षुरादीनां सौष्ठवं पाटवम् । प्रकृतियोगि मनः स्वभावसम्पन्नं यादृग् यस्य चित्तं सत्त्वबहुलं रजोबहुलं तमोबहुलं वा आसीत् तादृक् तस्य सम्पद्यत इत्यर्थः ॥

[1]इति हृदयबोधिकायामष्टाङ्गहृदयदीपिकायां
निदानस्थाने द्वितीयोऽध्यायः ॥

---

१. 'इति निदाने द्वितीयोऽध्यायः' ग. घ. ङ पाठः ।

# तृतीयोऽध्यायः ।

ज्वरसन्तापाद्रक्तपित्तमित्युक्तम् । अतः क्षिप्रकारित्वाच्च ज्वरानन्तर्येण रक्तपित्तनिर्णयायाध्यायारम्भः । अथवा रसादिधातुगतैर्दोषैः सन्ततादयो ज्वरा भवन्तीत्युक्तम् । पित्तदुष्टेन रक्तेनेदं पित्तरक्तमिति धातुदूषणत्वमत्र सम्बन्धः । अथवा ज्वरस्येव रक्तपित्तस्यापि पित्तप्राधान्याद् ज्वरानन्तरं रक्तपित्तमाह । ज्वरस्य पित्तप्राधान्यं पुनः 'ज्वरे चैवातिसंवृद्धे पूर्वं पित्तमुपक्रमेदि'ति वचनाद् ज्ञायते । अस्मिंश्च परस्ताद् वक्ष्यते । (यथा—)

"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना ।
तस्मात्पित्तविरुद्धानि त्यजेत्पित्ताधिकेऽधिकम् ॥"

इति । अथवा—

"विनोष्मणा ज्वरो नास्ति न च पित्तं विनापि सः ।
अतो ज्वरनिदानोर्ध्वमुच्यते रक्तपित्तकम् ॥"

**अथातो रक्तपित्तकासनिदानं व्याख्यास्यामः ।**

रक्तं च पित्तं च दूष्यदूष्यकभावेन वर्तेते यस्मिन् व्याधौ तत् रक्तपित्तं तस्य निदानं रक्तपित्तनिदानम् । शेषं पूर्ववत् । रक्तपित्तवच्च कासस्यापि यतः क्षिप्रकारित्वं ततः सोऽस्मिन्नध्याये निर्णीयते ॥

**भृशोष्णतीक्ष्णकट्वम्ललवणादिविदाहिभिः ।**
**कोद्रवोद्दालकैश्चान्नैस्तद्युक्तैरतिसेवितैः ॥ १ ॥**
**कुपितं पित्तलैः पित्तं द्रवं रक्तं च मूर्च्छिते ।**
**ते मिथस्तुल्यरूपत्वमागम्य व्याप्नुतस्तनुम् ॥ २ ॥**

भृशोष्णेत्यादि । भृशशब्दस्य उष्णादिभिर्विदाह्यन्तैः सम्बन्धः । आदिशब्देन क्षारादयो गृह्यन्ते । भृशोष्णतीक्ष्णादिभिरन्नैश्च कोद्रवोद्दालकैश्च तद्युक्तैः भृशोष्णतीक्ष्णादियुक्तैः अतिसेवितैः, पित्तलैश्च द्रव्यैरतिसेवितैः कुपितं स्वभावतो द्रवं पित्तं तेन दुष्टं रक्तं च, ते कुपिते द्वे अपि पित्तरक्ते मूर्च्छिते

मिश्रिते एकत्वं प्राप्ते मिथः परस्परं तुल्यरूपत्वं सवर्णतामागम्य तनुं शरीरं व्याप्नुतः । अरुणदत्तस्तु—"भृशोष्णतीक्ष्णकट्वम्ललवणप्रकारैर्विदाहिभिः" इत्याह । कोद्रवोद्दालकान्नैस्तद्युक्तैरेव रक्तपित्तं जायते । तदुक्तं **संग्रहे**—

"कोद्रवो हन्त्यसृक्पित्तं करोत्येव विदाहिभिः"

इति । "कोद्रवोद्दालकैश्चान्यैः" इति वा पाठः । कोद्रवोद्दालकप्रकारैरन्यैश्च तद्युक्तैरित्यर्थः ।

पित्तं रक्तस्येत्यादिना रक्तपित्तसंज्ञायाः कारणमुच्यते—

**पित्तं रक्तस्य विकृतेः संसर्गाद् दूषणादपि ।**
**गन्धवर्णानुवृत्तेश्च रक्तेन व्यपदिश्यते ॥ ३ ॥**

पित्तं रक्तस्य विकृतेः हेतोः । असृजः किट्टं पित्तमिति वचनात् पित्तस्य रक्तविकारत्वम् । तथा रक्तस्य संसर्गान्मिश्रीभावात् । तयोराश्रयाश्रयिभावाद् मिश्रणम् । तथा पित्तेन रक्तस्य दूषणाद् रक्तस्य गन्धवर्णानुवृत्तेश्च रक्तेन व्यपदिश्यते । एतैर्विशेषणैः रक्तसंबन्धेन रक्तपित्तमित्युच्यते । तत्र (रक्त?)पि(त्त?त्तं) (रक्त)विकारत्वेन वा (पित्त? रक्त) मिश्रीभावाद् वा (दूषणाद् वा) रक्तगन्धाद्यनुवृत्तेर्वा सर्वमत्र सम्भवतीत्यर्थः ॥

इदं चापरं रक्तपित्तव्यपदेशे कारणमित्याह—

**प्रभवत्यसृजः स्थानात् प्लीहतो यकृतश्च तत् ।**

प्रभवतीत्यादि । तद् रक्तपित्तं यस्मादसृजः स्थानाद् रक्तधरायाः कलायाः सिराभ्यः प्रभवति प्लीहतो यकृतश्च प्रभवति उत्पद्यते । एतेषां तत्प्रभवयोग्यत्वमित्यर्थः । तानि च विशेषेण रक्तस्थानानि ।

अथास्य पूर्वरूपाण्याह—

**शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः ॥ ४ ॥**

**छर्दिश्छर्दितबैभत्स्यं कासः श्वासो भ्रमः क्लमः ।**
**लोहलोहितमत्स्यामगन्धास्यत्वं स्वरक्षयः ॥ ५ ॥**

**रक्तहारिद्रहरितवर्णता नयनादिषु ।**
**नीललोहितपीतानां वर्णानामविवेचनम् ॥ ६ ॥**
**स्वप्ने तद्वर्णदर्शित्वं भवत्यस्मिन् भविष्यति ।**

शिरोगुरुत्वमित्यादि । अस्मिन् रक्तपित्ते भविष्यति उत्पित्सौ एतानि शिरोगुरुत्वादीनि भवन्ति पूर्वरूपाणीत्यर्थः । धूमको धूमस्योद्गिरणम् । अम्लकः अम्लस्योद्गिरणम् । अथवा शिरोग्रीवाकण्ठतालुषु धूमायनं धूमकः । "सान्तर्दाहो हृदयशूलः, साम्लोद्गारोऽम्लकः, धूमको धूममध्ये स्थित इव प्रतिभासः" इत्यरुणदत्तः । छर्दितबैभत्स्यं छर्दितस्य वान्तस्य छर्दिते वा बैभत्स्यं जुगुप्सा । दर्शनादिभिरुद्वेगकर्तृत्वात् । लोहादिगन्धास्यत्वं आत्मनो मुखे लोहादिगन्धबाहुल्यप्रतीतिः । लोहः कंसादिः । लोहितं रक्तम् । आमगन्धः प्रसिद्धः, ([1]കീഴാൾനാററം?) । 'अजीर्णगन्धः' इत्यरुणदत्तः । नयनादिषु नयननखमुखत्वङ्मूत्रपुरीषादिषु रक्तादिवर्णता । हरितत्वं शाड्वलवर्णः । नीलादिवर्णानामविवेचनमव्यक्तता । स्वप्ने तद्वर्णदर्शित्वं रक्तादिदर्शित्वम् ॥

तत् त्रिविधम् उर्ध्वगमधोगमुभयायनं च । तत्रोर्ध्वगमाह—

**ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥ ७ ॥**
**कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्तते ।**

ऊर्ध्वमित्यादि । तच्च रक्तपित्तं कारणविशेषाद् (यदा) ऊर्ध्वतः प्रवर्तते तदा नासादिभिः, अधः प्रवर्तते मेढ्रादिभिः, अतिकुपितं समस्तै रोमकूपैश्च प्रवर्तते । च शब्दान्नासादिभिर्मेढ्रादिभिश्च पूर्वोक्तैः । एतच्चोभयायनम् ॥

तस्य साध्यादिभेदमाह—

**ऊर्ध्वं साध्यं कफाद्यस्मात् तद्विरेचनसाधनम् ॥ ८ ॥**
**बह्वौषधं च पित्तस्य विरेको हि वरौषधम् ।**
**अनुबन्धी कफो यश्च तत्र तस्यापि शुद्धिकृत् ॥ ९ ॥**
**कषायाः स्वादवोऽप्यस्य विशुद्धश्लेष्मणो हिताः ।**
**किमु तिक्ताः कषाया वा ये निसर्गात् कफापहाः ॥ १० ॥**

---

१. 'लुधूमा' ग. घ. ङ । २. കീഴാൾനാററം घ. ङ ।

ऊर्ध्वं साध्यमित्यादि । ऊर्ध्वमूर्ध्वगं रक्तपित्तं साध्यम् । तत्र हेतुमाह— यस्मात् तदूर्ध्वगं रक्तपित्तं कफाद्धेतोर्भवति तस्माद्विरेचनसाधनम् । रोगस्वभाव-विशेषाद्दोषस्य शोधनेन विपरीतनयनायोर्ध्वगे विरेचनविधानम् । कफोद्भवत्वात् तदूर्ध्वगं बह्वौषधं च । अरुणदत्तस्त्वेवमाह—"कफाद्धेतोः बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गात् कर्णनासानेत्रास्येभ्य ऊर्ध्वं प्रवर्तते । तदूर्ध्वं रक्तपित्तं साध्यं यस्मात् तस्मात् तदूर्ध्वगं रक्तपित्तं विरेचनसाधनं बह्वौषधं च तस्मात् तत् साध्यं भवति ।

"शोधनं प्रतिलोमं च रक्तपित्ते भिषग्जितम्"

इति वक्ष्यति । ऊर्ध्वगस्य विरेचनमधोगस्य वमनमिति[1] प्रतिलोमत्वम् । तस्मा-दूर्ध्वं विरेचनसाधनम् । साध्यते अनेनेति साधनम् । विरेचनं साधनं यस्य तद्विरेचनसाधनम् । विरेचनसाध्यमित्यर्थः । पित्तस्य विरेको हि वरौषधमिति । यदूर्ध्वगे विरेचनं तत् पित्तस्य तावद् वरौषधम् । यश्च कफस्तत्र रक्तपित्तेऽनु-बन्धी अनुबलत्वेन स्थितः तस्यापि शुद्धिकृद् विरेकः । अरुणोऽप्याह--"हि यस्मात्पित्तस्य विरेकः प्रधानौषधमतश्च विरेचनं साधनम् । ननु च कफसंसर्गा-दूर्ध्वमित्युक्तं कफस्य वमनेन शान्तिरिति विरेचनेन कथं तस्य शुद्धिरित्यत आह--अनुबन्धीत्यादि । तत्र ऊर्ध्वगे यश्चानुबन्धी कफः तस्यापि विरेकः शुद्धि-कृत् । अत्र पित्तस्य प्राधान्यं तच्च पित्तं योगावहं संसृष्टस्य श्लेष्मणोऽपि स्वगुण-मेव करोति । अतः श्लेष्मणोऽपि शुद्धिकृदिति । लङ्घनं च अल्पतरकफान्वये ऊर्ध्वगे हितम् । आगमोऽपि--"तस्मिन्नेव कफान्वयमल्पं वीक्ष्य लङ्घनमपि हित"मिति । 'कषायाः स्वादवः' इत्यादिना बह्वौषधमुच्यते । रक्तपित्ते च विशुद्धश्लेष्मणोऽस्य पुरुषस्य मधुराः कषायाः काथाः कफादविपरीता अपि प्रधानदोषापेक्षया हिताः । कषायग्रहणमुपलक्षणम् । स्वरसकल्पनादयोऽपि ग्राह्याः । तिक्ताः कषायाः स्वरसादयोऽपि हिताः इति किमु हिता एवेत्यर्थः । ये तिक्ताः कषाया वा निसर्गात् स्वभावादेव कफापहाः । उक्तं च—

"तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ।"

इति । एवं च ऊर्ध्वगं बह्वौषधं विशिष्टानां कफघ्नानामपि पथ्यत्वादतस्तदूर्ध्वगं

---

1. 'मिति यदूर्ध्वगे प्रति' घ. ङ ।

साध्यम् । 'कषायाः काथादयः' इतीन्दुः । वक्ष्यति च—

"रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पना ।
पञ्चधैवं कषायाणाम्"

इति ॥

**अधो याप्यं चलाद्यस्मात् तत् प्रच्छर्दनसाधनम् ।**
**अल्पौषधं च पित्तस्य वमनं न वरौषधम् ॥ ११ ॥**

**अनुबन्धी चलो यश्च शान्तयेऽपि न तस्य तत् ।**
**कषायाश्च हितास्तस्य मधुरा एव केवलम् ॥ १२ ॥**

अधो याप्यमित्यादि । यत्त्वधः प्रसृतं रक्तपित्तं तद् याप्यम् । यस्मात् तदधोगं चलाद् वाताद् उत्पद्यते इत्यध्याहार्यम् । बहुवातस्य वातसंसर्गादधो मूत्रपुरीषमार्गाभ्यां प्रवर्तते, तस्मात् तत् प्रच्छर्दनसाधनं स्वल्पौषधं च, अतो याप्यमित्यर्थः । कथमित्याह–पित्तस्य वमनं न वरौषधम् । वायोर्वस्तिः पित्तस्य विरेचनं श्लेष्मणो वमनमिति क्रमः । अत्र प्रच्छर्दनसाधनं प्रतिलोमक्रियासाध्यत्वात् । यस्मादयं रोगः पित्तप्रधानः तस्य पित्तस्य विरेचनवद् वमनं न वरौषधम् । रोगस्वभावाद् दोषस्योर्ध्वनयनाय यद्वमनं तत् पित्तस्य अनौषधं दोषस्वभावात् । यश्च तत्र अनुबन्धी वायुरुक्तः तस्यापि वमनं शान्तये न भवति । तस्माद् वमनेन यापनमेव भवतीत्यभिप्रायः । स्वल्पौषधत्वे द्वितीयं हेतुमाह—तस्य अधोगतस्य रक्तपित्तस्य केवलं मधुरा एव कषायाः स्वरसादयो हिताः वातपित्तहितत्वात् । न तिक्ता हिताः न च कषायाः । तेषां वातकोपकारणत्वात् । अतोऽधोगं रक्तपित्तं याप्यं सततं क्रियानुषङ्गाद् यापनीयम् । क्रियानिमित्ते विकरोतीति याप्यम् । उक्तं च—

"एवं याप्यं विजानीयात् क्रिया धारयते हि यत् ।
क्रियायां तु निवृत्तायां सद्य एवावसीदति ॥" इति ॥

**कफमारुतसंसृष्टमसाध्यमुभयायनम् ।**
**अशक्यप्रातिलोम्यत्वादभावादौषधस्य च ॥ १३ ॥**

यत्तूभयायनमुभयमार्गं युगपदूर्ध्वमधस्ताच्च प्रवृत्तं[1] कफमारुतसंसृष्टं कफमारुतसंसर्गाद् भवति तदसाध्यम्। कस्मात्। अशक्यप्रातिलोम्यत्वाद् औषधस्याभावाच्च। यत्तदशक्यप्रातिलोम्यं[2] दोषस्य विपरीतनयनं तत्र न सम्भवतीत्यर्थः। वमनमूर्ध्वप्रवृत्तत्वादपथ्यम् अधःप्रवृत्तत्वाच्च विरेचनम्। तथाविधं चौषधं न विद्यते यत्तत्र सर्वथा पथ्यम्। **अरुणदत्तो**ऽप्याह–"प्रतिलोमक्रियासाध्यत्वाद् युगपत्प्रवृत्तौ ऊर्ध्वगस्य प्रयुक्तं विरेचनमधोगस्य न हितम्। अधोगस्य प्रयुक्तं वमनमूर्ध्वगस्य न हितमित्यशक्यप्रातिलोम्यत्वम्।" इति।

'नहीं'त्यादिनाशक्यप्रतिलोम्यत्वे युक्तिरुच्यते—

**नहि संशोधनं किञ्चिदस्त्यस्य प्रतिलोमगम्।**
**शोधनं प्रतिलोमं च रक्तपित्ते भिषग्जितम्॥ १४॥**

अस्य उभयमार्गप्रवृत्तस्य किञ्चिदपि प्रतिलोमगं संशोधनं नास्ति। ऊर्ध्वगस्य वमनं न हितम् अधोगस्य विरेचनमित्युभयोर्विरोधादिति। शोधनं प्रतिलोमं च रक्तपित्ते भिषग्जितमित्युक्तम्। तस्मादेवं संशोधने विरोधो भवति॥

एवमेवोपशमनमित्यादिना औषधाभावं दर्शयति—

**एवमेवोपशमनं सर्वशो नास्य विद्यते।**
**संसृष्टेषु हि दोषेषु सर्वजिच्छमनं हितम्॥ १५॥**

एवमेवोक्तप्रकारेण उपशमनमपि सर्वशः सर्वप्रकारेण अस्य न विद्यते। परस्परविरोधादिति भावः। ऊर्ध्वगस्य कृतमौषधमधोगस्य नौषधम् अधोगस्य कृतमौषधमूर्ध्वगस्य इत्यौषधाभावत्वम्। **हाटके**नाप्युक्तं—"ऊर्ध्वभागिकस्य श्लेष्मणो हितौ कषायतिक्तौ तावधोभागिकस्याभिवृद्धये। अधोभागिकस्य वायोर्हितं मधुरं तदूर्ध्वगस्याभिवृद्धये" इति। एवमेव शोधनवदुपशमनं सर्वथा पथ्यं नास्य विद्यते। संसृष्टेष्वित्यादिना औषधाभावे युक्तिरुच्यते–(हि) यस्मात् संसृष्टेषु त्रिषु दोषेषु सर्वदोषजिच्छमनं यत् तद् हितम्। तच्च सन्तर्पणापतर्पणरूपत्वाद् द्विविधम्। तत्र सन्तर्पणं बृंहणमधोमार्गप्रवृत्तरक्तपित्तदोषापेक्षया

---

१. 'त्तं तत्कफ' ख. घ. ङ।  २ 'यस्मात्तदशक्य' ख. घ. ङ।

मारुतशान्त्यर्थमुपयुज्यते । तदा तस्य शान्तिं कुर्वदूर्ध्वरक्तपित्तवृद्धिकारणं कफं वर्धयति । अथवापतर्पणमूर्ध्वगरक्तपित्तापेक्षया कफशान्तये प्रयुज्यते । तदा तच्छान्तिं कुर्वदधोगरक्तपित्तकारणं वायुं कोपयति । न चोभयात्मकं नृसिंह-रूपवच्छमनमस्ति यत् प्रयोजितमुभयायनस्य शमनाय स्यात् । निदाने चिकित्सित-वचनं चिकित्साद्वारेणापि (साध्या)साध्यविज्ञानार्थम् । प्रतिलोमक्रियाया अशक्यत्वाद् औषधाभावाच्च उभयायनमसाध्यम् । सर्वदोषजित्संशोधनविधानाद् बह्वौषधत्वाच्च ऊर्ध्वगं साध्यम् । वमनसाध्यत्वादल्पौषधत्वाच्च अधोगं याप्यम् इति ॥

कथमत्र रक्तपित्ते दोषसंसर्गलक्षणं विज्ञायत इत्याह—

**तत्र दोषानुगमनं सिरास्र इव लक्षयेत् ।**

**उपद्रवांश्च विकृतिज्ञानतः,**

तत्रेत्यादि । तत्र रक्तपित्ते दोषानुगमनं वाताद्यनुबन्धं सिरास्र इव सिरामोक्षरक्ते इव सिराव्यधनविधौ 'वाताच्छ्यावारुणं रूक्ष'मित्यादिग्रन्थनिर्दिष्टेन लक्षणेन लक्षयेत् । तत्र पृथग् दोषैः साध्यम् । संसर्गैर्याप्यम् । सन्निपातेना-साध्यम् । उक्तं च—

"ऊर्ध्वं पृथक् च तत् साध्यं द्वन्द्वं याप्यमधश्च यत् ।
सर्वदोषं द्विमार्गं च दुश्चिकित्स्यतमं मतम् ॥"

इति । उपद्रवांश्च विकृतिज्ञानतो विकृतिविज्ञानीयात् लक्षयेदिति योज्यम् । 'रक्तपित्तं भृशं रक्त'मित्यादिग्रन्थनिर्दिष्टेन लक्षणेनेत्यर्थः । चरकेऽप्युपद्रवा उक्ताः—"उपद्रवाः खलु दौर्बल्यारोचकाविपाकश्वासकासज्वरातिसारशोफशोष-पाण्डुरोगस्वरसादाश्च" इति । इत्युक्तं रक्तपित्तम् ॥

**तेषु चाधिकम् ॥ १६ ॥**

**आशुकारी यतः कासस्तमेवाथ प्रवक्ष्यति ।**

तेषु च रक्तपित्तोपद्रवेषु मध्ये यतः कासाख्य उपद्रवोऽधिकमाशुकारी क्षिप्रं मारयति अतः तमेवानन्तरं निदानादिभिः प्रवक्ष्यति तन्त्रकृत् । आशु-

१. 'षसंशो' ख. घ. ङ ।

कारीत्यनेन स्वयं तन्त्रकृत् कासस्य निर्णयप्रसङ्गं दर्शयति । तमेवातः प्रवक्ष्यति इति वा पाठः ॥

**पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयात् ॥ १७ ॥**

पञ्च कासाः स्मृता उक्ताः मुनिभिरिति शेषः । वातपित्तश्लेष्मक्षतक्षयादिति । वातेन पित्तेन श्लेष्मणा क्षतेन उरःक्षतेन क्षयेण राजयक्ष्मणा चेति । 'क्षतक्षयैः' इति वा पाठः ॥

**क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ।**

सर्वे कासा उपेक्षिताः क्रियाविशेषैरनुपक्रान्ताः सन्तः क्षयाय मरणाय भवन्ति । क्षयाय शोषाय इत्यन्ये । उक्तेन वातादिक्रमेण उत्तरोत्तरं यथोत्तरं बलिनश्च भवन्ति । वातकासाद् बलवान् पित्तकास इत्यादि यावदुरक्षतकासाद् राजयक्ष्मकास इति । (क्षय)कासश्च अत्र प्रधानत्वान्निर्णीयते न राजयक्ष्मा । ननु यदि कासाः पञ्चैव तत्कथं भणिष्यति--

"केवलानिलजं कासं स्नेहैरादावुपाचरेत्"

इति । न ह्यन्यदोषयुक्तो वातिकः कासोऽभिहितः अपि तु त्रिभिरेव दोषैः पृथगेवोक्ताः कासाः । तथा--

"पित्तकासे तु सकफे वमनं सर्पिषा हितम्"

इति । तथा--

"पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।
युञ्ज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैः ।"

इत्यादि । तथा अस्मिन्नेवाध्यायेऽध्येष्यते--"साध्या दोषैः पृथक् त्रयः । मिश्रा याप्या द्वयात्" इति । तदेतत् पूर्वापरव्याहतमिव । अत्रोच्यते--कासाः पञ्चैव वक्ष्यमाणसंप्राप्त्या जायन्ते वस्तुस्वाभाव्यात् । अनन्तरं वातिके कासे कदाचिदाहारविहारवशात् कदाचित् पित्तेनानुबन्धः कदाचित् श्लेष्मणा जायते । पित्तकासे तथैवाहारविहारवशात् कदाचिद्वातेनानुबन्धः कदाचित् कफेनानुबन्धः । कफकासेऽपि तद्वद् आहारविहारवशात् कदाचिद्वातेनानुबन्धः कदाचित् पित्तेन इति न किञ्चिदत्र पूर्वापरव्याहतत्वम् ॥

---

१. 'भिः । वात' ग ।

वातेत्यादिना कासस्य आदितो निदानमुक्तम् । 'तेषां भविष्यता'मित्यादिना पूर्वरूपमुच्यते—

**तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः ॥ १८ ॥**

**शूकपूर्णाभकण्ठत्वं,**

तेषां कासानां भविष्यतां रूपं पूर्वरूपं कण्ठे कण्डूरित्यादि । शूकपूर्णाभकण्ठत्वं शूकैः पूर्णे यथा कण्ठस्य बाधा तथा प्रतिभाति ॥

तत्रेत्यादिना सर्वकासानां संप्राप्तिं दर्शयति—

**तत्राधो विहतोऽनिलः ।**
**ऊर्ध्वं प्रवृत्तः प्राप्योरस्तस्मिन् कण्ठे च संसजन् ॥ १९ ॥**
**शिरःस्रोतांसि संपूर्य ततोऽङ्गान्युत्क्षिपन्निव ।**
**क्षिपन्निवाक्षिणी पृष्ठमुरः पार्श्वे च पीडयन् ॥ २० ॥**
**प्रवर्तते स वक्त्रेण भिन्नकांस्योपमध्वनिः ।**

तत्र कासेषु अनिलो वायुरपानाख्यः कषायविज्जलादिभिः **संग्रहोक्तैः** क्रुद्धः सन् अधो विहतः प्रसरन् येनकेनचिद्विरोधादधः प्रतिहतः निरुद्धाधोगमनमार्गः ऊर्ध्वं प्रवृत्तः उरः प्राप्य तस्मिन्नुरसि कण्ठे च संसजन् सङ्गं कुर्वन् शिरःस्रोतांसि शिरोगताः सिराः सम्पूर्य तत ऊर्ध्वमङ्गान्युत्क्षिपन्निव वर्तमानः । **अरुणदत्तस्तु**–"तत ऊर्ध्वं शिरःस्रोतांसि सम्पूर्य अङ्गानि च उत्क्षिपन्निव" इत्यन्वयं वदति । अक्षिणी च क्षिपन्निव बहिःशरीरात् प्रेरयन्निव पातयन्निवेत्यर्थः । पृष्ठमुरः पार्श्वे च पीडयन् सोऽनिलः वक्त्रेण प्रवर्तते । भिन्नकांस्योपमध्वनिर्भूत्वा प्रवर्तत इत्यर्थः । क(र्शनात्? सनात्) कासः । तच्च कसनं भिन्नकांस्यवद् भवति । कांस्यं – "വെള്ളോട്" । **संग्रहेऽप्युक्तम्**–

"कषायविज्जलासात्म्यकट्वम्लमधुरोषणैः[1] ।
रूक्षशीतगुरुस्निग्धोत्क्लेदिपर्युषिताशनैः ॥
धारणोदीरणायासराज्यहःस्वप्नजागरैः ।
अन्यैश्च तद्विधैर्धातुक्षयावरणकारिभिः ॥

---

१. 'लवणोष' मुद्रिते ।

क्रुद्धः प्रतिहतोऽपाने यदापानः प्रपद्यते ।
ऊर्ध्वं रसस्य स स्थाने तिष्ठन्नुरसि पीड्यते ॥
उदानेन सजंस्तत्र कण्ठे चानुप्रपूर्य च ।
वाहिनीर्गलमूर्धस्थाः ततोऽङ्गान्युत्क्षिपन्निव ॥
क्षिपन्निवाक्षिणी पृष्ठमुरः पार्श्वे च पीडयन् ।
विवृतत्वान्मुखेनैति भिन्नकांस्योपमध्वनिः ॥
यस्मात्तस्मात्स वर्णौजोबलमांसक्षयावहः ।"

इति । अत्र एवमुक्तमिन्दुना--"कषायविज्जलेत्यादिना सम्प्राप्तिविशेषवशेन रूपविशेष उच्यते । सम्प्राप्तेः कारणपरायत्तत्वात् कषायादिकीर्तनम् । विज्जलः क्लिन्नपिच्छिलप्रायो गुणविशेषः । रक्तमांसादीनां क्लेदमावहति यत् तदुत्क्लेदि । धारणोदीरणे वातादिवेगानाम् । अन्यैश्च एवंप्रकारैः कैश्चिद्धातुक्षयकारिभिः कैश्चित् स्रोतसामावरणकारिभिः वायुः क्रुद्धः सन् यदा अपानप्रतिहतत्वादिना रूपेण कासाख्यो भवति तदा वर्णादिक्षयावहो भवति । सर्वत्रैव वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन वा । एवं च अपानो वायुः सजातीय एव अपाने कारणविशेषवशाच्च प्रतिहतः सन्नूर्ध्वमुरसि प्रवर्तते । स च अपान ऊर्ध्वं प्रवृत्तः सन् रसस्थाने उरसि स्थितिशीलः सन् तत्स्थानेन उदानाख्येन पीड्यते । पीडितश्च तत्र रसस्थाने उरसि कण्ठे च सजन् सक्तिमाप्नुवन् । कण्ठं – ७।७।७४ । गलस्था मूर्धस्थाश्च वाहिनीः सिराः अनुप्रपूर्य । अङ्गान्युत्क्षिपन्निवेत्यादि सुबोधम् ।" इति ॥

'हेतुभेदा'दित्यादिना वातिककारणस्यापि कासस्य संप्राप्त्यैकरूपत्वेऽपि रुक्छब्दयोरनेकत्वे कारणमाह—

**हेतुभेदात् प्रतीघातभेदो वायोः सरंहसः ॥ २१ ॥**
**यद्रुजाशब्दवैषम्यं कासानां जायते ततः ।**

हेतुभेदादित्यादि । सारकृदपि--"काससंप्राप्तावेकरूपायां सत्यां कथमनेकरूपः कासध्वनिर्जायत इत्याह हेतुभेदादित्यादिना" इत्याह । वायोः

१. 'युः कुपितः सजा', २. 'मुपरि' मुद्रिते ।

सरंहसः सवेगस्य हेतुभेदात् कारणनानात्वात् प्रतीघातभेदः प्रत्याघातविशेषः इति यद्यस्मात् ततो हेतोः कासानां रुजाशब्दयोर्वैषम्यं जायते । प्रतीघातं ७s७ृ°। तेनैतदुक्तं भवति—वायुः स्वभावेन सवेगः । स च वेगो नानाविध-कारणवशादूनाधिको भवति। यश्च तस्य प्रतिहन्ता स कारणविशेषवशाद् नानाविधे देहस्थाने नानाविधं प्रतिघातं करोति। स एव च प्रतिघातो रुक्च्छब्दयोर्निमित्तं, ततो रुक्च्छब्दवैषम्यं जायत इति ॥

पञ्चानां कासानां वातादिक्रमेण लक्षणमाह—

**कुपितो वातलैर्वातः शुष्कोरःकण्ठवक्त्रताम् ॥ २२ ॥**
**हृत्पार्श्वोरःशिरःशूलं मोहक्षोभस्वरक्षयान् ।**
**करोति शुष्कं कासं च महावेगरुजास्वनम् ॥ २३ ॥**
**सोऽङ्गहर्षी कफं शुष्कं कृच्छ्रान्मुक्त्वाऽल्पतां व्रजेत् ।**

कुपित इत्यादि। सर्वेषां कासानामेका संप्राप्तिः कारणविशेषाद्दोषानुबन्धः। वातलैः कुपितो वायुः शुष्कोरःकण्ठवक्त्रतादिलक्षणयुक्तं कासं करोति। वातलैरित्यत्र अत्यन्तवातलैरिति बोध्यं वातिके कासे, अन्येष्वपि कासेषु वातलैः कुपितस्य वातस्य अनुज्ञानात् । कुपितं वातमन्तरेण हि कासजन्मासम्भवः । शुष्कं विगतश्लेष्माणं कासं, स कासोऽङ्गहर्षी अङ्गहर्षवान् । शुष्कमल्पं कफं कृच्छ्रान्मुक्त्वा पश्चादल्पतां व्रजेत् । शुष्कं निर्द्रवं कफं निष्ठीव्य अल्पत्वं यायादित्यर्थः । "सोऽङ्गहर्षी स वायुः अङ्गं हर्षयति" इति **हाटकः** ॥

**पित्तात् पीताक्षिकफता तिक्तास्यत्वं ज्वरो भ्रमः ॥ २४ ॥**
**पित्तासृग्वमनं तृष्णा वैस्वर्यं धूमको मदः ।**
**प्रततं कासवेगेन ज्योतिषामिव दर्शनम् ॥ २५ ॥**

पित्तात् पित्तप्रकोपात् कासे पीताक्षिता पीतकफता च भवति । "पित्तात् पित्तकासादि"ति **हाटकः** । भ्रमोऽक्षिभ्रमः । पित्तासृग्वमनं [1]पित्तासृजोर्वमनम् । धूमको धूममध्ये स्थित इव प्रतिभासः । मदो व्याधिविशेषः । पीतमद्यस्येव

१. 'पित्तसंसृष्टस्यासृजो वमनम्' ख. ग. घ. ङ ।

परवशता यस्मिन् स मदः । प्रततं सन्ततं वर्तमानेन कासवेगेन चक्षुषो ज्योतिषां ताराणामिव दर्शनं भवति ॥

**कफादुरोऽल्परुङ् मूर्धहृदयं स्तिमितं गुरु ।**
**कण्ठोपलेपः सदनं पीनसच्छर्द्यरोचकाः ॥ २६ ॥**

**रोमहर्षो घनस्निग्धश्वेतश्लेष्मप्रवर्तनम् ।**

कफात् कासे, कफात् कफकासादिति वा । उरः अल्परुक् । मूर्धहृदयं स्तिमितं स्तब्धं गुरु च भवति । कण्ठोपलेपादयश्च भवन्ति । घनस्निग्धातिश्वेतस्य श्लेष्मणः प्रवर्तनम् ॥

इदानीं क्षतकासमाह—

**युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम् ॥ २७ ॥**
**उरस्यन्तः क्षते वायुः पित्तेनानुगतो बली ।**
**कुपितः कुरुते कासं कफं तेन सशोणितम् ॥ २८ ॥**
**पीतं श्यावं च शुष्कं च ग्रथितं कुथितं बहु ।**
**ष्ठीवेत् कण्ठेन रुजता विभिन्नेनेव चोरसा ॥ २९ ॥**
**सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।**
**पर्वभेदज्वरश्वासतृष्णावैस्वर्यकम्पवान् ॥ ३० ॥**
**पारावत इवाकूजन् पार्श्वशूली ततोऽस्य च ।**
**क्रमाद्वीर्यं रुचिः पक्तिर्बलं वर्णश्च हीयते ॥ ३१ ॥**
**क्षीणस्य सासृङ्मूत्रत्वं स्याच्च पृष्ठकटीग्रहः ।**

युद्धाद्यैरित्यादि । युद्धाद्यैस्तैस्तैः साहसैः दुष्करकर्मभिः अयथाबलं बलमतिक्रम्य सेवितैः बलाधिकतया सेवितैर्वायुः कुपितः तैरेव साहसैरुरस्यन्तः क्षतेऽभिहते भिन्नास्थिसङ्घाते सति । किंभूतो वायुः । पित्तेनानुगतो बली च । कासं कुरुत इति संबन्धः । युद्धं बाहुयुद्धम् । आद्यशब्देन धनुराकर्षणोर्ध्वारोहणधावनप्लवनादयो गृह्यन्ते । तेन कासेन पुरुषः सशोणितं कफं शोणितत्वादियुक्तं कफं बहु ष्ठीवेत् । पित्तानुगतत्वेन रक्तदूषणं वायुः करोति ।

अतः सशोणितम् । कुथितं क्लिन्नं, शवगन्धमिति केचित् । रुजता कण्ठेनोपलक्षितः । उरसा च विभिन्नेनेव वर्तमानेन, तीक्ष्णाभिः सूचीभिः तुद्यमानेनेव शूलिना चोरसा उपलक्षितः । किंभूतः पुरुषः—पर्वभेदादियुक्तः । पारावत इवाकूजन् अव्यक्तशब्दं कुर्वन् पार्श्वशूली च भवति । ततोऽनन्तरमस्य च कासिनः क्रमाद्वीर्यादयो हीयन्ते । पक्ता जठराग्निः । 'पक्ति'रिति वा पाठः । एवं च क्षीणस्य धातुक्षीणस्य सरक्तमूत्रत्वं पृष्ठकटीग्रहश्च स्यादिति क्षतकासलक्षणम् ॥

अधुना क्षयकासं दर्शयति—

**वायुप्रधानाः कुपिता धातवो राजयक्ष्मिणः ॥ ३२ ॥**

**कुर्वन्ति यक्ष्मायतनैः कासं ष्ठीवेत् कफं ततः ।**
**पूतिपूयोपमं पीतं विस्रं हरितलोहितम् ॥ ३३ ॥**

**लुप्येते इव पार्श्वे च हृदयं पततीव च ।**
**अकस्मादुष्णशीतेच्छा बह्वशित्वं बलक्षयः ॥ ३४ ॥**

**स्निग्धप्रसन्नवक्त्रत्वं श्रीमद्दर्शननेत्रता ।**
**ततोऽस्य क्षयरूपाणि सर्वाण्याविर्भवन्ति च ॥ ३५ ॥**

वाय्वित्यादि । राजयक्ष्मिणः राजयक्ष्मवतः पुरुषस्य वायुप्रधानाः कुपिताः धातवो दोषा वातादयो यक्ष्मायतनैः[1] वक्ष्यमाणैः कासं कुर्वन्ति । इन्दुस्तु 'यक्ष्मायतनैः कुपिताः' इत्यन्वयं वदति । आयतनं निदानम् । उक्तं च—'निमित्तहेत्वायतने'त्यादि । ततोऽनन्तरं पुरुषः पूतिपूयोपमत्वादियुक्तं कफं ष्ठीवेत् । अरुणदत्तस्त्वेवमाह—"क्षीणस्येत्यादिना क्षयकास उच्यते । क्षीणस्य यक्ष्मिणो वायुप्रधानाः कुपिता धातवो यक्ष्मायतनैः यक्ष्महेतुदोषवहाभिर्नाडीभिः कासं कुर्वन्ति । तेन सासृङ्मूत्रत्वं पृष्ठकटीग्रहश्च स्यात् । ततः पूतिपूयोपमत्वादियुक्तं कफं ष्ठीवेत्" इति । पार्श्वे लुप्येते इव च्छिद्येते इव, स्थानात् प्रच्याव्येते इव । हृदयं च पततीव भवति । अकस्माद्विना कारणेन उष्णशीतेच्छा कदा-

१. 'नैः राजयक्ष्मनिदानैर्वक्ष्य' ख. घ. ङ.

चिदुष्णेच्छा कदाचिच्छीतेच्छा । श्रीमद्दर्शननेत्रत्वं अन्यैरातुरस्य नेत्रदर्शने तयोः श्रीमत्ता दृश्यते । ततोऽनन्तरमस्य क्षयकासिनः सर्वाणि क्षयरूपाणि पीनसश्वासादीनि आविर्भवन्ति ॥

**इत्येष क्षयजः कासः क्षीणानां देहनाशनः ।**
**याप्यो वा बलिनां तद्वत् क्षतजोऽभिनवौ तु तौ ॥ ३६ ॥**
**सिद्ध्येतामपि सानाथ्यात्,**

इति एवंलक्षणोपेतः एष क्षयजः कासः क्षीणानां कृशानां देहनाशनः असाध्य इत्यर्थः । बलिनां याप्यो वा देहनाशनो वेति वाशब्दार्थः । तद्वत् क्षयकासवत् क्षतजः क्षीणानां देहनाशनो बलिनां याप्यो वा । तावभिनवौ नवोत्थितौ उत्पत्तावेवोपक्रान्तौ बलिनां सानाथ्यात् सिद्ध्येतामपि । न केवलमसाध्यौ याप्यावित्यपिशब्देन द्योत्यते । सानाथ्यं सनाथत्वम् । वैद्यादिचतुष्पादसम्पत्तिः चिकित्सासम्पत्तिरित्यर्थः ॥

शेषाणामपि कासानां साध्ययाप्यविभागं निरूपयति—

**साध्या दोषैः पृथक् त्रयः ।**
**मिश्रा याप्या द्वयात् सर्वे जरसा स्थविरस्य च ॥ ३७ ॥**

साध्या इत्यादि । तेषां च कासानां मध्ये पृथग्दोषैरुद्भूतास्त्रयः कासाः साध्याः । मिश्रा ये पुनरुत्तरकालमाहारविहारादिना मिश्रलक्षणा दोषद्वयाद्धेतोः सम्पन्ना न स्वतन्त्रसम्प्राप्त्या सञ्जाताः ते याप्याः । सन्निपातकासोऽचिकित्स्यत्वान्नोपदिष्टः । इन्दुनाप्युक्तं–"द्वयात् संसर्गाद् ये कासाः ते मिश्राः, यथास्वं मिश्रलक्षणा भवन्ति ते याप्याः" इति । **अरुणदत्तस्तु**–"मिश्राः सर्वदोषजाः द्वयाद् दोषद्वयादुद्भूताश्च याप्याः" इत्याह । **सारकृदपि**–"दोषत्रयाद्ये मिश्रलक्षणाः तेऽपि याप्या इति द्वयग्रहणात् प्रतिपादयति" इत्याह । सर्वे च कासा ये साध्या उक्ताः ते जरसा हेतुभूतया स्थविरस्योत्पन्नाः याप्याः । "दोषौषधाक्षमत्वाज्जरया हेतुभूतया याप्याः" इतीन्दुः । **अरुणदत्तस्तु**–"वलीपलितादियुक्तस्य स्थविरस्य च वयोवृद्धस्य च याप्याः" इत्याह ॥

कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदाः ।
भवन्त्युपेक्षया यस्मात् तस्मात् तं त्वरया जयेत् ॥ ३८ ॥

यस्मादुपेक्षया कासस्योपेक्षया कासाद् रोगबलादेव श्वासादयो भवन्ति तस्मात् तं कासं सर्वं सर्वस्य सर्वदा त्वरया शीघ्रमेव जयेत् । 'उपेक्षितादि'ति वा पाठः । आदिशब्देन क्षयनिदानोक्तपीनसादयो गृह्यन्ते ॥

इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने तृतीयोऽध्यायः ॥



# चतुर्थोऽध्यायः ।

कासादुपेक्षया श्वासो भवति । तथानन्तरमुक्तं--'कासाच्छ्वासक्षयच्छर्दि' इत्यादि । तस्माच्छ्वासनिदानारम्भो युक्तः । श्वासेन सहैकीकृत्य हिध्मायाः कथने तन्त्रकृत् कारणं वक्ष्यति 'श्वासैकहेतुप्राग्रूप' इत्यादिना । इन्दुरप्याह--"कासोपेक्षया श्वासस्य (तद्भा? सम्भ)वात् तदेकरूपत्वाच्च हिध्मायास्तयोर्निर्णयाय एकाध्यायारम्भः' इति । अरुणदत्तस्त्वाह--"अधः प्रतिहतो वायुरूर्ध्वं प्रवृत्तः श्वासस्यापि कारणमिति कारणैक्यात् कासादुपेक्षिताच्छ्वासो भवतीत्युक्तत्वात् 'कासवृद्ध्या भवेच्छ्वासः' इति वचनाच्च कासानन्तरं श्वासोऽभिधीयते । हिध्मापि हेतुप्राग्रूपसङ्ख्यादिभिः श्वासेन तुल्येति श्वासानन्तरं हिध्मा च समारभ्यते इति सम्बन्धः" इति ।

**अथातः श्वासहिध्मानिदानं व्याख्यास्यामः ।**

अथात इत्यादि पूर्ववत् ।

**कासवृद्ध्या भवेच्छ्वासः पूर्वैर्वा दोषकोपनैः ।**
**आमातिसारवमथुविषपाण्डुज्वरैरपि ॥ १ ॥**
**रजोधूमानिलैर्मर्मघातादतिहिमाम्बुना ।**
**क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पञ्चमः ॥ २ ॥**

कासेत्यादि । कासवृद्ध्या श्वासो भवेत् । वृद्धोऽधिकीभूतः कास एव श्वासस्य कारणमित्यर्थः । रोगस्य रोगः कारणं भवतीत्युक्तं प्राक् । अथवा पूर्वैर्दोषकोपनैः कासस्य हेतुत्वेनोक्तैः श्वासो भवति । तानि च कषायविज्जलासात्म्यादीनि संग्रहोक्तानि । अथवा पूर्वाणि दोषकोपनानि सर्वरोगनिदानपठितानि तिक्तोषणादिकट्वम्लादिस्वाद्वम्लादिवर्गास्त्रयः । तैः यथासम्भवमामादिभिरपि श्वासो भवत्यतिहिमाम्ब्वन्तैः । रजोभिर्भवाद् मर्मघाताद् हृदयादिमर्माभिघातात् । अतिहिमाम्बुना स्नानादिभिः सेवितेन । स च श्वासः क्षुद्रादित्वेन पञ्चविधो भवेत् । क्षुद्रादीनि श्वासस्य रूपभेदात् पञ्च नामानि ।

---

१. 'वादनिलवेगाभिभवान्मर्म' ख. घ. ङ.

'कफोपरुद्धे' त्यादिना श्वासस्य पञ्चविधस्यापि सम्प्राप्तिमाह—

**कफोपरुद्धगमनः पवनो विष्वगास्थितः ।**
**प्राणोदकान्नवाहीनि दुष्टः स्रोतांसि दूषयन् ॥ ३ ॥**
**उरःस्थः कुरुते श्वासमामाशयसमुद्भवम् ।**

स्वहेतुभिः दुष्टः कुपितः सन् पवनः वायुः कफेन च कारणविशेषादुपरुद्धगमनः स्थगितमार्गः विष्वगास्थितः नाडीभिः समन्ताद् देहं व्याप्य स्थितः कफोपरोधात् सर्वत्र गन्तुमशक्तः प्राणादिवाहीनि स्रोतांसि दूषयन् । प्राणशब्देन प्राणवायुरुच्यते । उरःस्थः कफोपरोधादूर्ध्वं गन्तुमशक्तः । विष्वगास्थितः इत्यनेनैवोरःस्थत्वे लब्धे पुनरुरःस्थग्रहणं प्रकर्षार्थम् । अतिशयेनोरसि स्थितः श्वासं कुरुत इत्यर्थः । किम्भूतं श्वासम्—आमाशयसमुद्भवम् । पूर्वमामाशयादेव श्वास उत्पद्यत इत्यर्थः । शास्त्रकारश्च 'कफोपरुद्धगमनः' इत्यादिप्रकारां सम्प्राप्तिं दर्शयन् यच्चौषधं वातजित्पाचनदीपनं तदत्र शस्तमिति द्योतयति । एवं सर्वरोगाणामपि सम्प्राप्त्यनुरूपमौषधं रोगोपशान्त्यै । तथाहि—"आमाशयस्थो हत्वाग्नि"मित्यादि ॥

**प्राग्रूपं तस्य हृत्पार्श्वशूलं प्राणविलोमता ॥ ४ ॥**
**आनाहः शङ्खभेदश्च,**

तस्य पञ्चविधस्य श्वासस्य पूर्वरूपं हृच्छूलपार्श्वशूलादिकम् । प्राणविलोमता प्राणवायोर्विपरीतगमनं तच्च कार्याद् ज्ञायते । **अरुणदत्तो**ऽप्याह—'प्राणवायोर्विलोमता स्वगुणहानिः । अन्तरन्नप्रवेशादि तस्य कर्म । तस्य अन्यथाभावो विलोमता' इति । आनाहः उदरस्याध्मानम् । शङ्खभेदश्च भिद्येते इव शङ्खौ भवतः ॥

तत्रेत्यादिना क्षुद्रादिक्रमेण श्वासानां लक्षणमुच्यते—

**तत्रायासातिभोजनैः ।**
**प्रेरितः प्रेरयेत् क्षुद्रं स्वयंसंशमनं मरुत् ॥ ५ ॥**

तत्र तेषु श्वासेषु मध्ये आयासातिभोजनैः प्रेरितः प्रकोपितो मरुत् क्षुद्रं क्षुद्रकनामानं स्वयंसंशमनं श्वासं प्रेरयेत् । करोतीत्यर्थः । वेगं कृत्वा स्वयं

शाम्यतीति स्वयंसंशमनः । अरुणदत्तस्तु—"स्वयमेव संशमनं भवती"त्यन्वयं वदति । अचिरकालावस्थायित्वात् स्वयंसंशमनादल्पबलत्वाच्च क्षुद्रसंज्ञोऽयम् ॥

इदानीं तमकस्य लक्षणमाह----

प्रतिलोमं सिरा गच्छन्नुदीर्य पवनः कफम् ।
परिगृह्य शिरो ग्रीवामुरः पार्श्वे च पीडयन् ॥ ६ ॥

कासं घुर्घुरकं मोहमरुचिं पीनसं तृषम् ।
करोति तीव्रवेगं च श्वासं प्राणोपतापिनम् ॥ ७ ॥

प्रताम्योत्तम्य वेगेन निष्ठ्यूतान्ते क्षणं सुखी ।
कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमृच्छति ॥ ८ ॥

उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्तिमान् ।
विशुष्कास्यो मुहुःश्वासी काङ्क्षत्युष्णं सवेपथुः ॥ ९ ॥

मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्धते ।
स याप्यस्तमकः साध्यो नवो वा बलिनो भवेत् ॥ १० ॥

प्रतिलोममित्यादि । पवनः प्रतिलोमं विपरीतं कृत्वा सिराः गच्छन् तेन गमनेन कफमुदीर्य शिरो ग्रीवां च परिगृह्य समन्ताद् गृहीत्वा । शिरोग्रीवमित्येकवद्भावेन नपुंसकलिङ्गं वा । पार्श्वमुरश्च पीडयन् कासादिकं करोति । घुर्घुरकम् अनुकरणशब्दरूपमेतत् । घुरुघुरु इत्येवंभूतं शब्दमित्यर्थः । കുറുകുറുക്കം । पीनसं प्रतिश्यायम् । तीव्रवेगं प्राणवायूपतापिनं श्वासं च करोति । अरुणदत्तस्त्वन्यथा वदति—"पवनः उदीर्य प्रकुप्य प्रतिलोमसिरा ऊर्ध्वगाः सिराः गच्छन् कफमामाशयस्थं परिगृह्य शिरो ग्रीवामुरः पार्श्वे चेत्यादीन्यङ्गानि पीडयन् कासादिकं करोति । प्राणोपतापो बलभ्रंशः तद्वन्तं श्वासं च" इति । तस्य च तथाविधस्य श्वासस्य वेगेन पुरुषः प्रताम्येद् ग्लान्यावसीदेद्, दुःखी सम्पद्यत इत्यर्थः । श्लेष्मणा रुद्धमार्गत्वादिति शेषः । निष्ठ्यूतान्ते क्षणं सुखी भवति । कफं तलोद्भूतं निष्ठीव्य तदन्ते क्षणं सुखमृच्छति । स च शय्यायां शयानः कृच्छ्राच्छ्वसिति दुःखेन श्वासं मुञ्चति । निषण्णो भित्त्या-

दावुपविष्टः स्वास्थ्यमृच्छति। उच्छ्रिताक्षः ऊर्ध्वं श्रिताक्षो भवति। स्विद्यता ललाटेनोपलक्षितः। स्विन्नललाटो भवतीत्यर्थः। मुहुः पुनःपुनः श्वासो यस्य स मुहुःश्वासी। सवेपथुः कम्पितशरीरः। स च श्वासो मेघादिभिः श्लेष्मलैर्गुलादिभिश्च वर्धते। मेघशब्देनोभयं गृह्यते मेघोन्नमनं वर्षाख्यः कालः (च)। तेन मेघेन वर्धते[1] वर्षाख्येन कालेन च। शीतशब्देनापि शीतलक्षणो हेमन्तः शिशिराख्यः कालः शीतगुणमाहारौषधादिकं च गृह्यते। **अरुणदत्तस्तु**—"मेघसंबन्धेन शीतैरम्बुसम्बन्धेन च शीतैः प्राचो दिश अगच्छद्भिर्वातैः श्लेष्मलैश्च द्रव्यैश्चोपयुक्तैर्वर्धते" इत्याह। स एवम्भूतः श्वासो याप्यो भवेद् नाम्ना च तमकः। अथवा बलिनः पुरुषस्य नवः सन् साध्यो भवेत्॥

**ज्वरमूर्च्छायुतः शीतैः शाम्येत् प्रतमकस्तु सः।**

स तमको ज्वरमूर्च्छायुतो यदा शीतैराहारैर्विहारैश्च शमं याति तदा प्रतमकसंज्ञो भवति। प्रतमकः तमकभेद एवेति संख्याधिक्यं नास्ति। तमक एव ज्वरमूर्च्छायुतश्चेत् प्रतमकाख्यः॥



अथ छिन्नं लक्षयति—

**छिन्नाच्छ्वसिति विच्छिन्न मर्मच्छेदरुजार्दितः॥ ११॥**
**सस्वेदमूर्च्छः सानाहो वस्तिदाहनिरोधवान्।**
**अधोदृग्विप्लुताक्षश्च मुह्यन् रक्तैकलोचनः॥ १२॥**
**शुष्कास्यः प्रलपन् दीनो नष्टच्छायो विचेतनः।**

छिन्नात् छिन्नाख्यात् श्वासाद् नरो विच्छिन्नं श्वसिति। श्वासवेगमध्ये यथा विच्छेदो भवति तथा श्वसिति न निरन्तरम्। मर्मच्छेदरुजार्दितः हृदयादिमर्मणां छेदे यथा रुजा भवति तद्वद् रुजयार्दितः पीडितः। "मर्मच्छेदरूपया रुजयार्दितः" इतीन्दुः। सानाह उदरानाहवान्। वस्तिदाहनिरोधवान् वस्तिदाहवान् वस्तिनिरोधो मूत्रनिरोधस्तद्वांश्च भवति। अधोदृग् अधोगतनयनः ऊर्ध्वविक्षणे अशक्त इत्यर्थः। विप्लुताक्षः एकत्र अनवस्थिताक्षः रक्तैकलोचनः

---

१. 'ते तदुपलक्षितेन वर्षा' ग.। २. 'णमौषधाहारविहारादिकं च' ख, घ, ङ.

केवलरक्तवर्णलोचनः । प्रलपन् असम्बन्धवचनः । दीनः अपटुचेष्टः । नष्टच्छायः नष्टतेजाः । विचेतनः कृत्याकृत्यमूढः ॥

महदाख्यं श्वासं लक्षयति--

**महता महता दीनो नादेन श्वसिति क्रथन् ॥ १३ ॥**

**उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम् ।**

**प्रणष्टज्ञानविज्ञानो विभ्रान्तनयनाननः ॥ १४ ॥**

**वक्षः समाक्षिपन् बद्धमूत्रवर्चा विशीर्णवाक् ।**

**शुष्ककण्ठो मुहुर्मुह्यन् कर्णकण्ठशिरोतिरुक् ॥ १५ ॥**

महतेत्यादि । महदाख्येन तु श्वासेनार्तो महता नादेन श्वसिति । क्रथन् श्वसिति । क्रथनं नासाशब्दः । ൽൽൽ इति पाठ्ये । 'क्रथ नासाशब्दे' इति धातुः । "अन्तःकण्ठे श्लेष्मणा सहोद्भूतः शब्दः क्रथन"मित्यरुणदत्तः । कणन् इति केचित् । उद्धूयमानः उत्कम्प्यमानः । तथा मत्तर्षभ इव अनिशमनवरतं संरब्धः । प्रणष्टज्ञानविज्ञानः । ज्ञानं चेतना विज्ञानं विचारः । विभ्रान्तनयनो विभ्रान्ताननश्च । आननस्य विभ्रान्तिः चलनादिचेष्टाविशेषः ॥

ऊर्ध्वलक्षणमाह--

**दीर्घमूर्ध्वं श्वसित्यूर्ध्वान्न च प्रत्याहरत्यधः ।**

**श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः ॥ १६ ॥**

**ऊर्ध्वदृग्वीक्षते भ्रान्तमक्षिणी परितः क्षिपन् ।**

**मर्मसु च्छिद्यमानेषु परिदेवी निरुद्धवाक् ॥ १७ ॥**

ऊर्ध्वाद् ऊर्ध्वाख्यात् श्वासाद् ऊर्ध्वं दीर्घं श्वसिति । ऊर्ध्वं श्वासं दीर्घं मुञ्चति, न च श्वासमधः प्रत्याहरति । मुक्तं श्वासं पुनरधः प्रवेशयितुं न शक्नोतीत्यर्थः । श्लेष्मणा आवृतमुखानि स्रोतांसि यस्य स तथोक्तः । श्लेष्मणा आवृतं मुखं स्रोतांसि च यस्येति वा । क्रुद्धेन गन्धवहेन वायुना अर्दितः पीडितः । भ्रान्तं यथा तथा अक्षिणी परितः क्षिपन् ऊर्ध्वदृग् वीक्षते । मर्मसु प्राणायतनेषु छिद्यमानेषु इव सत्सु कदाचित् परिदेवी दीनस्वनः कदाचिन्निरुद्धवाग् भवति ॥

**एते सिद्ध्येयुरव्यक्ता व्यक्ताः प्राणहरा ध्रुवम् ।**

एते सर्वे श्वासा अव्यक्ताः अपरिपूर्णत्वादस्फुटलक्षणाः अल्पवेगाः सन्तः सिद्धयेयुः । चिकित्स्यमानाः साध्या भवेयुः । व्यक्ताः स्फुटलक्षणाः पुनस्ते ध्रुवमवश्यं प्राणहराः असाध्या एवेत्यर्थः । इत्युक्ताः श्वासाः ॥

अनन्तरं हिध्मानां लक्षणमाह—

**श्वासैकहेतुप्राग्रूपसंख्याप्रकृतिसंश्रयाः ॥ १८ ॥**

**हिध्मा भक्तोद्भवा क्षुद्रा यमला महतीति च ।**

**गम्भीरा च,**

श्वासैकहेत्वित्यादि । अत्र एकशब्दः तुल्यपर्यायः । श्वासेनैकं तुल्यं हेत्वादि यस्याः[1] सा तथोक्ता । श्वासानां तुल्यहेत्वादिमती हिध्मा । तत्र हेतवः कासवृद्धिः पूर्वोक्ता दोषकोपना आमातिसारादयश्च । श्वासानां प्राग्रूपं हृत्पार्श्वमित्यादि, संख्या च श्वासाः पञ्च हिध्मा अपि पञ्च, प्रकृतिरासन्नकारणं कफोपरुद्धगमन इत्यादिविशेषणविशिष्टः पवनः । तादृगेव पवनो हिध्मानां प्रकृतिः । "संख्याप्रकृतिः संख्यास्वरूप"मितीन्दुः । संश्रयः आश्रयः, यमधिष्ठाय सम्भवति, उद्भवस्थानमित्यर्थः, आमाशयसमुद्भवेत्यर्थः । प्रायिकत्वं चास्य बोद्धव्यं जत्रुमूलादप्युत्पत्तेः क्षुद्रायाः । हिक्काशब्दस्य पर्यायो हिध्माशब्दः । भक्तोद्भवादीनि पञ्च हिध्माविशेषनामानि । भक्तोद्भवामाह—

**मरुत् तत्र त्वरयायुक्तिसेवितैः ॥ १९ ॥**

**रूक्षतीक्ष्णखरासात्म्यैरन्नपानैः प्रपीडितः ।**

**करोति हिध्मामरुजां मन्दशब्दां क्षवानुगाम् ॥ २० ॥**

**शमं सात्म्यान्नपानेन या प्रयाति च सान्नजा ।**

मरुदित्यादि । तत्र हिध्मासु मध्ये अन्नजां हिध्मां एवंप्रकारां मरुद् वायुः करोति । किम्भूतः, वैपरीत्येन रूक्षादिगुणैरन्नपानैः त्वरया क्रममनपेक्ष्य अयुक्त्या सेवितैः प्रपीडितः यथावन्निरुद्धगमनः सन् वायुः हिध्मामरुजां पीडारहितां मन्दशब्दां क्षवानुगां क्षवानुबद्धां च करोति । या पश्चात् सात्म्यान्न-

1. 'यस्यां सा' क. ङ ।

पानेन शमं याति च सा हिध्मा अन्नजा भक्तोद्भवेत्युच्यते । अन्नपानैरिति हेतुनिर्देशः । अरुजामित्यादिना लक्षणनिर्देशः । शमं सात्म्येत्यादिना उपशयनिर्देशः ॥

**आयासात् पवनः क्षुद्रः क्षुद्रां हिध्मां प्रवर्तयेत् ॥ २१ ॥**

**जत्रुमूलप्रविसृतामल्पवेगां मृदुं च सा ।**
**वृद्धिमायास्यतो याति भुक्तमात्रे च मार्दवम् ॥ २२ ॥**

आयासाद्धेतोः क्रुद्धः पवनः व्यायामादिना कुपितो वायुः क्षुद्रां क्षुद्राख्यां हिध्मां प्रवर्तयेत् । किम्भूताम्—जत्रुमूलप्रविसृतां जत्रुमूलोद्भवाम् । अल्पवेगां मृदुं च नातिरुजाकरीम् । सा हिध्मा आयास्यतः आयासं कुर्वतः व्यायामादिकं कुर्वतो वृद्धिं याति, भुक्तमात्रे च मार्दवं याति ॥

यमलां व्याचष्टे—

**चिरेण यमलैर्वेगैराहारे या प्रवर्तते ।**
**परिणामोन्मुखे वृद्धिं परिणामे च गच्छति ॥ २३ ॥**

**कम्पयन्ती शिरोग्रीवमाध्मातस्यातितृष्यतः ।**
**प्रलापच्छर्द्यतीसारनेत्रविप्लुतजृम्भिणः ॥ २४ ॥**

**यमला वेगिनी हिध्मा परिणामवती च सा ।**

चिरेणेत्यादि । या हिध्मा आहारे परिणामोन्मुखे पाकोन्मुखे यमलैः युग्मैः वेगैः मुहुर्मुहुरुद्भूतैः चिरेण चिरकालं स्थित्वा प्रवर्तते चिरेण । द्वाभ्यां वेगाभ्यां भवति । वृद्धिं परिणामे च गच्छति । परिणते चाहारे शिरोग्रीवं कम्पयन्ती आध्मानादिमतः पुरुषस्य वृद्धिं याति । नेत्रविप्लुतिः नेत्रयोरनवस्थितत्वम् । सा यमला नाम हिध्मा । तस्यास्तु वेगिनी परिणामवती चेति नामद्वयम् । वेगिनी वेगवती नाम । परिणामवती वेगेन परिणमत्येव न शान्तिं यातीत्यर्थः । अरुणदत्तस्त्वाह—"आहारे परिणामोन्मुखे परिणामे च वृद्धिं याति । आहारे पाकोन्मुखे पच्यमानावस्थां च प्राप्ते वृद्धिं गच्छतीत्यर्थः ।" इति ॥

महाहिध्मां व्याचिख्यासुराह—

ध्वस्तभ्रूशङ्खयुग्मस्य सास्रविप्लुतचक्षुषः ॥ २५ ॥
स्तम्भयन्ती तनुं वाचं स्मृतिं संज्ञां च मुष्णती ।
रुन्धन्ती मार्गमन्नस्य कुर्वती मर्मघट्टनम् ॥ २६ ॥
पृष्ठतो नमनं शोषं महाहिध्मा प्रवर्तते ।
महामूला महाशब्दा महावेगा महाबला ॥ २७ ॥

ध्वस्तेत्यादि । ध्वस्तभ्रूशङ्खयुग्मादियुक्तस्य पुरुषस्य वाक्तनुस्तम्भादिकं कुर्वती महाहिध्मा प्रवर्तते । सा च महामूलत्वादिरूपा । ध्वस्ते स्थानात् परिपतिते इव भ्रूयुग्मशङ्खयुग्मे यस्य तस्य । साश्रुणी विप्लुते चले चक्षुषी यस्य तस्य । स्थानाद् बहिर्गमनं वा विप्लुतिः । "विप्लुतेऽनिबद्धे इव चक्षुषी" इतीन्दुः । तनुं शरीरं स्तम्भयन्ती निश्चलां कुर्वती वाचं च स्तम्भयन्ती स्मृतिं संज्ञां च मुष्णती नाशयन्ती अन्नस्य मार्गं रुन्धती मर्मघट्टनं हृदयादिमर्मणां घट्टनमिव रुजं कुर्वती पृष्ठतो नमनं वक्षसो बहिर्निःसरणं बाह्यायाममिव कुर्वती शरीरस्य शोषं च कुर्वती महद् मूलम् आमाशयो यस्याः सैवम् । तस्मिन् प्रथमोत्पन्ना तत्र बहुव्यापारवती दृश्यत इत्यर्थः । "महामूला आरम्भे एव महती" इत्यरुणदत्तः । अस्या महामूलत्वादिमत्त्वान्महतीति संज्ञेति यावत् ॥

गम्भीरामाह—

पक्वाशयाद्वा नाभेर्वा पूर्ववद् या प्रवर्तते ।
तद्रूपा सा मुहुः कुर्याज्जृम्भामङ्गप्रसारणम् ॥ २८ ॥
गम्भीरेणानुनादेन गम्भीरा,

पक्वाशयेत्यादि । पक्वाशयाद्वा नाभेर्वा पूर्ववद् या प्रवर्तते । पूर्ववदिति महतीवत् । ध्वस्तभ्रूयुग्मादिमतः तनुस्तम्भादिकं कुर्वती चेत्यर्थः । तद्रूपा महाहिध्मारूपा महामूलत्वादिरूपेत्यर्थः । सा जृम्भामङ्गप्रसारणं च मुहुर्मुहुर्वेगेषु कुर्यात् । गम्भीरेणानुनादेन हिक्कानन्तरमुद्भूतेन लक्षिता शब्देन सा गम्भीरा नाम हिध्मा । गम्भीराया महाहिध्मात इदमधिकं लक्षणं जृम्भा अङ्गप्रसारणं गम्भीरनादश्च । इत्युक्ताः पञ्च हिध्माः ॥

---

१. 'स्तब्ध' इति मुद्रिते । २. 'साश्रु' इति व्याख्यानुसारी पाठः स्यात् ।

तासु साधयेत् ।

आद्ये द्वे वर्जयेदन्त्ये सर्वलिङ्गां च वेगिनीम् ॥ २९ ॥

सर्वाश्च सञ्चितामस्य स्थविरस्य व्यवायिनः ।

व्याधिभिः क्षीणदेहस्य भक्तच्छेदक्षतस्य वा ॥ ३० ॥

तासु हिध्मासु मध्ये आद्ये द्वे भक्तोद्भवां क्षुद्रां च साधयेत् । ते साध्ये इत्यर्थः । अन्त्ये द्वे महतीगम्भीराख्ये वर्जयेत् । ते असाध्ये इत्यर्थः । सर्वलिङ्गां च वेगिनीं वर्जयेत् । वेगिनी यमला च यथोक्तसम्पूर्णलक्षणयुक्ता सती असाध्या । "सर्वलिङ्गां सर्वदोषलिङ्गोपेता"मित्यरुणदत्तः । सर्वाश्च हिध्माः सञ्चितामादियुक्तस्य पुरुषस्य उत्पन्ना वर्जयेत् । सञ्चितामस्य आमस्य उपर्युपरि अशनेन सञ्चित आमो यस्य तस्य । चिरकालसम्भूतामस्येत्यर्थः । स्थविरस्य वृद्धस्य । व्यवायिनः व्यवायशीलस्य स्त्रीसेवनशीलस्य । व्याधिभिः अन्यैरामयैः क्षीणदेहस्य । भक्तच्छेदक्षतस्य वा भक्तच्छेदेन आहारविच्छेदेन क्षतः क्षीणः दुर्बल इत्यर्थः तस्य । अथवा भक्तसहितशल्यच्छेदेन क्षतमहास्रोतसो वा ॥

हिध्माश्वासयोः सर्वरोगातिशायित्वं दर्शयितुमाह—

सर्वेऽपि रोगा नाशाय न त्वेवं शीघ्रकारिणः ।

हिध्माश्वासौ यथा तौ हि मृत्युकाले कृतालयौ ॥ ३१ ॥

सर्वेऽपीत्यादि । सर्वेऽपि रोगा नाशाय भवन्ति । न केवलं हिध्माश्वासावेव । ते च रोगा एवं शीघ्रकारिणो न भवन्ति । अन्ये रोगा नैवं व्यापादयन्ति । यथा हिध्माश्वासौ शीघ्रकारिणौ । यस्मात् तौ मृत्युकाले मरणकाले एव कृतालयौ कृतसन्निधानौ अवश्यंभाविनावित्यर्थः । एतेनानयोः शीघ्रचिकित्स्यत्वं दर्शितम् । शीघ्रकारिण इति शीघ्रं स्वकर्म मरणं कुर्वते इति तथोक्ताः ॥

इति हृदयबोधिकायामष्टाङ्गहृदयदीपिकायां
निदानस्थाने चतुर्थोऽध्यायः ॥

# पञ्चमोऽध्यायः।

धातुक्षयहेतुत्वसामान्याद् महारोगत्वाद् विनाशावहत्वाच्च हिध्माश्वासानन्तरं राजयक्ष्मनिर्णयायाध्यायारम्भः। "कासश्वासोपद्रवयुक्तो यक्ष्मा। तस्मात् तमेवाह" इति पाठ्ये। सारकृताप्युक्तं—"कासादुपेक्षया श्वासक्षयच्छर्दीत्याद्युक्तम्। हिध्माश्वासयोश्चैकयोगक्षेमत्वात् श्वासहिध्मानन्तरं राजयक्ष्मनिदानमारभ्यते" इति। अथवा "ततोऽस्य क्षयरूपाणि सर्वाण्याविर्भवन्ति हि" इति क्षयकासलक्षणमुक्तम्। हिध्माश्वासौ च कासहेतू। अतः क्षयसंबन्धाद् राजयक्ष्मनिदानमाहेति। अथवा "अनेकरोगानुगतो बहुरोगपुरोगमः" इत्युच्यते। तत्र कासश्वासप्रतिश्यायादयः पुरोगमा रोगाः इति कासादिप्रसङ्गादारभ्यत इति संबन्धः॥

## अथातो राजयक्ष्मनिदानं व्याख्यास्यामः।

राजयक्ष्मणो निदानं राजयक्ष्मनिदानम्। शेषं पूर्ववत्। राजा चासौ यक्ष्मा चेति राजयक्ष्मा रोगराडित्यर्थः॥

रोगराट्त्वमस्य प्रदर्शयितुमाह—

**अनेकरोगानुगतो बहुरोगपुरोगमः।**
**राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः॥ १॥**

अनेकेत्यादि। राजयक्ष्मा राजवदनेकैः रोगगणैः अतीसारादिभिः कण्ठध्वंसोरोरुजादिभिश्चानुगतः परिवृतो भवति। तस्मिंश्चैव कृतसंश्रये बहूपद्रवजन्म भवतीत्यर्थः। तथा बहुरोगपुरोगमः बहवो रोगाः पुरोगमनशीला यस्य स एवम्। अनेनैतदुक्तं भवति—उत्पित्सो राजयक्ष्मणः प्रथममेव पीनसश्वासकासादिबहुरोगजन्म भवतीति। एषां च रोगाणां स्वपरिवारसंयुक्तानामप्येतदङ्गत्वं विज्ञेयम्। प्रधानो हि यथा राजा प्राक् पश्चाच्च जनैरनुगम्यते तथायं रोग इति। रोगाणां समूहे राजयक्ष्मेत्यर्थः, राजयक्ष्मा क्षयः शोषो रोगराडिति च नामभिरेभिः स्मृतः उक्तः तन्त्रकारैः। राजयक्ष्मादिपर्यायकथनेन प्राधान्यं ब्रूते॥

---

१. 'गैर्गुल्मातिसारा' ग।

राजयक्ष्मादयश्चतस्रः संज्ञाः क्रमेण निरुच्यन्ते--

**नक्षत्राणां द्विजानां च राज्ञोऽभूद् यदयं पुरा ।**
**यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥ २ ॥**

**देहौषधक्षयकृतेः क्षयस्तत्सम्भवाच्च सः ।**
**रसादिशोषणाच्छोषो रोगराद् तेषु राजनात् ॥ ३ ॥**

नक्षत्राणामित्यादि । निर्वचनोक्तिस्तन्त्रशैली । राजयक्ष्मेति तत्पुरुषः कर्मधारयो वा । कथम् । नक्षत्राणामश्विन्यादीनां द्विजानां च अन्येषां ताराणां राज्ञः चन्द्रमसो यस्मादयं रोगोऽभूत् पुरा तस्माद्राज्ञो यक्ष्मा राजयक्ष्मेत्युच्यते । "द्विजानां ब्राह्मणाना"मिति हाटकः । यस्माच्चायं राजा चासौ यक्ष्मा चेति राजयक्ष्मा । ततः कारणद्वयादेवं मतः इष्टो मुनीनामिति शेषः । राजत्वमस्य अनेकरोगानुगतबहुरोगपुरोगमत्वात् । द्विजानां च राज्ञ इति । एवमनुश्रूयते पुराणेषु--ब्रह्मणः पुत्रोऽत्रिः, अत्रेः सोमः । तं च भगवानब्जयोनिः अशेषौषधिद्विजनक्षत्राणामाधिपत्येऽभ्यषेचयदिति । देहौषधक्षयकृतेः देहस्यौषधानां च क्षयकारणान्नाशकारणात् स व्याधिः क्षय इत्युच्यते । यदौषधं प्रयुज्यते तस्य विनाशं करोतीत्यर्थः । देहौषधक्षयकृतेः इत्यनेनास्य व्याधेः बहुकालावस्थायित्वं द्योतयति । तत्सम्भवाच्च क्षय इत्युच्यते । तदित्यनेन देहौषधक्षयः परामृश्यते । अर्थः व्याध्यन्तः (करण?)देहस्यौषधस्य च जातः क्षयः क्षयाख्यस्य व्याधेः सम्भवकारणमिति इन्दुनाप्युक्तं-- "देहौषधक्षयफलहेतुत्वात् धातुक्षयहेतुत्वाद्वा क्षयः" इति । अथवा देहस्यौषधेन क्षय इति देहौषधक्षयः तत्कृतेः । (क्षयः) देहक्षयो भवति । सौभाग्यार्थं स्त्रीभिः शत्रुभिर्वा प्रयु(क्तेन? क्तैर्नाना)ङ्गजैर्मलैः नखरोमादिभिर्गरैश्च क्षयो भवति । तत्संभवाच्च सन्ततौषधप्रयोगसम्भवाच्च स क्षयो भवति । अथवा तत्सम्भवाच्च देहौषध(क्षय)सम्भवाच्च । रसादिधातूनां शोषणात् स क्षयः शोष इत्युच्यते । अत्राह--कफप्रधानैर्दोषै रसवर्त्मनि रुद्धे रसादीनां शोषो भवति । ततः शोषव्यक्तीभाव[1] इत्यतो रसादिशोषणाच्छोष इत्युक्तमिति । उच्यते--न शरीरशोषणमत्र

१. 'भाव इति हेतोः' ख ।

शोषः। किन्तु शरीरशोषणहेतुभूतः प्रजापतिक्रोधोत्पन्नो मूर्तिमान् कश्चिद् व्याधिः तेनोपसृष्टस्य रसादयः शुष्यन्ति उक्तक्रमेणेति। उक्तं च **भालुकिना**—

"रोहिण्यामतिसक्तस्य शरीरमनवेक्षतः।
आजगामाल्पतां भानोर्देहः स्नेहपरिक्षयात्॥
दुहितृ[१]ग्रामसंभोगाच्छेषाणां च प्रजापतेः।
क्रोधो निःश्वासरूपेण मूर्तिमान् निःसृतो मुखात्॥
प्रजापतेर्दुहितरोऽप्यष्टाविंशतिमंशुमान्(?)।
भार्यार्थे प्रतिजग्राह न च सर्वास्ववर्तत॥
गुरुणा तम[२]पध्यातं भार्यास्वसमवर्तिनम्।
(जरः? रजः)परीतमनसं यक्ष्मा शशिनमाविशत्॥
सोऽभिभूतोऽभिमर्शेन गुरुक्रोधेन निष्प्रभः।
देवदेवर्षिसहितो जगाम शरणं गुरुम्॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः।
प्रसादं कृतवान् सोमे ततोऽश्विभ्यां चिकित्सितः॥
स विमुक्तग्रहश्चन्द्रो विरराज विशेषतः।
ओजसा वर्धितोऽश्विभ्यां सत्त्वं शुद्धमवाप्य च॥
क्रोधो यक्ष्मा गतो रोग (एकार्थो मुखसंज्ञकः?)।
यतः प्राग् राज्ञ आसीत् स राजयक्ष्मा ह्यतो मतः॥
स यक्ष्मा हुंकृतोऽश्विभ्यां मानुषं लोकमागतः।
लब्ध्वा च विधं हेतुं समाविशति मानवान्॥"

इति। तेषु रोगेषु मध्ये राजनादतिदीप्तत्वाद् रोगराडित्युच्यते। रोगेषु मध्ये स्वयं राजेव दीप्यते यतस्ततो रोगराट्। तथाहि बहुषु रोगेषु मध्ये रोगत्वेनैष एव राजते॥

तस्य हेतूनाह—

**साहसं वेगसंरोधः शुक्रौजःस्नेहसंक्षयः।**
**अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः॥ ४॥**

---

१. 'मवध्या', २. 'धाच्च नि', ख.

साहसमित्यादि । तस्य राजयक्ष्मणः साहसादयश्चत्वारोऽतिसेविता हेतवः । साहसम् अयथाबलमारम्भः । इन्दुरपि—"साहसमविचार्यात्मशक्ति सेवितमतिमात्रं युद्धादि" इत्याह । वेगसंरोधो वेगसन्धारणं, विण्मूत्रादीनां वेगनिरोधः । शरीरे शुक्रौजःस्नेहानां संक्षयोऽल्पीभावः स्वहेतुभ्यः । "ओजो बल"मित्यरुणदत्तः । स्नेहशब्देन देहस्नेहो ग्राह्यः । तथा च आगमः—"देहस्नेहपरिक्षया"दिति । अन्नपानयोः विधिः तस्य त्यागः अन्यथासेवनम् ॥

तैरुदीर्ण इत्यादिना संप्राप्तिमाह—

**तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः ।**
**शरीरसन्धीनाविश्य तान् सिराश्च प्रपीडयन् ॥ ५ ॥**

**मुखानि स्रोतसां रुद्ध्वा तथैवातिविवृत्य च ।**
**सर्पन्नूर्ध्वमधस्तिर्यग्यथास्वं जनयेद् गदान् ॥ ६ ॥**

तैः साहसादिभिः उदीर्णः उद्रिक्तोऽनिलः पित्तं कफं चोदीर्य प्रकोप्येत्येवमादेर्यथास्वं गदान् पीनसादीन् जनयेद् इति संबन्धः । सर्वतः सर्वत्र शरीरसन्धीनाविश्य प्राप्य तान् शरीरसन्धीन् सिराश्च प्रपीडयन् । इन्दुरपि—"तानिति शरीरसन्धी"नित्याह । अरुणदत्तस्तु—"ताः सिराः" इति पठति ताः सिराः शरीरसन्धिगताः प्रपीडयन्निति वदन् । सम्प्राप्तिवशात् स्रोतोमुखानि रुद्ध्वा तथैव स्रोतसां मुखान्यतिविवृत्य महामुखानि कृत्वा वा ऊर्ध्वमधः तिर्यक् च सर्पन् शरीरे प्रसरन् । यथास्वं जनयेदिति, ऊर्ध्वं सर्पन् पीनसादीन् अधः सर्पन् विट्स्रंससंशोषौ तिर्यक् सर्पन् पार्श्वरुजमिति यथास्वं जनयेत् । "गद"मित्यरुणदत्तस्य पाठः । यथास्वं गदं स्वात्मीयलक्षणं जनयेदिति । यक्ष्मातङ्कगदाबाधेति वचनाद् गदशब्दो यक्ष्मपर्यायः ॥

**रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं क्षवः ।**
**प्रसेको मुखमाधुर्यं सदनं वह्निदेहयोः ॥ ७ ॥**

**स्थाल्यमत्रान्नपानादौ शुचावप्यशुचीक्षणम् ।**
**मक्षिकातृणकेशादिपातः प्रायोऽन्नपानयोः ॥ ८ ॥**

हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षयः ।
पाण्योरवेक्षा पादास्यशोफोऽक्ष्णोरतिशुक्लता ॥ ९ ॥

बाह्वोः प्रमाणजिज्ञासा काये बैभत्स्यदर्शनम् ।
स्त्रीमद्यमांसप्रियता घृणित्वं मूर्धगुण्ठनम् ॥ १० ॥

नखकेशातिवृद्धिश्च स्वप्ने चाभिभवो भवेत् ।
पतङ्गकृकलासाहिकपिश्वापदपक्षिभिः ॥ ११ ॥

केशास्थितुषभस्मादिराशौ समधिरोहणम् ।
शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽम्भसः ॥ १२ ॥

ज्योतिर्गिरीणां पततां ज्वलतां च महीरुहाम् ।

तस्य च भविष्यतो राजयक्ष्मणो रूपाणि पूर्वरूपाणीत्यर्थः । प्रतिश्यायादीनि ज्वलतां च महीरुहामित्येवमन्तानि सर्वाणि पूर्वरूपाणि । प्रतिश्यायः श्लेष्मणा पूर्णमुखनासामूर्धलक्षणो व्याधिविशेषः पीनसापरपर्यायः । भृशमत्यर्थम् । क्षवः क्षवथुः । प्रसेको मुखेन लालास्रावः । मुखमाधुर्यं मधुररसास्यता । वह्निदेहयोः सदनं वह्नेः सदनमग्निमान्द्यं, देहस्य सदनम् उत्क्षेपणादिष्वशक्तिः । स्थाल्याममत्रे भोजनपात्रेऽन्ने पाने च, आदिशब्दादन्यस्मिन्नपि आसनादौ शुचावप्यशुचीक्षणमशुचिबुद्धिः । अशुचीदं पुनःप्रक्षालनीयमिति प्रतिभासः । अन्नपानयोः प्रायो मक्षिकादीनां पातः । प्रायोग्रहणात् तदभावः कदाचिदेवेत्यर्थः । आदिशब्देन पिपीलिकादिपरिग्रहः । पात इत्यनेन पश्चात्पातो विवक्षितः, न तैः संस्रुतिः[1] । अश्नतोऽपि यथावदश्नतोऽपि बलक्षयः । पाण्योरवेक्षा निर्हेतु भूयसा पाणिनिरीक्षणम् । पादास्यशोषः । 'शोफ' इति वा पाठः । बाह्वोः प्रमाणजिज्ञासा पूर्वस्मात् स्थूलः कृशो वेति प्रमाणजिज्ञासा । काये शोभनेऽपि बैभत्स्यदर्शनं विना कारणेन कायं दृष्ट्वा अशुचिशङ्कया बीभत्सदर्शनम् । स्त्रीमद्यमांसेषु प्रीतिः । घृणित्वं अहितेष्वपि सघृणत्वम् । अथवा सर्वेषु वस्तुषु जुगुप्सा स्यात् । "घृणा जुगुप्साकृपयोः" इति यादवः । मूर्ध्नः शिरसो वस्त्रादिभिः गुण्ठनं प्रच्छादनम् । नखकेशानामतिवृद्धिश्च । स्वप्ने पतङ्गादिभिः

१. 'संसृष्टिः' ख. घ. ङ ।

अभिभवो भवेत् पतङ्गादिभिरभिभूयते। पतङ्गः शलभः। "पतङ्गः कीटभेदः" इति **सारकृत्**। पतङ्गोऽग्निः इतीन्दुः। क्षुद्रपक्षिणः पतङ्गाः, स्थूलाः श्येनादयः पक्षिणः इति केचित्। कृकलासः सरटः। अहिः दंष्ट्री। कपिर्मर्कटः। श्वापदो वृकः। पक्षिणो गृध्रादयः। स्वप्ने केशादिराशौ समधिरोहणम्। शून्यानां ग्रामाणां देशानां च जनपदानां च दर्शनम्। शुष्यतोऽम्भसो दर्शनम्। ज्योतिषां गिरीणां च पततां दर्शनम्। ज्वलतां महीरुहां च दर्शनम्॥

प्राग्रूपमुक्त्वा सम्प्रत्येकादश रूपाण्यधिकृत्याह—

**पीनसश्वासकासांसमूर्धस्वररुजोऽरुचिः॥ १३॥**
**ऊर्ध्वं विड्भ्रंशसंशोषवधश्छर्दिश्च कोष्ठगे।**
**तिर्यक्स्थे पार्श्वरुग् दोषे सन्धिगे भवति ज्वरः॥ १४॥**
**रूपाण्येकादशैतानि जायन्ते राजयक्ष्मिणः।**

पीनसेत्यादि। राजयक्ष्मणि ऊर्ध्वं[1] गते दोषे पीनसादयो भवन्ति। पीनसः प्रतिश्यायभेदः। अंसमूर्धस्वररुजः। रुक् तोदः। स्वररुक् स्वरहानिः। अधः अधःस्थिते दोषे विशः पुरीषस्य स्रंसः शोषो वा। कोष्ठगे दोषे छर्दिर्भवति। तिर्यक् स्रोतःसु स्थिते दोषे पार्श्वरुग् भवति। सन्धिगे दोषे ज्वरो भवति। राजयक्ष्मिणः एतानि पीनसादीनि एकादश रूपाणि जायन्ते। एतदुक्तं भवति—दोषकोपविशेषपरायत्ता शरीरे व्याप्तिः, यथाव्याप्ति च रोगसम्भवः। सकलव्याप्तौ तु एकादशरोगसमूहः परिपूर्णो राजयक्ष्मा भवति। ननु द्वादशैतानि, कथमेकादशेत्युच्यते। ब्रूमः—स्रोतसां रोधाद् विट्शोषः। तेषां विवृतत्वात् स्रंसः। तेन संख्यायामनयोरन्यतरस्य ग्रहणं युगपदसम्भवात्। पीनसः श्वासः कासः अंसरुग् मूर्धरुक् स्वररुग् अरुचिः विट्स्रंसः शोषो वा छर्दिः पार्श्वरुग् ज्वरः इत्येकादशरोगसमूहः क्षय उच्यते। **अरुणदत्तस्तु**—"विट्स्रंससंशोषौ द्वौ अंसमूर्धरुजोरेकरूपत्वात् तावेकीकृत्योक्तवानित्येकादश" इत्याह॥

**तेषामुपद्रवान् विद्यात् कण्ठोद्ध्वंसमुरोरुजम्॥ १५॥**
**जृम्भाङ्गमर्दनिष्ठीववह्निसादास्यपूतिताः।**

---

१. 'ऊर्ध्वंगते' ख. ग।

तेषां पीनसादीनां कण्ठोद्ध्वंसादीन् सप्तोपद्रवान् विद्यात् । रोगस्य पश्चादुत्पन्नो दुःखानुबन्धी रोग उपद्रवः । उक्तं च–"जाताः पश्चादुपद्रवाः" इति ।

"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः ।
उपक्रमविरोधी च स ह्युपद्रव उच्यते ॥"

इति पारत्रिकमुपद्रवलक्षणम् । कण्ठोद्ध्वंसः कण्ठस्य स्वगुणोद्ध्वंसनम् । उद्गिरणावगिरणाशक्तिरिति यावत् ॥

**तत्र वाताच्छिरःपार्श्वशूलमंसाङ्गमर्दनम् ॥ १६ ॥**
**कण्ठोद्ध्वंसः स्वरभ्रंशः पित्तात् पादांसपाणिषु ।**
**दाहोऽतिसारोऽसृक्छर्दिर्मुखगन्धो ज्वरो मदः ॥ १७ ॥**
**कफादरोचकश्छर्दिः कासो मूर्धाङ्गगौरवम् ।**
**प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता ॥ १८ ॥**

तत्र राजयक्ष्माणि वातादधिकादुत्पन्ने शिरःशूलादयः स्युः । शिरःशूलादीनि लिङ्गानीत्यर्थः । अङ्गमर्दनमङ्गानां तोदः । तत्र दोषेष्विति केचित् । पित्तादधिकाद् राजयक्ष्मणि पाददाहादयः स्युः । कफादधिकात् राजयक्ष्मणि अरोचकादयः स्युः ॥

राजयक्ष्मवतो धातुपुष्टिकरैः मांसादिभिरभ्यवहृतैः धातुक्षयो जायत इत्यत्र युक्तिमाह—

**दोषैर्मन्दानलत्वेन सोपलेपैः कफोद्बणैः ।**
**स्रोतोमुखेषु रुद्धेषु धातूष्मस्वल्पकेषु च ॥ १९ ॥**
**विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान् ।**
**कुर्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावति ॥ २० ॥**
**पच्यते कोष्ठ एवान्नमन्नपक्त्रैव चास्य यत् ।**
**प्रायोऽस्मान्मलतां यातं नैवालं धातुपुष्टये ॥ २१ ॥**

दोषैरित्यादि । तस्य च राजयक्ष्मवतो रोगस्वभावेन मन्दानलत्वेन हेतुना दोषैः सोपलेपैः अपाकादविशदैः तथा कफोद्बणैश्च । रोगस्वभावो मन्दानलत्वम् । दोषत्रयकोपान्मन्दानलत्वमित्यन्ये । तेन सोपलेपैः कफोद्बणैश्च । कफोद्बण-

त्वात्स्रोपलेपमित्यन्ये । तैर्दोषैः सन्निपातैः स्रोतोमुखेषु रुद्धेषु अत एव धातूष्मसु धात्वग्निष्वल्पकेषु च सत्सु । धातुस्थानामग्नीनामल्पत्वं मन्दानलत्वात् । रसाख्यो धातुः स्वस्थान एव विदह्यमानो न सम्यक् पाकं गच्छन् नापि रक्तादिधातुषु वहन् तांस्तान् कण्ठोद्ध्वंसादीनुपद्रवान् स्वहेतुकान् कुर्यात् । स च रसो मांसादीनगच्छन् विदह्यमानतया रक्ततामापद्यते । तदसृगूर्ध्वं प्रधावति ऊर्ध्वकायं प्रसर्पति । तस्मात् क्षयिणो न तन्मांसादिपुष्टये । 'अगच्छत्' इति वा पाठः । रसो विदह्यमानतया रक्ततामापद्यते, तदसृक् च धातूष्माल्पभावात् स्वस्थान एव स्थितं मांसादीनगच्छद् ऊर्ध्वं प्रधावति । किञ्चातोऽपि हेतोः रसो न धातुपुष्टये । अस्यैवंभूतस्याल्पधातूष्मणो यस्मादन्नमुपयुक्तं कोष्ठ एवान्नपक्त्रैव पच्यते । उभयत्र एवकारोऽवधारणे । कोष्ठ एव पच्यते न धातुस्रोतःसु । अन्नपक्त्रैव जाठराग्निनैव पच्यते सारकिट्टत्वं नीयते, न रसादिक्रमेण धात्वग्निभिः । तेन कोष्ठस्थिताः धातुस्रोतसि स्थिताः । अस्माद्धेतोः प्रायो बाहुल्येन मलतामेव यातं मूत्रपुरीषतामेव प्राप्तं, न रसादिविवेकतां गतम्, अन्नं कोष्ठादन्यत्र गत्वा नैवालं धातुपुष्टये धातुपोषणाय न समर्थं भवति । स्तोकेन सारेणाप्याय्यन्ते धातव इति प्रायोग्रहणम् । पुष्टिग्रहणेनैतत् सूचयति—अभिनवमृत्कुम्भस्थितजललवस्यन्दन्यायेन कोष्ठस्थितमन्नं सारभूतसूक्ष्मस्रोतोऽनुप्रवेशितयास्य धात्वाप्यायनमात्रं करोत्येव अन्यथा वर्षगणानुबन्धि जीवितं क्षयिणो न सम्भाव्यते । तस्माद्धातुस्थितिमात्रमेव करोति न तु धातुपोषणमिति स्थितम्[3] ॥

**रसोऽप्यस्य न रक्ताय मांसाय कुत एव तु ।**

रसोऽप्यस्य न रक्ताय रसस्योभयरूपत्वाद् अन्नरसो धातुरसो वा अस्य क्षयिणो निकटस्थरक्तधातोरपि न पुष्टये । मांसधातोर्विप्रकृष्टस्य तु कुत एव स्यात् । रसोऽप्यस्य क्षयिणः स्वल्पतयानन्तरधातुपोषणायापि न भवति, किं पुनर्व्यवहितानामित्यर्थः ॥

तर्हि कथं जीवतीत्याह—

**उपष्टब्धः स शकृता केवलं वर्तते क्षयी ॥ २२ ॥**

सः क्षयी पुरुषः पूर्वोक्तेन न्यायेन किञ्चिदाहाररसाप्यायितैः धातुभिः धारणस्वभावैः धृतमात्रः केवलं शकृता उपष्टब्धः कृतावष्टम्भो वर्तते प्राणिरिति ।

१. 'सन्निपतितैः' । २. 'व्येत' । ३. 'स्थितिः' ग ।

'अवष्टब्धः' इति वा पाठः । ननु 'असृक् चोर्ध्वं प्रधावति' इत्यनेन रसस्य रक्तता प्रतिपादिता । 'रसोऽप्यस्य न रक्ताय' इत्यनेन रक्तस्य अभावः प्रत्यपादि । तदिमे वाक्ये परस्परं व्याघ्नाते । अत्रोच्यते–'असृक् चोर्ध्वं प्रधावति' इत्यनेन न (तद्) धातुरूपतां प्राप्तं, किं तर्हि रसस्य (विष्यन्द ? विदह्य)मानतया स्वस्थान-स्थितस्य रक्तधात्वाशयमगच्छतो रक्तस्य उन्मार्गगतिरुक्ता । अनेनैवाभिप्रायेण उत्तरत्र वाक्ये 'रसोऽप्यस्य न रक्ताय' इत्युवाच । अनेनैव हि रसो धातुरूपाय रक्ताय शोषिणो न सम्पद्यत इति प्रत्यपादि । अरुणदत्तस्त्वाह—"स रसः शकृता उपष्टब्धः केवलं क्षयी भूत्वा वर्तते अन्नपचनस्थानात् प्रवेष्टुमशक्तो भवती"ति ॥

साध्यासाध्यतां निरूपयति—

**लिङ्गेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमम् ।**
**वर्जयेत् साधयेदेव सर्वेष्वपि ततोऽन्यथा ॥ २३ ॥**

लिङ्गेष्वित्यादि । क्षयिणं बलमांसाभ्यां क्षीणं लिङ्गेषु पीनसादिष्वल्पेषु उत्पन्नेषु सत्सु अपि वर्जयेन्नोपक्रमेत् । किम्भूतम्—व्याधेरौषधस्य च बलं यो न क्षमते स व्याध्यौषधबलाक्षमः तम् । व्याधेर्बलं कासादिवेगमसहमानम् । औषधपानादिष्वशक्तं चेत्यर्थः । "व्याधीनामौषधस्य च बल"मितीन्दुः । व्याध्यौषधयोर्बलं प्रति अक्षमस्येति वा समासः । लिङ्गेष्वल्पेष्वपीति किं पुनः पीनसादिषु सर्वेषु उत्पन्नेषु इत्यपिशब्दार्थः । ततोऽन्यथा ततो व्याध्यौषधबला-क्षमत्वादन्यथा वैपरीत्ये व्याध्यौषधबलक्षमत्वे सर्वेष्वपि पीनसादिषु लिङ्गेषु सर्वेष्वपि सत्सु (अ)क्षीणं साधयेदेव चिकित्सेदेव । न तु वर्जयेत् । सर्वेष्वपीति, किं पुनः द्वित्रादिकेषु एषु साधयेद् इत्यपिशब्दार्थः । "लिङ्गेषु वातादीनां यानि लिङ्गानि क्षयकरोक्तानि तेषु" इत्यरुणदत्तः । इति निर्णीतो राजयक्ष्मा ॥

अथास्योपद्रवभूताः प्रधानत्वात् स्वरसादारुचिहृच्छर्दिहृद्रोगतृष्णाः । एतत्प्रसङ्गात् क्रमेण निदानादिरुच्यते—

**दोषैर्व्यस्तैः समस्तैश्च क्षयात् षष्ठश्च मेदसा ।**
**स्वरसादो भवेत्,**

---

१. 'थास्य क्षयस्यो' ग ।

दोषैरित्यादि। दोषैर्वातादिभिर्व्यस्तैः पृथग्भूतैः समस्तैः सन्निपातेन च इति चत्वारः क्षयात्पञ्चमः षष्ठश्च मेदसा स्वरसादो भवेत्। इति षट् स्वरसाद-भेदा इत्यर्थः ॥

**तत्र क्षामो रूक्षश्चलः स्वरः ॥ २४ ॥**
**शूकपूर्णाभकण्ठत्वं स्निग्धोष्णोपशयोऽनिलात्।**

तत्र तेषु स्वरसादेषु षट्सु अनिलात् स्वरसादे स्वरः क्षामः क्षीणः चलः सगद्गदः। शूकपूर्णाभकण्ठत्वं शूकैः पूर्ण इव कण्ठो भवति। स्निग्धोष्णैः उपशयः सुखानुबन्धश्च। इन्दुरपि "वातात् स्वरभेदे क्षामस्वरत्वादिकं लिङ्ग"-मित्याह ॥

**पित्तात्तालुगले दाहः शोष उक्तावसूयनम् ॥ २५ ॥**

पित्तात् स्वरभेदे सति लिङ्गं तालुनि गले च दाहः। शोषः प्रकृतत्वात्तालु-गलयोरेव। "अङ्गशोषः" इत्यरुणदत्तः। उक्तावसूयनम् उक्तौ वाग्विषये असूयनमसहनम्। वक्तुमसमर्थ इत्यर्थः। "अपरिपूर्णवचनता" इतीन्दुः ॥

**लिम्पन्निव कफात् कण्ठं मन्दः खुरखुरायते।**
**स्वरो विबद्धः,**

कफात् स्वरभेदे लिङ्गं स्वरः कण्ठं लिम्पन्निव भवति। वाक्प्रसारे आस्यं श्लेष्मणा लिप्तमिव भवति। सर्वेभ्यः स्वरभेदेभ्यः मन्दः स्वरः नोच्चैर्वक्ति। खुरखुरायते खुरखुरेत्युक्तं शब्दं करोति। तथा स्वरो विबद्धः सक्तश्च भवति। वाक्यमध्ये स्खलनरूपो भवतीत्यर्थः। अरुणदत्तस्तु—"कण्ठश्च खुरखुरायते कपिकच्छ्वादिस्पर्श इव भवति" इत्याह।

**सर्वैस्तु सर्वलि :,**

सर्वैर्दोषैः सर्वदोषोक्तलिङ्गः स्वरभेदो भवति। इन्दुस्तु—"सन्निपातेन स्वरभेदे स्वरो विबद्धो भवति। वातादिस्वरभेदलिङ्गं च भवति" इत्याह ॥

**क्षयात् कषेत् ॥ २६ ॥**

**धूमायतीव चात्यर्थं,**

क्षयात् स्वरभेदे स्वरः प्रकृतत्वात् कण्ठं कषेत् । अत्यर्थं धूमायतीव च भवति । धूममिव कण्ठे करोति । अत्यर्थशब्देन पित्तजेऽपि धूमायनमवगमयति । इन्दुरपि—"क्षयात्तु स्वरभेदे स्वस्थानं कण्ठादिकं कषेदित्याह ॥

**मेदसा श्लेष्मलक्षणः ।**
**कृच्छ्रलक्ष्याक्षरश्चात्र सर्वैरन्त्यं च वर्जयेत् ॥ २७ ॥**

मेदसा स्वरभेदः श्लेष्मलक्षणः श्लेष्मजस्वरभेदलक्षणः । अयं तु कृच्छ्रलक्ष्याक्षरश्च । अत्र एषु स्वरभेदेषु मध्ये सर्वैः सन्निपातेन जातम्, अन्त्यं मेदसा जातम् च वर्जयेत् । शेषाः साध्या इत्यर्थादुक्तं भवति । **अरुणदत्त**स्त्वाह—"अत्र मेदःकृते स्वरभेदे कृच्छ्रलक्ष्याक्षरं च स्वरस्य भवति । सर्वैः दोषैः जातं मेदसा जातं च वर्जयेत् । तावसाध्यावित्यर्थः ।" इति । उक्तः स्वरभेदः ॥

इदानीमरुचिनिदानमाह—

**अरोचको भवेद् दोषैर्जिह्वाहृदयसंश्रितैः ।**
**सन्निपातेन मनसः सन्तापेन च पञ्चमः ॥ २८ ॥**

अरोचक इत्यादि । दोषैः वातादिभिः जिह्वां हृदयं च संश्रितैः पृथग्भूतैः अरोचको भवेत् । 'संश्रयैः' इति वा पाठः । तेषां कोपकारणं सामान्यमुक्तम् । सम्प्रति रोगवशात्तु विशेषः इति सर्वत्र बोद्धव्यम् । त्रिभिर्दोषैः त्रयोऽरोचकाः । सन्निपातेन चतुर्थः । जिह्वाहृदयसंश्रितेनेत्यर्थाल्लभ्यते । मनसः सन्तापेन नानाविधेन शोकक्रोधादिना कृतेन पञ्चमः आगन्तुः इति पञ्चारोचकाः ॥

**कषायतिक्तमधुरं वातादिषु मुखं क्रमात् ।**
**सर्वोत्थे विरसं शोकक्रोधादिषु यथामलम् ॥ २९ ॥**

वातादिषु वाताद्युद्भवेषु अरोचकेषु लिङ्गं क्रमाद् यथासंख्यं कषायतिक्तमधुरमास्यं भवति । सर्वोत्थे सन्निपातोत्थे अरोचके मुखं विरसं भवति । व्यक्तरसता न भवति नीरसतैव भवति । शोकक्रोधादिषु मनःसन्तापकारणेषु सत्सु यथामलं यथादोषं लक्षणं लक्षयेत् । य एव दोषानुबन्धं गृह्णाति तल्लक्षणं

भवतीत्यर्थः । अथवा भयशोकयोः वातकोपात् क्रोधे पित्तादिति यथामलम् । उक्तोऽरोचकः ॥

अधुना छर्दिनिदानमुच्यते—

**छर्दिर्दोषैः पृथक् सर्वैर्द्विष्टैरर्थैश्च पञ्चमी ।**

छर्दिरित्यादि । दोषैर्वातादिभिः पृथग्भूतैः सर्वैः सन्निपातेन छर्दिर्भवतीति चतस्रः । द्विष्टैरर्थैरुपयुक्तैर्द्रव्यैः दृष्टैः श्रुतैर्वा पञ्चमी छर्दिरिति पञ्च छर्दयः । द्विष्टानां बहुत्वेऽपि तज्जा छर्दिरेकरूपेति पञ्चमीत्युक्तम् । साधारणां सम्प्राप्तिमाह—

**उदानो विकृतो दोषान् सर्वास्वप्यूर्ध्वमस्यति ॥ ३० ॥**

उदान इत्यादि । सर्वास्वपि छर्दिषु उदानो नाम वायुर्विकृतः स्वकोपनैः विकृतिं प्राप्तः कुपितो दोषान् वातादीन् ऊर्ध्वं मुखेन अस्यति क्षिपति । 'सर्वानप्यूर्ध्व'मिति वा पाठः । सर्वान् दोषान् वातादीनप्यूर्ध्वमस्यतीति ॥

**तासूत्क्लेशास्यलावण्यप्रसेकारुचयोऽग्रगाः ।**

तासु सर्वासु छर्दिषु उत्क्लेशादयोऽग्रगाः पूर्वरूपाणि । उत्क्लेशो दोषाणाम् अन्तःक्षोभः । आस्यलावण्यमास्यस्य लवणरसता ॥

यथादोषं छर्दिलक्षणमाह—

**नाभिपृष्ठं रुजन् वायुः पार्श्वे चाहारमुत्क्षिपेत् ॥ ३१ ॥**
**ततो विच्छिन्नमल्पाल्पं कषायं फेनिलं वमेत् ।**
**शब्दोद्गारयुतं कृष्णमच्छं कृच्छ्रेण वेगवत् ॥ ३२ ॥**
**कासास्यशोषहृन्मूर्धस्वरपीडाक्लमान्वितः ।**

नाभीत्यादि । वायुः नाभिपृष्ठं पार्श्वे च रुजन् आहारमुत्क्षिपेद् ऊर्ध्वं प्रेरयेत् । ततोऽनन्तरं विच्छिन्नत्वादियुक्तं वमेत् कासाद्यन्वितः पुरुषः । कृष्णं कृष्णवर्णम् । कृच्छ्रेण दुःखेन । स्वरपीडा स्वरसादः । इति वातच्छर्दि-लक्षणम् ॥

**पित्तात् क्षारोदकनिभं धूम्रं हरितपीतकम् ॥ ३३ ॥**
**सासृगम्लं कटूष्णं च तृण्मूर्च्छातापदाहवत् ।**

पित्तच्छर्द्यां तृडादिमान् क्षारोदकनिभत्वादियुक्तं वमेत् । क्षारोदकनिभं क्षारमिश्रोदकनिभं धूम्रं धूमवर्णं, हरितवर्णं वा । सासृक् सरक्तम् । अम्लरसं कटुरसं वा । तापो बहिः दाहोऽन्तः । इति पित्तच्छर्दिः ॥

**कफात् स्निग्धं घनं शीतं श्लेष्मतन्तुगवाक्षितम् ॥ ३४ ॥**
**मधुरं लवणं भूरि प्रसक्तं लोमहर्षणम् ।**
**मुखश्वयथुमाधुर्यतन्द्राहृल्लासकासवत् ॥ ३५ ॥**

कफच्छर्द्यां मुखश्वयथ्वादियुक्तः पुरुषः स्निग्धत्वादियुक्तं वमेत् । श्लेष्मतन्तुगवाक्षितं श्लेष्मणः तन्त्वाकारैः पिच्छिलावयवैर्गवाक्षितं गवाक्षजालाकारम् । **हाटको**ऽपि"श्लेष्मसम्बन्धिना तन्तुजालेन गवाक्षित"मित्याह । प्रसक्तमविच्छिन्नं या छर्दिः ॥

**सर्वलिङ्गा मलैः सर्वै रिष्टोक्ता या च तां त्यजेत् ।**

सर्वैः मलैः वातादिभिः जायते सा सर्वलिङ्गा सर्वा अनन्तरोक्तवातादिलिङ्गसंयुक्ता तां त्यजेत् । या "छर्दिर्वेगवती मूत्रशकृद्गन्धिः" इत्यादिना रिष्टेषूक्ता तां च त्यजेत् । सान्निपातिकी रिष्टोक्ता च ते द्वे अपि त्यजेदित्यर्थः । "असर्वलिङ्गा तु सान्निपातिकी चिकित्स्यैव" इतीन्दुः । **सारकृत्त्वे**वमाह— "सर्वैर्मलैः सर्वलिङ्गा न केवलं त्रिभिर्दोषैः सर्वलिङ्गा या च रिष्टोक्ता सापि सर्वलिङ्गा दोषत्रयलक्षणोपेता तां च त्यजेत् न चिकित्सेत् । न तु रिष्टोक्ता या छर्दिः तां त्यजेदिति व्याख्येयम् । तस्या रिष्टत्वेनैवासाध्यत्वस्य प्रतिपादितत्वात्" इति । "सर्वलिङ्गां मलै"रिति केचित् पठन्ति ॥

**पूत्यमेध्याशुचिद्विष्टदर्शनश्रवणादिभिः ॥ ३६ ॥**
**तप्ते चित्ते हृदि क्लिष्टे छर्दिर्द्विष्टार्थयोगजा ।**

पूत्यमेध्याशुचीनां द्विष्टानामन्येषां च । पूति दुर्गन्धम् । अमेध्यं मलादि । अशुचि वालादिस्पृष्टं वस्तु । एतेषां दर्शनश्रवणचिन्तनाघ्राणस्पर्शैश्चित्ते उपतप्ते पीडिते तथा हृदि क्लिष्टे हृदयोत्क्लेशे सति या छर्दिर्जायते सा द्विष्टार्थयोगजा उच्यते । इति पञ्च च्छर्दय उक्ताः ॥

**वातादीनेव विमृशेत् कृमितृष्णामदौहृदे ॥ ३७ ॥**

**शूलवेपथुहृल्लासैर्विशेषात् कृमिजां वदेत् ।**
**कृमिहृद्रोगलिङ्गैश्च,**

कृम्यादिषु या छर्दयः ता नातः पृथग्भूताः, तासां वातादिहेतुत्वात् । अतस्तासु चतसृषु छर्दिषु वातादीनेव बुद्ध्या लक्षणैः विमृशेद् वातादिदोषलक्षणान्येव लक्षयेत् । दोषलिङ्गैस्तल्लिङ्गं विद्यादित्यर्थः । विशेषाच्छूलवेपथुहृल्लासैः कृमिजां वदेत् । कृमिजायास्तु शूलादिमत्त्वं विशेषः । कृमिहृद्रोगलिङ्गैः श्यावनेत्रत्वादिभिश्च कृमिजां छर्दिं वदेदिति सम्बन्धः । इत्युक्ताः छर्दयः ॥

हृद्रोगा उच्यन्ते—

**स्मृताः पञ्च तु हृद्गदाः ॥ ३८ ॥**

**तेषां गुल्मनिदानोक्तैः समुत्थानैश्च सम्भवः ।**

पृथग्दोषैः सन्निपातेन कृमिभिश्चेति पञ्च हृद्गदाः हृद्रोगाः स्मृताः **तन्त्रकारैः** । तेषां च हृद्रोगाणां गुल्मनिदानोक्तैः गुल्मनिदाने वक्ष्यमाणैः हेतुभिः सम्भवः । तथा च **संग्रहे**—"तेषां गुल्मनिदानोक्तैः समुत्थानैश्च सम्भवः" इति ॥

**वातेन शूल्यतेऽत्यर्थं तुद्यते स्फुटतीव च ॥ ३९ ॥**
**भिद्यते शुष्यति स्तब्धं हृदयं शून्यता द्रवः ।**
**अकस्माद्दीनता शोको भयं शब्दासहिष्णुता ॥ ४० ॥**
**वेपथुर्वेष्टनं मोहः श्वासरोधोऽल्पनिद्रता ।**

तत्र वातेन हृद्रोगे हृदयमत्यर्थं शूल्यते । अत्यर्थशब्देनैतद् गमयति—अन्येष्वपि हृद्रोगेषु हृदयं शूल्यते अतिशयेन तु वातजे इति । प्राजनेनेव तुद्यते । **अरुणदत्तस्तु**—"शूल्यते पीड्यते । तुद्यति सूचीभिरिव" इत्याह । स्फुटतीव च शीर्यतीव च । भिद्यते । शुष्यति । शून्यता द्रवश्च प्रकृतत्वाद्धृदयस्यैवेति बोध्यम् । द्रवतीति द्रवः द्रुतमिव च भवति । अथवा द्रवणं द्रवः हृदयं गतमिव भवति । "शून्यताविशेषः द्रवः सकम्पत्व"मिति **सारकृत्** । अकस्माद्दीनता कारणं विना दीनत्वम् । शब्दासहिष्णुता अन्यैरुक्तशब्दश्रवणासहिष्णुता । वेपथुः कम्पः । वेष्टनं भूमौ परिसर्पणम् ॥

**पित्तात् तृष्णा भ्रमो मूर्च्छा दाहः स्वेदोऽम्लकः क्लमः ॥ ४१ ॥**
**छर्दनं चाम्लपित्तस्य धूमकः पीतता ज्वरः ।**

पित्ताद् हृद्रोगे तृष्णादीनि ज्वरान्तानि स्युः । अम्लपित्तस्य अम्लरसस्य पित्तस्य छर्दनं च । पीतता शरीरस्य । इन्दुरपि—"पीतता अङ्गेषु' इत्याह ॥

**श्लेष्मणा हृदयं स्तब्धं भारिकं साश्मगर्भवत् ॥ ४२ ॥**
**कासाग्निसादनिष्ठीवनिद्रालस्यारुचिज्वराः ।**

श्लेष्मणा हृद्रोगे हृदयस्तम्भादिकं लिङ्गम् । हृदयं स्तब्धं भवति । तथा हृदयं साश्मगर्भवद् भारिकं गुरु भवति । कंसगर्भवदश्मगर्भवच्च भारि गुरु भवतीति वा । । "कंसाश्म कंसेन कृतोऽश्मप्रायः" इति **पाठ्ये** ॥

**सर्वलिङ्गस्त्रिभिर्दोषैः,**

यस्तु त्रिभिर्दोषैः हृद्रोगः स सर्वलिङ्गो भवति ॥

**कृमिभिः श्यावनेत्रता ॥ ४३ ॥**

**तमःप्रवेशो हृल्लासः शोषः कण्डूः कफस्रुतिः ।**
**हृदयं प्रततं चात्र क्रकचेनेव दार्यते ॥ ४४ ॥**

**चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणम् ।**

कृमिभिः हृद्रोगे श्यावनेत्रतादयः स्युः । अत्र कृमिहृद्रोगे कृम्युपघातवशात् सततं हृदयं क्रकचेनेव दार्यते । क्रकचः करपत्रम् । [1]൧കവാ൦൦ । तं च कृमिहृद्रोगाख्यमामयं शीघ्रं चिकित्सेत् । कस्मात्—शीघ्रकारिणं शीघ्रं मरणकारिणमिति हेतुगर्भविशेषणम् । महामर्मणो हृदयस्य कृमिभिर्भक्षणेन शीघ्रकारित्वादिति । अत एव घोरं तीव्रम् । तस्य घोरतां दर्शयितुं शीघ्रं चिकित्सेदित्युक्तम् । इत्युक्ता हृद्रोगाः ॥

इदानीं तृष्णोच्यते—

**वातात् पित्तात् कफात् तृष्णा सन्निपाताद्रसक्षयात् ॥ ४५ ॥**
**षष्ठी स्यादुपसर्गाच्च,**

---

१. 'ജൊല്യ൦൦' ग. २. 'ष्योर्यते' ग.

वातादित्यादि । वातात् पित्तात् कफात् सन्निपाताद्रसक्षयाच्चेति पञ्च तृष्णाः । उपसर्गात् शोषादीनां व्याधीनामुपसर्गात् षष्ठी तृष्णा स्यात् । उपसर्गोऽन्यदीर्घरोगाभिषङ्गः । उपदानादेव षट्संख्याया लब्धत्वात् षष्ठीत्येतद्वचनं नियमार्थम् । आमोद्भवाद्या या वक्ष्यमाणाः तृष्णाः ताः सर्वा षट्त्वं न अतिक्रामन्ति । वातपित्तजत्वात् प्रायेण तासामप्यास्वेवान्तर्भाव इति ॥

**वातपित्ते तु कारणम् ।**

**सर्वासु,**

सर्वासु तृष्णासु वातपित्ते प्रधानं कारणम् । कुतः--

**तत्प्रकोपो हि सौम्यधातुप्रशोषणात् ॥ ४६ ॥**

**सर्वदेहभ्रमोत्कम्पतापतृड्दाहमोहकृत् ।**

हि यस्मात् तत्प्रकोपः तयोर्वातपित्तयोः प्रकोपः सौम्यस्य रसाख्यस्य धातोराहारविहारादिना कृतात् प्रशोषणादिति । स च तत्प्रकोपः सर्वदेहभ्रमोत्कम्पादिकृत् । देहस्य भ्रमणमिव स्थितिः देहभ्रमः इति सामान्यकोपः ॥

सर्वासां सौम्यधातुप्रशोषणपूर्वकं तृष्णानां यतो जन्म तस्मादिदमाह--

**जिह्वामूलगलक्लोमतालुतोयवहाः सिराः ॥ ४७ ॥**

**संशोष्य तृष्णा जायन्ते,**

जिह्वामूलेत्यादि । सर्वाश्च तृष्णा जिह्वामूलादिकं संशोष्य जायन्ते । जिह्वामूलं गलं क्लोम तालु चेति द्वन्द्वैकवद्भावः । तोयवहाः सिराश्च संशोष्य ॥

**तासां सामान्यलक्षणम् ।**

**मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः ॥ ४८ ॥**

**कण्ठौष्ठजिह्वाकार्कश्यं जिह्वानिष्क्रमणं क्लमः ।**

**प्रलापश्चित्तविभ्रंशस्तृड्ग्रहोक्तास्तथामयाः ॥ ४९ ॥**

तासां तृष्णानां सामान्यलिङ्गं मुखशोषादयः । मुखशोषो मुखे लालाद्यभावः । जलातृप्तिः अतिजलपानेनाप्यतृप्तिः । कण्ठादीनां कार्कश्यम् अमार्दवभावः । तथा तृड्ग्रहोक्ता[1] आमया गदाः । तालुशोषाङ्गसादादयो रोगानुत्पादीयोक्तास्तेऽपि भवन्ति ॥

---

१. 'क्ताः तृष्णानिग्रहोक्ता आ' ख. घ. ङ. ।

मारुतात् क्षामता दैन्यं शङ्खतोदः शिरोभ्रमः ।
गन्धाज्ञानास्यवैरस्यश्रुतिनिद्राबलक्षयाः ॥ ५० ॥
शीताम्बुपानाद्वृद्धिश्च,

मारुतात् तृष्णायां क्षामतादिकं लक्षणम् । क्षामता धातुक्षीणता । दैन्यमपाटवम् । श्रुतिक्षयः श्रवणाभावः । शीताम्बुपानाद् वृद्धिश्च भवति ॥

पित्तान्मूर्च्छास्यतिक्तता ।
रक्तेक्षणत्वं प्रततं शोषो दाहोऽतिधूमकः ॥ ५१ ॥

पित्तात् तृष्णायां मूर्च्छादयो भवन्ति । प्रततं शोषः, आरम्भादारभ्य नित्यं शोषानुबन्धः । प्रततं दाहश्च ॥

तृष्णासु शोषे वातपित्तं कारणमुक्तम् । तत् कफे कथञ्चित् सौम्यत्वं न सम्भवतीत्यतः कफजायां सम्प्राप्तिमाह—

कफो रुणद्धि कुपितस्तोयवाहिषु मारुतम् ।
स्रोतस्सु स कफस्तेन पङ्कवच्छोष्यते ततः ॥ ५२ ॥
शूकैरिवाचितः कण्ठो निद्रा मधुरवक्त्रता ।
आध्मानं शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचकाः ॥ ५३ ॥
आलस्यमविपाकश्च,

कफ इत्यादि । कुपितः कफः तोयवाहिषु स्रोतस्सु यदा मारुतं रुणद्धि तदा स कफः तेन मारुतेन पङ्कवच्छोष्यते । अतः कफे शुष्के अविपाकान्तं तृष्णालिङ्गम् । कण्ठः शूकैरिवाचितो भवति । शिरस आध्मानं शिरसः सम्पूर्णता । जाड्यमपटुत्वम् । स्तैमित्यमङ्गानां स्तिमितता । इति कफतृष्णा ॥

सर्वैः स्यात् सर्वलक्षणा ।

सर्वैः दोषैः सन्निपातेन जाता तृष्णा सर्वलक्षणा सर्वदोषलक्षणा भवति ॥

आमोद्भवा च भक्तस्य संरोधाद्वातपित्तजा ॥ ५४ ॥

---

१. 'यः शब्दश्रवणाभावः' क. ख. ङ । २. 'वाहृतो' ग ।

या त्वामोद्भवा अजीर्णोद्भवा सा वातपित्तजैव वातपित्तदोषद्वयोद्भवा । यत आमेनानले छन्नेऽन्नस्यापाकेन तर्पणाभावादाहारस्य संरोधाच्च वृद्धाभ्यां वातपित्ताभ्यां जन्यते ॥

**उष्णक्लान्तस्य सहसा शीताम्भो भजतस्तृषम् ।**
**ऊष्मा रुद्धो गतः कोष्ठं यां कुर्यात् पित्तजैव सा ॥ ५५ ॥**
**या च पानातिपानोत्था तीक्ष्णाग्नेः स्नेहजा च या ।**

उष्णेनातपादिना क्लान्तस्य सतः सहसा तत्क्षणमेव शीताम्भो भजतः ऊष्मा रुद्धो गतः कोष्ठं ऊष्मरूपं पित्तं शरीरे व्यावर्तमानं शीतोदकसेकाद् बहिः प्रतिहतं कोष्ठे प्रविष्टं यां तृषं कुर्यात् सा तृष्णा पित्तजैव बोद्धव्या । या च पानातिपानोत्था पानमिति मद्यं तस्यातिपानेन या भवति सा च पित्तजैव । तथा तीक्ष्णाग्नेः पुरुषस्य स्नेहेन या तृष्णा भवति सापि पित्तजैव । न सर्पिः केवलं पित्ते पेयमिति स्मर्तव्यम् ॥

**स्निग्धगुर्वम्ललवणभोजनेन कफोद्भवा ॥ ५६ ॥**

स्निग्धादिभोजनेन या तृष्णा सा कफोद्भवेति ज्ञेया । **अरुणदत्त**स्त्वेव-माह—"तीक्ष्णाग्नेः पानातिपानोत्था पानानां तक्रजलादीनामतिपानोत्थिता या स्नेहजा च या अतिस्नेहोपयोगजा स्निग्धादिभोजनोत्पन्ना च या सा सर्वा कफोद्भवा" इति ॥

**तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका ।**

रसक्षयोक्तेन लक्षणेन 'रसे रौक्ष्यं श्रमः' इत्यादिग्रन्थनिर्दिष्टेन युक्ता या सा तृष्णा क्षयात्मिका क्षयरूपा ज्ञेया । एषा पञ्चमी ॥

**शोषमोहज्वराद्यन्यदीर्घरोगोपसर्गतः ॥ ५७ ॥**
**या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता ।**

शोषादीनामन्येषां दीर्घकालानुवर्तिनां रोगाणामुपसर्गाद् दीर्घकालानुबन्धाद् या तृष्णा जायते तीव्रा तीव्रवेगा सा उपसर्गात्मिका स्मृता । उपसर्गात् षष्ठीत्युक्ता या सैवंभूता ॥

इति हृदयबोधिकायामष्टाङ्गहृदयदीपिकायां
निदानस्थाने पञ्चमोऽध्यायः ॥

# षष्ठोऽध्यायः ।

वातकोपहेतुसामान्याद् धातुशोषणसामान्याच्च राजयक्ष्मानन्तरं मदात्ययनिदानाध्यायारम्भः[1] । "अत्यन्तदोषोद्रेकसामान्यादि"ति हाटकः ।

"त्रिदोषजत्वसामान्याद् राजयक्ष्माद्यनन्तरम् ।
वातप्राधान्यसाम्याच्च मद्यस्यात्यय उच्यते ॥"

इति सारकृत् । "या च पानातिपानोत्था इत्युक्तत्वात् पानरोगमेवाह" इति पाठ्ये । "तृष्णामदात्यययोः सन्तर्पणसाध्यत्वात् तृष्णानन्तरं मदात्ययोऽभिधीयते" इत्यन्ये ।

**अथातो मदात्ययनिदानं व्याख्यास्यामः ।**

मदेन मद्यपानोत्थेन अत्ययो विनाशो विपद् वा मदात्ययः, मदहेतुको व्याधिरित्यर्थः । तस्य निदानं मदात्ययनिदानम् । शेषं पूर्ववत् ॥

मदेनात्ययो मदात्ययः । मदो नाम चित्तधातुविकारः । स च मदकार्यम् । मद्यं च यथा कारणतां[2] तत्र प्रतिपद्यते तथा तीक्ष्ण इत्यादिना दर्शयति—

**तीक्ष्णोष्णारूक्षसूक्ष्माम्लं व्यवाय्याशुकरं लघु ।**
**विकाषि विशदं मद्यमोजसोऽस्माद् विपर्ययः ॥ १ ॥**

तीक्ष्णादिदशगुणं मद्यं, तीक्ष्णादयो मद्यस्य सामान्यगुणाः । तीक्ष्णम् अमृदु, हिङ्ग्वादिवद् घ्राणादिषु दुःखजननम् । उष्णं दाहादिकरम् । सूक्ष्मं सूक्ष्ममार्गानुसारि । रूक्षं स्नेहप्रतियोगि । अम्लं रसेन । व्यवायि विसारि । आशुकरं तीक्ष्णादिगुणानाशु करोतीत्याशुकारि । विशदं असङ्गि । विकाषि अत्यन्तं सर्वाङ्गे विश्लेषि । एवं तीक्ष्णादिगुणसंयुक्तं मद्यम् । अस्मान्मद्यादोजसो विपर्ययो वैपरीत्यम् । यथा— मन्दशीतस्निग्धस्थूलसान्द्रमधुरस्थिरचिरकृद्गुरुश्लेष्मकृत्त्वं पिच्छिलत्वमित्योजसो गुणाः । तीक्ष्णादिगुणयुक्ताद् मद्यान्मन्दादिगुणयुक्तस्योजसो विपर्यय इति यावत् ॥

---

१. 'नारम्भः' ग.  २. 'करणम्' ख. घ. ङ.

तीक्ष्णादयो विषेऽप्युक्ताश्चित्तोपप्लाविनो गुणाः ।
जीवितान्ताय जायन्ते विषे तूत्कर्षवृत्तितः ॥ २ ॥

एते तीक्ष्णादयो दश गुणाः चित्तोपप्लाविनः चित्तसम्मोहकारिणो विषेऽप्युक्ताः । तत्रस्थाश्च ते जीवितान्ताय जायन्ते । तत्र तेषामुत्कर्षवृत्तिर्हेतुः । मद्ये ते गुणाः उत्कर्षाभावाद् जीवितान्ताय न भवन्तीत्येष विशेषः । अनेनैतत् कथयति--विषं मद्यसममेवौजसो विपरीतमिति ॥

कथं कृत्वा मद्यं चेतो विकारं नयतीत्याह—

तीक्ष्णादिभिर्गुणैर्मद्यं मन्दादीनोजसो गुणान् ।
दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥ ३ ॥
आद्ये मदे,

तीक्ष्णादिभिरित्यादि[1] । तीक्ष्णादिभिर्दशभिः गुणैः ओजसो मन्दादीन् दश गुणान् संक्षोभ्य दुष्टतामापाद्य । संक्षोभणं च विपरीतत्वात् स्वप्रभावत्वादित्यन्ये । संक्षोभ्य चेतो विक्रियां नयत्याद्ये मदे मनोविकारं करोतीत्यर्थः । विषस्य सप्त वेगाः । मद्यस्य त्रयः प्रथममध्यमोत्तमाः । तेष्वयमाद्यो मदः । ननु तीक्ष्णादिभिरित्येतावदेवास्तु किं दशभिर्दशेत्यनेन । पाठादेव हि दशसंख्यावगमिष्यते । अस्त्येवैतत् । किन्तु सर्वैस्तीक्ष्णादिभिः सर्वानपि मन्दादीन् संक्षोभ्य चेतो विक्रियां मद्यं नयति न तु कियद्भिरपि तीक्ष्णादिभिः कियत एव मन्दादीनिति प्रतिपादनाय संख्याग्रहणम् । उक्तं च **मुनिना**—

"गौरवं लाघवाच्छैत्यमौष्ण्यादम्लस्वभावतः ।
माधुर्यं मार्दवं तैक्ष्ण्यात् प्रसादं चाशुभावनात् ॥
रौक्ष्यात् स्नेहं व्यवायित्वात् स्थिरत्वं श्लक्ष्णतामपि ।
विकाषिभावात् पैच्छिल्यं वैशद्यात् सान्द्रतां तथा ॥
सौक्ष्म्यान्मद्यं विहन्त्येवमोजसः स्वगुणैर्गुणान् ।
सत्त्वं तदाश्रयं चाशु संक्षोभ्य जनयेन्मदम् ॥
रसधात्वादिमार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम् ।
प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते ॥

१. 'दि मद्यं सेवितं ती' । २. 'मदान्यत्र त्र' ग.

अतिपीतेन मद्येन विहतेनौजसा च तत् ।
हृदयं विकृतिं याति तत्रस्था ये च धातवः ॥"

इति । आद्ये मदे यथास्वं प्रबोधजनके पुमान् स्थितो मद्यपानात् तदात्मिकं सुखं समधिगच्छतीत्यनुक्तमपि संभाव्यते । तथा च **मुनिः** —

"पञ्चस्वर्थेषु काम्येषु या रतिः प्रथमे मदे ।
यूनां वा स्थविराणां वा तस्य नास्त्युपमा भुवि ॥

इति ।

**द्वितीये स प्रमादायतने स्थितः ।**
**दुर्विकल्पहतो मूढः सुखमित्यधिमुच्यते ॥ ४ ॥**

ततो मद्यस्यातिपानेन द्वितीयो मदो भवति । तस्मिन् द्वितीये मदे प्रमादानां साहसानाम् इहामुत्र चाशुभहेतूनामायतने स्थाने । [1]'प्रमादानां कारणभूते" इतीन्दुः **हाटकश्च** । तस्मिन् स्थितः पुरुषो दुर्विकल्पैः कुतर्कैः हतः सन् मूढः कार्याकार्यानभिज्ञः । "दुर्विकल्पो दुश्चिन्ता तया हतः" इति **पाठ्ये** । सुखमित्यधिमुच्यते सुखमिति ज्ञानेन प्रथममदोत्पन्नेन तदानीं विमुच्यते । अथवा सुखमित्यधिमुच्यते सुखमिति मत्वा तस्मादधिकं मुच्यते । **हाटक**स्त्वाह—"अधिमुच्यते निश्चिनोति । सुखमेतदित्यभिनिविशते ।" इति । 'सुखमित्यभिमन्यते' इति केचित् पठन्ति । 'अवबुद्ध्यते' इत्यन्ये । तदेव सुखमित्यवबुद्ध्यते इत्यर्थः । **अरुणदत्तो**ऽप्याह—"मद्यस्य त्रयो वेगाः प्रथममध्यमोत्तमाः । तेष्वाद्ये द्वितीये च मदे मदवेगे प्रमादायतने प्रमादस्थानभूते स्थितः पुरुषो दुर्विकल्पहतः कृत्याकृत्यविवेकरहितः इदं वेदमिदं वेति विकल्पेन हतो वा मूढः किञ्चिदपि ज्ञातुमशक्तः सुखमिति सर्वसुखेभ्यो विमुच्यते । हितं सर्वं परित्यजति" इति ॥

**मध्यमोत्तमयोः सन्धिं प्राप्य राजसतामसः ।**
**निरङ्कुश इव व्यालो न किञ्चिन्नाचरेज्जडः ॥ ५ ॥**

---

१. 'प्रमादकारण' मुद्रितपाठः ।

ततोऽप्यतिपानेन तृतीयो मदो भवति यस्य द्वितीयेन तथाविधः सन्धिर्भवति। मध्यमोत्तयोः द्वितीयतृतीयमदयोः सन्धिं प्राप्य अन्तरं लब्ध्वा मध्यमवेगमतिक्रम्यारब्धोत्तमवेगो राजसतामसः पुरुषो निरङ्कुशो व्याल इव न किञ्चिदशुभं नाचरेत्। अपि तु सर्वमशुभमाचरेदेव 'गच्छेदगम्या' इत्यादि। यन्नाचरति तन्न भवतीत्यर्थः। निरङ्कुशः स्वतन्त्रवृत्तिः। व्यालो दुष्टगजः। स गजो यथा सर्वमशुभमाचरति तद्वदिति। राजसतामस इति राजसश्च तामसश्चेत्यर्थः। राजसतामसग्रहणात् सात्त्विकः पुरुषो नेदृशीमवस्थामाप्नोतीति गमयति। राजसतामसः रजस्तमोभ्यां युक्तः सन् पुरुष इति केचित्। राजसगुणयुक्तस्तामस इत्यन्ये। **पाठ्ये**ऽप्युक्तं--"न किञ्चिन्नाचरेदिति सर्वान् प्रतिषिद्धान् करोतीत्यर्थः। तदुक्तं **सौश्रुते**—

"गच्छेदगम्याः पुरुषोऽतिमत्तः
खादेदभक्ष्याणि च नष्टसंज्ञः।
ब्रूयाच्च गुह्यानि हृदि स्थितानि
तस्मान्मदं न प्रशिशंसिषामः॥" इति॥

'इयं भूमि'रित्यादिना त्रिलिङ्गेनापि मद्यस्य त्याज्यतां प्रकटयति—

**इयं भूमिरवद्यानां दौःशील्यस्येदमास्पदम्।**
**एकोऽयं बहुमार्गाया दुर्गतेर्देशिकः परम्॥ ६॥**

अवद्यानां दोषाणामियं भूमिः स्थानम्। यो मध्यमोत्तमयोः सन्धिः दौःशील्यस्य दुराचारत्वस्य इदमास्पदं प्रतिष्ठा। इदमिति सन्धिः। बहुमार्गाया अनेकमुखायाः दुर्गतेः पापगतेः नरकादेः परमत्यर्थम् अयमेकः प्रधानो देशिकः आचार्यः, कारक इत्यर्थः। दुर्गतिं ददातीति यावत्। अयमिति सन्धिः। इयमिदमयमिति भूम्यास्पददेशिकापेक्षया लिङ्गत्रयनिर्देशः। न सन्ध्यपेक्षया। **सारकृदे**वमाह—"इयं मदावस्था मध्यमोत्तमयोः सन्धिप्राप्तिः अवद्यानां भूमिः आकरः। इदं मदावस्थान्तरं, एकोऽयं मदविशेषो दुर्गतेः नरकप्राप्तेः देशिकः आचार्यः उपदेष्टा" इति। **पाठ्ये** तूक्तं—"इयं सुरा इदं मद्यमयमासवः" इति॥

सम्पूर्णस्य तृतीयमदस्य लक्षणमाह—

**निश्चेष्टः शववच्छेते तृतीये तु मदे स्थितः ।**
**मरणादपि पापात्मा गतः पापतरां दशाम् ॥ ७ ॥**

निश्चेष्ट इत्यादि । तृतीये तु मदे सम्पूर्णे स्थितो निश्चेष्टः शववत् शेते । ओजसो विहतत्वान्निश्चेष्टः चेष्टया कायवाङ्मनोलक्षणया रहितः केवलं शयनमेव भजते । एवं च सत्यसौ च पापात्मा मरणादपि पापतरां दशामवस्थां प्राप्तः । मृतो मरणसमनन्तरमेव शरीरान्तरं प्राप्य सुखं वा दुःखं वा विन्देत, तृतीयां मदावस्थां प्राप्तस्तु पुरुषो परशरीराप्राप्तेर्न कथञ्चित् सुखाद्यनुभवतीति मरणादप्यनिष्टत्वान्मरणादपि पापतरां दशामित्युक्तम् । मदलयलक्षणम् इत्युक्तं मुनिनापि—

"ओजस्यविहते पूर्वो हृदि च प्रतिबोधिते ।
मध्यमो विहतेऽल्पेऽपि विहते तूत्तमो मदः ॥" इति ॥

धर्मेत्यादिना तृतीयमदावस्थायाः कष्टत्वान्मद्यातिसक्तिं निराकरोति—

**धर्माधर्मं सुखं दुःखमर्थानर्थं हिताहितम् ।**
**यदासक्तो न जानाति कथं तच्छीलयेद् बुधः ॥ ८ ॥**

यदासक्तः यस्मिन् मद्ये आसक्तः तत्परो नरो धर्मादीन् दृष्टादृष्टफलान् न जानाति तन्मद्यं बुधः कथं शीलयेत् । तन्मद्यं बुधः कथमपि शीलयितुं नार्हति । शीलयेदित्यनेन सक्तिं निषेधयति न तु पानमात्रम् । तस्मात् शीलनान्मोहादयोऽपि भवन्तीत्याह—

**मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रिताः ।**
**सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः ॥ ९ ॥**
**यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधु यत् ।**

मद्य इत्यादि । मद्ये नित्यं मोहादयः संश्रिताः तत्कारणत्वात् । अपतानको वातव्याधौ वक्ष्यते । अथवा किं मोहादिभिरुक्तैः, यत्रैकः स्मृतिविभ्रंशः यत्र यस्मिन् मद्ये उपयुक्ते स्मृतिविभ्रंश एको भवति तत्र मद्ये यदासाधु अशोभनं तत् सर्वमवश्यं स्थितमेव ॥

तच्च मद्यमयुक्तियुक्तं सुतरामसाध्विति प्रतिपादयन्नाह---

**अयुक्तियुक्तमन्नं हि व्याधये मरणाय वा ॥ १० ॥**
**मद्यं त्रिवर्गधीधैर्यलज्जादेरपि नाशनम् ।**

अयुक्तियुक्तमित्यादि । **सारकृद**प्याह--"अयुक्तियुक्तमित्यादिना मिथ्याहारादपि मद्यस्य अयुक्तियुक्तस्य निन्द्यतां ब्रूते । अपि च मोहादिकर्तृत्वमपीति पीतस्य युक्तियुक्तस्य चेति प्रतिपादयितुं चाह" इति । अयुक्तिः द्रव्यतः कालतो देशतः क्रमतश्च शास्त्रविहितमार्गादन्यथाभावः । अयुक्त्या सेवितमन्नं व्याधये भवति अथवा मरणायैव तदा च न कदाचिददृष्टक्षतिः । हिशब्दः प्रसिद्धौ । मद्यं पुनरयुक्तियुक्तमयुक्त्या पीतं त्रिवर्गादेरपि नाशनं त्रिवर्गादिनाशनेऽपि पर्याप्तम् । अपिशब्दात् सुतरां व्याधये भवति मरणाय वा । धर्मार्थकामास्त्रिवर्गः । आदिग्रहणेनान्येषां सर्वेषां प्रशस्तानां गुणानां ग्रहणम् ॥

तच्च मद्यं (न) सर्वत्र दोषावहत्वेन सम्भवतीत्याह---

**नातिमाद्यन्ति बलिनः कृताहारा महाशनाः ॥ ११ ॥**
**स्निग्धाः सत्त्ववयोयुक्ता मद्यनित्यास्तदन्वयाः ।**
**मेदःकफाधिका मन्दवातपित्ता दृढाग्नयः ॥ १२ ॥**

नातिमाद्यन्तीत्यादि । **सारकृत्तु**--"नातिमाद्यन्तीत्यादिना तां च युक्तिं वक्ति" इत्याह । बल्यादयो बहुनापि मद्येन नातिमाद्यन्ति । यथोपद्रवयुक्तास्तथा न माद्यन्तीत्यर्थः । बलिनः प्रभूतबलाः । कृत आहारो यैस्तै कृताहाराः । यथोक्तं भुक्त्वा पीतवन्तः । महाशना बहुभुजः । स्निग्धाः स्नेहभावितशरीराः । सत्त्वेन यौवनेन च युक्ताः । मद्यनित्याः सततपानात् सात्मीभूतमद्याः । तदन्वयाः मद्यपवंशजाः । **हाटको**ऽपि--"मद्यपकुलोत्पन्नाः" इत्याह । "तदन्वयाः मद्यनित्यान्वयजाः" इत्य**रुणदत्तः** । दृढाग्नयः तीक्ष्णाग्नयश्च ॥

**विपर्ययेऽतिमाद्यन्ति विस्रब्धाः कुपिताश्च ये ।**
**मद्येन चाम्लरूक्षेण साजीर्णे बहुनाऽति च ॥ १३ ॥**

विपर्यये यथानिर्दिष्टाद् वैपरीत्ये अतिमाद्यन्ति यथा अबलिन इत्यादि। तथा विस्रब्धा अमृतमिवेदं स्पृहणीयं सुरैरपि पीयते अस्माभिरपीति तद्गतमनस्का विश्वस्ताः। कुपिताश्च ये च कुपिताः तेऽपि सर्वेऽतिमाद्यन्ति। अम्लरूक्षेण अम्लेन रूक्षेण च मद्येन सर्वे एवातिमाद्यन्तीति सम्बन्धः। अत्यर्थाम्लेनेति बोद्धव्यम्। मद्यस्य सर्वस्यैवाम्लगुणयोगात्। तथा साजीर्णे अजीर्णसहिते पीतेनातिमाद्यन्ति। सारकृत्त्वाह--"साजीर्णे सशब्द ईषदर्थे ईषदजीर्णे तस्मिन्नेव मद्ये पीतेऽतिमान्द्यन्ती"ति। अति बहुना अतिपानात् पीतेन चातिमाद्यन्ति॥

**वातात् पित्तात् कफात् सर्वैश्चत्वारः स्युर्मदात्ययाः।**
**सर्वेऽपि सर्वैर्जायन्ते व्यपदेशस्तु भूयसा॥ १४॥**

वातादिभिः पृथक् सर्वैः सन्निपातेन च चत्वारो मदात्ययाः स्युः। तथापि वातादिव्यपदेशस्तु भूयसा उत्कृष्टेन दोषेण व्यपदेशः॥

**सामान्यं लक्षणं तेषां प्रमोहो हृदयव्यथा।**
**विड्भेदः प्रततं तृष्णा सौम्याग्नेयो ज्वरोऽरुचिः॥ १५॥**
**शिरःपार्श्वास्थिहृत्कम्पो मर्मभेदस्त्रिकग्रहः।**
**उरोविबन्धस्तिमिरं कासः श्वासः प्रजागरः॥ १६॥**
**स्वेदोऽतिमात्रं विष्टम्भः श्वयथुश्चित्तविभ्रमः।**
**प्रलापश्छर्दिरुत्क्लेशो भ्रमो दुःस्वप्नदर्शनम्॥ १७॥**

तेषां चतुर्णां मदात्ययानां प्रमोहादि दुःस्वप्नदर्शनान्तं सामान्यं लक्षणं साधारणं लक्षणम्। सौम्याग्नेयो ज्वरो यो मिश्र इत्युक्तः। अथवा कदाचित् सौम्यगुणः कदाचिदाग्नेयगुणो ज्वरो भवति। उदरप्रदेशे पिण्डीभूय जरणं विष्टम्भः॥

यथादोषं लक्षणमाह—

**विशेषाज्जागरश्वासकम्पमूर्धरुजोऽनिलात्।**
**स्वप्ने भ्रमत्युत्पतति प्रेतैश्च सह भाषते॥ १८॥**

विशेषादित्यादि । पूर्वोक्तेषु लिङ्गेषु सत्स्वपि अनिलान्मदात्यये विशेषेण जागरादयः स्युः ॥

**पित्ताद्दाहज्वरस्वेदमोहातीसारतृड्भ्रमाः ।**
**देहो हरितहारिद्रो रक्तनेत्रकपोलता ॥ १९ ॥**

पित्तान्मदात्यये विशेषाद्दाहादयः स्युः । देहोऽपि हरितहारिद्रवर्णो भवति । नेत्रकपोलयोश्च रक्तता ॥

**श्लेष्मणश्छर्दिहृल्लासनिद्रोदर्दाङ्गगौरवम् ।**

श्लेष्मणश्छर्द्यादयः स्युः । निद्रा अतिनिद्रा ऊर्ध्वकाये अर्दः उदर्दः । अर्दः अर्दनम् । उरसोऽभिष्यन्द उदर्द इति च । "उदर्दोऽन्तःस्तब्धता" इत्यरुणदत्तः ॥

**सर्वजे सर्वलिङ्गत्वं,**

सर्वजे सान्निपातिके मदात्यये सर्वलिङ्गत्वं भवति । इत्युक्ता मदात्ययाः ॥

अनन्तरं मद्यकारणौ ध्वंसकविक्षयौ निर्णीयेते—

**मुक्त्वा मद्यं पिबेत्तु यः ॥ २० ॥**

**सहसानुचितं चान्यत् तस्य ध्वसकविक्षयौ ।**
**भवेतां मारुतात् कष्टौ दुर्बलस्य विशेषतः ॥ २१ ॥**

मुक्त्वेत्यादि । यो नरो मद्यपः सन् मद्यं बहुकालं त्यक्त्वा सहसान्यदनुचितं मद्यमतिमात्रं पिबेत् तस्य नरस्य वाताद्धेतोः ध्वंसकविक्षयौ नाम्ना व्याधी मद्यव्यापत्सम्भूतौ भवेताम् । दुर्बलस्य विशेषेण भवेताम् । कष्टौ कृच्छ्रसाध्यत्वात् । **अरुणदत्त**स्त्वाह—"पूर्वं बहुशोऽनुभूय मुक्त्वा विरम्य पश्चान्मद्यं यः पिबेत् सहसापि तत्कालमेवान्यदनुचितमपथ्यं च पानभोजनादि कुर्यात् तस्य ध्वंसकविक्षयौ नाम व्याधी भवेताम् । मारुतात् सम्भूतौ कष्टौ कृच्छ्रसाध्यौ । दुर्बलस्य विशेषेण कृच्छ्रसाध्यौ" इति ।

तयोर्लक्षणमाह—

**ध्वंसके श्लेष्मनिष्ठीवः कण्ठशोषोऽतिनिद्रता ।**
**शब्दासहत्वं तन्द्रा च; विक्षयेऽङ्गशिरोऽतिरुक् ॥ २२ ॥**

**हृत्कण्ठरोगः संमोहः कासस्तृष्णा वमिर्ज्वरः ।**

ध्वंसके श्लेष्मनिष्ठीवादि लक्षणम् । शब्दासहत्वमन्यशब्दश्रवणासहनम् । तन्द्रा अलसभावः । विक्षये रुगादि लक्षणम् ।

मद्यमुपसंहरति—

**निवृत्तो यस्तु मद्येभ्यो जितात्मा बुद्धिपूर्वकृत् ॥ २३ ॥**
**विकारैः स्पृश्यते जातु न स शारीरमानसैः ।**

पानयोग्योऽपि यो मद्येभ्यो निवृत्तः जितात्मा जितेन्द्रियः बुद्धिपूर्वकारी विमृश्यकारी स शारीरमानसैः विकारैः कदाचिदपि न स्पृश्यते नाक्रम्यते ॥

अनन्तरं मद्यपचित्तोपघातसामान्यादत्रैव मदादयो निर्णीयन्ते—

**रजोमोहाहिताहारपरस्य स्युस्त्रयो गदाः ॥ २४ ॥**
**रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः ।**
**मदमूर्च्छायसंन्यासा यथोत्तरबलोत्तराः ॥ २५ ॥**

रजोमोहेत्यादि । अरुणदत्तस्तु—"मद्यव्यापदुपद्रवत्वाच्च मदादयोऽपि अत्रोच्यन्ते" इत्याह । रजःप्रधानस्य मोहप्रधानस्य अपथ्याहारपरस्य पुरुषस्य रसादिवाहिनां स्रोतसां अहिताहारसम्भूतवातादिदोषरोधेन समुद्भवाः मदादयस्त्रयो व्याधिविशेषा उत्पद्यन्ते । अरुणदत्तोऽपि "रजोगुणोद्रेकान्मोहेन च अहिताहारपरस्य मदादयः त्रयो गदाः स्युः" इत्याह । त्रिभिर्हेतुभिः त्रयो गदाः क्रमेण स्युरिति वा । यथोत्तरबलोत्तराः यथोत्तरमुपर्युपरि बलाधिकाः मदमूर्च्छाय-सन्न्यासा इति ॥

**मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि ।**

अत्र एषु मदादिषु मध्ये मदः सप्तधा दोषैः पृथग्भूतैः सर्वैश्च सन्निपातेन रक्तेन कुपितेन मद्येन विषेण चेति ॥

**सक्तानल्पद्रुताभाषश्चलः स्खलितचेष्टितः ॥ २६ ॥**
**रूक्षश्यावारुणतनुर्मदे वातोद्भवे भवेत् ।**

वातोद्भवे मदे पुरुषः सक्ताभाषत्वादियुक्तो भवेत् । सक्तः कृतसङ्गः अनल्पः प्रभूतः द्रुतः शीघ्रप्रवृत्तश्च आभाषः आभाषणं यस्य स एवम् । चलः स्खलितचेष्टितः स्खलितं परवशं चेष्टितं गमनादि यस्य स एवम् । रूक्षा श्यावारुणा वा तनुर्देहो यस्य सः रूक्षश्यावारुणतनुः ॥

**पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ॥ २७ ॥**

पित्तेन मदे क्रोधनत्वादियुक्तो भवति । परैर्विवादः कलहः ॥

**स्वल्पासम्बद्धवाक् पाण्डुः कफाद् ध्यानपरोऽलसः ।**

कफाद्धेतोः स्वल्पा असम्बद्धा पूर्वापरविरुद्धा वाग् यस्य स एवम् । पाण्डुवर्णः । ध्यानपरः किमपि ध्यायन्नेव वर्तमानः । अलसः मन्दचेष्टः ॥

**सर्वात्मा सन्निपातेन,**

सन्निपातेन मदे सर्वात्मा अनन्तरोक्तसर्वलिङ्गो भवति ॥

**रक्तात् स्तब्धाङ्गदृष्टिता ॥ २८ ॥**

**पित्तलिङ्गं च,**

रक्तान्मदे स्तब्धाङ्गता स्तब्धदृष्टिता च भवति । पित्तलिङ्गं पित्तमदलिङ्गं च भवति ॥

**मद्येन विकृतेहास्वराङ्गता ।**

मद्येन सम्भूते मदे विकृतेहादित्वं लिङ्गम् ॥

**विषे कम्पोऽतिनिद्रा च सर्वेभ्योऽभ्यधिकस्तु सः ॥ २९ ॥**

विषे विषजे मदे कम्पः अतिनिद्रा च भवति । विषादिति वा पाठः । स एव विषजो मदः सर्वेभ्यो मदेभ्योऽभ्यधिकः उद्रिक्तवेगो बाधावहत्वेन ॥

**लक्षयेल्लक्षणोत्कर्षाद् वातादीन् शोणितादिषु ।**

एषु च शोणितादिषु शोणितादिजेषु मदेषु वातादीन् मदलक्षणोत्कर्षाल्लक्षयेत् । अनेन एतदुक्तं भवति—रक्तमद्यविषमदा यद्यपि त्रिदोषजाः तथाप्युत्कर्षेण वातादीनामन्यतमस्य आधिक्यं व्यवस्येत् । इत्युक्ता मदाः ॥

मूर्च्छायलक्षणमाह—

**अरुणं कृष्णनीलं वा खं पश्यन् प्रविशेत् तमः ॥ ३० ॥**
**शीघ्रं च प्रतिबुध्येत हृत्पीडा वेपथुर्भ्रमः ।**
**कार्श्यं श्यावारुणा छाया मूर्च्छाये मारुतात्मके ॥ ३१ ॥**

अरुणमित्यादि । मारुतात्मके मूर्च्छाये पुरुषोऽरुणाद्यन्यतममाकाशं पश्यन् तमः प्रविशेत् मूर्च्छावस्थां प्राप्नोति । निश्चेष्टो भवतीत्यर्थः । तमःप्रवेशो मूर्च्छा । शीघ्रं च प्रतिबुध्येत शीघ्रं संज्ञां प्राप्नोति । हृत्पीडादयः तत्र भवन्ति ॥

**पित्तेन रक्तं पीतं वा नभः पश्यन् विशेत् तमः ।**
**विबुध्येत च सस्वेदो दाहतृड्तापपीडितः ॥ ३२ ॥**
**भिन्नविण्नीलपीताभो रक्तपीताकुलेक्षणः ।**

पित्तेन मूर्च्छाये रक्तं पीतं वा नभः पश्यन् तमो विशेत् । विबुध्येत च अनन्तरमेव ॥

**कफेन मेघसङ्काशं पश्यन्नाकाशमाविशेत् ॥ ३३ ॥**
**तमश्चिराय बुध्येत सहृल्लासः प्रसेकवान् ।**
**गुरुभिः स्तिमितैरङ्गैरार्द्रचर्मावनद्धवत् ॥ ३४ ॥**

कफेन मूर्च्छाये मेघसङ्काशमाकाशं पश्यन् तमः आविशेत्, चिराच्च बुध्येत । आर्द्रचर्मावनद्धवद् गुरुभिः स्तिमितैरङ्गैः युक्तो भवति ॥

**सर्वाकृतिस्त्रिभिर्दोषैरपस्मार इवापरः ।**
**पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः ॥ ३५ ॥**

त्रिभिर्दोषैः सन्निपतितैः यो मूर्च्छायः स सर्वाकृतिः सर्वलक्षणोपेतो भवति । अपरोऽन्योऽपस्मार इव निश्चेष्टं यथा तथा पुरुषमाशु पातयति । दोषकोपनानन्तरमेव शीघ्रं पातयति विना बीभत्सचेष्टितैरपस्मारोक्तैः मूत्रपुरीषोत्सर्गफेनोद्वमनादिभिश्चेष्टितैः वर्जयित्वा पातयति । महारम्भत्वेन निश्चेष्टाशुपातनेन च अपस्मारसदृश इत्यर्थः ॥

---

१. 'यश्च त', २. 'पातेन' ग.

मदमूर्च्छाययोः पुनरवबोधहेतुरुच्यते दोषेष्वित्यादिना—

**दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ।**
**स्वयमेवोपशाम्यन्ति सन्न्यासो नौषधैर्विना ॥ ३६ ॥**

देहिनां मदमूर्च्छायाः दोषेषु कृतवेगेषु सत्सु स्वयमेव औषधनिरपेक्षा एवोपशाम्यन्त्यावेगकालम् । सन्न्यासः पुनः औषधैर्विना स्वयं न शाम्यति ॥

सन्न्यासः कथमुत्पद्यते इत्याह—

**वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ।**
**सन्न्यासं सन्निपतिताः प्राणायतनसंश्रयाः ॥ ३७ ॥**
**कुर्वन्ति तेन पुरुषः काष्ठभूतो मृतोपमः ।**
**म्रियेत शीघ्रं शीघ्रं चेच्चिकित्सा न प्रयुज्यते ॥ ३८ ॥**

वाग्देहेत्यादि । अतिबलाः अतिप्रवृद्धबलाः स्वकारणविशेषवशाद् , मलाः वातादयो दोषा वाग्देहमनसां चेष्टामाक्षिप्य गृहीत्वा परस्परं सन्निपतिताः प्राणायतनं हृदयादि संश्रिताः सन्न्यासं कुर्वन्ति । "प्राणायतनसंश्रिताः हृदयेऽवस्थिताः" इत्यरुणदत्तः । तेन सन्न्यासेन पुरुषः काष्ठभूतो मृतोपमश्च भवति । तत्र च यदि शीघ्रं चिकित्सा न प्रयुज्यते ततः शीघ्रं म्रियेत । संभावनायां लिङ् ॥

**अगाधे ग्राहबहुले सलिलौघ इवातटे ।**
**सन्न्यासे विनिमज्जन्तं नरमाशु निवर्तयेत् ॥ ३९ ॥**

तस्मात् सन्न्यासे विनिमज्जन्तं नरं शीघ्रं निवर्तयेद्, उद्धरेद् वैद्य इति शेषः । यथान्यं नरम् अगाधे अनास्पदे गम्भीरे ग्राहबहुले यादोभिर्मकरादिभिर्बहुभिराकीर्णे अतटे अपारे सलिलौघे विनिमज्जन्तं बलान्निवर्तयति तद्वदिति । अस्मिन् ग्राहवत् प्राणहरा रुग्विशेषाः । अगाधे ग्राहबहुले इत्यादिना उदाहरणेन महात्ययत्वमस्य व्याधेः प्रदर्शयन् स्वल्पकालयापनमप्यस्मिन् व्याधौ न कार्यमिति द्योतयति ॥

मदमानेत्यादिना मदात्ययनिदानत्वान्मद्येनैव उपसंहरन्नाह—

मदमानरोषतोष-
प्रभृतिभिररिभिर्निजैः परिष्वङ्गः ।
युक्तायुक्तं च समं
युक्तिवियुक्तेन मद्येन ॥ ४० ॥

तोषो हर्षः । मदप्रभृतिभिररिभिः । प्रभृतिशब्देन कामक्रोधादयः परिगृह्यन्ते । तैर्निजैरात्मीयैः परिष्वङ्गः युक्तायुक्तं च समम्, उचितानुचितं हिताहितं कृत्याकृत्यं चेत्येतत् समं भवति । कृत्याकृत्यविवेको न भवति । युक्तिवियुक्तेन मद्येन अक्रमपीतेन मद्येन एतद्भवति ॥

एवं विधिहीनस्य दोषमुक्त्वा बलकालेत्यादिना विधियुक्तस्य पुनर्गुणमाह । सारकृदपि—"बलकालेत्यादिना युक्तियुक्तस्य परमौषधत्वं च दर्शयति" इत्याह—

बलकालदेशसात्म्य-
प्रकृतिसहायामयवयांसि ।
प्रविभज्य तदनुरूपं
यदि पिबति ततः पिबत्यमृतम् ॥ ४१ ॥

बलादीनि प्रविभज्य पृथङ् निरूप्य तदनुरूपं बलाद्यनुरूपमेव यदि मद्यं पिबति तत एवं पानाद्धेतोः अमृतमेव पिबति सः । अमृतपानसदृशमेवंपानमित्यर्थः । तत्र बलादयो निर्णीताः । सहायास्तत्र नोक्ताः । ते त्रिविधाः । सात्त्विका राजसास्तामसाश्चेति । सहायशब्देनोपदंशादयो वक्ष्यन्ते इति केचित् । अमृतमिति अमृतमिवेत्यर्थः । अथवा परमौषधमिति यावत् ॥

इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने षष्ठोऽध्यायः ॥

---

# सप्तमोऽध्यायः ।

निजारिभिः परिष्वङ्ग इत्युक्तत्वादतःपरम् ।
अर्शांसि रिपुतुल्यानीत्युच्यतेऽर्शोनिदानकम् ॥

इन्दुरपि — "प्राणायतनाश्रयत्वसामान्यान्मदात्ययादेरनन्तरमर्शोनिर्णयायाध्यायारम्भः" इत्याह । अरुणदत्तस्तु—"मदात्ययवदनेकोपद्रवकरणत्वादनेकमूलरोगत्वात् कार्ष्ण्यपाण्डुत्वादिकरणसामान्याच्च" इत्याह ।

**अथातोऽर्शसां निदानमध्यायं व्याख्यास्यामः ।**

केचित्त—अरिवत् प्राणिनो मांसकीलका इत्यादिकं पद्यमत्र पठन्ति ।

**अरिवत् प्राणिनो मांसकीलका विशसन्ति यत् ।**
**अर्शांसि तस्मादुच्यन्ते गुदमार्गनिरोधतः ॥ १ ॥**
**दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् ।**
**मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥ २ ॥**

(यद्) यस्माद् पाय्वादिषु मांसकीलका अरिवत् शत्रुवत् प्राणिनो विशसन्ति तस्मादर्शांसीत्युच्यन्ते । दोषा इत्यादिना सर्वेषामर्शसां गुदमेढ्रादिजानां सामान्येन सम्प्राप्त्यादीनि निरूपयति । दोषा वातादयो दुष्टाः त्वङ्मांसमेदांसि प्रदूष्य विविधाकृतीन् नानाविधाकृतीन् मांसाङ्कुरान् अपानादौ गुदादौ । आदिशब्देन कर्णनासिकालिङ्गयोन्यादिषु सर्वेषु शरीरप्रदेशेषु कुर्वन्ति तानर्शांसि जगुः ऊचुराचार्याः ।

**सहजन्मोत्तरोत्थानभेदाद् द्वेधा समासतः ।**
**शुष्कस्राविविभेदाच्च,**

सहेत्यादि । तानि अर्शांसि समासतः संक्षेपात् सहजन्मोत्तरोत्थानभेदाद् द्वेधा सहोत्थानभेदाज्जन्मोत्तरोत्थानभेदाच्च द्वेधा द्विप्रकाराणि । सहोत्थानं सहोत्पत्तिः । जन्मोत्तरोत्थानं जन्मन उत्तरकालोत्पत्तिः । कानिचिच्छरीरेण सहजातानि कानिचिज्जन्मोत्तरकालभावीनि । अरुणदत्तस्तु—"सहजन्मभेदात सहजभेदाद् उत्तरोत्थानभेदादुत्तरोत्पत्तिभेदाच्च" इत्याह । तथा शुष्कस्राविविभेदाच्च

द्वेधा । कानिचिच्छुष्काणि कानिचिदास्रावीणि आर्द्राणि । **संग्रहे**- "समासतस्तु द्विविधान्यर्शांसि । सहजानि जन्मोत्तरकालजानि च । पुनश्च द्विविधानि । शुष्काण्यार्द्राणि च । सर्वेषां पुनरधिष्ठानं मेदो मांसं त्वक् च" इति ।

अपानादावित्युक्तम् । अथ तदेव गुदापरपर्यायं लक्षयत्यर्शःस्थान-प्रमाणावधारणार्थम्—

**गुदः स्थूलान्त्रसंश्रयः ॥ ३ ॥**

**अर्धपञ्चाङ्गुलस्तस्मिंस्तिस्रोऽध्यर्धाङ्गुलाः स्थिताः ।**
**वल्यः प्रवाहिणी तासामन्तर्मध्ये विसर्जनी ॥ ४ ॥**
**बाह्या संवरणी तस्या गुदोष्ठो बहिरङ्गुले ।**
**यवाध्यर्धप्रमाणेन रोममार्गस्ततःपरम् ॥ ५ ॥**

गुद इत्यादि । गुदः अर्शसां स्थानभूतः स्थूलान्त्रसंश्रयः स्थूलान्त्रप्रतिबद्धः स्थूलान्त्रमूलान्त्रस्याधोभूताग्रमर्धपञ्चाङ्गुलः अर्धेनोनाः पञ्च अर्धपञ्च अर्ध-पञ्चाङ्गुलानि यस्य सोऽर्धपञ्चाङ्गुलः अर्धोनपञ्चाङ्गुलः । **हाटकोऽपि**—"अर्धहीन-पञ्चाङ्गुल" इत्याह । सार्धचतुरङ्गुलपरिमाण इत्यर्थः । **अरुणदत्तोऽपि**—"अध्यर्ध-चतुरङ्गुल" इत्याह । वलीप्रमाण एवात्र गुद इति विवक्षितः । अर्धाधिक-पञ्चाङ्गुल इत्येके । तस्मिन् गुदे तिस्रो वल्यः स्थिताः । अध्यर्धाङ्गुलाः प्रत्येक-मध्यर्धाङ्गुलविशाला इत्यर्थः । **संग्रहेऽप्युक्तम्**—"गुदे तस्मिन् पूर्वमुक्ता वली-संज्ञास्तिस्रः पेश्योऽध्यर्धाङ्गुलास्ताः" इति । पूर्वमित्यङ्गविभागे । तासां नामान्याह—तासां वलीनां मध्ये अन्तः गुदस्याभ्यन्तरे स्थिता वली प्रवाहिणीति नाम्ना कथ्यते । मध्ये स्थिता मलस्य विसर्जनाद्विसर्जनी नाम । बाह्यस्था मलस्य संवरणात् संवरणी नाम । तस्याः संवरण्या बहिर्भागे अङ्गुले अङ्गुलमात्रे गुदोष्ठः स्थितः । स गुदोष्ठो मानेन यवाध्यर्धः सार्धयवप्रमाणः । तर्हि कथमङ्गुल इत्युक्तं सार्धयवप्रमाणस्य गुदोष्ठस्याङ्गुलं स्थानमित्ययुक्तं महत्त्वादिति । उच्यते—इह खलु संवरण्यास्तु अङ्गुलमात्रे गुदोष्ठो भवतीत्युक्ते अङ्गुलमात्रं वर्जयित्वा तत ऊर्ध्वं गुदोष्ठ इति सिद्ध्यति । यथा गोरुतमात्रे स्थितो ग्राम

---

१. 'रध्यर्धाङ्गुल' घ. ङ.

इत्युक्ते विवक्षातः गोरुतावसाने स्थित इत्युक्तं भवति। ततो गुदोष्ठात् परं रोममार्गः स्थितः। "रोमाण्यत्र ततः पर"मिति वा पाठः। ततो गुदोष्ठात्परं परत्र प्रदेशे रोमाणि जायन्त इति शेषः। अरुणदत्तस्त्वेवमाह–"तस्या गुदोष्ठो बहिरङ्गुले। तस्या बाह्याया वल्याः बहिर्गुदोष्ठोऽङ्गुले। गुदोष्ठोऽङ्गुलप्रमाण इत्यर्थः। यवाध्यर्धः स मानेन। रोमाण्यनु ततः परं ततो गुदोष्ठात्परं रोमाण्यनु। अनुना कर्मप्रवचनीयेन योगे रोमाणीति द्वितीया। ततः परं रोमाणि लक्षीकृत्य यो देशः स देशो मानेन यवाध्यर्धः। अध्यर्धयवमात्रः" इति॥

**तत्र हेतुः सहोत्थानां वलीबीजोपतप्तता।**
**अर्शसां बीजतप्तिस्तु मातापित्रपचारतः॥ ६॥**
**दैवाच्च ताभ्यां कोपो हि सन्निपातस्य तान्यतः।**
**असाध्यान्येवमाख्याताः सर्वे रोगाः कुलोद्भवाः॥ ७॥**

तत्रेत्यादि। तत्र तेषु सहजन्मोत्तरभाविष्वर्शःसु सहोत्थानां सहजानामर्शसां वलीबीजोपतप्तता हेतुः। बीजं मातापितृबीजम्। पुरुषस्य गर्भाधानकाले येन बीजांशेन गुदवलय उत्पद्यन्ते तस्य दोषैरुपतप्तिः सहजानां कारणम्। पाठ्येऽपि–"वलीबीजं वल्युत्पादकबीजपरमाणुः। तस्योपतप्तिरि"त्युक्तम्। सा तु बीजोपतप्तिः मातापित्रपचारतः मातापित्रोरपचाराद्धेतोः बीजतापो भवति। तथा दैवाच्च बीजतप्तिर्भवति। दैवं पुराकृतमशुभकर्म। ताभ्यां मातापित्रपचारदैवाभ्यां यस्मात् सन्निपातस्य कोपः तस्मात्तानि सहजान्यर्शांसि असाध्यानि। एवमनेन मार्गेण प्राणिनां सर्वे रोगाः कुलोद्भवा आख्याताः। बीजोपतप्तत्वादसाध्या इत्यर्थः। संग्रहेऽप्युक्तम्--"तत्र सहजानां गुदवलीबीजोपतप्तिरायतनं, तस्य द्विविधो हेतुः। मातापित्रपचारो दैवं च। ताभ्यां सन्निपातप्रकोपः तस्मात् तान्यसाध्यानि। एतेन कुलजाः सर्वे व्याख्याताः।" इति। अत्रेन्दुः–"तस्या इत्युपतप्तेः। ताभ्यामिति मातापित्रपचारदैवाभ्याम्। तस्मादिति विशिष्टबीजोपतापात्। तानीति सहजानि। एतेनेत्यादिना बीजोपतापहेतुत्वेन सर्वेषां कुलजानां व्याधीनामसाध्यत्वं व्याख्यात"मिति। अरुणदत्तस्तु--"सर्वे रोगाः कुलोद्भवाः एवमाख्याता" इत्यन्वयं वदन्, "एवमिति दोषसन्निपातकोपेन बीजोपतप्त्या दैवेन च जाताः सर्वे कुलजा रोगाः" इत्याह।

सहजानां लक्षणमाह—

**सहजानि विशेषेण रूक्षदुर्दर्शनानि च ।**
**अन्तर्मुखानि पाण्डूनि दारुणोपद्रवाणि च ॥ ८ ॥**

सहजानीत्यादि । सहजान्यर्शांसि तु विशेषेण रूक्षादिगुणसंयुक्तानि । विशेषेणेत्यनेन उत्तरजान्येवम्भूतानि कानिचिद् भवन्तीति द्योतयति । **इन्दुस्तु**----"सामान्येनार्शोलक्षणसम्भवे सहजानां दुर्दर्शनादित्वातिशय" इत्याह । रूक्षाणि दुर्दर्शनानि च । अणुमहद्ह्रस्वदीर्घवृत्तविषमकुटिलर्जुमृदुकठिनादिभेदेन किंभूताकृतीन्येतानीति निरूपयितुमशक्यानि । दुर्दर्शनानि अन्तर्मुखानि अदृष्टाग्राणि पाण्डूनि दारुणोपद्रवाणि सन्निपातजत्वात् सर्वदोषोपद्रवैर्दारुणैस्तीव्रैरुपेतानि च ॥

**षोढान्यानि पृथग्दोषसंसर्गनिचयास्रतः ।**

अन्यानि जन्मन उत्तरकालभावीनि षोढा षट्प्रकाराणि । पृथग्दोषैः संसर्गाद् निचयात् । "संसर्गोऽत्र समुदितो विज्ञेयः" इति **पाठ्ये** । अस्रतो रक्तादिति संसर्गबहुत्वेऽपि तज्जानामेकजातित्वात् संसृष्टजत्वाविशेषात् पूर्वाचार्यानुरोधेन एकत्वमुक्तम् । तथा च **सुश्रुतोक्तिः**—"ननु षडनुपपत्तिः द्वन्द्वजानां सद्भावात् । न । लक्षणस्य चिकित्सायाश्चाभेदात् पृथङ् नोक्ताः । द्वान्द्विके द्वयोर्लक्षणं तदनुरूपं भिषग्जितं तदनुरूपा चिकित्सा" इति ।

शुष्कास्राविभेदाद् द्वैविध्यमुक्तम् । तदाह—

**शुष्काणि वातश्लेष्मभ्यामार्द्राणि त्वस्रपित्ततः ॥ ९ ॥**

शुष्काणीत्यादि । तत्र सर्वाण्यर्शांसि वातश्लेष्मान्वयात् शुष्काणि भवन्ति । अस्रपित्ततो रक्तपित्ताभ्यामार्द्राणि भवन्ति । रक्तपित्तान्वयाद् आर्द्राणीत्यर्थः । "वातश्लेष्मोत्तराणि शुष्काणि रक्तपित्तोत्तराण्यार्द्राणि" इति **संग्रहे** ।

**दोषप्रकोपहेतुस्तु प्रागुक्तस्तेन सादिते ।**
**अग्नौ मलेऽतिनिचिते पुनश्चातिव्यवायतः ॥ १० ॥**
**यानसंक्षोभविषमकठिनोत्कुटिकासनात् ।**
**वस्तिनेत्राश्मलोष्टोर्वीतलचैलादिघट्टनात् ॥ ११ ॥**

भृशं शीताम्बुसंस्पर्शात् प्रतताऽतिप्रवाहणात् ।
वातमूत्रशकृद्वेगधारणात् तदुदीरणात् ॥ १२ ॥
ज्वरगुल्मातिसारामग्रहणीशोफपाण्डुभिः ।
कर्शनाद्विषमाभ्यश्च चेष्टाभ्यो योषितां पुनः ॥ १३ ॥
आमगर्भप्रपतनाद् गर्भवृद्धिप्रपीडनात् ।
ईदृशैश्चापरैर्वायुरपानः कुपितो मलम् ॥ १४ ॥
पायोर्वलीषु सन्धत्ते तास्वभिष्यण्णमूर्तिषु ।
जायन्तेऽर्शांसि,

दोषेत्यादि । दोषप्रकोपहेतुस्तु प्रागुक्तः प्राक् पूर्वं सर्वरोगनिदाने 'तिक्तोषणे'त्यादिना सामान्यदोषकोपहेतुरुक्तः । तेन दोषकोपकारणेन अग्नौ सादिते अवसादं नीते । 'तेन दोषकोपेन' इत्यरुणदत्तः । मलेऽतिनिचिते अग्निसादेनाहारस्यासम्यक्पाकात् किट्टेऽतिवृद्धे पुनश्चातिव्यवायादिभिरपानो वायुः कुपितस्तमुपचितं मलं पायोर्वलीषु गुदवलीषु सन्धत्ते । तत्संपर्कात् तासु वलीषु अभिष्यण्णमूर्तिषु शिथिलीकृतास्वर्शांसि जायन्ते सम्भवन्ति इत्येतद् अर्शसां संप्राप्तिर्निदानं चोक्तम् । "अभिष्यण्णमूर्तिषु स्थूलाकृतिषु" इत्यरुणदत्तः । मेध्यमांसत्वं वाभिष्यण्णता । अभिष्यण्णमूर्तिषु स्रुतिरूपासु इत्यन्ये । यानसंक्षोभादश्वाद्यारोहणेन संक्षोभात् । विषमासनात् (कठिनासनात्) उत्कुदिकासनात् । 'उत्कुटिकासनादि'ति वा पाठः । बस्तिनेत्रादिघट्टनाद् अकुशलेन तिर्यक्प्रणिधानादिभिर्बस्तिनेत्रघट्टनं मलशोधनार्थमश्मलोष्ठघट्टनम्, उर्व्यां घर्षणमुर्वीघट्टनम् । चेलादिभिस्तले वा घट्टनाच्च । आदिशब्देन तृणादीनां ग्रहणम् । अत्यर्थं शीतेनाम्बुना संस्पर्शात् । प्रततमनवरतमतिप्रवाहणात् प्रवाहणम् अप्रवृत्तौ मलस्य प्रवृत्त्युपायो बलात् । वातादीनां वेगधारणाद् वेगानामप्रवृत्तानामुदीरणाद् वा । ज्वरादिभिश्च कर्शनाद् विषमाभ्यश्चेष्टाभ्यश्च धावनप्लवनादिभिः । योषितां स्त्रीणां पुनरामगर्भप्रपतनाद् गर्भवृद्धिप्रपीडनाद् ईदृशैश्चापरैर्भावैरिति । इन्दुना त्वेवमुक्तं—"दोषप्रकोपहेतुना मले दोषे वातादौ अतिप्रवृद्धे पुनश्चातिव्यवायादिभिरपानो वायुः कुपितस्तमुपचितं मलं दोषं गुदवलीषु सन्धत्ते । तेन दोषेण तासु गुदवलीषु अभिष्यण्णासु अर्शांसि संभवन्ति" इति ॥

तत्पूर्वलक्षणं मन्दवह्निता ॥ १५ ॥

विष्टम्भः सक्थिसदनं पिण्डिकोद्वेष्टनं भ्रमः
सादोऽङ्गे नेत्रयोः शोफः शकृद्भेदोऽथवा ग्रहः ॥ १६ ॥

मारुतः प्रचुरो मूढः प्रायो नाभेरधश्चरन् ।
सरुक् सपरिकर्तश्च कृच्छ्रान्निर्गच्छति स्वनन् ॥ १७ ॥

आन्त्रकूजनमाटोपः क्षामतोद्गारभूरिता ।
प्रभूतं मूत्रमल्पा विड् अश्रद्धा वै धूमकोऽम्लकः ॥ १८ ॥

शिरःपृष्ठोरसां शूलमालस्यं भिन्नवर्णता ।
तथेन्द्रियाणां दौर्बल्यं क्रोधो दुःखोपचारता ॥ १९ ॥

आशङ्का ग्रहणीदोषपाण्डुगुल्मोदरेषु च ।

तत्पूर्वलक्षणं तेषां जन्मोत्तरकालभाविनामर्शसां पूर्वरूपं मन्दवह्नितादि । नेत्रयोः शोफः श्वयथुः । शकृद्भेदोऽथवा ग्रहः, मृदुकोष्ठस्य भिन्नशकृत्त्वं, व्यतिरिक्तकोष्ठस्य बद्धशकृत्त्वम् । "ग्रहोऽङ्गग्रहः" इत्यरुणदत्तः । मारुतः अपानाख्यो वायुः प्रचुरः प्रवृद्धः मूढः कुपितः प्रायो नाभेरधश्चरन् प्रायेण नाभेरधः सञ्चरन् सरुक् सतोदः तोदकृदित्यर्थः । सपरिकर्तः जठरे समन्ताच्छेदनमिव परिकर्तः[1]- കുൺനരോവുക. कश्चित् शूलविशेषः । स्वनन् शब्दं कुर्वन् कृच्छ्रान्निर्गच्छति । आन्त्रकूजनं कोष्ठशब्दनम् । आटोपो नाभेरधस्तात् स्फुरणम् । सशब्दस्य वायोः सञ्चारमाटोप इति च । क्षामता कार्श्यम् । उद्गारभूरिता प्रभूतोद्गारता । प्रभूतं मूत्रं विट् चाल्पा । अश्रद्धा अन्नाश्रद्धा । धूमको धूमायनम् । अम्लकोऽम्लोद्गारः । क्रोधवशाद् दुःखोपचारता । ग्रहणीदोषादिष्वाशङ्का । स्तोकं तल्लक्षणयुक्तत्वात् । इत्येतत्सर्वं तेषां पूर्वरूपम् ॥

एतान्येव विवर्धन्ते जातेषु हतनामसु ॥ २० ॥

हतनामसु दुर्नामसु अर्शःस्वित्यर्थः, जातेषु एतान्येव लिङ्गानि मन्दवह्नितेत्याद्युक्तानि विवर्धन्ते व्यक्ततराणि प्रभूतानि भवन्तीत्येतानि रूपाणि ॥

---

१. 'र्तः शूलविशेषः' ख. घ. ङ ।

निवर्तमानोऽपानो हि तैरधोमार्गरोधतः ।
क्षोभयन्ननिलानन्यान् सर्वेन्द्रियशरीरगान् ॥ २१ ॥
तथा मूत्रशकृत्पित्तकफान् धातूंश्च साशयान् ।
मृद्नात्यग्निं ततः सर्वो भवति प्रायशोऽर्शसः ॥ २२ ॥
कृशो भृशं हतोत्साहो दीनः क्षामोऽतिनिष्प्रभः ।
असारो विगतच्छायो जन्तुजुष्ट इव द्रुमः ॥ २३ ॥
कृत्स्नैरुपद्रवैर्ग्रस्तो यथोक्तैर्मर्मपीडनैः
तथा कासपिपासास्यवैरस्यश्वासपीनसैः ॥ २४ ॥
क्लमाङ्गभङ्गवमथुक्षवथुश्वयथुज्वरैः ।
क्लैब्यबाधिर्यतैमिर्यशर्कराश्मरिपीडितः ॥ २५ ॥
क्षामभिन्नस्वरो ध्यायन् मुहुः ष्ठीवन्नरोचकी ।
सर्वपर्वास्थिहृन्नाभिपायुवंक्षणशूलवान् ॥ २६ ॥
गुदेन स्रवता पिच्छां पुलाकोदकसन्निभाम् ।
विबद्धमुक्तं शुष्कार्द्रं पक्वामं चान्तरान्तरा ॥ २७ ॥
पाण्डु पीतं हरिद्रक्तं पिच्छिलं चोपवेश्यते ।

निवर्तमान इत्यादि। तैरर्शोभिरधोमार्गरोधान्निवर्तमानोऽपानः प्रतिलोमं निवर्तितोऽपानो वायुः सर्वेन्द्रियशरीरगान् अन्याननिलान् समानोदानव्यानप्राणान् प्रतिनिवृत्तिक्रमेण क्षोभयन् तथा मूत्रादीन् धातूंश्च रसादीन् साशयान् क्षोभयन् प्रचलयन् अग्निं मृद्नाति क्षपयति। 'मन्दीकरोति' इति **हाटकः**। ततोऽग्निमान्द्याद्धेतोः सर्वोऽप्यर्शसः सहजार्शोभिरुत्तरकालभाविभिर्वाप्युपतप्तः प्रायशः प्रायेण एवं भवति। अर्शांसि विद्यन्ते यस्य सोऽर्शसः दुर्नामवान्। 'अर्शआदिभ्योऽच्' (पा० सू० ५-२-१२७) इति मत्वर्थेऽच्। भृशमत्यर्थं कृशः। हतोत्साहो नष्टोत्साहः। दीनोऽपटुचेष्टः। अतिक्षामः अतीव क्षामः शून्येन्द्रियबलः। निष्प्रभो नष्टतेजाः। असारोऽबलः। विगतच्छायः वर्णानुविधायिनी दीप्तिः च्छाया विगता यस्य स एवम्। जन्तुजुष्टः कृमिभिरुपद्रुतो द्रुम इव। यथा जन्तुजुष्टो द्रुमः पत्रविरहाच्छायादिरहित असारश्च भवति इति श्लेषोपमा।

जन्तुजुष्टम् - ഉറാൽപിടിക്ക। कृत्स्नैर्वाताद्युपद्रवैर्मर्मपीडनैर्ग्रस्तः क्लमादिभिश्च ग्रस्तः क्लैब्यादिभिरपि पीडितः। क्षीणशुक्रता क्लैब्यम्। "बाधिर्यम् - ചെവികേളാഴ്ക। तैमिर्यम् - കണ്ണുകാണാഴ്ക" इति पाठ्ये। अश्मरी-शर्करयोः विशेषो वक्ष्यते। अङ्गानां जङ्घोरुप्रभृतीनां भङ्ग इवाङ्गभङ्गः। अङ्गमर्द इति वा। क्षामभिन्नस्वरः क्षीणघुर्घुरस्वरः। मुहुर्मुहुः किमपि ध्यायन् मुहुः क्षीवंश्च भवति। सर्वपर्वादिषु शूलवान् भवति। पुलाकोदकसन्निभां यवागूपमां पिच्छां पिच्छिलास्रावं स्रवता गुदेन उपलक्षितः। "पुलाकोदकं यवगोधूमादिस्वेदः" इति सारकृत्। "पिच्छा - വഴുവഴുപ്പ്"। पुलाकोदकं - നെൽപുഴുങ്ങിയ പുഴുപ്പുനീര്" इति पाठ्ये। अन्तरान्तरा मध्ये मध्ये बन्ध-मुक्तादिभेदेनानियमरूपं वर्च उपवेश्यते विसृजति। अन्तरान्तरेति कादाचित्क-लक्षणया॥

अथ वातार्शसां विशेषलक्षणमाह—

**गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः॥ २८॥**

**म्लानाः श्यावारुणाः स्तब्धा विषमाः परुषाः खराः।**
**मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः॥ २९॥**

**बिम्बीकर्कन्धुखर्जूरकार्पासीफलसन्निभाः।**
**केचित् कदम्बपुष्पाभाः केचित् सिद्धार्थकोपमाः॥ ३०॥**

**शिरःपार्श्वांसकट्यूरुवंक्षणाभ्यधिकव्यथाः।**
**क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः॥ ३१॥**

**कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः।**
**तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम्॥ ३२॥**

**रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते।**
**कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते॥ ३३॥**

**गुल्मप्लीहोदराष्ठीलासम्भवस्तत एव च।**

गुदाङ्कुरा इत्यादि। बह्वनिलाः वाताधिकाज्जाताः गुदाङ्कुराः अर्शांसि शुष्कादिगुणयुक्ताः। वातिकाः इत्यनुक्त्वा बह्वनिला इति वचनं सर्वे रोगाः त्रिदोषजा एव व्यवहारस्तु भूयसा इति उत्कृष्टदोषापेक्षया वातिकादिव्यपदेशः इति सूचनार्थम्। अणुप्राणिपरिसर्पणप्रतीतिः चिमिचिमा तदन्विताः। श्यावारुणान्यतरवर्णाः। विषमाः निम्नोन्नताः। परुषाः अस्निग्धाः खराः कर्कशाः। मिथो विसदृशाः परस्परविलक्षणाः नानाकृतय इत्यर्थः। वक्राः कुटिलाकाराः। बिम्ब्यादीनां फलसदृशा। केचित् फलसदृशाः केचित् कदम्बसदृशाः तीक्ष्णाः सवेदनाः विस्फुटिताननाः विशीर्णाग्राः। केचित् सिद्धार्थकोपमाः सर्षपाकारसूक्ष्माङ्कुराः। हृद्द्रवो हृदि क्लेदः। स्रुतमिव हृदयस्य भवति। संवेदनाविशेषो हृद्द्रवः। कासाद्यावहाः कासादिकरा इत्यर्थः। तैरार्तो नरो ग्रथितत्वादियुक्तं शकृदुपवेश्यते। कृष्णत्वगादियुक्तश्च जायते। तत एव हेतोरस्य गुल्मादिसम्भवश्च। रोगश्च रोगस्य हेतुर्भवतीत्युक्तम्॥

**पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः॥ ३४॥**

**तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः।**
**शुकजिह्वायकृत्खण्डजलौकावक्त्रसन्निभाः॥ ३५॥**

**दाहपाकज्वरस्वेदतृण्मूर्च्छारुचिमोहदाः।**
**सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः॥ ३६॥**

**यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः।**

पित्तोत्तरा इत्यादि। पित्तोत्तराणां पित्तोद्भणानां विशेषलक्षणम्। नीलमुखाः नीलाग्राः रक्ताद्यन्यतमप्रभाः। विस्राः विस्रगन्धाः। श्लथाः शिथिला जीर्णाः। शुकजिह्वाद्याकृतयः। यवमध्याः यवस्येव मध्यं येषां ते तथोक्ताः। हारिद्रत्वङ्नखादयः पीतहारिद्रयोः पृथगुपादानादीषद्भेदोऽवगन्तव्यः॥

**श्लेष्मोल्बणा महामूला घना मन्दरुजः सिताः॥ ३७॥**

**उच्छूनोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः।**
**पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः॥३८॥**

करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ।
वंक्षणानाहिनः पायुवस्तिनाभिविकर्तिनः ॥ ३९ ॥

सकासश्वासहृल्लासप्रसेकारुचिपीनसाः ।
मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः ॥ ४० ॥

क्लैब्याग्निमार्दवच्छर्दितामप्रायविकारदाः ।
वसाभाः सकफप्राज्यपुरीषाः सप्रवाहिकाः ॥ ४१ ॥

न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ।

श्लेष्मोल्बणाः महामूलत्वादियुक्ताः । स्तिमिताः स्तब्धाः कण्ड्वाढ्याः कण्डूबहुलाः । स्पर्शनप्रियाः स्पर्शने ससुखाः । करीरं वंशाङ्कुरम् । विकर्तनमिव शूलविशेषो विकर्तः । छर्दिरेव छर्दितम् । कफजा भृशमत्यर्थमग्निमार्दवकरा इति ग्राह्यम् । इतरदोषजातानामप्यग्निमार्दवकरत्वात् । आमप्राया आमबहुला विकाराः तान् ददाति : कफयुक्ताः प्रभूतमलाः, प्रवाहिका निस्तानिका । पाण्डुस्निग्धत्वगादयः । आदिशब्देन नखनयनमूत्रपुरीषादयो गृह्यन्ते । इत्यसंसृष्टलिङ्गम् ॥

संसृष्टलिङ्गाः संसर्गाद्, निचयात् सर्वलक्षणाः ॥ ४२ ॥

संसर्गाज्जाताः संसृष्टलिङ्गाः, निचयात् सन्निपाताज्जाताः गुदाङ्कुराः सर्वलक्षणाः सर्वलक्षणयुक्ता भवन्ति ॥

अस्रजा उच्यन्ते—

रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः ।
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः ॥ ४३ ॥

तेऽत्यर्थं दुष्टमुष्णं च गाढविट्प्रतिपीडिताः ।
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥ ४४ ॥

भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः ।
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥ ४५ ॥

रक्तोल्बणा गुदे कीला कीलाकारा अर्शांसि पित्ताकृतिसमन्विताः पित्तोल्बणार्शोलक्षणयुक्ताः । वटप्ररोहम् - പൊരാൽവിഴ । गुञ्जा - കന്നി । विद्रुमं - പവിഴം । तद्वर्णा ते । गाढविट्प्रतिपीडिताः । अत्यर्थं दुष्टमुष्णं च रक्तं सहसा स्रवन्ति । तस्य रक्तस्यातिप्रवृत्तितो भेकाभः मण्डूकसदृशः शोणितक्षयसम्भवैः दुःखैः पीड्यते । तानि च शिरोभितापादीनि । हतौजाः नष्टतेजाः कलुषेन्द्रियः अनिपुणेन्द्रियश्च भवति ॥

इदानीं दुर्नाम्नामुपद्रवभूत उदावर्तो वातविकारसम्भवो रोगोऽस्ति, स च गुदाङ्कुरैरन्यैश्चापाननिरोधे सति तद्धेतुभिः कुपितेन मारुतेन भवति । तस्य निदानं लक्षणं चाह—

मुद्गकोद्रवजूर्णाह्वकरीरचणकादिभिः ।
रूक्षैः संग्राहिभिर्वायुः स्वस्थाने कुपितो बली ॥ ४६ ॥
अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ।
पुरीषं वातविण्मूत्रसङ्गं कुर्वीत दारुणम् ॥ ४७ ॥
तेन तीव्रा रुजा कोष्ठपृष्ठहृत्पार्श्वगा भवेत् ।
आध्मानमुदरावेष्टो हृल्लासः परिकर्तनम् ॥ ४८ ॥
वस्तौ च सुतरां शूलं गण्डश्वयथुसम्भवः ।
पवनस्योर्ध्वगामित्वं ततश्छर्द्यरुचिज्वराः ॥ ४९ ॥
हृद्रोगग्रहणीदोषमूत्रसङ्गप्रवाहिकाः ।
बाधिर्यतिमिरश्वासशिरोरुक्कासपीनसाः ॥ ५० ॥
मनोविकारस्तृष्णास्रपित्तगुल्मोदरादयः ।
ते ते च वातजा रोगा जायन्ते भृशदारुणाः ॥ ५१ ॥
दुर्नाम्नामित्युदावर्तः परमोऽयमुपद्रवः ।
वाताभिभूतकोष्ठानां तैर्विनापि स जायते ॥ ५२ ॥

मुद्गकोद्रवेत्यादि । इन्दुरपि—"अनन्तरमर्शसामुपद्रवस्योदावर्ताख्यस्य मुद्गेत्यादिना हेत्वादिकमुच्यते" इत्याह । जूर्णाह्वस्तृणधान्यविशेषः । चणकाद्यैरन्यैश्च रूक्षैः संग्राहिभिः वायुरपानाख्यः स्वस्थाने कुपितः पक्वाशये गुदे च

कुपितः । "स्वे स्थाने नाभेरधः" इतीन्दुः । बली अधोवहानि पुरीषादिवहानि स्रोतांसि संरुध्य अधोगतं पुरीषं गुदमुखादिगतं पुरीषं संशोष्य वातादीनां सङ्गं कुर्वीत । दारुणमतीव पीडाकरम् । तेन वातादिसङ्गेन तीव्रा रुजा कोष्ठादीनां भवेत् । आध्मानादयश्च भवन्ति । उदरावेष्टः उदरस्यावेष्टनं वेण्यादिभिरिव यस्मिन् स उदरावेष्टः । परिकर्तनमुदरे । सुतरामत्यर्थं वस्तौ शूलं गण्डे च श्वयथुसम्भवः । पवनस्योर्ध्वगामित्वं श्वासवेगश्च भवति । ततः पश्चात् छर्द्यादयश्च भवन्ति । "तत ऊर्ध्वगतात् पवनात् छर्द्यादयो जायन्ते" इतीन्दुः । मनोविकारः मनोविभ्रमः । तेन च वातजा रोगा भृशदारुणाः तीव्राः जायन्ते । इत्येवमुक्त-प्रकारोऽयमुदावर्ताख्यो दुर्नाम्नामर्शसां परमोऽतिशयेन उपद्रवो भवति । "अय-मुदावर्तो दुर्नाम्नामुपद्रवत्वेन जायते" इतीन्दुः । वाताभिभूतकोष्ठानां तैः दुर्नामभिर्विनापि स उदावर्तो जायते ॥

अनन्तरं तेषां साध्यासाध्यविभागमाह—

**सहजानि त्रिदोषाणि यानि चाभ्यन्तरे वलौ ।**
**स्थितानि तान्यसाध्यानि याप्यन्तेऽग्निबलादिभिः ॥ ५३ ॥**

सहजानीत्यादि । सहजान्यर्शांसि असाध्यानि त्रिदोषाणि च असाध्यानि । (त्रिदोषजत्वे सति सहजानां पृथग्वचनमिति लक्षणं वैशेष्यात्?) यानि चाभ्यन्तरे वलौ स्थितानि तानि च असाध्यानि । तानि अग्निबलादिभिः अग्निबलकरैः द्रव्यैः दीप्ताग्नेः याप्यन्ते । आदिशब्देनायुर्देहबलपादसम्पदां ग्रहणम् । यान्यसाध्यान्युक्तानि तान्यपि पादचतुष्टयोपपन्नस्य आयुःशेषयुक्तस्य दीप्ताग्नेः याप्यन्ते । अग्निबलादिमतामसाध्यानि याप्यानि भवन्तीत्यर्थः ॥

**द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।**
**कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ ५४ ॥**

द्वन्द्वजानि कृच्छ्रसाध्यानि । द्वितीयायां वलौ यान्याश्रितानि तानि च कृच्छ्रसाध्यानि । सर्वाणि च परिसंवत्सराणि संवत्सरमतीतानि कृच्छ्रसाध्यानि । याप्योऽप्यसाध्यभेदः[1] ॥

---

1. 'दः कृच्छ्रसाध्योऽपि असाध्यभेदः' ग ।

**बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च ।**
**अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥ ५५ ॥**

बाह्यायां तु वलौ जातानि सुखसाध्यानि । एकदोषोल्बणानि च सुखसाध्यानि । अचिरोत्पतितानि नवोत्पन्नानि च सुखसाध्यानि । इत्युक्तानि गुदजान्यर्शांसि ॥

**मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि तु ।**
**गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥ ५६ ॥**

मेढ्रादिष्वपि अर्शांसि वक्ष्यन्ते । आदिशब्देन भगनासाकर्णादीनां ग्रहणम् । यथास्वमध्याये नासारोगाध्याये कर्णरोगाध्याये चेति । **अरुणदत्तस्तु**—"मेढ्रादिष्वपि जातानि यथास्वं दोषलक्षणाकृतिविशेषतो वक्ष्यन्ते" इत्याह । नाभिजानि नाभिजातानि त्वर्शांसि गण्डूपदमुखसदृशानि पिच्छिलानि मृदूनि च । भूमिजः कृमिविशेषो गण्डूपदः ॥



चर्मकीलमाह—

**व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ।**
**कीलोपमं स्थिरखरं चर्मकीलं तु तं विदुः ॥ ५७ ॥**

व्यान इत्यादि । व्यानो व्यानाख्यो वायुः श्लेष्माणं गृहीत्वा त्वचो बहिः त्वचो बाह्यप्रदेशे अर्शः करोति कीलोपमं स्थिरमचलं खरं खरस्पर्शं च । तं चर्मकीलं विदुः मुनय इति शेषः । बहिरिति "गुदाद्बहिः त्वचः" **इतीन्दुः** ॥

चर्मकीलस्य यथादोषं लक्षणमाह—

**वातेन तोदः पारुष्यं पित्तादसितरक्तता ।**
**श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥ ५८ ॥**

वातेनेत्यादि । तस्य चर्मकीलस्य वातेन तोदपारुष्यं भवति ॥

उपसंहरन्नाह—

**अर्शसां प्रशमे यत्नमाशु कुर्वीत बुद्धिमान् ।**
**तान्याशु हि गुदं बद्ध्वा कुर्युर्बद्धगुदोदरम् ॥ ५९ ॥**

बुद्धिमान् वैद्यः अर्शसां प्रशमे आशु शीघ्रं यत्नं कुर्वीत । यस्मात् तानि अर्शांसि उपेक्षितानि गुदं बद्ध्वा गुदं निरुध्य आशु बद्धगुदोदरं उत्तरे वक्ष्यमाणं कुर्युः, तस्मादादावेव प्रशमे यत्नं कुर्वीत ॥

इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने सप्तमोऽध्यायः ॥





# अष्टमोऽध्यायः ।

ज्वरगुल्मातिसारामग्रहणीशोफपाण्डुभिः कर्शनात् कुपितेन वायुना पायोर्वलीषु दुष्टासु जायन्तेऽर्शांसीत्युक्तम् । अस्मिन्नध्यायेऽपि अर्शोभिः स्नेहविभ्रमादिभिश्च कुपितोऽनिलः अनलं मन्दीकृत्य पुरीषं द्रवतां नयन् अतिसाराय कल्पते इति वक्ष्यति । एतेनार्शसां हेतुः ग्रहण्यतिसारौ ग्रहण्यतिसारयोः हेतुरर्शांसीति परस्परं हेतुहेतुमद्भावसम्बन्धः । वक्ष्यति च—

"अर्शोऽतिसारग्रहणीविकाराः प्रायेण चान्योन्यनिदानभूताः ।"

इति । "अथवा मन्दानलत्वादधोगदोषहेतुत्वसामान्यं वा सम्बन्धः । उपद्रवत्वाद् दुर्नाम्नामतिसार उच्यते" इति **सारकृत्** । "उपवेश्यते इति प्रोक्तत्वादि"ति **पाठ्ये** । अन्यत् समानम् ॥

**अथातोऽतिसारग्रहणीरोगयोर्निदानं व्याख्यास्यामः ॥**



**दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ।**
**अतिसारः स सुतरां जायतेऽत्यम्बुपानतः ॥ १ ॥**

दोषैरित्यादि । वातादिभेदेन षड्विधोऽतीसारः । स तु अत्यम्बुपानेन सुतरामत्यर्थं जायते ॥

कृशेत्यादिना सर्वातिसाराणां दोषजातानां निदानं सम्प्राप्तिं चाह—

**कृशशुष्कामिषासात्म्यतिलपिष्टविरूढकैः ।**
**मद्यरूक्षातिमात्रान्नैरर्शोभिः स्नेहविभ्रमात् ॥ २ ॥**

**कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ।**
**विस्रंसयत्यधोऽब्धातुं हत्वा तेनैव चानलम् ॥ ३ ॥**

**व्यापाद्यानुशकृत्कोष्ठं पुरीषं द्रवतां नयन् ।**
**प्रकल्पतेऽतिसाराय,**

कृशामिषादिभिः तद्विधैः वातप्रकोपहेतुभिः अन्यैरनुक्तैश्चानिलः कुपितः सन् अब्धातुं शरीरगं विस्रंसयति अधस्तान्नयति। विरूढकमङ्कुरितसस्यं स्नेह-विभ्रमः स्नेहव्यापत्तिः। अम्बुपानस्य पृथगभिधानं प्राधान्यात्। तेनैवाब्धातुना जाठरमग्निं हत्वा मन्दीकृत्य व्यापाद्य शून्यतां कोष्ठस्य कारयित्वा अनु शकृत् शकृतः समीपे न तु सर्वं कोष्ठं व्यापयन्नतिसारं करोति। पुरीषं द्रवतां नयन् तेनैव अब्धातुनातिसाराय प्रकल्पते सम्पद्यते। अनिल इति योज्यम्। **अरुणदत्तस्तु**—"धातून् रसादीनधो विस्रंसयति अधोमुखान् करोति तेनैव हेतुना अनलं हत्वा" इत्याह॥

लक्षणं तस्य भाविनः॥ ४॥

**तोदो हृद्गुदकोष्ठेषु गात्रसादो मलग्रहः।**
**आध्मानमविपाकश्च,**

हृत्तोदादि सर्वातिसारस्य भाविनो लक्षणं पूर्वरूपम्॥

**तत्र वातेन विड्जलम्॥ ५॥**

**अल्पाल्पं शब्दशूलाढ्यं विबद्धमुपवेश्यते**
**रूक्षं सफेनमच्छं च ग्रथितं वा मुहुर्मुहुः॥ ६॥**
**तथा दग्धगुडाभासं सपिच्छापरिकर्तिकम्।**
**शुष्कास्यो भ्रष्टपायुश्च हृष्टरोमा विनिष्टनन्॥ ७॥**

तत्र तेष्वतिसारेषु मध्ये वातेनातिसारे विड्जलं शुष्कमुखादिरूपो नर उपवेश्यते विसृजति। विड्जलं जलभूतं मलमित्यर्थः। सम्प्राप्तिविशेषवशेन अच्छं वा ग्रथितं वा एवं मुहुर्मुहुरुपवेश्यते। तथा दग्धगुडाभासं अतिपाकप्राप्त-गुडसदृशं सपिच्छापरिकर्तिकं सपिच्छं पिच्छिलमलावयवोपेतम्। परिकर्तिका समन्ताच्छेदनमिव शूलविशेषः तेन चोपेतम्। भ्रष्टपायुः गुदभ्रंशसंयुक्तः - ഉന്തം പുറന്തള്ളുക। विनिष्टनन् निस्तानिकां कुर्वन्। निस्तानिका प्रवाहिका। विनिष्टनन् - ഞെരങ്ങുക इति पाठ्ये। **अरुणदत्तोपि**—"पीडाशब्दं कुर्वन्" इत्याह। प्रवाहणेन पीड्यमान उपवेश्यते इत्यर्थः। **सारकृत्तु**—"विड्जलमिति

पाठे पूर्वापरविरोधः पुनरच्छमिति पठितत्वात्" इति वदन् विज्जलमिति पठति[1]। विज्जलं क्लिन्नोदकप्रायम् ॥

**पित्तेन पीतमसितं हारिद्रं शाद्वलप्रभम् ।**
**सरक्तमतिदुर्गन्धं तृण्मूर्च्छास्वेददाहवान् ॥ ८ ॥**
**सशूलपायुसन्तापं पाकवान्,**

पित्तेनातिसारे तृडादिमान् नरः पीतादिमुपवेश्यते । पीतहारिद्रयोरीषद्भेदो विद्यते । शाद्वलम् - ൧൧൦൧൦൦൧൦ । तत्सदृशम् । पायुसन्तापवान् पायुपाकवांश्च । अरुणदत्तस्तु—"पीतादिवस्तुसंयुक्तं विड्जलमुपवेश्यते" इत्याह ॥

**श्लेष्मणा घनम् ।**
**पिच्छिलं तन्तुमच्छ्वेतं स्निग्धमांसं कफान्वितम् ॥ ९ ॥**
**अभीक्ष्णं गुरु दुर्गन्धं विबद्धमनुबद्धरुक् ।**
**निद्रालुरलसोऽन्नद्विडल्पाल्पं सप्रवाहिकम् ॥ १० ॥**
**सरोमहर्षः सोत्क्लेशो गुरुवस्तिगुदोदरः ।**
**कृतेऽप्यकृतसंज्ञश्च,**

कफेन अतिसारे घनादिगुणयुक्तमभीक्ष्णमत्यर्थमुपवेश्यते । कफान्वितमिति स्वरूपेणातिसारे कफप्रवृत्तिः । अतिदुर्गन्धं विबद्धमनुबद्धरुक् । अनुबद्धकृद् इति वा पाठः । निरन्तरातिसारीत्यर्थः । अल्पाल्पं सप्रवाहिकं च यथा तथा उपवेश्यते । सोत्क्लेशः दोषोत्क्लेशयुक्तः । कृतेऽप्यकृतसंज्ञः कृतेऽपि पुरीषोत्सर्गे गुरुत्वादकृतसंज्ञः । अकृतः पुरीषोत्सर्ग इति संवेदनायुक्तः ॥

**सर्वात्मा सर्वलक्षणः ॥ ११ ॥**

सर्वात्मा सर्वदोषस्वरूपः सान्निपातिकः सर्वलक्षणः सर्वदोषलक्षणः ॥

**भयेन क्षोभिते चित्ते सपित्तो द्रावयेच्छकृत् ।**
**वायुस्ततोऽतिसार्येत क्षिप्रमुष्णं द्रवं प्लवम् ॥ १२ ॥**
**वातपित्तसमं लिङ्गैराहुस्तद्वच्च शोकतः ।**

१. 'पठति । इन्दुरपि विज्जलमिति पठति । विजलं' ख. ग. घ. ङ ।

भयेन क्षोभिते चित्ते सति सम्भूतो वायुः सपित्तः शकृत् द्रावयेत् द्रवतां नयेत्। ततः परं क्षिप्रमेव उष्णं द्रवं प्लवं अतिसार्येत। अप्सु प्लवत इति प्लवम्। ഒപ്പാക്കുക। तत् लिङ्गैः वातपित्तसममाहुः। वात-पित्तजातिसारसदृशमित्यर्थः। तद्वच्च शोकतः तद्वद् भयेन तुल्यलिङ्गं शोकतोऽतिसार्यते। अरुणदत्तस्तु—"शोकतो यो भवति सोऽपि तद्वद् भवति तेन तुल्यो भवती"त्याह॥

**अतिसारः समासेन द्विधा सामो निरामकः॥ १३॥**

**सासृङ् निरस्रः,**

सोऽतिसारः समासेन संक्षेपेण सामो निरामकश्चेति द्विधा द्विप्रकारः। तथा सासृङ् निरस्रश्चेति द्वेधा। सासृक् सरक्तः। निरस्रो नीरक्तः। सासृङ्-निरस्रयोस्तु अस्रमेव लिङ्गमिति पृथग् लक्षणावचनम्॥

सामनिरामयोः प्रयोजनवत्त्वाल्लक्षणमुच्यते—

**तत्राद्ये गौरवादप्सु मज्जति।**

**शकृद् दुर्गन्धमाटोपविष्टम्भार्तिप्रसेकिनः॥ १४॥**

तत्रेत्यादि। तत्र तयोः सामनिरामयोराद्ये सामे गौरवात् शकृत् पुरीष-मप्सु पतितं मज्जति। आमस्य गुरुत्वात् शकृतो गुरुत्वम्। तच्च दुर्गन्धं भवति आटोपादियुक्तस्य पुरुषस्य। आटोपः आनाहप्रायः। अर्तिरुदरतोदः। प्रसेकः വായിൽ നീരൂറുക.

**विपरीतो निरामस्तु कफात् पक्वोऽपि मज्जति।**

एतद्विपरीतो निरामः। कफाद्धेतोः योऽतिसारः स पक्वोऽपि निरामोऽपि गुरुत्वादप्सु मज्जति। अस्मद्गुरवस्तु—"कफात् पक्वोऽपि मज्जति" इति पठन्ति कफादतिसारे पक्वेऽपि शकृद् गौरवादप्सु मज्जतीति वदन्तः। इत्युक्तोऽतिसारः॥

अथ ग्रहणीदोषनिदानमाह—

**अतीसारेषु यो नातियत्नवान् ग्रहणीगदः॥ १५॥**

**तस्य स्यादग्निविध्वंसकरैरन्यस्य सेवितैः।**

अतिसारेषु वर्तमानेषु तदुपशान्तिं प्रति वर्ज्यवर्जने सेव्यसेवने च यो नातियत्नवान् भवति तस्य ग्रहणीगदः स्यात्। तथा अन्यस्याप्यग्निनाशकैरत्यर्थं सेवितैः ग्रहणीदोषः स्यादिति संबध्यते॥

अतीसारग्रहणीदोषयोः भूयसा सादृश्यात् लक्षणविशेष उच्यते—

**सामं शकृन्निरामं वा जीर्णे येनातिसार्यते ॥ १६ ॥**

**सोऽतिसारोऽतिसरणादाशुकारी स्वभावतः ।**

साममित्यादि । येन रोगविशेषेण हेतुना जीर्णेऽन्ने पुरीषं सामं वा निरामं वा पुरुषोऽतिसार्यते सोऽतिसारः अतिसरणाद्धेतोः । स च स्वभावादेव आशुकारी क्षिप्रं मरणकारी । कदाचिदतिसरणाद् ग्रहणीदोषस्याप्यतिसारसंज्ञा स्यादित्याशुकारीति द्वितीयो हेतुरुपन्यस्तः । एवंभूतोऽतिसारः ॥

**सामं सान्नमजीर्णेऽन्ने जीर्णे पक्वं तु नैव वा ॥ १७ ॥**

**अकस्माद्वा मुहुर्बद्धमकस्माच्छिथिलं मुहुः ।**
**चिरकृद् ग्रहणीदोषः संचयाच्चोपवेशयेत् ॥ १८ ॥**

ग्रहणीदोषे पुनरनियमेनातिसार्यते । (जीर्णे चाजीर्णे च तत्र यदजीर्णेऽतिसार्यते) तत् सामं सान्नं च । यत्तु जीर्णेऽतिसार्यते (तत्पक्वम् । अथवा जीर्णे कदाचिन्नातिसार्यते) । अकस्मात् कदाचिन्निमित्तमन्तरेणापि मुहुर्मुहुर्बद्धम् अकस्माच्च मुहुर्मुहुः शिथिलं शकृदुपवेशयेत् । (अत्र च दोषे सञ्चिते दोषे शकृत्सुपवेशयेत् ।) **पाठयकारस्तु**—"सञ्चयादिति ल्यब्लोपे पञ्चमी । सञ्चयमनुसृत्य" इत्याह ॥

**स चतुर्धा पृथग्दोषैः सन्निपाताच्च जायते ।**

पक्वाशयमार्गे स्थिता कला ग्रहणी नाम । सा बलवती भुक्तमामाशये रुद्धा विपाच्याधो नयति । अबला त्वाममेव विमुञ्चति । तया ग्रहण्या आमविमोचनादस्य व्याधेः ग्रहणीसंज्ञा । उक्तं चाङ्गविभागे—

"भुक्तमामाशये रुद्ध्वा सा विपाच्य नयत्यधः ।
बलवत्यबला त्वन्नमाममेव विमुञ्चति ॥"

इति । स ग्रहणीदोषः चतुर्धा चतुष्प्रकारः । पृथग्दोषैः सन्निपातेन च जायते ॥

**प्राग्रूपं तस्य सदनं चिरात्पचनमम्लकः ॥ १९ ॥**

---

१. 'एवंरूपोऽति' ग ।

**प्रसेको वक्त्रवैरस्यमरुचिस्तृद् क्लमो भ्रमः ।**
**आनद्धोदरता छर्दिः कर्णक्ष्वेडोऽन्त्रकूजनम् ॥ २० ॥**

तस्य ग्रहणीदोषस्य प्राग्रूपं सदनादिकमन्त्रकूजनान्तम् । कर्णक्ष्वेडः कर्णनादः । ചെവിയിൽ വിളിക്ക । अन्त्रकूजनम् കടൽകരക ॥

**सामान्यं लक्षणं कार्श्यं धूमकस्तमको ज्वरः ।**
**मूर्च्छा शिरोरुग्विष्टम्भः श्वयथुः करपादयोः ॥ २१ ॥**

तस्य चतुर्विधस्यापि सामान्यं लक्षणं कार्श्यादिकरपादशोफान्तम् ॥

यथादोषं लक्षणमाह—

**तत्रानिलात्तालुशोषस्तिमिरं कर्णयोः स्वनः ।**
**पार्श्वोरुवंक्षणग्रीवारुजाभीक्ष्णं विषूचिका ॥ २२ ॥**

**रसेषु गृद्धिः सर्वेषु क्षुत्तृष्णा परिकर्तिका ।**
**जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते ॥ २३ ॥**

**वातहृद्रोगगुल्मार्शःप्लीहपाण्डुत्वशङ्कितः ।**
**चिराद् दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ॥ २४ ॥**

**पुनःपुनः सृजेद्वर्चः पायुरुक्श्वासकासवान् ।**

तत्रेत्यादि । तत्र तेषु अनिलाद्वाताद् ग्रहणीदोषे तालुशोषादयः स्युः । अभीक्ष्णमत्यर्थं बहुशो वा । विषूचिका [1]ഓറോമ്മ(?) । सर्वेषु रसेषु गृद्धिः इच्छा । जीर्णे जीर्यति पच्यमाने च आध्मानं भवति । भुक्तमात्रे स्वास्थ्यं समश्नुते । वातहृद्रोगादिशङ्कितश्च भवति । अस्य रोगस्य तेषां रोगाणां तुल्यरूपत्वात् तेषां लिङ्गमपीषत्सम्भवतीत्यरुणदत्तः । चिराच्चिरकालात् प्रवाहणादिना दुःखम् । द्रवं शुष्कं वा तनु शब्दवत् फेनवच्च पुनःपुनरनेकवेगेन वर्चो मलं सृजेत् । पायुरुक् श्वासकासवांश्च भवति ।

**पित्तेन नीलं पीताभं पीताभः सृजति द्रवम् ॥ २५ ॥**
**पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ।**

---

1. 'ഓറോമ്മ' ख, घ । ഓർക്കാമ ङ ।

पित्तेन नीलं पीताभं वा द्रवं पूति च सृजति। स्वयं च पीताभो भवति। अम्लोद्गारादिभिरर्दितः पीडितः च भवति ॥

**श्लेष्मणा पच्यते दुःखमन्नं छर्दिररोचकः ॥ २६ ॥**

**आस्योपदेहनिष्ठीवकासहृल्लासपीनसाः ।**

श्लेष्मणा ग्रहणीदोषे दुःखं कृच्छ्रेण अन्नं पच्यते। छर्द्यादयश्च भवन्ति।

**हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ॥ २७ ॥**

**उद्गारो दुष्टमधुरः सदनं स्त्रीष्वहर्षणम् ।**

**भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ॥ २८ ॥**

**अकृशस्यापि दौर्बल्यम्**

हृदयं स्त्यानं पिण्डितमिव मन्यते। स्त्यानं स्तिमितमित्यरुणदत्तः। उदरं च स्तिमितं गुरु च भवति। उद्गारो दुष्टमधुरः "दुष्टान्नेन मधुररसः" इत्यरुणदत्तः। सदनं सादः। स्त्रीषु हर्षणाभावः। भिन्नमामं श्लेष्मसंसृष्टं गुरु च यद्वर्चः तस्य प्रवर्तनं भवति ॥



**सर्वजे सर्वसङ्करः ।**

सर्वजे सर्वदोषलक्षणसङ्करो भवति ॥

**विभागेऽङ्गस्य ये चोक्ता विषमाद्यास्त्रयोऽग्नयः ॥ २९ ॥**

**तेऽपि स्युर्ग्रहणीदोषाः**

अङ्गस्य विभागे अङ्गविभागे शारीरे ये विषमाद्याः विषमतीक्ष्णमन्दाख्याः त्रयोऽग्नय उक्ताः तेऽपि ग्रहण्याश्रितत्वाद् ग्रहणीदोषाः स्युः। नन्वेवं सति सप्त ग्रहणीदोषाः इति प्राप्नोति। नैवम्। मुख्याः सम्प्राप्तिपूर्वरूपनिर्देशादियुक्ताश्चत्वार एव ग्रहणीदोषाः। ये विषमाद्यास्त्रयोऽग्नयस्ते ग्रहणीरोगाभासा इति बोध्यम्। अरुणस्तु—"तेऽपि ग्रहणीदोषाः स्युः ग्रहणीदोषेण तेषां सम्भव इत्यर्थः" इत्याह। अथवा तेऽपि ग्रहणीदोषाः ग्रहणीदोषस्य हेतवः स्युरिति वा ॥

**समस्तु स्वास्थ्यकारणम् ।**

समस्तु समोऽग्निः स्वास्थ्यकारणं भवति ॥

ग्रहणीदोषप्रसङ्गेनाष्टौ महारोगा उच्यन्ते वातव्याधीत्यादिना—

**वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ।**
**अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ॥ ३० ॥**

अशीतिभेदभिन्नो वातव्याधिः । वात एव व्याधिर्वातव्याधिः वातनिमित्तो व्याधिर्वा । तेऽष्टौ महारोगाः सुदुस्तरत्वादेव तेषां महारोगत्वम् ॥

[1]इति हृदयबोधिकायामष्टाङ्गहृदयदीपिकायां
निदानस्थाने अष्टमोऽध्यायः ॥




1. 'इति निदानेऽष्टमोऽध्यायः' ख. घ, ङ ।

# नवमोऽध्यायः ।

अथोगदोषहेतुत्वसामान्यादनन्तरं मूत्रकृच्छ्रप्रमेहनिर्णयायाध्यायारम्भः । "ग्रहण्यतिसारवदधःस्रोतःस्रुतिसामान्या"दित्यरुणदत्तः । "महारोगत्वसामान्यादि"ति पाठ्ये । तयोरप्यतिकष्टत्वान्मूत्रकृच्छ्र उच्यते ।

**अथातो मूत्रकृच्छ्रनिदानं व्याख्यास्यामः ।**

विंशत्यां रोगेषु मूत्रमाहन्यते अतस्ते मूत्राघाताः । ते च क्रमेणात्रैवोच्यन्ते—

**वस्तिवस्तिशिरोमेढ्रकटीवृषणपायवः ।**
**एकसम्बन्धनाः प्रोक्ता गुदास्थिविवराश्रयाः ॥ १ ॥**

वस्तीत्यादि । वस्त्यादय एकसम्बन्धनाः प्रोक्ताः । सम्बन्धनं प्रथनम् । कथमेकसम्बन्धनत्वमिति । गुदास्थिविवराश्रयाः गुदसन्ध्यस्थिविवरसम्बन्धाः । एकस्थाने समीपसम्बन्धिन इत्यर्थः । गुदास्थिविवराश्रयत्वमेकसम्बन्धत्वे हेतुः ॥

वस्तेरधोमुखत्वान्मूत्रस्य अत्र प्रवेशः कथमित्याह—

**अधोमुखोऽपि वस्तिर्हि मूत्रवाहिसिरामुखैः ।**
**पार्श्वेभ्यः पूर्यते सूक्ष्मैः स्यन्दमानैरनारतम् ॥ २ ॥**
**यैस्तैरेव प्रविश्यैनं दोषाः कुर्वन्ति विंशतिम् ।**
**मूत्राघातान् प्रमेहांश्च कृच्छ्रान्मर्मसमाश्रयान् ॥ ३ ॥**

अधोमुख इत्यादि । **पाठ्यकारस्तु**—"अधोमुख इत्यादिना दोषाणां वस्तिप्राप्तावुपायमाह" इत्याह । "अधोमुख इत्यादिना मूत्राघातानां प्रसङ्गेन प्रमेहाणां चाश्रयः सम्प्राप्तिश्च उच्यते" इतीन्दुः । हिशब्दः प्रसिद्धौ । वस्तिरधोमुखोऽपि यैः मूत्रवाहिसिरामुखैः सूक्ष्मैरनारतमनवरतं स्यन्दमानैः पार्श्वेभ्यैः पूर्यते यथा अधोमुखेऽपि नवे घटे जलमग्ने पार्श्वेभ्यो जलप्रवेशो दृष्टः तद्वद्वस्तावधोमुखे जलमध्यस्थिते पूरणं मूत्रेणेति । उक्तं च **संग्रहे**—"सर्वेषां पुनर्मूत्ररोगाणामधिष्ठानं वस्तिः । स मर्मस्वभिहितः प्राक् । स चाधोमुखोऽपि मूत्र-

१. 'यारम्भः' ग । २. 'भ्य एव पू' ख. घ. ङ ।

वहनाडीसूक्ष्ममुखसहस्रनिष्यन्देन मूत्राख्येनानवरतं नवो घट इवाप्सु मग्नमुखोऽपि पार्श्वेभ्योऽम्भसा पूर्यते" इति । सौश्रुते चोक्तं—

"नाभिमुष्ककटीपृष्ठगुदवंक्षणशेफसाम् ।
एकद्वारस्तनुत्वक्को मध्ये वस्तिरधोमुखः ॥
अलाबुरिव संस्थानात् सिरास्नावाभिरावृतः ।
जाग्रतः स्वपतश्चापि स निष्यन्देन पूर्यते ॥
आ मुखात् सलिले न्यस्तः पार्श्वेभ्यः पूर्यते नवः ।
घटो यथा तथा विद्धि वस्तेर्मूत्रस्य पूरणम् ॥

अरुणदत्तस्तु—"अधोमुखो हि वस्तिर्हि" इति पठति । तत्पक्षे हिशब्दो यस्मादर्थे । एकः प्रसिद्धौ । यस्मान्मूत्रवाहिसिरामुखैः पार्श्वेभ्य एव पूर्यते[1] अतो वस्तिरधोमुखो हि इति । यैः मूत्रं प्रविशति वस्तौ तैरेव स्रोतोभिः मूत्रेण सह एनं वस्तिं प्रविश्य दोषाः विंशतिं मूत्राघातान् कुर्वन्ति । तावतश्च प्रमेहान् कुर्वन्ति कृच्छ्रान् कृच्छ्रसाध्यान् मर्मसमाश्रयान् । मूत्राघातानां प्रसङ्गेन प्रमेहाणां चाश्रयः संप्राप्तिश्चोक्ता भवति । संग्रहे चोक्तं—"तैरेव स्रोतोभिः वातादयो दुष्टाः प्रविश्य वस्तिं यथास्वमाघातान् प्रमेहांश्च जनयन्ति" इति ॥

यथादोषं मूत्राघातस्य लक्षणमाह—

**वस्तिवंक्षणमेढ्रार्तियुक्तोऽल्पाल्पं मुहुर्मुहुः ।**
**मूत्रयेद्वातजे कृच्छ्रे,**

वस्तीत्यादि । वातजे कृच्छ्रे वस्त्याद्यर्तियुक्तः अत्यल्पमल्पाल्पं मुहुर्मुहुः बहुशः मूत्रयेत् मूत्रस्रावं कुर्यात् ॥

**पैत्ते पीतं सदाहरुक् ॥ ४ ॥**
**रक्तं वा,**

पैत्ते पित्तोद्भवे पीतं सदाहं सरुक् सरक्तं वा मूत्रयेत् ॥

**कफजे वस्तिमेढ्रगौरवशोफवान् ।**
**सपिच्छं सविबन्धं च,**

१. 'वस्तिर्मूत्रेण पूर्यते' इति मुद्रिते ।

कफजे वस्तिमेढ्रयोः गौरवशोफवान् नरः सपिच्छं पिच्छिलावयवयुक्तं सविबन्धं च मूत्रयेत् ॥

**सर्वैः सर्वात्मकं मलैः ॥ ५ ॥**

सर्वैर्मलैः दोषैः कृते कृच्छ्रे सर्वात्मकं सर्वदोषलक्षणस्वरूपं मूत्रयेत् । एवं चत्वारि कृच्छ्राणि ॥

अधुनाश्मरीसम्भवमाह—

**यदा वायुर्मुखं वस्तेरावृत्य परिशोषयेत् ।**
**मूत्रं सपित्तं सकफं सशुक्रं वा तदा क्रमात् ॥ ६ ॥**

**सञ्जायतेऽश्मरी घोरा पित्ताद् गोरिव रोचना ।**
**श्लेष्माश्रया च सर्वा स्याद्,**

यदेत्यादिना सर्वाश्मरीषु सम्प्राप्तिरुच्यते । यदा यस्मिन् काले वायुः कुपितो वस्तेर्मुखमावृत्य रुद्ध्वा केवलं मूत्रं वस्तिस्थं कदाचित् परिशोषयेत् कदाचित् सपित्तं कदाचित् सकफमथवा सशुक्रं परिशोषयेत् तदाश्मरी क्रमाद् यथोत्तरं घोरा संजायते । अरुणदत्तस्त्वाह—"तदा क्रमाद् अश्मरी घोरा तीव्रा जायते । क्रमादिति शोषस्य हेतुत्वाद् वायोः प्राधान्यात् पूर्वं वातिका ततः क्रमेण पित्ताद्यस्तिस्रः" इति । पित्ताद् गोरिव रोचना गोपित्ताद् रोचनेव सम्भूता । सर्वा चतुर्विधाप्यश्मरी श्लेष्माश्रया स्यात् श्लेष्माणमाश्रित्य जायते । "श्लेष्माश्रयाश्च सर्वाः स्युः" इति वा पाठः । सर्वाश्चाश्मर्यः श्लेष्माश्रयाः श्लेष्माधिष्ठानाः श्लेष्माणमाश्रित्य जायन्ते इत्यर्थः । उक्तं च सौश्रुते—"चतस्रोऽश्मर्यो भवन्ति श्लेष्माधिष्ठाना वातेन पित्तेन श्लेष्मणा शुक्रेन चे"ति । वातेन जाता वाताश्मरी, सैव मूत्राश्मरीत्यभिधीयते ॥

**अथास्याः पूर्वलक्षणम् ॥ ७ ॥**

**वस्त्याध्मानं तदासन्नदोषेषु परितोऽतिरुक् ।**
**मूत्रे च बस्तगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥ ८ ॥**

अथानन्तरमस्याः सर्वस्याः अश्मर्याः पूर्वलक्षणं प्राग्रूपं वस्त्याध्मानादि। वस्तेराध्मानम्। तदासन्नदेशेषु परितः अतिरुक् अतिवेदना। मूत्रे वस्तगन्धत्वं वस्तमूत्रसमानगन्धमूत्रत्वम्। വസ്തം - ആട് ॥

**सामान्यलिङ्गं रुङ् नाभिसीवनीवस्तिमूर्धसु।**
**विशीर्णधारं मूत्रं स्यात् तया मार्गनिरोधने ॥ ९ ॥**
**तद्व्यपायात् सुखं मेहेदच्छं गोमेदकोपमम्।**
**तत्संक्षोभात् क्षते सास्रमायासाच्चातिरुग् भवेत् ॥ १० ॥**

सर्वाश्मर्याः सामान्यलिङ्गं मूत्रयतो नाभ्यादिषु रुग् वेदना। तयाश्मर्या मूत्रमार्गनिरोधने सति मूत्रं विशीर्णधारं स्यात्। तद्व्यपायात् तन्निरोधाभावात् सुखं मेहेत्। अच्छं गोमेदकोपमं गोमेदको रत्नविशेषः തെളിമരതകം। तत्तुल्यवर्णं मेहेत। "तद्व्यपायादश्मरीविगमादि"तीन्दुः। तत्संक्षोभात् तस्या अश्मर्या वस्तौ हस्त्यश्वादिकृतेन संक्षोभेण हेतुना क्षते सति घर्षणेन सास्रं सरक्तं मेहेत्। आयासादध्वादिकृतादतिरुक् च भवति ॥



यथादोषं लक्षणमाह—

**तत्र वाताद् भृशात्यार्तो दन्तान् खादति वेपते।**
**मृद्नाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ॥ ११ ॥**
**सानिलं मुञ्चति शकृन्मुहुर्मेहति बिन्दुशः।**
**श्यावा रूक्षाश्मरी चास्य स्याच्चिता कण्टकैरिव ॥ १२ ॥**

तत्रेत्यादि। तत्र तासु वाताश्मर्यां वस्तिसीवनीमेहनादिषु[1] भृशार्त्यार्तः तीव्रवेदनयार्दितः वेपते वेपथुमान् भवति। अनिशं क्वणन् हाहेत्यादिशब्दं कुर्वन् सानिलं शकृन्मुञ्चति बिन्दुशो मुहुर्मुहुः मेहति। अश्मरी चास्य श्यावा रूक्षा कण्टकैश्चितेव स्यात्। श्यावादिवर्णविशेषनिर्देशो बहिर्निष्क्रान्तानां वर्णं दृष्ट्वा यथादोषं चिकित्साकरणार्थम्। इत्येतद् वाताश्मरीलक्षणम् ॥

**पित्तेन दह्यते वस्तिः पच्यमान इवोष्मवान्।**
**भल्लातकास्थिसंस्थाना रक्तपीतासिताश्मरी ॥ १३ ॥**

---

१. 'हनेषु' ग।

पित्तेनाश्मर्यां वस्तिर्दह्यते पच्यमान इव चोष्मवान्। "पित्तेन पच्यमान इव दह्यते वस्तिः" इति **संग्रहे** । अश्मरी भल्लातकास्थिसंस्थाना रक्ताद्यन्यतमवर्णा च भवति। एतत् पित्ताश्मरीलक्षणम्। अश्मरीणां भल्लातकास्थिसंस्थाननिर्देशस्तदनुसारेण वस्त्यवयवविपाटनार्थम्। **हाटको**ऽप्याह–"अश्मरीणां भल्लातकास्थिसंस्थाननिर्देशस्तदनुरूपप्रसारणेनाहरणार्थम्। एवमन्यत्रापि" इति॥

**वस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ।**
**अश्मरी महती श्लक्ष्णा मधुवर्णाथवा सिता ॥ १४ ॥**

श्लेष्मणा जातायामश्मर्यां वस्तिर्निस्तुद्यत इव। शीतलो गुरुश्च भवति। अश्मरी च महती स्थूला मधुवर्णा सिता शुक्ला वा भवति। एतत् श्लेष्माश्मरीलक्षणम्॥

**एता भवन्ति बालानां तेषामेव च भूयसा ।**
**आश्रयोपचयाल्पत्वाद् ग्रहणाहरणे सुखाः ॥ १५ ॥**

एतास्तिस्रोऽश्मर्यो भूयसा भूयिष्ठं बालानामेव भवन्ति। तेषामेव च जाता आश्रयस्य वस्तेरल्पत्वान्मांसोपचयस्याल्पत्वाच्च बलिशादिना ग्रहणे आहरणे च सुखोपायाः। महतां तु यथोक्तहेत्वभावाद् ग्रहणाहरणे दुःखावहा इत्यर्थादुक्तं भवति। **संग्रहे** चोक्तं--"प्रायेण एतास्तिस्रोऽश्मर्यो बालानां जायन्ते तेषामेव चाल्पवस्तित्वादल्पमांसोपचयत्वाच्च सुखग्रहणाहरणा भवन्ती"ति। आश्रयस्य वस्तेः अश्मर्याश्च उपचयाल्पत्वात्। वृद्ध्यभावादिति केचित्॥

**शुक्राश्मरी तु महतां जायते शुक्रधारणात् ।**
**स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥ १६ ॥**

**शोषयत्युपसंगृह्य शुक्रं तच्छुष्कमश्मरी ।**
**वस्तिरुक्कृच्छ्रमूत्रत्वमुष्कश्वयथुकारिणी ॥ १७ ॥**

**तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ।**
**पीडिते त्ववकाशेऽस्मिन्,**

शुक्राश्मरी महतामेव यूनामेव जायते शुक्रधारणात् शुक्रवेगस्य धारणात्। कथं धारणमित्याह स्थानादित्यादि। स्वस्थानाच्च्युतं भ्रष्टं मैथुन-

विघाताद् बहिरमुक्तमनिरस्यमानं शुक्रमनिलो वायुः उपसंगृह्य गृहीत्वा मुष्कयोः वृषणयोः अन्तरे मध्ये शोषयति । तच्छुष्कं शुक्राश्मरीति भण्यते । सा वस्तिरुगादिकारिणी । तस्यां शुक्राश्मर्यामुत्पन्नमात्रायां अचिरकालोत्पन्नायां पीडितेऽभिभूतेऽस्मिन्नेवावकाशे शुक्राश्मरीस्थाने मुष्कयोरन्तरे शुक्रमेति आगच्छति । अकठिनत्वात् शुक्ररूपं निर्गच्छतीत्यर्थः । तस्मिन्नेवावकाशे पीडिते विलीयते चेति । चशब्दो लुप्तनिर्दिष्टो बोध्यः । विशेषेण लीयते तत्र सुष्ठु तत्र श्लिष्यति अकठिनत्वात् । संग्रहे चोक्तं—"उत्पन्नमात्रायां च शुक्रं निरेति पीडितमात्रे च तस्मिन्नेवावकाशे विलीयते" इति । अरुणदत्तस्त्वाह—"शुक्रमेत्य शुक्रं प्राप्य विलीयते प्रविलयमापद्यते । उत्पन्नावस्थायामेव पीडितः शुक्रत्वं प्राप्य विलीनो भवतीत्यर्थः" इति ॥

अश्मर्येव च शर्करा ॥ १८ ॥

अणुशो वायुना भिन्ना सा त्वस्मिन्ननुलोमगे ।
निरेति सह मूत्रेण प्रतिलोमे विबध्यते ॥ १९ ॥

अश्मर्येव च वायुना अणुशो भिन्ना शर्करा स्यात् । एवकारेणाश्मर्यनन्यत्वं शर्करायाः प्रदर्शयति । सा तु शर्करा अस्मिन् वायावनुलोमगे मूत्रमार्गे अनुलोमं कृत्वा गच्छति सिकतेव मूत्रेण सह निरेति बहिः निष्क्रामति । प्रतिलोमगे सति वायौ सा निरुध्यते । सैवातिसूक्ष्मा सिकतेत्युच्यते । तुल्यलक्षणोपक्रमत्वात् पृथङ्नोक्तम् ॥

मूत्रेत्यादिना वातवस्तिलक्षणमाह—

मूत्रसन्धारिणः कुर्याद् रुद्ध्वा वस्तेर्मुखं मरुत् ।
मूत्रसङ्गं रुजं कण्डूं कदाचिच्च स्वधामतः ॥ २० ॥
प्रच्याव्य वस्तिमुद्वृत्तं गर्भाभं स्थूलविप्लुतम् ।
करोति तत्र रुग्दाहस्पन्दनोद्वेष्टनानि च ॥ २१ ॥
बिन्दुशश्च प्रवर्तेत मूत्रं वस्तौ तु पीडिते ।
धारया द्विविधोऽप्येष वातवस्तिरिति स्मृतः ॥ २२ ॥
दुस्तरो दुस्तरतरो द्वितीयः प्रबलानिलः ।

मूत्रसन्धारणशीलस्य पुरुषस्य मारुतो बस्तिमुखं रुद्ध्वा मूत्रसङ्गं कुर्यात्। रुजं बस्तिमेढ्रादौ कण्डूं च कुर्यात। स वातबस्तिः मूत्राघातविशेषः। अधिकाद् वातकोपात् तस्यैव भेदमाह--कदाचिदित्यादिना। कदाचिन्मूत्रस्यात्यन्तवेगरोधाददृष्टवशाद्वा वायुः बस्तिं स्वधामतः स्वस्थानात् प्रच्याव्याधो नीत्वा उद्वृत्तं वृत्ताकारं गर्भाभं बहिःशोफादियुक्तं स्थूलं स्वप्रमाणाद् वृद्धं विप्लुतं चलितं चलनस्वभावं च करोति। तत्र रुगादयो भवन्ति। बिन्दुशश्च मूत्रं प्रवर्ततेति सम्भावनालक्षणेन कदाचिदप्रवृत्तिरपि भवतीति सूचयति। बस्तौ तु पीडिते सति धारया त्वविच्छिन्नं मूत्रस्य प्रवृत्तिः। एवमेष द्विविधोऽपि वातबस्तिरिति नाम्ना स्मृतः। स च प्रथमो दुस्तरः कृच्छ्रसाध्यः। द्वितीयः प्रबलानिलत्वाद् दुस्तरतरः। "बिन्दुशो धारया चेति द्वैविध्यम्" इत्यरुणदत्तः॥

**शकृन्मार्गस्य बस्तेश्च वायुरन्तरमाश्रितः॥ २३॥**

**अष्ठीलाभं घनं ग्रन्थिं करोत्यचलमुन्नतम्।**
**वाताष्ठीलेति साध्मानविण्मूत्रानिलसङ्गकृत्॥ २४॥**



शकृन्मार्गस्य बस्तेश्च अन्तरमाश्रितो वायुः अष्ठीलाभं घनम् अचलम् उन्नतं च ग्रन्थिं करोति। अष्ठीला पाषाणमयी तक्षणाहननोपकरणम्। (അമ്മിക്കല്ല്) । सा वाताष्ठीलेत्युच्यते। सा आध्मानादिकृत्॥

अथ वातकुण्डलिकामाह—

**विगुणः कुण्डलीभूतो बस्तौ तीव्रव्यथोऽनिलः।**
**आविध्य मूत्रं भ्रमति सस्तम्भोद्वेष्टगौरवः॥ २५॥**

**मूत्रमल्पाल्पमथवा विमुञ्चति शकृत् सृजन्।**
**वातकुण्डलिकेत्येषा,**

विगुणः कुपितो न त्वनुलोमनः, तथा दोषदेशादिसहकारिकारणवशाद् बस्तौ कुण्डलीभूतः कुण्डलाकारगतिः तीव्रव्यथः तीव्ररुजाकरोऽनिलो वायुः मूत्रमाविध्य रुद्ध्वा स्तम्भादियुक्तो बस्तौ भ्रमति। "आविध्य क्षोभयित्वा" इति

सारकृत् । "कुण्डलीभूतः आध्मातः" इत्यरुणदत्तः । अथवा न मूत्रमाविध्य भ्रमति, किं तर्हि शकृदपि विमुञ्चन् मूत्रमल्पाल्पं विमुञ्चति । एषा वातकुण्डलिकेत्युच्यते ॥

मूत्रातीतमाह—

**मूत्रं तु विधृतं चिरम् ॥ २६ ॥**

**न निरेति विबद्धं वा मूत्रातीतं तदल्परुक् ।**

मूत्रं त्वित्यादि । मूत्रं तु चिरं विधृतं पुनर्विमुच्यमानं न निरेति न निर्गच्छति । विबद्धं वा निरेति । तदल्परुङ् मूत्रातीतमुच्यते ॥

मूत्रजठरमाह—

**विधारणात् प्रतिहतं वातोदावर्तितं यदा ॥ २७ ॥**
**नाभेरधस्तादुदरं मूत्रमापूरयेत् तदा ।**
**कुर्यात् तीव्ररुगाध्मानमपक्तिं मलसंग्रहम् ॥ २८ ॥**
**तन्मूत्रजठरं,**



विधारणादित्यादि । मूत्रवेगनिरोधात् प्रतिहतं मूत्रं कर्तृभूतं वातेन अपानाख्येन उदावर्तितं यदा नाभेरधस्तादुदरं आपूरयेत् तदा तन्मूत्रं वातो वा तीव्ररुग् आध्मानमपक्तिं मलसंग्रहं च कुर्यात् तन्मूत्रजठरं विद्यात् ॥

अथ मूत्रोत्सङ्गं लक्षयति—

**छिद्रवैगुण्येनानिलेन वा ।**
**आलिप्तमल्पं मूत्रं तु वस्तौ नालेऽथवा मणौ ॥ २९ ॥**

**स्थित्वा स्रवेच्छनैः पश्चात् सरुजं वाथवा रुजम् ।**
**मूत्रोत्सङ्गः स विच्छिन्नतच्छेषगुरुशेफसः ॥ ३० ॥**

छिद्रेत्यादि । छिद्रवैगुण्येन छिद्रस्य मूत्रस्रोतसः केनचिद् व्रणादिना वैगुण्याद् अनिलेन वा वैगुण्येन आक्षिप्तं मूत्रस्याल्पं वस्तौ मेढ्रनाले वा मणौ मेढ्राग्रे वा स्थित्वा पश्चात् शनैः सरुजं नीरुजं वा स्रवेत् । किंभूतस्य—विच्छिन्नतच्छेषगुरुशेफसः सक्तस्य मूत्रस्य शेषेण गुरुशेफसो गुरुमेढ्रस्य । स मूत्रोत्सङ्गः ॥

मूत्रग्रन्थिं दर्शयति—

**अन्तर्वस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् ।**
**अश्मरीतुल्यरुग् ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥ ३१ ॥**

अन्तरित्यादि ।

मूत्रशुक्रं दर्शयति—

**मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् ।**
**स्थानाच्च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्तते ॥ ३२ ॥**

**भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ।**

मूत्रितस्येत्यादि । मूत्रितस्य सञ्जातमूत्रस्य मूत्रवेगावस्थायामेव स्त्रियं यातो स्त्रियं गच्छतः वायुना उद्धतं क्षोभितं शुक्रं स्थानात् च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्तते भस्मोदकनिभं तन्मूत्रशुक्रमुच्यते ॥

विड्विघातमाह—

**रूक्षदुर्बलयोर्वातादुदावृत्तं शकृद् यदा ॥ ३३ ॥**

**मूत्रस्रोतोऽनुपर्येति संसृष्टं शकृता तदा ।**
**मूत्रं विट्तुल्यगन्धं स्याद् विड्विघातस्तदाह्वयः ॥ ३४ ॥**

रूक्षेत्यादि । रूक्षदुर्बल्योः रूक्षदेहस्य दुर्बलस्य च वाताद् वातकोपाद् उदावृत्तं शकृत् प्रतिलोमप्रेरितं शकृद् यदा मूत्रस्रोतोऽनुपर्येति मूत्रमार्गं प्रति गच्छति तदा मूत्रं शकृता संसृष्टं विट्तुल्यगन्धं च भवेत् । विड्विघातश्च भवेत् । स रोगः तदाह्वयः विड्विघाताह्वयः । 'विड्विघातं तमादिशेद्' इति वा पाठः ॥

**पित्तं व्यायामतीक्ष्णोष्णभोजनाध्वातपादिभिः ।**
**प्रवृद्धं वायुना क्षिप्तं वस्त्युपस्थार्तिदाहवत् ॥ ३५ ॥**

**मूत्रं प्रवर्तयेत् पीतं सरक्तं रक्तमेव वा ।**
**उष्णं पुनःपुनः कृच्छ्रादुष्णवातं वदन्ति तम् ॥ ३६ ॥**

व्यायामादिभिः प्रवृद्धं पित्तं वायुनाधः क्षिप्तं वस्त्युपस्थयोः वस्तिमेढ्योरतिदाहवत् पीतं सरक्तं केवलं रक्तमेव वा उष्णं पुनःपुनः कृच्छ्रात् प्रवर्तयेन्मूत्रम्। तं व्याधिं उष्णवातं वदन्ति ॥

**रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ ।**
**मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ ३७ ॥**

रूक्षस्य क्लान्तदेहस्य पित्तमारुतौ[2] वस्तिस्थौ सन्तौ सरुग्दाहं मूत्रक्षयं जनयेताम् । तदाह्वयं मूत्रक्षयाह्वयम् । स व्याधिः मूत्रक्षय इत्यर्थः ॥

**पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत् ।**
**कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥ ३८ ॥**
**सदाहं रोचनाशङ्खचूर्णवर्णं भवेच्च तत् ।**
**शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥ ३९ ॥**

पित्तं वा कफो वा द्वावपि वा अनिलेन वस्तौ संहन्येते पीड्येते चेत् तदा मूत्रं पीतं रक्तं श्वेतं वा घनं सान्द्रं सदाहं कृच्छ्रात् स्रवेत् । शुष्कं च तन्मूत्रं शङ्खरोचनान्यतरचूर्णवर्णं कदाचित् पीतादिसमस्तवर्णयुक्तं वा स्यात् । तं व्याधिं मूत्रसादं मूत्रावसादं वदन्ति । 'मूत्रोपसाद'मिति केचित् । एवमेषां निदानं संप्राप्तिलक्षणं चोक्तम् ॥

'इति विस्तरतः' इत्यादिना अध्यायमुपसंहरति, द्वितीयं च प्रस्तावयति--

**इति विस्तरतः प्रोक्ता रोगा मूत्राप्रवृत्तिजाः ।**
**निदानलक्षणैरूर्ध्वं वक्ष्यन्तेऽतिप्रवृत्तिजाः ॥ ४० ॥**

इति एवमुक्तप्रकारं मूत्राप्रवृत्तिजा रोगाः मूत्राघातजा रोगाः विस्तरेण निदानलक्षणैः प्रोक्ताः । ऊर्ध्वमतोऽध्यायादनन्तरं मूत्रस्यातिप्रवृत्तिजा रोगाः प्रमेहभेदा निदानलक्षणैः वक्ष्यन्ते ॥

इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने नवमोऽध्यायः ॥

---

१. 'वायुना क्षिप्तं' ख. २. 'तौ कुपितौ व' ख. घ. ङ.

# दशमोऽध्यायः ।

स्वयमेव अध्यायारम्भे सम्बन्धमुक्तवानाचार्यः—'ऊर्ध्वं वक्ष्यन्तेऽतिप्रवृत्तिजाः' इति ॥

**अथातः प्रमेहनिदानं व्याख्यास्यामः ।**

**प्रमेहा विंशतिस्तत्र श्लेष्मतो दश, पित्ततः ।**
**षट्, चत्वारोऽनिलात्,**

अथात इत्यादि । प्रमेहास्तावद् विंशतिः । सर्वेषां च प्रमेहाणां श्लेष्मा हेतुः । सर्वे च रोगस्वभावाद् नवोत्पन्नाः श्लेष्मप्रमेहा भवन्ति । अतः कफादिक्रमेण निर्दिश्यन्ते । तत्र तेषु मध्ये श्लेष्मतो दश प्रमेहाः उदकमेहादयो भवन्ति—उदकेक्षुसान्द्रसुरापिष्टशुक्रसिकताशीतशनैर्लालप्रमेहा इति दश । पित्तात् षट् प्रमेहाः—क्षारकालनीलहारिद्रमाञ्जिष्ठशोणितमेहाः भवन्ति । अनिलाद् वातात् चत्वारः प्रमेहाः वसामज्जहस्तिमधुमेहाख्याः भवन्ति इति विंशतिः ॥

तेषामित्यादिना प्रमेहाणां निदानमुच्यते----

**तेषां मेदोमूत्रकफावहम् ॥ १ ॥**

**अन्नपानक्रियाजातं यत् प्रायस्तत् प्रवर्तकम् ।**
**स्वाद्वम्ललवणस्निग्धगुरुपिच्छिलशीतलम् ॥ २ ॥**

**नवधान्यसुरानूपमांसेक्षुगुडगोरसम् ।**
**एकस्थानासनरतिः शयनं विधिवर्जितम् ॥ ३ ॥**

तेषां प्रमेहाणां मेदआवहं मूत्रावहं कफावहं च यदन्नपानक्रियाजातं तत् प्रायः प्रवर्तकम् । तत् तेषां प्रवर्तकं भवति इति सम्बन्धः । क्रिया शय्यासनादिका । जातं समूहः । तदेवान्नपानादिकं दर्शयितुमाह—स्वाद्वम्लेत्यादि । एकस्थानासने रतिः प्रीतिः । तथा विधिवर्जितं

शयनमकाले स्वप्नः। स्वाद्वम्ललवणस्निग्धाद्येतत् तदन्नपानक्रियाजातमिति सम्बन्धः। संग्रहे[1]—"तेषां यत्किञ्चिदाहारविहारजातं श्लेष्ममेदोमूत्रजननं स हेतुः" इति।

श्लेष्मजानां सम्प्राप्तिमाह—

**वस्तिमाश्रित्य कुरुते प्रमेहान् दूषितः कफः।**
**दूषयित्वा वपुःक्लेदस्वेदमेदोरसामिषम् ॥ ४ ॥**

वस्तिमित्यादि। एभिः स्वाद्वम्लादिभिः कारणैः दूषितः कफो वस्तिमाश्रित्य प्रमेहान् कुरुते। किं कृत्वा। वपुःक्लेदस्वेदमेदोरसामिषं दूषयित्वा। वपुःक्लेदः शरीरक्लेदः लसीकादिद्रवविशेषः। वपुः शरीरकान्तिः इत्येके। आमिषं मांसम्। **आगमटीकाव**—"ननु समगुणत्वान्मेदसः कफेन वृद्धिरेव विधातुं युक्ता न दूषणम्। उच्यते—विकृतत्वात्। अनेनैतन्निरूपयति—प्रतिरूपलाभादतिवृद्धानि दूष्याणि कुपितैर्दोषैर्युक्तानि दूष्यन्ते न वर्धन्त इति। **असद्गुरवस्तु**—"दूषयित्वा वपुःक्लेदशुक्रमेदोरसामिषम्" इति पठन्ति कफेन स्वेदो न दूष्यते पित्ताश्रयत्वादिति वदन्तः। उक्तं च—

"तत्रास्थिनि स्थितो वायुः पित्तं तु स्वेदरक्तयोः।
श्लेष्मा शेषेषु"

इति। **संग्रहे**—"तत्र वातपित्तमेदःक्लेदमांसशुक्ररसैरन्वितो वस्तिगतः श्लेष्मा प्रमेहान् जनयति" इति॥

पित्तजानां संप्राप्तिं लक्षयति—

**पित्तं रक्तमपि क्षीणे कफादौ मूत्रसंश्रयम्।**

पित्तमित्यादि। पित्तं कर्तृभूतं रक्तं मूत्रसंश्रयं दूषयित्वा अपिशब्दाद् वपुःक्लेदादींश्च दूषयित्वा प्रमेहान् कुरुते। कदा, कफादौ सौम्यधातौ क्षीणे सति॥

वातजानां सम्प्राप्तिं दर्शयति धातूनित्यादिना—

**धातून् वस्तिमुपानीय तत्क्षयेऽपि च मारुतः ॥ ५ ॥**

---

१. 'संग्रहे चोक्तं' ख. घ. ङ.

मारुतो वायुः धातून् दूषयित्वा वातप्रमेहसम्पादनयोग्यान् वसादीन् संग्रहोक्तान् बस्तिमुपानीय बस्तेः सन्धिं नीत्वा प्रमेहान् कुरुते । तत्क्षयेऽपि तेषां धातूनाम् अन्यहेतुकानां क्षयेऽपि मेहान् कुरुते । धातूनिति वसामज्ज-लसीकौजांसि गृह्यन्ते। तथा च संग्रहे--"तत्र वातपित्तमेदःक्लेदमांसशुक्ररसैरन्वितो बस्तिगतः श्लेष्मा प्रमेहान् जनयति । तैः कफशोणिताभ्यां च युक्तं पित्तम् । तैर्वसामज्जालसीकौजोभिश्च वायुः" इति । क्षीणे कफादावित्युक्तत्वात् सर्वमेहेषु प्राक् श्लेष्मणः कोपः इत्यर्थादुक्तं भवति। उक्तं च संग्रहे--"त्रयाणामपि दोषाणां श्लेष्मा[1] प्राक् प्रकोपमापद्यते । श्लेष्माधिष्ठानत्वान्मूत्रस्य । तद्वृद्धेर्मेद एव च तेन प्रथमं दूष्यतेऽत्यन्तसभागत्वात् । तदनन्तरं देहक्लेदादयः । ततः श्लेष्मादि-क्षये पित्तं बलीभवत् शोणितमपि दूषयति । तत्क्षयेऽपि वायुर्वसादीन् धातून् शरीरस्य परमसारभूतान् बस्तिमाकृष्य मूत्रेण सह विसृजति" इति । अस्यार्थः-- सर्वेषु मेहेषु च रोगस्वभावात् श्लेष्मा प्रकोपमापद्यते । पित्तजेऽपि प्रथममल्पं कुपितः श्लेष्मा स्वल्पं लिङ्गं दर्शयेत् । किञ्चित्कालं श्लेष्मप्रमेहो भूत्वा काल-वशात् कफादौ क्षीणे पित्तमेहतां प्रतिपद्यते । तत्रापि रक्तप्रवृत्तेः कालेन रक्तक्षयाद् वायुः वसादीन् देहस्य सारभूतानाकृष्य अन्ते वातप्रमेहान् करोति । एवं क्रमेण दोषाणां कारणत्वं प्रथममेव वातपित्तप्राधान्येनोत्पन्नेऽपि फलतः किञ्चित्कफान्वयत्वमिति । सभागत्वं सदृशत्वम् । धातून् बस्तिमुपानीय तत्क्षयेऽपि च मारुतः । "धातून् रसादीनि"त्यरुणदत्तः ॥

एषां साध्यासाध्यविभागमाह--

**साध्ययाप्यपरित्याज्या मेहास्तेनैव तद्भवाः ।**
**समासमक्रियतया महात्ययतयापि च ॥ ६ ॥**

साध्येत्यादि । श्लेष्मादिः भवो जन्म येषां ते तद्भवाः कफादिसमुत्थाः । तेन एवंविशिष्टेन सम्प्राप्तिविशेषेण हेतुना तद्भवा मेहाः क्रमेण साध्ययाप्यपरि-त्याज्याः स्युः । कफप्रमेहाः वपुःक्लेदादिदूषणमात्रे उत्थितत्वात् साध्या भवन्ति । पित्तमेहाः सौम्यधातुक्षये रक्तदूषणेनोत्थितत्वाद् याप्याः । वातमेहास्तु सर्वधातु-

---

१. 'ष्मा प्रमेहेषु प्राक्' इति मुद्रिते ।

क्षयोद्भूतत्वादसाध्याः । अन्यदपि हेत्वन्तरं साध्ययाप्यरित्याज्यत्वे वक्ति—समेत्यादि । समासमक्रियतया महात्ययतयापि साध्ययाप्यरित्याज्याः । अपि-चेति समुच्चयार्थः । मेहकारणस्य कफस्य प्रमेहदूष्यस्य वपुःक्लेदादेरपतर्पणरूपतया एकयैव क्रियया साध्यत्वात् समक्रियतया कफप्रमेहा दशापि साध्याः । पित्तस्य शीतमधुरादिरूपा क्रिया प्रमेहाणां रूक्षतीक्ष्णादिका दूष्यप्रतिपक्षत्वादौपयिकी । तस्मादसमक्रियया पित्तजा याप्याः । तत्कालोद्रिक्तोपद्रवनिरासेन यापनं कर्तव्य-मिति । वातस्य स्निग्धमधुरादिकं सन्तर्पणरूपं पथ्यम् । प्रमेहाणां रूक्षतीक्ष्णा-दिकम् । तदेवं विरुद्धक्रियत्वाद् वातप्रमेहा असाध्याः । महात्ययतयापि च आशु शरीरक्षपणहेतुत्वाच्च वातप्रमेहा असाध्याः । महांश्चासावत्ययो विनाशः शरीरविघातरूपो महात्ययः तस्य भावो महात्ययता तया । **अरुणदत्त**स्तु—"महात्ययतया महाव्यापत्करत्वेन वातमेहा असाध्याः" इत्येवं वदति, नत्वसम-क्रियतामत्र योजयति । **आगम**श्चात्र—पित्तजा याप्याः संसृष्टदोषमेदःस्थानत्वाद् विरुद्धोपक्रमत्वाच्च । संसृष्टो दोषो मेदःस्थानं च । दोषो हि पित्तं संसृज्यते श्लेष्मणा । तथा मेदो वा संसृज्यते मांसादिभिः, मांसं लसीकादिभिः । एवं दूष्याणां संसर्गः । तथा स्थानमपि पित्तस्यामाशयः । मेदसो वपावहनं तच्चामाशयैकदेशः । तेन संसृष्टत्वाद् दोषाणामनवरतं दूष्यस्य दूषणप्राप्तिः, अतः पित्तजानां याप्यत्वम् । मधुरशीतादि पित्तं जयति । रूक्षतीक्ष्णादि मेहम् । तेन यदेकस्य शमायालं तदपरस्य कोपायेति विरुद्धोपक्रमत्वम् । इमांश्चतुरः प्रमेहान् वातजानसाध्यानाचक्षते, महात्ययिकत्वाद् विरुद्धोपक्रमत्वाच्च । यतोऽयमोजःप्रभृतीन् प्रक्षाल्य निर्हरति, अतो धात्वपचयात् तेषां महात्ययिकत्वम् । यत् पथ्यं स्निग्धादि वायोः तदपथ्यं मेदसः । यद्वा मेदसः तिक्तादि तदसाम्प्रत-मनिलस्य इति विरुद्धोपक्रमत्वमिति । **संग्रहे**—"तस्मात् कफपित्तवातजाः क्रमेण साध्ययाप्यासाध्याः । तथा पित्तजाः संसृष्टमेदःस्थानत्वाद् विरुद्धोपक्रत्वाच्च । वातजाः पुनः क्षीणेषु धातुषु महात्ययतया विरुद्धोपक्रमत्वाच्च" इति ॥

**सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता ।**

---

१. 'वं व' ख. ग.   २. 'जाः साध्य' ग.

तेषां प्रमेहाणां सामान्यलक्षणं प्रभूतमूत्रता च आविलमूत्रता च। धातुसम्पर्कादाविलमूत्रत्वम् ॥

मेहानां भेदे कारणमाह—

**दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ॥ ७ ॥**

**मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ।**

दोषेत्यादि । दोषाणां श्लेष्मादीनां दूष्याणां च वपुःक्लेदादीनामविशेषे समानत्वे सत्यपि तत्संयोगविशेषतः तेषां दोषदूष्याणां संयोगभेदाद् उत्कर्षापकर्षकृतान्मूत्रस्य वर्णादिभेदेन भेदो मेहेषु कल्प्यते। आदिशब्देन गन्धरसस्पर्शानां ग्रहणम् ॥

अथ प्रमेहाणां लक्षणं संज्ञां च क्रमेणाह—

**अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ॥ ८ ॥**

**मेहत्युदकमेहेन,**

अच्छमित्यादि । उदकमेहेन अच्छत्वादिगुणयुक्तं मूत्रं मेहति मूत्रयति पुरुषः ॥

**किञ्चिचाविलपिच्छिलम् ।**

**इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ ९ ॥**

किञ्चिदित्यादि । इक्षुमेहतः किञ्चिदाविलपिच्छिलं इक्षुरसमिवात्यर्थं मधुरं च मेहति ॥

**सान्द्रीभवेत् पर्युषितं सान्द्रमेही प्रमेहति ।**

पर्युषितं रात्रिस्थितं मूत्रं सान्द्रीभवेद् घनीभवेद् बहलं भवेत्। एवं सान्द्रमेहेन मेहति। सान्द्रीभवदिति पाठे मूत्रविशेषणम्। "पर्युषितम् अहोरात्रं स्थित"मित्यरुणदत्तः ॥

**सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ॥ १० ॥**

सुरामेही गन्धवर्णरसैः सुरातुल्यं तथा उपर्यच्छम् अधो घनं मेहति। तन्मूत्रं मूत्रभाजने उपर्यच्छमधो घनं भवति। संग्रहे–"सुरातुल्यमुपरि प्रसन्नम् अधः सान्द्रं सुरामेही मेहति" इति ।

**संहृष्टरोमा पिष्टेन पिष्टवद् बहलं सितम् ।**

पिष्टेन पिष्टाख्येन मेहेन पिष्टवद् बहलं सान्द्रं सितं च मूत्रणकाले संहृष्टरोमा मेहति ॥

**शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ ११ ॥**

शुक्रमेही शुक्राभं शुक्रतुल्यं शुक्रमिश्रं वा प्रमेहति ॥

**मूर्ताणून् सिकतामेही सिकतारूपिणो मलान् ।**

सिकतामेही मूर्तान् संहतान् अणून् सूक्ष्मांश्च सिकतासदृशान् मलान् श्लेष्मादीन् मूत्रेण सह प्रमेहति ॥

**शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ १२ ॥**

शीतमेही सुबहुशो मधुरं मधुररसम् अत्यर्थशीतलं मेहति ॥

**शनैःशनैः शनैर्मेही मन्दंमन्दं प्रमेहति ।**

शनैर्मेही शनैःशनैः मन्दंमन्दं प्रमेहति । शनैःशनैरिति वेगमुद्दिश्य । मन्दंमन्दमिति धारामुद्दिश्य । **सारकृत्तु**–"[1]शनैःशनैःशनैर्मेहीत्युद्दे(शो? शाद्) न पौनरुक्त्यम् ।" "मन्दंमन्दं स्वल्पंस्वल्पं मेहति" इत्यरुणदत्तः ॥

**लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ १३ ॥**

लालमेहेन लालावत् तन्तुयुक्तं मूत्रं पिच्छिलं च मेहति । इत्येते दश कफप्रमेहाः ॥

इदानीं पित्तमेहानाह—

**गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ।**

गन्धेत्यादि । क्षारेण क्षारमेहेन गन्धवर्णरसस्पर्शैः क्षारतोयवत् क्षारतोयसदृशं मूत्रं मेहति । स्रुतः क्षारः क्षारतोयम् ॥

**नीलमेहेन नीलाभं,**

नीलमेहेन नीलाभं नीलवर्णं मेहति ॥

---

१. 'शनैःशनैः मेहतीत्युद्देशो मन्दंमन्दमिति न पौनरुक्त्यम्' ख । 'शनैःशनैर्मेहतीत्युद्देशो मन्दंमन्दमिति निर्देशो न पौ' घ. ङ । 'शनैश्शनैर्मेहीत्युद्देशो मन्दंमन्दमिति न' ग ।

**कालमेही मषीनिभम् ॥ १४ ॥**

कालमेही मषीनिभं दीपाग्रभूतमषीवर्णं मेहति। संग्रहे चोक्तम्–"उष्णं मषीनिभं कालमेही सफेनमच्छमम्लं वा चाषपत्रनीलं नीलमेही"ति ॥

**हरिद्रमेही कटुकं हरिद्रासन्निभं दहत् ।**

हरिद्रमेही कटुकरसं हरिद्रासन्निभं दहत् मेढ्रवस्त्यादिषु दाहं कुर्वत् मूत्रं मेहति ॥

**विस्रं मञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥ १५ ॥**

मञ्जिष्ठमेहेन विस्रं विस्रगन्धं मञ्जिष्ठासलिलोपमं मेहति ॥

**विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ।**

रक्तमेहतः विस्रं पित्तासृग्गन्धमुष्णं सलवणं रक्तवर्णं च मेहति। एते षट् पित्तजाः ॥

**वसामेही वसामिश्रं वसां वा मूत्रयेन्मुहुः ॥ १६ ॥**

वसामेही वसामिश्रं मूत्रं केवलं वसां मुहुर्मुहुर्मूत्रयेत् ॥

**मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ।**

मज्जमेही मज्जाभं मज्जसदृशं मज्जमिश्रं वा मुहुर्मुहुर्मेहति ।

**हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम् ॥ १७ ॥**
**सलसीकं विबद्धं च हस्तिमेही प्रमेहति ।**

हस्तिमेही मत्तो हस्तीव अजस्रमनवरतमविच्छिन्नधारं मूत्रं वेगरहितं सलसीकं विबद्धं च बद्धमिव प्रतिभासयुक्तं नाभेरधो विबन्धयुक्तं वा प्रमेहति ॥

**मधुमेही मधुसमं,**

मधुमेही गन्धवर्णरसैः मधुसमं मूत्रं मेहति। कथं मधुसमत्वम्, ओजः स्निग्धमधुरं तद् रौक्ष्याद् वायुः कषायत्वेनोपसृजति। तेन कषायमधुरानुयातं मध्विव मेहति मधुमेहीति वचनात्। ओजो नाम धातुसारः। उक्तं च–

---

१. 'षीकालं काल' मुद्रितपाठः। २. 'माञ्जि' ग। ३. 'विस्रगन्धं' ख। 'पित्तगन्धं' घ. ङ। ४. 'मज्जानं' मुद्रिते। ५. 'विबद्ध' ख. घ. ङ।

'ओजस्तु तेजो धातूनां शुक्रान्तानां परं स्मृतम् ।'

इति । तत् प्रसृतमानं स्निग्धमधुरं च । वातसंयोगात्तु कषायत्वम् ॥

**जायते स किल द्विधा ॥ १८ ॥**

**क्रुद्धे धातुक्षयाद् वायौ दोषावृतपथेऽथवा ।**

स च मधुमेहो द्विधा किल जायते । कथं, वायौ धातुक्षयात् क्रुद्धे कुपिते सति अथवा तस्मिन्नेव वायौ दोषावृतपथे दोषावृतमार्गे सति एवं द्विप्रकारो जायते । केचिदाचार्या द्विविधमाहुः, बहवस्त्वेकमेव धातुक्षयवात-कोपजमाहुः न तु मार्गावृतवातकोपजमिति सूचनार्थः किलशब्दः । वायोस्तु द्विधा कोपः । तथा चोक्तं **चरके**–

"वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन वा ।"

इति । एवं द्विधा वातकोपे सति मधुमेहो भवतीत्यर्थः ॥

**आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयेत् ॥ १९ ॥**

**क्षीणः क्षणात् क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम् ।**

स च वायुरावृतोऽन्यैर्दोषैरावृतमार्गो दोषलिङ्गानि वातावरकदोष-लिङ्गानि वातशोणितनिदानोक्तानि अनिमित्तमकस्मादेव प्रदर्शयेत् । वायो-श्चलस्वभावत्वात् । अत एव क्षणात् क्षीणो वस्तेरपूरणाद् रिक्तः क्षणाच्च तस्य पूरणात् पूर्णो न तु रिक्तावस्थः । अत एव दोषावृतमार्गकोपजत्वादसौ कृच्छ्र-साध्यतां भजते । न तु धातुक्षयकोपजवदत्यन्तासाध्यताम् । एते चत्वारो वातजाः ॥

**कालेनोपेक्षिताः सर्वे यद् यान्ति मधुमेहताम् ॥ २० ॥**

**मधुरं यच्च सर्वेषु प्रायो मध्विव मेहति ।**
**सर्वेऽपि मधुमेहाख्या माधुर्याच्च तनोरतः ॥ २१ ॥**

कालेनेत्यादि । सर्वे च प्रमेहा उपेक्षिताः सन्तो यद् यस्मात् काला-न्तरेण मधुमेहतां मधुमेहत्वं यान्ति यच्च यस्मात् सर्वेषु मेहेषु मध्विव मधुरं प्रायो मेहति । 'मधुरं रसतो गन्धवर्णाभ्यां मध्विव च प्रायो मेहती'त्यरुणदत्तः ।

अतो हेतोः सर्वेऽपि ते मधुमेहाख्याः भवन्ति। तनोः शरीरस्य माधुर्याच्च मधुमेहाख्याः। तनोः स्वभावान्माधुर्यम्। संग्रहे–"सर्व एव चोपेक्ष्यमाणाः मधुमेहत्वमायान्ति। तस्मात् सर्वेऽपि मधुमेहशब्देनोच्यन्ते। यतः सर्वेष्वपि प्राङ् मध्विव मधुरं मेहति। मधुररसश्चास्य देहो भवति" इति। धन्वन्तरीयाः पुनराहुः –

"सर्व एव प्रमेहास्तु कालेनाप्रतिकारिणः।
मधुमेहत्वमायान्ति ते त्वसाध्या भवन्ति हि।" इति॥

अथ प्रमेहाणामुपद्रवभूतान् रोगानाह –––

**अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः।**
**उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ २२ ॥**

अविपाक इत्यादि। कफजन्मनां मेहानां अविपाकादय उपद्रवा जायन्ते।

**वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः।**

पित्तजानां बस्तितोदादयो जायन्ते।

**दाहस्तृष्णाम्लको मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ २३ ॥**

विड्भेदोऽतिसारः। "पाण्डुरोगोऽपि जायते" इत्युक्तं संग्रहे॥

**वातिकानामुदावर्तकण्ठहृद्ग्रहलोलताः।**
**शूलमुन्निद्रता शोषः कासः श्वासश्च जायते ॥ २४ ॥**

वातजानामुदावर्तादयः स्युः। उदावर्तो बद्धपुरीषत्वम्। लोलता लौल्यं विषयस्पृहा॥

प्रमेहाणां कष्टतमान् पिटकासंज्ञानुपद्रवानाह––

**शराविका कच्छपिका जालिनी विनतालजी।**
**मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ २५ ॥**

**विद्रधिश्चेति पिटकाः प्रमेहोपेक्षया दश।**
**सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ॥ २६ ॥**

शराविकेत्यादि । शराविकादयो दश पिटकाः प्रमेहाणामुपेक्षया जायन्ते सन्धिमर्मसु तथा मांसलेषु च धामसु स्थानेषु, ऊर्वादिषु बहुमांसेषु प्रदेशेष्वित्यर्थः ॥

आसां क्रमेण लक्षणमनुगताभिधानं चाह—

**अन्तोन्नता मध्यनिम्ना श्यावा क्लेदरुजान्विता ।**
**शरावमानसंस्थाना पिटका स्याच्छराविका ॥ २७ ॥**

अन्तेत्यादि । शराविकासंज्ञा पिटका अन्तोन्नतत्वादिगुणयुक्ता भवति । तथा शरावस्येव मानं प्रमाणं संस्थानमाकारं च यस्याः सैवम् । शराविका – വട്ടകപ്പുറവൻ.

**अवगाढार्तिनिस्तोदा महावस्तुपरिग्रहा ।**
**श्लक्ष्णा कच्छपपृष्ठाभा पिटका कच्छपी मता ॥ २८ ॥**

अवगाढेत्यादि । आर्तिः पीडा । निस्तोदोऽविच्छिन्नं शूलम् । अवगाढौ घनौ आर्तिनिस्तोदौ यस्याः सैवम् । तथा महान् वस्तुपरिग्रहः शरीरावयवविशेषाश्रयो यस्याः सा महावस्तुपरिग्रहा, महामूलेत्यर्थः । "त्वङ्मांसादीन्यष्ट व्रणवस्तूनि" इति पाठ्ये । तथा श्लक्ष्णा कच्छपपृष्ठाभा कच्छपपृष्ठतुल्या कच्छपीसंज्ञा पिटका – ആമപ്പുറവൻ । मता तन्त्रकृतामिति शेषः ॥

**स्तब्धा सिराजालवती स्निग्धस्रावा महाशया ।**
**रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ॥ २९ ॥**

स्तब्धादिगुणयुक्ता जालिनीसंज्ञा – വയ°പുളുകൾ?

**अवगाढरुजाक्लेदा पृष्ठे वा जठरेऽपि वा ।**
**महती पिटका नीला विनता विनता स्मृता ॥ ३० ॥**

अवगाढरुजादियुक्ता पिटका पृष्ठजठरान्यतरजाता विनतासंज्ञा – കുൽപുളുകൾ । नीलवर्णा अन्तर्विनता न तून्नता ॥

**दहति त्वचमुत्थाने भृशं कष्टा विसर्पिणी ।**
**रक्तकृष्णातितृट्स्फोटदाहमोहज्वरालजी ॥ ३१ ॥**

दहतीत्यादि । अलजीसंज्ञा पिटका - ഒറപ്പാടി । उत्थाने सत्येव त्वचं दहति । भृशं कष्टा अतिदुःसहा विसर्पिणी विसर्पणशीला तथा रक्तकृष्णा अतितृडादियुक्ता च ॥

**मानसंस्थानयोस्तुल्या मसूरेण मसूरिका ।**

मानेत्यादि । मसूरिका -[1]മച്ചുച്ചിലന്തി। मसूरेण प्रमाणाकृतिभ्यां तुल्या ॥

**सर्षपामानसंस्थाना क्षिप्रपाका महारुजा ॥ ३२ ॥**
**सर्षपा सर्षपातुल्यपिटकापरिवारिता ।**

सर्षपेत्यादि । सर्षपासंज्ञा पिटका - കടുച്ചിലന്തി। सर्षपतुल्यप्रमाणाकारा । तथा शीघ्रपाका महारुजा च सर्षपासदृशीभिः पिटकाभिः परिवारिता च ॥

**पुत्रिणी महती भूरिसुसूक्ष्मपिटकावृता ॥ ३३ ॥**

पुत्रिणीत्यादि । पुत्रिणीसंज्ञा - മകംച്ചിലന്തി । प्रमाणेनापरपिटकापेक्षया महती । तथा भूरिभिः सुसूक्ष्माभिः पिटकाभिराचिता च ॥

**विदारीकन्दवद् वृत्ता कठिना च विदारिका ।**

विदारिकासंज्ञा - [2]'മുകൈക്കട്ടവൻ വാപ്പ്' । सृगालिकाकन्द इव वर्तुला कठिना च स्यात् ।

**विद्रधिर्वक्ष्यतेऽन्यत्र तत्राद्यं पिटकात्रयम् ॥ ३४ ॥**
**पुत्रिणी च विदारी च दुस्सहा बहुमेदसः ।**

विद्रधिस्तु बहुवक्तव्यत्वाद् अन्यत्र अतोऽध्यायादन्यस्मिन्ननन्तरेऽध्याये वक्ष्यते भण्यते । विद्रधिः - 'വാപ്പ്' । तत्र तासु पिटकासु मध्ये आद्यं शराविकाकच्छपिकाजालिनीत्येतत् पिटकात्रयं तथा पुत्रिणी च विदारी चेति पञ्च दुःसहाः कृच्छ्रसाध्यत्वात् । यतो बहुमेदस एताः सम्भवन्ति ॥

**सह्याः पित्तोल्बणास्त्वन्याः संभवन्त्यल्पमेदसः ॥ ३५ ॥**

---

१. 'മച്ചു' ग. घ. ङ । २. മുലം ചെങ്കടംപോലെ घ. ङ ।

अन्या एताभ्योऽपरास्तु पित्तोल्बणाश्चतस्रः सह्याः सोढुं शक्याः सुखसाध्यत्वात्। ताश्च अल्पमेदसः सम्भवन्ति। पित्तोल्बणत्वादिहेतोः सह्या इत्यर्थः।

**तासु मेहवशाच्च स्याद्दोषोद्रेको यथायथम्।**

तासु पिटकासु मेहानुरोधाद्दोषोद्रेको यथायथं यथास्वं स्यात्। श्लेष्ममेहजासु श्लेष्माधिक्यं पित्तमेहजासु पित्ताधिक्यं वातमेहजासु वाताधिक्यमिति। उद्रेकशब्देन एतद् द्योतयति त्रिदोषजाः सर्वा एता इति। इन्दुनाप्युक्तं—"येनैव प्रमेहेण सह वर्तन्ते तद्दोषा एव भवन्ती"ति॥

**प्रमेहेण विनाप्येता जायन्ते दुष्टमेदसः।**
**तावच्च नोपलक्ष्यन्ते यावद्वस्तुपरिग्रहः॥ ३६॥**

प्रमेहेणेत्यादि। एताः पूर्वोक्ताः पिटकाः प्रमेहेण विनापि अप्रमेहिणोऽपि दुष्टमेदसः पुरुषस्य जायन्ते। जाता अपि तास्तथाविधस्य पुरुषस्य तावन्न लक्ष्यन्ते यावत्कालं वस्तुपरिग्रहः। यावद् यथास्वं पृष्ठोदरादिवस्तु आसामाधारत्वेन तन्त्रकृता यत् परिभाषितं तन्न परिगृहीतं तावदासां यथायथं लक्षणं नोत्पद्यते, उत्पन्नाश्चिरेण कालेन ज्ञायन्ते इत्यर्थः। "वस्तुपरिग्रहः कठिनाभोगग्रहणम्" इतीन्दुः। पाठ्यकारस्त्वाह—"वस्तुपरिग्रहः त्वङ्मांसाद्यष्टव्रणवस्तूनि यदा प्राप्नोति तदा एव शराविकादिव्यवहारः" इति। आसां तु वस्तुपरिग्रहरूपत्वात् पूर्वरूपाणामसम्भवः॥

संभवद्भ्रान्तिनिवृत्तिं करोति हारिद्रवर्णमित्यादिना—

**हारिद्रवर्णं रक्तं वा मेहप्राग्रूपवर्जितम्।**
**यो मूत्रयेन्न तं मेहं रक्तपित्तं तु तद् विदुः॥ ३७॥**

मेहस्य यत् प्राग्रूपं तेन वर्जितं हारिद्रवर्णं रक्तं वा यो व्याधिर्दोषो मूत्रयेत् तं मेहं न विदुः। किं तर्हि, रक्तपित्तमित्याहुः॥

**स्वेदोऽङ्गगन्धः शिथिलत्वमङ्गे**
**शय्यासनस्वप्नसुखाभिषङ्गः।**
**हृन्नेत्रजिह्वाश्रवणोपदेहो**
**घनाङ्गता केशनखातिवृद्धिः॥ ३८॥**

शीतप्रियत्वं गलतालुशोषो
माधुर्यमास्ये करपाददाहः ।
भविष्यतो मेहगणस्य रूपं
मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥ ३९ ॥

स्वेद इत्यादि । भविष्यतो मेहगणस्य विंशतिसंख्यस्य रूपं स्वेदादि, प्राग्रूपमित्यर्थः । न केवलमेतदेव प्राग्रूपं यावत् पिपीलिका मूत्रेऽभिधावन्ति, एतदपि प्राग्रूपम् । पिपीलिकानां मूत्राभिधावनं मधुररसप्रियत्वात् तेषां मूत्रस्य मधुरत्वाच्च ॥

"दृष्ट्वा प्रमेहमि"त्यादिना "जायते स किल द्विधे"ति पूर्वोक्तमेव प्रकटयति । कुतः वातकफानुबद्धयोर्मेहयोर्लक्षणसाम्यात् चिकित्साविप्लवः स्यान्मन्दबुद्धीनाम् । अत इदमाह--

दृष्ट्वा प्रमेहं मधुरं सपिच्छं
मधूपमं स्याद् द्विविधो विचारः ।
सन्तर्पणाद्वा कफसम्भवः स्यात्
क्षीणेषु दोषेष्वनिलात्मको वा ॥ ४० ॥

मधूपमं माक्षिकतुल्यं मधुरं तथा सपिच्छं पिच्छा शाल्मलीनिर्यासतुल्या तत्सहितं प्रमेहं दृष्ट्वा तदानीं द्विविधो विचारः स्यात् । सम्पूरणात् कारणात् किमयं कफसम्भवो मेहोऽपतर्पणसाध्यः उत क्षीणेषु दोषेषु कफादिदोषक्षयात् सन्तर्पणसाध्योऽनिलात्मकः स्यादिति सन्देहो मन्दबुद्धेः । अत्र तीक्ष्णमतिस्तु कफमेहान् वातमेहांश्च लिङ्गान्तरैः सम्यग् वेत्त्येवेति भावः ॥

अधुना यदुक्तं साध्ययाप्यरित्याज्याः कफादिसम्भवा मेहाः इति अस्यापवादमाह—

सपूर्वरूपाः कफपित्तमेहाः
क्रमेण ये वातकृताश्च मेहाः ।
साध्या न ते पित्तकृतास्तु याप्याः
साध्यास्तु मेदो यदि नातिदुष्टम् ॥ ४१ ॥

सपूर्वरूपा इत्यादि। सह पूर्वरूपैः 'स्वेदोऽङ्गगन्ध' इत्यादिभिर्वर्तन्तेऽनवरतमनुबध्यन्ते ये ते सपूर्वरूपाः। सर्वेषां व्याधीनां पूर्वरूपाव्यभिचारेऽपि विशेषणमत्र साकल्यप्रापणार्थम्। सर्वैः पूर्वरूपैः सह ये वर्तन्ते इत्यर्थः। **पाठ्यकारो**ऽपि--"सपूर्वरूपाः सम्पूर्णपूर्वरूपाः" इत्याह। ते कफमेहाः पित्तमेहाश्च असाध्याः साधयितुमशक्यत्वात्। उपलक्षणं चेदम्। अपरे हि रोगाः सपूर्वरूपाः प्रायेणासाध्या एव। तथा क्रमेण कफानुपूर्व्या ये वातकृता मेहास्तेऽप्यसाध्याः। ननु वातकृता मेहा असाध्या इति प्रागुक्तमेव, तत् किमनेन ग्रन्थेन पुनरुक्तेनेति; ब्रूमः—अक्रमेण प्रथममेव ये वातोत्पन्नास्ते त्याज्या इति पूर्वमुक्तम्। इह तु क्रमेण प्रथमं कफमेहाः ततः पित्तमेहाः ततः कालेन ये वातमेहाः सम्पन्नास्ते पूर्वं कफप्रमेहत्वात् साधयितुमपि शक्यन्त इत्याशङ्कायां क्रमेण ये वातकृताः ते असाध्या इत्युक्तम्। पित्तकृतास्त्वसम्पूर्णपूर्वरूपा अपि याप्याः असमक्रियत्वादिति प्राङ् निर्दिष्टम्। तेषां यदि मेदो नातिदुष्टं भवेत् तदा ते याप्या अपि सन्तः साध्या एव भवन्ति। अतिदुष्टमित्यनेनैतद् ज्ञापयति सर्वदेहेषु मेदोदुष्टिरवश्यंभाविनीति। मेहिनो राजयक्ष्मिणश्च केशनखाभिवृद्धिः किट्टबाहुल्याद् भवति। रोगस्वभावादित्यन्ये। **पाठ्यकार**स्त्वाह—"सपूर्वरूपाः सम्पूर्णपूर्वरूपाः कफपित्तमेहाः असाध्याः। क्रमेण वातकृता ये मेहास्ते चासाध्याः। क्रमं विना तदानीमेव वातकृतः प्रमेहश्चेत् साध्य एवेत्यर्थः" इति। सर्वप्रमेहेषु च रोगस्वभावाच्छ्लेष्मा प्रकोपमापद्यते। तत्र यदान्यदोषापेक्षया स्वल्पो दोषप्रकोपो भवति तदा प्रथमं भवन्नपि श्लेष्मा स्वल्पं लिङ्गं दर्शयेत्। यदा तु न स्वल्पः तदा प्रथमं सम्पूर्ण एव श्लेष्मप्रमेहो भूत्वा कालवशात् कफादौ क्षीणे पित्तमेहतां प्रतिपद्यते। तत्रापि रक्तप्रवृत्तेः कालेन रक्तक्षयाद् वायू रसादीन् देहस्य सारभूतानाकृष्य अन्ते वातप्रमेहान् करोतीति क्रमेणेत्युक्तम्। वृत्तान्युपजातिसंज्ञानीति॥

[1]इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने दशमोऽध्यायः॥

---

१. 'इति निदाने दशमो' ख. घ. ङ।

# एकादशोऽध्यायः ।

विद्रधिर्वक्ष्यतेऽन्यत्र इत्युक्तत्वादतः परम् ।
विद्रधिः शोफसामान्याद् वृद्धिर्गुल्मश्च भण्यते ॥

इन्दुनाप्युक्तं—"उक्तशेषत्वाद् विद्रधेरुत्सेधेन तत्समानत्वाच्च वृद्धि-गुल्मयोस्त्रितयनिर्णयायाध्यायारम्भः" इति ।

**अथातो विद्रधिवृद्धिगुल्मनिदानं व्याख्यास्यामः ।**

**भुक्तैः पर्युषितात्युष्णरूक्षशुष्कविदाहिभिः ।**
**जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः ॥ १ ॥**

**दुष्टत्वङ्मांसमेदोऽस्थिस्नावासृक्कण्डराश्रयः ।**
**यः शोफो बहिरन्तर्वा महामूलो महारुजः ॥ २ ॥**

**वृत्तः स्यादायतो यो वा स्मृतः षोढा स विद्रधिः ।**
**दोषैः पृथक् समुदितैः शोणितेन क्षतेन च ॥ ३ ॥**

भुक्तैरित्यादि । पर्युषितादिभिः अभ्यासेन भुक्तैः तथा जिह्मशय्यादिभिः । विविधाः चेष्टाः विचेष्टाः शय्या च विचेष्टाश्च ताभिः । तथा तैः तैः असृक्प्रदूषणहेतुभिश्च निर्दिष्टैः यः शोफः स्यात् स विद्रधिरिति सम्बन्धः । किंभूतः शोफः, दुष्टत्वगाद्याश्रयः । तथा बहिः बहिर्भागेऽन्तर्भागे वा वृत्तः स्यादथवा आयतः स्यात् स शोफः शीघ्रविदाहित्वाद् विद्रधिः स्मृतोऽभिहितः । स च विद्रधिः षोढा षट्प्रकारः । त्वगादीनां द्वन्द्वः । स्नायुसंघातः कण्डरेत्यभिधीयते । अथवा अतिसूक्ष्माः स्नायवः, स्थूलाः कण्डराः । दुष्टा दोषैर्दूषितास्त्वङ्मांसादयः आधारो यस्य शोफस्य स दुष्टत्वङ्मांसमेदोऽस्थिस्नावासृक्कण्डराश्रयः । स्नाय्वसृगिति वा पाठः । तथा महामूलः तथा महारुजः । अनेनास्य दुरुपक्रमत्वमुक्तम् ।

---

१. 'योस्तन्निदाननिर्णे' इति मुद्रितपाठः ।

तथा वृत्तः स्यादथवा आयतो न वर्तुलः इत्यनेनास्य संस्थानमुक्तम्। षोढेत्युक्तम्। तदेव षोढात्वमुक्तं दर्शयति दोषैरित्यादिना । पृथग्दोषैस्त्रयः समुदितैः सन्निपातेन चैकः । तथा शोणितेन दोषाधिष्ठितेन क्षतेन च शस्त्राभिघातादिना इति षड्विधः ॥

तस्य षड्विधस्यापि विद्रधेः अन्तर्बहीरूपतया द्विधात्वमित्याह—

**बाह्योऽत्र तत्रतत्राङ्गे दारुणो ग्रथितोन्नतः ।**
**आन्तरो दारुणतरो गम्भीरो गुल्मवद् घनः ॥ ४ ॥**

**वल्मीकवत् समुच्छ्रायी शीघ्रघात्यग्निशस्त्रवत् ।**

बाह्य इत्यादि । अत्र अनयोर्बाह्याभ्यन्तरभेदभिन्नयोर्मध्याद् बाह्यो विद्रधिः तत्रतत्र नाभ्यादावङ्गे जायते । तथा दारुणः ग्रथितोन्नतः ग्रथित इव ग्रथितः, उन्नतः उत्तुण्डितः । शोफस्य स्वभावोन्नतत्वाद् उन्नतग्रहणमतिशयार्थम्। आन्तरो दारुणतरः तथा गम्भीरो गूढः । "अवगाढः" इतीन्दुः। तथा गुल्मवद् घनः गुल्मतुल्यः तथा समुच्छ्रायी उन्नतः वल्मीकशिखरवत्। तथा शीघ्रघाती बाह्यविद्रधितः । अग्निशस्त्रवद् अग्निशस्त्राभ्यां तुल्यः ॥

**नाभिवस्तियकृत्प्लीहक्लोमहृत्कुक्षिवंक्षणे ॥ ५ ॥**
**स्याद् वृक्कयोरपने च,**

नाभ्याद्यन्यतमे देशे बाह्यं स्यात् । आन्तरो विद्रधिः അംകവാളു്°। "नाभ्याद्युभयस्यापि विद्रधेः स्थान"मितीन्दुः ।

यथादोषं लक्षणमाह—

**वातात् तत्रातितीव्ररुक् ।**
**श्यावारुणश्चिरोत्थानपाको विषमसंस्थितिः ॥ ६ ॥**

**व्यधच्छेदभ्रमानाहस्यन्दसर्पणशब्दवान् ।**

वातादित्यादि । तत्र तेषु विद्रधिषु मध्ये वाताज्जातो विद्रधिः अतितीव्ररुगादिशब्दवानित्येतदन्तलक्षणः स्यात् ॥

**रक्तताम्रासितः पित्तात् तृण्मोहज्वरदाहवान् ॥ ७ ॥**

**क्षिप्रोत्थानप्रपाकश्च,**

पित्ताज्जातो विद्रधिः रक्तताम्रासितादिक्षिप्रोत्थानप्रपाकश्चेत्यन्तलक्षणः स्यात् ।

**पाण्डुः कण्डूयुतः कफात् ।**

**सोत्क्लेशशीतकस्तम्भजृम्भारोचकगौरवः ॥ ८ ॥**

**चिरोत्थानविदाहश्च,**

कफाज्जातो विद्रधिः पाण्डुर्वर्णेन तथा कण्डूयुतः इत्यादिचिरोत्थानविदाहश्चेत्यन्तलक्षणः स्यात् । विदाहः पाकाभिमुखत्वम् ।

**सङ्कीर्णः सन्निपातजः ।**

सन्निपातजो विद्रधिः लक्षणैः सङ्कीर्णः । वातादिदोषव्यामिश्रलक्षण इत्यर्थः ॥

**सामर्थ्याच्चात्र विभजेद् बाह्याभ्यन्तरलक्षणम् ॥ ९ ॥**

अत्र च विद्रधौ पूर्वोक्ताद् दारुणत्वदारुणतरत्वादिलक्षणाद् बाह्याभ्यन्तरलक्षणं सामर्थ्यात् संभवाद् विभजेद् विभक्तं कुर्यात् । बाह्यस्य विद्रधेः तथाभ्यन्तरस्य च लक्षणं योग्यतया विभजेदित्यर्थः । तेनैतदुक्तं भवति । यद्यपि बाह्याभ्यन्तरविशेषाविवक्षया वातादिविद्रधेर्लक्षणमुक्तं तथापि यद् बाह्य उपपद्यते रक्तताम्रत्वादि तत् तत्रैव विज्ञेयम् । यत्तु आभ्यन्तर एवोपपद्यते आनाहमोहारोचकादि तत् तत्रैव लिङ्गम् । यत्तु क्षिप्रोत्थानप्रपाकाद्युभयत्र सम्भवति तदुभयत्रापि लिङ्गमिति ॥

**कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः ।**

**पित्तलिङ्गोऽसृजा बाह्यः स्त्रीणामेव तथान्तरः ॥ १० ॥**

असृजा रक्तेन विद्रधिः बाह्यः कृष्णस्फोटैरावृतश्चितो यावत् तीव्रदाहादिः तथा पित्तलिङ्गो रक्तताम्रासित इत्यादिलक्षणः । स्त्रीणामेवेत्यवधारणाद् रक्तजो बाह्यः पुरुषाणामपि जायत इत्यर्थादुक्तं भवति । **अरुणदत्तस्तु**—"स च बाह्यो नराणामेव वस्तुस्वाभाव्यात् । आन्तरो यो विद्रधिरसृजा जायते स स्त्रीणामेव

न नराणां वस्तुस्वाभाव्यादित्याह । "स च बाह्योऽभ्यन्तरो वा स्त्रीणामेव भवति न तु पुरुषाणा"मितीन्दुः । उक्तं च सौश्रुते—

"नारीणामप्रजातानां प्रजातानां तथाहितैः ।
दाहज्वरकरो घोरो जायते रक्तविद्रधिः ॥"

इति । अप्रजाता अगृहीतगर्भाः ॥

क्षतविद्रधिं लक्षयति—

**शस्त्राद्यैरभिघातेन क्षते वापथ्यकारिणः ।**
**क्षतोष्मा वायुविक्षिप्तः सरक्तं पित्तमीरयन् ॥ ११ ॥**
**पित्तासृग्लक्षणं कुर्याद् विद्रधिं भूर्युपद्रवम् ।**

शस्त्राद्यैरित्यादि । शस्त्रलोष्टाद्यैर्योऽभिघातः तेन हेतुना यः क्षतोष्मा अथवा अभिघातमन्तरेणापि क्षते जाते सत्यपथ्यकारिणः पुंसो यः क्षतोष्मा । अत्र व्रणितस्यापथ्यमिति ग्राम्यधर्मादिकमभिप्रेतम् । अथवा तैस्तैर्भावैरभिहते क्षते वा । अत्राभिघातो नाम भग्नम् । काष्ठादिभग्ने क्षते वा अपथ्यकारिणः पूर्वमपथ्यं कृतवतः क्षतोष्मा वायुः विसृतो भवति । उक्तं च भोजेन—

"शस्त्रदण्डप्रहारैर्वा व्यालदन्तनखैस्तथा ।
क्षते वाप्यथवा भग्ने बहुदोषस्य देहिनः ॥"

इत्यादि । स क्षतोष्मा वायुना विक्षिप्तः पित्तमीरयन् कोपयन् । किंभूतं पित्तम् । सरक्तं पित्तासृग्लक्षणं पित्तासृग्भ्यामुत्पन्नयोर्विद्रध्योः लक्षणमिव लक्षणं यस्य तदेवम् । पित्तासृगुत्पन्नविद्रधितुल्यलक्षणं विद्रधिं कुर्यात् । तथा भूर्युपद्रवम् । इयानेव चास्य विशेषः पित्तासृग्विद्रध्योः सकाशात् ॥

**तेषूपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः ॥ १२ ॥**

तेष्वित्यादि । तेषु च विद्रधिषु उपद्रवविशेष आश्रयविशेषात् स्मृतो मुनिभिः ॥

तमेवोपद्रवभेदमाह—

**नाभ्यां हिध्मा भवेद्बस्तौ मूत्रं कृच्छ्रेण पूति च ।**
**श्वासो यकृति रोधस्तु प्लीह्न्युच्छ्वासस्य तृट् पुनः ॥ १३ ॥**

**गलग्रहश्च क्लोम्नि स्यात् सर्वाङ्गप्रग्रहो हृदि ।**
**प्रमोहस्तमकः कासो हृदये घट्टनं व्यथा ॥ १४ ॥**
**कुक्षिपार्श्वान्तरांसार्तिः कुक्षावाटोपजन्म च ।**
**सक्थ्नोर्ग्रहो वंक्षणयोर्वृक्कयोः कटिपृष्ठयोः ॥ १५ ॥**
**पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम् ।**

नाभ्यामित्यादि । नाभ्यां जाते विद्रधौ हिध्मा विशेषेण भवेत् । वस्तौ जाते मूत्रं कृच्छ्रेण पूति च भवेत् । यकृति जाते श्वासः स्यात् । प्लीह्नि जाते उच्छ्वासस्य रोधः स्यात् । क्लोम्नि जाते तृट् तृष्णा स्यात् । तथा गलग्रह इव गलग्रहो व्याधिविशेषः स्यात् । हृदि जाते सर्वस्याङ्गस्य प्रकर्षेण ग्रहः स्यात् । तथा प्रमोहादयो हृद्व्यथान्ताः स्युः । तमकः श्वासविशेषः । कुक्षौ जाते सति कुक्षिपार्श्वयोरन्तरे अंसयोश्च पीडा भवति । तथा कुक्षावाटोपसम्भवः । वंक्षणयोः जाते सक्थ्नोः ग्रहः स्यात् । निश्चले इव सक्थिनी जायेते । वृक्कयोर्जाते कट्याः पृष्ठस्य च ग्रहः पीडा च पार्श्वयोः स्यात् । पायौ गुदे जाते पवनस्य अपानाख्यस्य निरोधः स्यात् ॥

**आमपक्वविदग्धत्वं तेषां शोफवदादिशेत् ॥ १६ ॥**

तेषां विद्रधीनामामत्वं पक्वत्वं विदग्धत्वं च शोफवदादिशेत् । विदग्धत्वं पच्यमानत्वम् । "पाकातिक्रान्तत्व"मित्यरुणदत्तः । शोफानामिव शोफवत् । षष्ठ्यन्ताद् वतिः । तत्र शोफस्य सूत्रस्थाने शस्त्रकर्मविधौ "शोफोऽल्पोऽल्पोष्णरुक् सामः" इत्यादिना ग्रन्थेनामादिलक्षणमुक्तम् । तदेव विद्रधिषु च बोध्यम् ॥

**नाभेरूर्ध्वं मुखात् पक्वाः प्रस्रवन्त्यपरे गुदात् ।**
**उभाभ्यां नाभिजः,**

नाभेरूर्ध्वं प्रदेशेषु उत्पन्ना ये विद्रधयस्ते पक्वाः सन्तो मुखाद् आस्याद् दोषं प्रस्रवन्ति । अधरे अधस्ताद् ये उत्पन्नास्ते पक्वाः गुदाद् दोषं स्रवन्ति । नाभिजो विद्रधिः मध्यस्थत्वाद् गुदाच्चास्याच्च उभयतः स्रवति । गुदं च आस्यं च गुदास्यं तस्मात् ॥

विद्याद् दोषं क्लेदाच्च विद्रधौ ॥ १७ ॥

**यथास्वं व्रणवत्,**

विद्यादित्यादि। विद्रधौ व्रण इव यथास्वं वातादिदोषं क्लेदाद् विद्यात्। प्रतिदोषोक्तया रीत्या 'मस्तुमांसपुलाकाम्बुतुल्यतन्वल्पसंस्रुती'त्यादिकया वातिकं विद्रधिं विद्यात्, "मूत्रकिंशुकभस्माम्बुतैलाभोष्णबहुस्रुती"त्यादिकया पैत्तिक-मित्यादि। चशब्दान्न केवलं पूर्वोक्ताद् वातात् तत्रातितीव्ररुगित्यादेर्वातादि-लक्षणाद् वातादिदोषं विजानीयात्, क्लेदाच्चेत्यर्थः। व्रणवदिति सप्तम्यन्ताद् वतिः विद्रधाविति सप्तम्यन्तनिर्देशात्। तथा चोक्तं भाष्ये—"उपमाने यः संशयः स उपमेयाद् विनिवर्तते" इति। हाटकस्तु—"यथास्वं व्रणवदित्यन्वयं वदति"। इन्दुनाप्युक्तं—विद्रधौ वातादिकं दोषमनुबद्धारं क्लेदाद्विद्याद् यथास्वं व्रणवत्। व्रणे यथा क्लेदस्रुतिविशेषेण वाताद्यन्वयोऽनुमीयते एवमत्रापि। व्रणे च वक्ष्यति—"मस्तुमांसपुलाकाम्बुतुल्यतन्वस्रसंस्रुतिः" इत्यादीति॥

अथैषां साध्यासाध्यविभागार्थमाह—

**तत्र विवर्ज्यः सन्निपातजः।**

**पक्वो हृन्नाभिवस्तिस्थो भिन्नोऽन्तर्बहिरेव वा ॥ १८ ॥**

**पक्वश्चान्तः स्रवन् वक्त्रात् क्षीणस्योपद्रवान्वितः।**

तत्र विवर्ज्य इत्यादि। तत्र तेषु विद्रधिषु मध्ये सन्निपातजो यो विद्रधिः स विवर्ज्यः। असाध्यत्वात्। तथा पक्वोऽन्तर्बहिरेव वा भिन्नः आन्तरोऽन्तर्भिन्नो बाह्यो बहिर्भिन्नो हृन्नाभिवस्तिस्थो विवर्ज्य एव। पक्वश्च आन्तरो हृदादिभ्योऽन्य-त्रापि जातो वक्त्रेण स्रवन् क्षीणस्योपद्रवैः हिध्मादिभिः युक्तो विवर्ज्य एव॥

इदानीं स्तनविद्रधिर्योषितो यथा स्यात् तथा वक्ति—

**एवमेव स्तनसिरा विवृताः प्राप्य योषिताम् ॥ १९ ॥**

**सूतानां गर्भिणीनां वा संभवेच्छ्वयथुर्घनः।**

**स्तने सदुग्धेऽदुग्धे वा बाह्यविद्रधिलक्षणः ॥ २० ॥**

**नाडीनां सूक्ष्मवक्त्रत्वात् कन्यानां तु न जायते।**

एवमेवेत्यादि । यथैव विद्रध्याख्यः श्वयथुः विशेषतो भुक्तैः पर्युषितादिभिः तैस्तैश्चासृक्प्रदूषणैः दुष्टः त्वङ्मांसाश्रयः स्यात् तथैव सूतानां गर्भिणीनां वा स्त्रीणां स्तने सदुग्धेऽथवा अदुग्धे स्तनसिराः विवृताः प्राप्य आक्रम्य बाह्यविद्रधिलक्षणः "बाह्योऽत्र तत्रतत्राङ्ग" इत्यादिलक्षणः घनो निबिडो यः श्वयथुः सम्भवेत् सः स्तनविद्रधिसंज्ञः । नाडीनां स्तनसिराणां सूक्ष्मवक्त्रत्वात् स विद्रधिः कन्यानां नैव जायते । तासां नाड्यः सूक्ष्ममुखा भवन्ति । इत्युक्ता विद्रधयः ॥

अथ श्वयथुसामान्याद् वृद्धिं वर्ध्मापरनामानं व्याधिं वक्तुमुपक्रमते—

**क्रुद्धो रुद्धगतिर्वायुः शोफशूलकरश्चरन् ॥ २१ ॥**
**मुष्कौ वंक्षणतः प्राप्य फलकोशाभिवाहिनीः ।**
**प्रपीड्य धमनीर्वृद्धिं करोति फलकोशयोः ॥ २२ ॥**

क्रुद्ध इत्यादि । स्वकारणात् क्रुद्धः कुपितः सन् कारणान्तरेण रुद्धगतिः वायुः फलकोशयोः वृद्धिं करोति । फलकोशौ वृषणौ । अरुणदत्तस्त्वाह— "वायुः कुपित इति । किं धातुक्षयात् कुपितो नेत्याह--रुद्धगतिः रुद्धा गतिरस्येति रुद्धगतिः, आवृतमार्ग इत्यर्थः" इति । किंभूतः शोफशूलकरः । तथा चरन् देशाद्देशान्तरं गच्छन् वंक्षणतः ततो देशान्मुष्कौ वृषणौ प्राप्य फलकोशाभिवाहिनीः सिराः प्रकर्षेण पीडयित्वा ॥

**दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः ।**
**मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम् ॥ २३ ॥**

स वृद्धिर्नाम गदः सप्तधा सप्तप्रकारः । पृथग् वातादिभिः दोषैः अस्रेण मेदसा मूत्रेण चेति सप्तधा । न केवलं वातवृद्ध्याख्यो रोगोऽनिलजः यावन्मूत्रान्त्रजावप्यनिलजौ । नन्वेवं पृथङ्निर्देशो मूत्रान्त्रयोः कर्तुं न युक्तोऽनिलजत्वादित्याह—हेतुभेदस्तु केवलम् । सत्यम् । मूत्रान्त्रजावप्यनिलाज्जायेते । किन्तु कारणभेदान्मूत्रान्त्रजौ विनिर्दिष्टौ । यतो मूत्रान्त्रेऽधिष्ठाय वायुः मूत्रान्त्रजौ वृद्धी करोति । एवं तौ परमार्थतो वातजावपि मूत्रान्त्रजा-

---

१. 'रपर्यायं' ग ।

वुच्येते । तथारूपाद्धेतुभेदादुत्पन्नत्वात् । वाताधिष्ठितयोस्तयोः[1] कारणत्वादित्यर्थः । उपलक्षणं चेदम् । मेदोरक्तजावपि कफपित्ताभ्यां दूष्यसंज्ञके मेदोरक्तेऽधिष्ठाय कृतत्वात् । तस्मान्मेदोरक्तहेतुवशाद् मेदोरक्तजाविति संज्ञया युक्तौ । एवमन्येऽप्येवंरूपा व्याधयो बोध्याः ॥

**वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ।**

तत्र वाताद् वृद्धिः वातेन पूरिता या दृतिः तस्या इव स्पर्शो यस्य स एवम्भूतो भवति । तथा रूक्षः । अहेतुरुक् निमित्तं विना रुक् पीडा यस्मिन् स एवम् ॥

**पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ॥ २४ ॥**

पित्ताद् वृद्धिः पक्वोदुम्बरतुल्यः स्यात् ॥

**कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक् ।**

कफाद् वृद्धिः शीतादिगुणः स्यात् ॥

**कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्ततः ॥ २५ ॥**

रक्ताद् वृद्धिः कृष्णस्फोटैरावृतश्चितः पित्तवृद्धिलिङ्गश्च पित्तवृद्धिलिङ्गानीव लिङ्गानि यस्य स एवम् । 'सप्तम्युपमानपूर्वपदस्ये'त्यादिनोत्तरपदलोपी समासः ॥

**कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ।**

मेदसा वृद्धिः कफवृद्धिवत् । कफवदिति कार्ये कारणोपचारात् कफकार्यरोगः कफ उक्तः । विशेषमात्रमाह—मृदुस्तालफलोपम इति ॥

मूत्रवृद्धिं लक्षयति—

**मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ॥ २६ ॥**

**अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ् मृदुः ।**

**मूत्रकृच्छ्रमधस्ताच्च वलयं फलकोशयोः ॥ २७ ॥**

---

1. 'तत्वात्तयोः' ग ।

मूत्रेत्यादि। मूत्रतो वृद्धिः मूत्रधारणशीलस्य स्यात्। स च मूत्रवृद्धिः जलपूर्णभस्त्रेव गच्छतो व्रजतः क्षोभं याति सरुङ् मृदुश्च स्यात्। तथा मूत्रकृच्छ्रं स्यात्। फलकोशयोरधस्ताद् वलयं कटकश्च स्यात्॥

आन्त्रवृद्धिं लक्षयति—

**वातकोपिभिराहारैः शीततोयावगाहनैः।**
**धारणेरणभाराध्वविषमाङ्गप्रवर्तनैः॥ २८॥**
**क्षोभणैः क्षुभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा।**
**पवनो विगुणीकृत्य स्वनिवेशादधो नयेत्॥ २९॥**
**कुर्याद्वंक्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा॥**

**उपेक्ष्यमाणस्य च मुष्कवृद्धि-**
**माध्मानरुक्स्तम्भवतीं स वायुः।**
**प्रपीडितोऽन्तः स्वनवान् प्रयाति**
**प्रध्मापयन्नेति पुनश्च मुक्तः॥ ३०॥**

**आन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः।**
**रूक्षकृष्णारुणसिरातन्तुजालगवाक्षितः॥ ३१॥**

वातेत्यादि। वातकोप्याहारादिभिः। धारणेरणे वायोरेव। अन्यैश्च पूर्वोक्तैः क्षोभणैः कोपनैः कुपितः पवनो यदाल्पस्यान्त्रस्यावयवमेकदेशं स्वनिवेशात् स्वस्थानाद् विगुणीकृत्याधो नयेत् तदा पवनो वंक्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं कुर्यात्। उपेक्ष्यमाणस्य अचिकित्स्यमानस्य नरस्य स पूर्वनिर्दिष्टो वायुः आध्मानादिमतीं मुष्कवृद्धिं मुष्कयोर्वर्धनं कुर्यादिति सम्बन्धः। "उपेक्ष्यमाणस्य वृद्ध्याख्यस्य गदस्य" इत्यरुणदत्तः। उपेक्षमाणस्य इति वा पाठः। तथा प्रपीडितो बाह्यादन्तः स्वनवान् सशब्दः प्रयाति। मुक्तोऽप्रपीडितः। प्रध्मापयन् पुनरेति आगच्छति। अयमेवंलक्षणः आन्त्रवृद्धिरसाध्यः। न पुनः सर्व एवेत्ययंशब्देन द्योतयति। किमस्य लक्षणमित्याह— वातवृद्धिसमाकृतिः वातपूर्णदृतिस्पर्श इत्यादिलक्षणलक्षितः। रूक्षत्वादिकं वृद्धेरसाध्यत्वलक्षणम्। गवाक्षितो निरन्तरमाक्रान्तः। इत्युक्तो वृद्धिः॥

वध्मांख्यव्याधेरनन्तरं शोफसामान्याद् गुल्मं लक्षयति—

**गुल्मोऽष्टधा पृथग्दोषैः संसृष्टैर्निचयं गतैः ।**
**आर्तवस्य च दोषेण नारीणां जायतेऽष्टमः ॥ ३२ ॥**

गुल्मोऽष्टधेत्यादि। अथवा रूक्षेत्यादिना गुल्मं दर्शयति। रूक्षत्वादिकं सर्वगुल्मानां सामान्यलक्षणम्। अरुणदत्तोऽपि—"सर्वगुल्मानां सामान्यलक्षणं रूक्षकृष्णेत्यादिग्रन्थनिर्दिष्ट"मित्याह। गुल्मोऽष्टधेति संख्यारूपा सम्प्राप्तिरुक्ता। तदेवाष्टधात्वं दर्शयति। पृथग्दोषैस्त्रयः, संसृष्टैर्दोषैस्त्रयः, निचयं गतैः सन्निपातेनैकः, तथाष्टमो नारीणां चार्तवस्य दोषेण आर्तवदुष्टतया स्यात्। स्त्रीणामेवार्तवदोषेणाष्टमः॥

अथ गुल्मानां विस्तरेण निदानं सम्प्राप्तिं चाह—

**ज्वरच्छर्द्यतिसाराद्यैर्वमनाद्यैश्च कर्मभिः ।**
**कर्शितो वातलान्यत्ति शीतं चाम्बु बुभुक्षितः ॥ ३३ ॥**

**यः पिबत्यनु चान्नानि लङ्घनं प्लवनादिकम् ।**
**सेवते देहसंक्षोभि च्छर्दिं वा समुदीरयेत् ॥ ३४ ॥**

**अनुदीर्णामुदीर्णान् वा वातादीन् न विमुञ्चति ।**
**स्नेहस्वेदावनभ्यस्य शोधनं वा निषेवते ॥ ३५ ॥**

**शुद्धो वाशु विदाहीनि भजते स्यन्दनानि वा ।**
**वातोल्बणास्तस्य मलाः पृथक् क्रुद्धा द्विशोऽथवा ॥ ३६ ॥**

**सर्वे वा रक्तयुक्ता वा महास्रोतोनुशायिनः ।**
**ऊर्ध्वाधोमार्गमावृत्य कुर्वते शूलपूर्वकम् ॥ ३७ ॥**

**स्पर्शोपलभ्यं गुल्माख्यमुत्प्लुतं ग्रन्थिरूपिणम् ।**

ज्वरेत्यादि। तत्र ज्वरच्छर्दीत्यादि निदानं यावद् भजते स्यन्दनानि वेति। अतिसाराद्यैरित्यादिशब्देन ग्रहण्यादयो गृह्यन्ते। वमनाद्यैरित्यत्र च विरेचनास्थापनादयः। ज्वरादिभिः व्याधिभिः वमनादिभिश्च कर्शितो यो वात-

लान्यन्नानि भुङ्क्ते अथवा बुभुक्षितो भोजनं विनैव शीतलमपक्वम् अम्बु यः पिबति। तथा चोक्तम्—

'अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च।
नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत्॥'

इति। अनु चान्नानि भोजनानन्तरं लङ्घनादिकं यत् कर्म देहसंक्षोभि शरीरसंरम्भोत्पादकं तत् सेवते। आदिशब्देन व्यवायादिग्रहणम्। छर्दिं वा अनुदीर्णां अनुत्क्लिष्टां समुदीरयेत् समन्तादूर्ध्वं नयेत्। उदीर्णान् वातादीन् वातमूत्रपुरीषानागतान् न विमुञ्चति न विसृजति। तथा यश्च स्नेहस्वेदौ अनभ्यस्य पुनःपुनरकृत्वा शोधनं वमनविरेचने निषेवते। अथवा शुद्धः कृतवमनविरेकोऽनन्तरमेव स्यन्दनानि स्रुतिरूपाणि श्लेष्मकारीणि अन्नपानानि भजते। तस्य मला वातादयो गुल्मसंज्ञं व्याधिं कुर्वते। कीदृशाः। वातोल्बणाः वाताधिकाः। 'वातप्रधानाः' इति संग्रहे। उल्बणशब्देनैतद् द्योतयति–नहि पवनं कारणमन्तरेण श्लेष्मपित्तरक्तानां संघटना घटते। तस्मात् पित्तादीनां वातानुबन्धत्वम् इति। अरुणदत्तस्त्वाह—"वातोल्बणाः वातकारणाः। नहि पवनं कारणमन्तरेण श्लेष्मपित्तरक्तानां संघटना घटते। तस्मात् पित्तादीनां उत्पत्तिकारणं पित्तादिगुल्मेषु वातस्य (गुल्म) निष्पादनं प्रति तुल्यकक्ष्यतामनेन विशेषणेन प्रतिपादयत्याचार्यः। यदि पुनरुल्बणोऽधिक इति व्याख्यायते तदानीं वातगुल्मेऽप्यधिकत्वं वातस्येति वातगुल्मपित्तगुल्मादीनां विषयविभागो न स्यात्। तस्माद् वातकारणत्वं वातोल्बणा इत्यनेन विवक्षितमिति वेद्यम्" इति। किंभूता दोषाः। क्रुद्धाः कुपिताः। कथम्। पृथक् प्रत्येकं कृत्वा। अथवा द्विशो द्वौ द्वौ कृत्वा संसर्गस्था इत्यर्थः। सर्वे वा समस्ताः रक्तयुक्ता वेति। वा शब्दः समुच्चये रक्तयुक्ताश्चेत्यर्थः। तथा महास्रोतोऽनुशायिनः। महास्रोतः कोष्ठः। तदनुशेरते ये ते महास्रोतोनुशायिनः "महास्रोतोऽनुप्रविश्य" इति संग्रहे। किं कृत्वा गुल्मं निष्पादयन्तीत्याह–ऊर्ध्वाधोमार्गमावृत्य ऊर्ध्वमधश्च मार्गमावृत्य आपूर्य। अनेनास्य सम्प्राप्तिरुक्ता। शूलपूर्वकं शूलं पूर्वं यस्मिन् सः शूलपूर्वकः तम्। शूलं पूर्वं कृत्वा पश्चाद्दोषा गुल्मं कुर्वन्ति। अनेनास्य प्राग्रूपमुक्तम्। तथा स्पर्शोपलभ्यं अश्मादिसदृशं तथोत्प्लुतं (ഉയർന്ന്) ग्रन्थिरूपिणं ग्रन्थ्याकारमित्यनेन अस्य संस्थानमुक्तम्॥

अथ कोऽसौ गुल्मः यमभिनिर्वर्तयन्ति दोषा इत्याह—

**कर्शनात् कफविट्पित्तैर्मार्गस्यावरणेन वा ॥ ३८ ॥**

**वायुः कृताश्रयः कोष्ठे रौक्ष्यात् काठिन्यमागतः ।**
**स्वतन्त्रः स्वाश्रये दुष्टः परतन्त्रः पराश्रये ॥ ३९ ॥**

**पिण्डितत्वादमूर्तोऽपि मूर्तत्वमिव संश्रितः ।**
**गुल्म इत्युच्यते वस्तिनाभिहृत्पार्श्वसंश्रयः ॥ ४० ॥**

कर्शनादित्यादि । द्वौ हेतू वातस्य कर्शनं मार्गरोधश्च । तत्र कर्शनाद् धातुक्षयात् कदाचिद् दुष्टो वायुः कदाचित् कफविट्पित्तैः कृतेन मार्गस्यावरणेन रोधेन च । ततः कोष्ठे कृताश्रयः गृहीतास्पदः । तथा रौक्ष्यात् काठिन्यमागतः पिण्डितत्वं प्राप्तः । स्वाश्रये पक्वाशये यदि दुष्टः स्वतन्त्रः पराश्रये आमाशये यदि दुष्टः परतन्त्रः पित्तकफयोराश्रयतः पिण्डितत्वात् कारणादमूर्तोऽपि अकठिनोऽपि मूर्ततामिव काठिन्यमिव संश्रितः प्राप्तो गुल्म इत्युच्यतेऽभिधीयते तन्त्रकृद्भिः । वस्त्यादि संश्रयः स्थानं यस्य स एवम् । संग्रहेऽप्युक्तं—"तस्य पञ्च स्थानानि वस्तिर्नाभिः पार्श्वे हृदयं चे"ति ॥

**वातान्मन्याशिरःशूलं ज्वरप्लीहान्त्रकूजनम् ।**
**व्यधः सूच्येव विट्सङ्गः कृच्छ्रादुच्छ्वसनं मुहुः ॥ ४१ ॥**

**स्तम्भो गात्रे मुखे शोषः कार्श्यं विषमवह्निता ।**
**रूक्षकृष्णत्वगादित्वं चलत्वादनिलस्य च ॥ ४२ ॥**

**अनिरूपितसंस्थानस्थानवृद्धिक्षयव्यथः ।**
**पिपीलिकाव्याप्त इव गुल्मः स्फुरति तुद्यते ॥ ४३ ॥**

वातान्मन्येत्यादि वातगुल्मलक्षणम् । वाताद् गुल्मे मन्याशूलादयः स्युः । गुल्मश्चानिलस्य चलत्वादनिरूपितसंस्थानादिकः । संस्थानमाकारः । स्थानमाश्रयः । तथा पिपीलिकाभिर्व्याप्तश्चित इव गुल्मः स्फुरति तुद्यते च । तुद्यते इति कर्मकर्तरि ॥

पित्ताद् दाहोऽम्लको मूर्च्छाविड्भेदस्वेदतृड्ज्वराः ।
हारिद्रत्वं त्वगाद्येषु गुल्मश्च स्पर्शनासहः ॥ ४४ ॥
दूयते दीप्यते सोष्मा स्वस्थानं दहतीव च ।

पित्ताज्जाते गुल्मे दाहादयः स्युः । सर्वाङ्गीणस्तीव्रः सन्तापो दाहः । सान्तर्दाहो हृदयशूलः साम्लोद्गारोऽम्लकः । तथा त्वङ्नखादिषु हारिद्रो वर्णः स्यात् । तथा गुल्मश्च व्रण इव स्पर्शनासहः स्पर्शनं न सहते[1] । तथा दूयते उपतप्यते । दीप्यते[2] । सोष्मा च स्यात् । स च स्वस्थानं गुल्माश्रितं आस्पदं दहतीव । "गुल्मश्चास्य तप्तायःपिण्ड इव तमवकाशं दहती"ति **संग्रहे** । दूयते इति 'दूङ्' परितापे दिवादिः ॥

कफात् स्तैमित्यमरुचिः सदनं शिशिरज्वरः ॥ ४५ ॥
पीनसालस्यहृल्लासकासशुक्लत्वगादिताः ।
गुल्मोऽवगाढः कठिनो गुरुः सुप्तः स्थिरोऽल्परुक् ॥ ४६ ॥

कफाद् गुल्मे सति स्तैमित्यादयः स्युः । गुल्मोऽवगाढादियुक्तः स्यात् । 'अवगाढो घनः' इतीन्दुः ॥

स्वदोषस्थानधामानः स्वे स्वे काले च रुक्कराः ।
प्रायः,

ते च त्रयो वातपित्तकफगुल्माः प्रायो बाहुल्येन स्वदोषस्थानधामानः स्वस्यात्मीयस्य दोषस्य वातादेः स्थानं पक्वाशयादि स्वदोषस्थानम् । स्वमात्मीयं दोषस्थानमिति वा । तद्धाम स्थानं येषां त एवम् । आत्मीयारम्भकदोषस्थानाश्रयाः । **संग्रहे**— * वातगुल्मः प्रायो बस्त्याश्रयो भवति । पित्तगुल्मः प्रायो नाभ्याश्रयः । कफगुल्मः प्रायो हृत्पार्श्वाश्रयः इति । तथा स्वे स्वे काले वयोहोरात्रिभुक्तानामन्तमध्यादिलक्षणे यथासंख्यं वातपित्तकफगुल्मा रुजं कुर्वन्तीति रुक्कराः शूलकरा भवन्ति ॥

---

१. 'व स्पर्शनं न सहते । स्पर्श' ख. ग । २. 'ते ഏരിയും; കാഞ്ഞിരിക്കം. सो' ख । * अर्थानुवादोऽयम् ।

**त्रयस्तु द्वन्दोत्था गुल्माः संसृष्टलक्षणाः ॥ ४७ ॥**

द्वन्द्वोत्थाः संसर्गजास्त्रयो गुल्माः संसृष्टलक्षणाः यथास्वं दोषद्वयलक्षण-युक्ताः स्युः ॥

**सर्वजस्तीव्ररुग्दाहः शीघ्रपाकी घनोन्नतः ।**
**सोऽसाध्यः,**

सर्वजस्त्रिदोषजो गुल्मः तीव्ररुजादियुक्तः । "पूर्वोक्तसर्वलिङ्गयुक्तश्चे"ति **संग्रहे** । स च सर्वजो गुल्मोऽसाध्यः ॥

**रक्तगुल्मस्तु स्त्रिया एव प्रजायते ॥ ४८ ॥**

रक्तगुल्मः पुनः स्त्रिया एव जायते न पुरुषस्य ॥

ऋतौ वेत्यादिना तस्य निदानं संप्राप्तिश्च स्त्रिया एव जायते इत्यत्रोपपत्ति-श्चोच्यते—

**ऋतौ वा नवसूता वा यदि वा योनिरोगिणी ।**
**सेवते वातलानि स्त्री क्रुद्धस्तस्याः समीरणः ॥ ४९ ॥**

**निरुणद्ध्यार्तवं योन्यां प्रतिमासमवस्थितम् ।**
**कुक्षिं करोति तद्गर्भलिङ्गमाविष्करोति च ॥ ५० ॥**

**हृल्लासदौहृदस्तन्यदर्शनं क्षामतादिकम् ।**

ऋतावार्तवकाले नवसूता वा योनिरोगिणी वा स्त्री वातलान्यन्नपानानि यदि सेवते तस्याः स्त्रियाः कुपितः समीरणो वायुः योन्यामार्तवं निरुणद्धि । तदार्तवं निरुध्यमानं प्रतिमासं मासे मासे अवस्थितं सत् कुक्षिं करोति कुक्षि-वृद्धिं करोति । गर्भलिङ्गं च हृल्लासदौहृदादिकम् आविष्करोति प्रकटयति । **अरुणदत्तस्तु**—"तस्याः क्रुद्धः समीरणः प्रतिमासं यदवस्थितमार्तवं तन्निरुणद्धि" इत्यन्वयं वदति । **आगमटीकाल**—"ननु आर्तवे सञ्चिते कुक्षेरुन्नतत्वं युक्तं, कथं गर्भलिङ्गानामुत्पत्तिः । उच्यते—गर्भस्थानस्यायं प्रभावः । येन तत्रस्थे गुल्मे दौहृदस्तन्यादीनामुत्पत्ति"रिति । क्षामतादिकमित्यादिशब्देन मूर्च्छादीनां ग्रहणम् । "गर्भलिङ्गमिति गर्भे लिङ्गमिव लिङ्गं यस्येति सप्तम्युपमानपूर्व-पदस्येति बहुव्रीहिः उत्तरपदलोपश्च" इत्यरुणदत्तः ॥

**क्रमेण वायुसंसर्गात् पित्तयोनितया च तत् ॥ ५१ ॥**

**शोणितं कुरुते तस्या वातपित्तोत्थगुल्मजान् ।**
**रुक्स्तम्भदाहातीसारतृड्ज्वरादीनुपद्रवान् ॥ ५२ ॥**

**गर्भाशये च सुतरां शूलं दुष्टासृगाश्रये ।**
**योन्याश्च स्रावदौर्गन्ध्यतोदस्यन्दनवेदनाः ॥ ५३ ॥**

क्रमेणानन्तरं वायुसंसर्गाद् वायुसंश्लेषात् तथा पित्तयोनितया च पित्तस्य कारणत्वेन तच्छोणितं वातपित्तोत्थगुल्मजानुपद्रवान् रुक्स्तम्भदाहातीसार-तृड्ज्वरादीन् कुरुते । अनया च भङ्ग्या वातपित्तगुल्मयोरुपद्रवा अप्युक्ता भवन्ति । गुल्मश्च गर्भाशये सुतरां शूलं करोति । किम्भूते--दुष्टस्यासृज आश्रये आधारभूते । योन्याश्च स्रावादीन् कुरुते ॥

गर्भलक्षणाद् गुल्मस्य विलक्षणं लक्षणमाह—

**न चाङ्गैर्गर्भवद् गुल्मः स्फुरत्यपि तु शूलवान् ।**
**पिण्डीभूतः स एवास्याः कदाचित् स्पन्दते चिरात् ॥ ५४ ॥**
**न चास्या वर्धते कुक्षिर्गुल्म एव तु वर्धते ।**

न च गुल्मो गर्भ इवाङ्गैः पादादिभिरवयवैः स्फुरति स्पन्दते अङ्गा-भावात् । अपि तु शूलवान् स एव गुल्मः पिण्डीभूतः कदाचिच्चिरेणास्याः स्पन्दते न गर्भवत् शीघ्रम् । तथा गर्भेऽन्तःस्थिते कुक्षिरस्या वर्धते । गुल्मेऽन्तःस्थिते कुक्षिरस्या भृशं न वर्धते[2] । एवं वैलक्षण्यमनाकलय्य भूयसा सादृश्याद् अगर्भां गर्भिणीत्याहुर्मूढाः । इति गर्भरक्तगुल्मयोर्लक्षणभेदः ॥

अथ गुल्मविद्रध्योः लक्षणभेदं कथयति—

**स्वदोषसंश्रयो गुल्मः सर्वो भवति तेन सः ॥ ५५ ॥**

**पाकं चिरेण भजते नैव वा विद्रधिः पुनः ।**
**पच्यते शीघ्रमत्यर्थं दुष्टरक्ताश्रयत्वतः ॥ ५६ ॥**

---

१. 'स्वोष्णत्वेन तच्छो' ग । २. 'ते । स एव गुल्मो वर्धते एवं' ख. ग. . ङ ।

अतः शीघ्रविदाहित्वाद्विद्रधिः सोऽभिधीयते ।
गुल्मेऽन्तराश्रये वस्तिकुक्षिहृत्प्लीहवेदनाः ॥ ५७ ॥

अग्निवर्णबलभ्रंशो वेगानां चाप्रवर्तनम् ।
अतो विपर्ययो बाह्ये कोष्ठाङ्गेषु तु नातिरुक् ॥ ५८ ॥

वैवर्ण्यमवकाशस्य बहिरुन्नतताधिकम् ।

स्वदोषेत्यादि । सर्वो गुल्मः स्वदोषसंश्रयः । स्वदोषः संश्रयो यस्य स एवम् । येन येन दोषेण वाताद्यन्यतमेनाथवा द्वन्द्वरूपेण सन्निपातेनान्येन वा गुल्मो जन्यते तद्दोषस्तस्य गुल्मस्य आश्रयः । तदेवं–वातगुल्मस्य वात एवाश्रयो न तस्य पित्तादयः । पित्तादिकृतानां त एवाश्रयाः न पवन आश्रयः । एवं स्वकारणदोषसंश्रयः सर्वो गुल्मो भवति । तेन स्वदोषसंश्रयाख्येन कारणेन गुल्मश्चिरेण कालेन पाकं भजते । एतच्चिरेण कालेन पाकभजनं प्रायेणैकमतेन पित्तगुल्मं प्रति प्रोक्तं, न वातगुल्मं प्रति । अत एवाह–नैव वेति । अथवा गुल्मः पाकं न भजते एव । विद्रधिस्तु अन्यदोषारब्धोऽपि शीघ्रमचिरेणैव कालेन पच्यते पाकं भजते अत्यर्थदुष्टरक्ताश्रयत्वात् । विद्रधिरत्यर्थदुष्टरक्ताश्रयो भवति । अतः शीघ्रं पच्यते । अतः शीघ्रविदाहित्वादेव कारणात् स विद्रधिरित्यभिधीयते । विदाहः पाकः । चिराचिरकालपाको भेदः । अत्यर्थग्रहणं रक्तगुल्मे विद्रध्यपेक्षया स्वल्परक्तप्रकोपदर्शनार्थम् । आर्षं हि—

मांसशोणितभूयस्त्वात् पाकं गच्छति विद्रधिः ।
मांसशोणितहीनत्वाद् गुल्मः पाकं न गच्छति ॥

इति । तथा वातात्मकः सर्वो गुल्मो जायते । वात एवामूर्तोऽपि मूर्ततामिव संश्रितो गुल्म इत्युच्यते । अत एव वातस्यैव सर्वगुल्मकारणं प्रति प्राधान्यम् । तस्माद् गुल्मस्य पाकानुपपत्तिः । स्यादत्र रक्तगुल्मस्य रक्ताश्रयत्वतः शीघ्रपाकत्वप्रसङ्गः । तन्न । गर्भाशयस्य प्रभावात् । यथा गर्भः शिथिलतां गतो दशभिर्मासैः सुखं निष्क्रामति । एवं शोणितगुल्मो दशमासं स्थानस्वभावादशिथिलमेति । गुल्मस्य बाह्याभ्यन्तरलक्षणमाह–गुल्म इत्यादि । गुल्मेऽन्तराश्रये आभ्यन्तरे वस्त्यादिवेदनादयः स्युः । अग्न्यादीनां भ्रंशोऽभावः । वेगानां च प्रवर्तनं

न भवति। अतोऽस्माद् बाह्ये विपर्ययो वैपरीत्यम्। यथा अग्न्यादिभ्रंशाद्यभावो वेगानां च प्रवर्तनं भवति। तथा बस्तिहृदयादिषु कोष्ठाङ्गेषु अतिरुङ् न भवति। यथान्तरे तथावकाशस्य प्रदेशस्य वैवर्ण्यं[1] बहिर्बाह्यभाग उन्नतत्वमधिकं भवति॥

गुल्मानामानाहभूयिष्ठत्वादानाहलक्षणमाह—

**साटोपमत्युग्ररुजमाध्मानमुदरे भृशम्॥ ५९॥**
**ऊर्ध्वाधो वातरोधेन तमानाहं प्रचक्षते।**

साटोपमित्यादि। ऊर्ध्वाधो वातरोधेन कारणभूतेन उदरे भृशमाध्मानमानाहं[2] प्रचक्षते, मुनय इति शेषः। किम्भूतं, साटोपमाटोपेन सहितम्। आटोपो नाभेरधो वायुना मन्दसञ्चारः। सशब्दस्य वायोः सञ्चरणमाटोप इति च। तथा अत्युग्रा रुजा पीडा यत्र तदत्युग्ररुजम्। सुश्रुतेन प्रत्याध्मानस्यापि लक्षणमभ्यधायि। यथा—

विमुक्तपार्श्वहृदयं तद्वदामाशयोत्थितम्।
प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम्[3]॥ इति॥

गुल्मसादृश्यादष्ठीलाप्रत्यष्ठील्योर्लक्षणमाह—

**घनोऽष्ठीलोपमो ग्रन्थिरष्ठीलोर्ध्वं समुन्नतः॥ ६०॥**
**आनाहलिङ्गस्तिर्यक् तु प्रत्यष्ठीला तदाकृतिः।**

घन इत्यादि। घनो निबिडो यो ग्रन्थिरष्ठील्योपमीयते तथोर्ध्वसमुन्नतो नाधस्तात् स ग्रन्थिरानाहलिङ्गः अष्ठीला भण्यते। तिर्यक् तु यो ग्रन्थिः नोर्ध्वं समुन्नतः तदाकृतिरष्ठीलासदृशः स ग्रन्थिः प्रत्यष्ठीला उच्यते।

तूनीप्रतून्यौ लक्षयति—

**पक्वाशयाद् गुदोपस्थं वायुस्तीव्ररुजः प्रयान्॥ ६१॥**
**तूनी, प्रतूनी तु भवेत् स एवातो विपर्यये॥**

---

१. 'र्ण्यं शरीरादन्यवर्णत्वं बहिर्भा' ख. ग. घ. ङ। २. 'ध्मानं यत्तमानाहं' ख। ३. 'तानलम्' ग।

पक्काशयादित्यादि। गुदश्चोपस्थश्च गुदोपस्थम्। पक्काशयाद् वायुः तीव्ररुजः सन् गुदोपस्थं प्रयान् गच्छन् तूनीत्युच्यते। स एव वायुरतो विपर्यये अत इति पक्काशयाद् गुदोपस्थगमनाद् वैपरीत्ये गुदोपस्थात् पक्काशयं प्रयान् तीव्ररुजः सन् प्रतूनीत्युच्यते॥

उद्गारबाहुल्यपुरीषबन्ध-
तृप्त्यक्षमत्वान्त्रविकूजनानि।
आटोपमाध्मानमपक्तिशक्ति-
मासन्नगुल्मस्य वदन्ति चिह्नम्॥ ६२॥

उद्गारबाहुल्यादीन्यासन्नस्य गुल्मस्य चिह्नं प्राग्रूपं वदन्ति॥

इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने एकादशोऽध्यायः॥

# द्वादशोऽध्यायः ।

शोफानाहजठरविकृतिसामान्याद् विद्रध्यनन्तरमुदरनिर्णयायाध्यायारम्भः । अरुणदत्तस्त्वाह—"यतोऽनन्तरेऽध्याये आनाहलक्षणमुक्तम् उदरं च कुक्षिमानह्य दोषाः कुर्वते तस्मादनन्तरमुदरनिदानमुच्यते" । इति । सारकृदप्येतत् पद्यरूपेणाह—

"आनाह्य कुक्षिमुदरं दोषाः कुर्वन्ति सर्वथा ।
आनाहलक्षणं चोक्तमत आह महोदरम् ॥"

इति । "आनाहसामान्यादुदरमुच्यते" इति पाठ्ये ।

**अथात उदरनिदानं व्याख्यास्यामः ।**

**रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि तु ।**
**अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात् ॥ १ ॥**

रोगा इत्यादि । सर्वेऽपि ज्वरातीसारादयो रोगा मन्देऽग्नौ सति जायन्ते । अतिशयेन पुनरुदराणि । अन्येभ्यश्चोदरहेतुभ्यो मन्दाग्नित्वं प्रधानमुदराणां कारणमिति मन्देऽग्नावित्यनेन प्रागुद्दिष्टेन द्योतयति । तथा चतुर्विधादजीर्णाद् विष्टब्धविदग्धरसशेषामाख्यात् तथा मलिनैश्चान्नैः पूतिपर्युषितसङ्कीर्णादिलक्षणैः तथा मलसञ्चयात् चिरकालसम्भृतादुदराणि जायन्ते । 'अजीर्णान्नहेतुकान्मलिनान्नहेतुकाच्च वातादिसञ्चयादुदराणि जायन्ते' इतीन्दुः ।

अधुना सम्प्राप्तिमेषामाह—

**ऊर्ध्वाधो धातवो रुद्ध्वा वाहिनीरम्बुवाहिनीः ।**
**प्राणाग्न्यपानान् सन्दूष्य कुर्युस्त्वङ्मांससन्धिगाः ॥ २ ॥**
**आध्माप्य कुक्षिमुदरम्,**

ऊर्ध्वाध इत्यादि । धातवो वातादयः अम्बुवाहिनीः सिराः जलवाहिस्रोतांसि ऊर्ध्वाधो रुद्ध्वा उदरं कुर्युः । कीदृशाः । त्वङ्मांसयोः सन्धिरन्तरं

---

१. 'माध्माप्यानाह्य' मुद्रितपाठः ।

तत्र गच्छन्तीति त्वङ्मांससन्धिगाः, तत्स्था इत्यर्थः। किं कृत्वा। कुक्षिमाध्माप्य आनाह्य। तथा प्राणश्चानलश्चापानश्च तान् संदूष्य दूषयित्वा। प्रकृत्या मन्दोऽग्निः पुनर्वातादिभिः संदूषितो जठरं करोतीत्यर्थः॥

अष्टधा तच्च भिद्यते।
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः॥ ३॥

तच्चोदरमष्टधा स्यात् पृथग्दोषैः वातादिभिः समस्तैः सन्निपातेन प्लीहादिभिश्च इति। प्लीहोदरं बद्धोदरं क्षतोदरं जलोदरमिति। वातादिकृतत्वेऽपि प्लीहाद्युदराणि प्लीहादिनिमित्तसंज्ञयोक्तानि, यथा वृद्ध्याख्यो रोगः। संज्ञाविशेषश्च चिकित्साविशेषप्रतिपत्त्यर्थः॥

तेनार्ताः शुष्कताल्वोष्ठाः शूनपादकराननाः[1]।
नष्टचेष्टाबलाहाराः कृशाः प्रध्मातकुक्षयः॥ ४॥
स्युः प्रेतरूपाः पुरुषाः,

तेन उदरेण आर्ताः पीडिताः पुरुषाः शुष्कताल्वोष्ठाः शूनपादकराननाः नष्टचेष्टादिकाः कृशादयश्च स्युः॥

भाविनस्तस्य लक्षणम्।
क्षुन्नाशोऽन्नं चिरात् सर्वं सविदाहं च पच्यते॥ ५॥
जीर्णाजीर्णं न जानाति सौहित्यं सहते न च।
क्षीयते बलतः शश्वच्छ्वसित्यल्पेऽपि चेष्टिते॥ ६॥
वृद्धिर्विशोऽप्रवृत्तिश्च किञ्चिच्छोफश्च पादयोः।
रुग्वस्तिसन्धौ ततता लघ्वल्पाभोजनैरपि॥ ७॥
राजीजन्म वलीनाशो जठरे,

तस्य भाविनो भविष्यतो लक्षणं पूर्वरूपं क्षुन्नाशादिकं स्यात्। सौहित्यं तृप्तिः। वस्तिसन्धौ रुक् शूलं तथा लघुभोजनैरल्पभोजनैरभोजनैरपि च वस्तिसन्धौ ततता विस्तीर्णता आध्माततेत्यर्थः। तथा जठरे राजीनां जन्म सम्भवः

1. 'करोदराः' इति मुद्रिते।

वलीनां च नाशः स्यात् । इन्दुनात्वेवमुक्तम्–"लघुभोजनादिभिरपि जठरे ततता राजीजन्म वलीनाशश्च भवति" इति ॥

**जठरेषु तु ।**

**सर्वेषु तन्द्रा सदनं मलसङ्गोऽल्पवह्निता ॥ ८ ॥**

**दाहः श्वयथुराध्मानमन्ते सलिलसम्भवः ।**

सर्वेषु च जठराख्येषु रोगेषु तन्द्रादि साधारणं लिङ्गम् । तन्द्रा आलस्यम् । सदनं देहस्य । मलसङ्गः पुरीषस्याप्रवृत्तिः । अन्तेऽवसाने सलिलसम्भवः ॥

अतोयमुदरं किंलक्षणमित्याह—

**सर्वं त्वतोयमरुणमशोफं नातिभारिकम् ॥ ९ ॥**
**गवाक्षितं सिराजालैः सदा गुडगुडायते ।**
**नाभिमान्त्रं च विष्टभ्य वेगं कृत्वा प्रणश्यति ॥ १० ॥**
**मारुतो हृत्कटीनाभिपायुवंक्षणवेदनः**
**सशब्दो निश्चरेद् वायुर्विड्बन्धो मूत्रमल्पकम् ॥ ११ ॥**
**नातिमन्दोऽनलो लौल्यं न च स्याद्विरसं मुखम् ।**

सर्वमित्यादि । सर्वमुदरमतोयं जलोदरतामप्राप्तं वर्णतोऽरुणं तथा अशोफं शोफरहितं तथा नातिभारिकं नातिगुरु । सिराजालैः सिरासमूहैः जालाकृतिभिः गवाक्षितं निरन्तरमाक्रान्तम् । बद्धमिति **पाठे** । सदा सर्वकालं गुडगुडायते ईदृशमव्यक्तशब्दमाचरति । गुडगुडमव्यक्तशब्दः । तथा मारुतो नाभिं विष्टभ्य स्तब्धतां नीत्वा तथा आन्त्रं च विष्टभ्य वेगं कृत्वा हृत्कटीनाभिपायुवंक्षणे वेदनेत्येवं रूपमात्मीयं संरम्भं प्रदर्श्य अनन्तरं प्रणश्यति । नोपलभ्यत इत्यर्थः । अनन्तरं वायुः सशब्दोऽन्तः निश्चरेत् निर्याति । तथा विड् बद्धा । मूत्रमल्पकमतिशयेनाल्पं स्यात् । नातिमन्दोऽनलः किञ्चिन्मन्दोऽग्निरित्यर्थः । नातिमन्द इत्यनेन सलिलसम्भवेऽतिमन्दत्वं दर्शितम् । तथा लौल्यं गर्धनम् । न च विरसं मुखं स्यात् । इन्दुना तूक्तं–"नातिमन्द इत्यादिना सलिलसम्भवेऽतिमन्दत्वं दर्शितम् । न च लौल्यं स्यात् । विरसं च मुखं न स्यात् । यथा

सलिल इत्यर्थाद्" इति । उक्तमरुणत्वादि अतोयसम्भवलिङ्गम् । अस्माच्च विपरीतलक्षणं सामर्थ्यात् सतोयम् ॥

तत्र वातोदरे शोफः पाणिपान्मुष्ककुक्षिषु ॥ १२ ॥

कुक्षिपार्श्वोदरकटीपृष्ठरुक्पर्वभेदनम् ।
शुष्ककासोऽङ्गमर्दोऽधोगुरुता मलसंग्रहः ॥ १३ ॥

श्यावारुणत्वगादित्वमकस्माद् वृद्धिहानयः ।
सतोदभेदमुदरं तनुकृष्णसिराततम् ॥ १४ ॥

आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ।
वायुश्चात्र सरुक्शब्दो विचरेत् सर्वतोगतिः ॥ १५ ॥

तत्र तेषूदरेषु वातोदरे शोफः पाण्यादिषु तथा कुक्ष्यादिषु रुक् तथा पर्वभेदनादयश्च स्युः । अकस्मान्निमित्तं विना उदरं वृद्धिहानियुतं स्यात् । तथा सतोदभेदं तनुकृष्णसिराभिस्ततं व्याप्तमाहतं च तदुदरम् आध्मातभस्त्रावत् शब्दं करोति । अत्र च वातोदरे वायुः सरुक्शब्दः सर्वतोगतिश्च सन् विचरेत् भ्रमति ॥

पित्तोदरे ज्वरो मूर्च्छा दाहस्तृद् कटुकास्यता ।
भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ॥ १६ ॥

पीतताम्रसिरानद्धं सस्वेदं सोष्म दह्यते ।
धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ १७ ॥

पित्तोदरे ज्वरादयः स्युः । तथा त्वगादौ पीतत्वं भवति । जठरं हरितवर्णं भवति । तथा पीतताम्राभिः सिराभिः नद्धं युक्तम् । सस्वेदं सोष्म (കാഞ്ഞിരിക്ക) च स्यात् । दह्यते तप्यते च । तथा धूमायति । तथा मृदुः अकठिनः स्पर्शो यस्य तदेवं प्रदूयते उपतप्यते च ।

श्लेष्मोदरेऽङ्गसदनं स्वापश्वयथुगौरवम् ।
निद्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता ॥ १८ ॥

---

१. 'हासवत्' मुद्रितपाठः

उदरं स्तिमितं श्लक्ष्णं शुक्लराजीततं महत् ।
चिराभिवृद्धि कठिनं शीतस्पर्शं गुरु स्थिरम् ॥ १९ ॥

श्लेष्मोदरेऽङ्गसदनादयः स्युः । तथा उदरं स्तिमितं निश्चलं श्लक्ष्णं कोमलस्पर्शं शुक्लराजीभिस्ततं व्याप्तम् । तथा स्थिरं न तु चलम् ॥

त्रिदोषकोपनैरित्यादिना सन्निपातोदरस्य निदानं लक्षणं च उच्यते—

त्रिदोषकोपनैस्तैस्तैः स्त्रीदत्तैश्च रजोमलैः ।
गरदूषीविषाद्यैश्च सरक्ताः सञ्चिता मलाः ॥ २० ॥

कोष्ठं प्राप्य विकुर्वाणाः शोषमूर्च्छाभ्रमान्वितम् ।
कुर्युस्त्रिलिङ्गमुदरं शीघ्रपाकं सुदारुणम् ॥ २१ ॥

बाधते तच्च सुतरां शीतवाताभ्रदर्शने ।

तैस्तैरिति सर्वरोगनिदानोक्तैः त्रिदोषकोपनैः सङ्कीर्णादिभोजनैः तथा स्त्रिया दत्तैः रजोमलैः कार्मणापरपर्यायैः । "रजोमलैरिति रजसा संयुक्ताः शुक्ल-रुधिरस्वेदमूलजिह्वारसात्मका मलाः" इति पाठ्ये । गरम् - കൈവിഷം । दूषीविषं (विद्विषम्?) । इदमपि पाठ्ये । तथा गरेण दूषीविषाद्यैश्च । आदि-शब्देन विरुद्धाभ्यवहारादीनां ग्रहणम् । तैर्मला वातादयः सरक्ताः सञ्चिताः कोष्ठं प्राप्याश्रित्य विकुर्वाणा विक्रियां यान्तः त्रिलिङ्गं त्रिदोषलक्षणं तथा शोफा-दियुतं शीघ्रपाकं सुदारुणमुदरं कुर्युः । तच्च सन्निपातोदरं सुतरां शीतादिकाले बाधत इत्येतद् विशेषलक्षणम् ।

अत्याशितस्येत्यादिना प्लीहोदरमुच्यते—

अत्याशितस्य संक्षोभाद् यानयानादिचेष्टितैः ॥ २२ ॥

अतिव्यवायकर्माध्ववमनव्याधिकर्शनैः ।
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानाद् विवर्धते ॥ २३ ॥

शोणितं वा रसादिभ्यो विवृद्धं तं विवर्धयेत् ।
सोऽष्ठीलेवातिकठिनः प्राक् ततः कूर्मपृष्ठवत् ॥ २४ ॥

**क्रमेण वर्धमानश्च कुक्षावुदरमावहेत् ।**
**श्वासकासपिपासास्यवैरस्याध्मानरुग्ज्वरैः ॥ २५ ॥**

**पाण्डुत्वच्छर्दिमूर्च्छार्त्तिदाहमोहैश्च संयुतम् ।**
**अरुणाभं विवर्णं वा नीलहारिद्रराजिमत् ॥ २६ ॥**

अत्याशितस्य अतिभुक्तवतः अतितृप्तस्य नरस्य यानयानादिचेष्टितैः अश्वादियानैः यानं गमनं तदादिभिश्चेष्टितैः यः संक्षोभः तस्मात् । तथा अतिव्यवायादिभिः कर्शनैः स्थानात् स्वाशयात् च्युतः प्लीहा विवर्धते विशेषेण वृद्धिं गच्छति । किम्भूतः प्लीहा । वामपार्श्वाश्रितः । अथवा रसादिभ्यो धातुभ्यः शोणितं रक्तं विवृद्धं स्वहेतुभिरधिकं कृत्वा वृद्धिं प्राप्तं समनन्तरमाश्रयत्वात् प्लीहानं स्वस्थानात् च्युतमच्युतं वा विशेषेण विवर्धयेत् स्वप्रमाणादाधिक्येन जनयेत् । स च प्लीहा अष्ठीलेवातिकठिनः प्रोन्नतः ततोऽनन्तरं कूर्मपृष्ठवत् कच्छपपृष्ठाकृतिः क्रमेण न सहसैव वर्धमानः आधिक्यं गच्छन् कुक्षौ स्वीये स्थाने उदरमावहेद् विदध्यात् । कीदृशमुदरम् । श्वासादिभिर्मोहपर्यन्तैः संयुक्तम् । तथा अरुणाभमरुणवर्णम् अथवा विवर्णम् अनिश्चितवर्णं नीलहारिद्रराजिमत् ॥

प्लीहोदरस्य यथादोषं लक्षणमाह —

**उदावर्तरुगानाहैर्मोहतृड्दहनज्वरैः ।**
**गौरवारुचिकाठिन्यैर्विद्यात् तत्र मलान् क्रमात् ॥ २७ ॥**

उदावर्तेत्यादि । तत्र तस्मिन् प्लीहोदरे पृथग्लक्षणलक्षितान् मलान् वातादीन् क्रमेण उदावर्तादिलिङ्गैः विद्यात् । तेन उदावर्तरुगानाहैर्वाताधिकं विद्यात् । मोहतृड्दहनज्वरैः पित्ताधिकं विद्यात् । गौरवारुचिकाठिन्यैः कफाधिकं विद्यात् ।

अथ यकृल्लक्षयति—

**प्लीहवद्दक्षिणात् पार्श्वात् कुर्याद्यकृदपि च्युतम् ।**

प्लीहसमानत्वाद् यकृतः पृथग् हेत्वाद्यनभिधानाद् यथा पूर्वोक्तैः हेतुभिः प्लीहा वामपार्श्वात् च्युतो विवर्धते विवृद्धो भूत्वानन्तरमुदरमावहेदथवा

शोणितं स्वहेतुतो विवृद्धं तं प्लीहानं विवर्धते। यथैवमुदरं कुर्यात् तथैव यकृत् पूर्वोक्तैर्हेतुभिः दक्षिणात् पार्श्वात् च्युतं विवर्धते विवृद्धं च सद् उदरमावहेत्। अथवा शोणितं स्वहेतुतो विवृद्धं यद् विवर्धयेत् तच्च विवृद्धमुदरमावहेदिति प्लीहोदरयकृदुदरयोः सादृश्यम्॥

अथ बद्धोदरं लक्षयति—

**पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे॥ २८॥**

**दुर्नामभिरुदावर्तैरन्यैर्वान्त्रोपलेपिभिः।**

**वर्चःपित्तकफान् रुद्ध्वा करोति कुपितोऽनिलः॥ २९॥**

**अपानो जठरं तेन स्युर्दाहज्वरतृट्क्षवाः।**

**कासश्वासोरुसदनं शिरोहृन्नाभिपायुरुक्॥ ३०॥**

**मलसङ्गोऽरुचिश्छर्दिरुदरं मूढमारुतम्।**

**स्थिरं नीलारुणसिराराजिबद्धमराजि वा॥ ३१॥**

**नाभेरुपरि च प्रायो गोपुच्छाकृति जायते।**

पक्ष्मवालैरित्यादि। पक्ष्माणि वालाश्च पक्ष्मवालाः तैरन्नेन सह भुक्तैः बद्धायने गुदे सति कुपितोऽनिलो वायुरपानाख्यो जठरं करोति। बद्धमयनं मार्गः पुरीषादिवाहि[1] यस्य तदेवंविधे गुदे सति। तथा दुर्नामभिः गुदे बद्धायने तथोदावर्तैः बद्धायने तथान्यैर्वा आन्त्रोपलेपिभिरुपदेहिभिः मन्दकमाषोमादिभिः गुदे बद्धायनेऽपानो जठरं करोति। किं कृत्वा, वर्चःपित्तकफान् रुद्ध्वा आवृत्य। तद् बद्धोदरमुच्यते। तेन जठरेण बद्धोदराख्येन पुरुषस्य दाहादयः स्युः। तथा श्वासकासावूरुसदनं शिरोहृन्नाभिरुक् स्यात्। तथा मलानां मूत्रपुरीषादीनां सङ्गोऽप्रवर्तनं, तथोदरं मूढमारुतं भवेत्। मूढो बहिरनिःसरणरूपो मारुतो यस्मिंस्तदेवम्। मूढमारुतत्वस्य सामान्यलक्षणेनैव गृहीतत्वात् पुनर्ग्रहणमतिशयार्थम्। तथा स्थिरमचलम्। तथा नीलारुणसिराराजिभिर्बद्धं व्याप्तम्।

---

१. 'पुरीषानिलवाहि' ख. घ।

अथवा अराजि स्यात् । तथोदरं प्रायेण नाभेरुपरिष्टाद् गोपुच्छाकृति जायते । यथायथोर्ध्वं तथा तथा सूक्ष्ममित्यर्थः । अनेनास्य संस्थानमुक्तम् ॥

अधुना छिद्रोदरं लक्षयति—

अस्थ्यादिशल्यैः सान्नैश्चेद् भुक्तैरत्यशनेन वा ॥ ३२ ॥

भिद्यते पच्यते वान्त्रं तच्छिद्रैश्च स्रवन् बहिः ।
आम एव गुदादेति ततोऽल्पाल्पं स्रवन् रसः ॥ ३३ ॥

तुल्यः कुणपगन्धेन पिच्छिलः पीतलोहितः ।
शेषश्चापूर्य जठरं जठरं घोरमावहेत् ॥ ३४ ॥

वर्धयेत्तदधो नाभेराशु चैति जलात्मताम् ।
उद्रिक्तदोषरूपं च व्याप्तं च श्वासतृड्भ्रमैः ॥ ३५ ॥

छिद्रोदरमिदं प्राहुः परिस्रावीति चापरे ।

अस्थ्यादीत्यादि । अस्थितृणकण्टकपाषाणधातुशृङ्गदार्वादिभिः शल्यैः सान्नैः सह भोजनेन भुक्तैः । अथवात्यशनेन अतिमात्रभोजनेन यदान्त्रं भिद्यते सच्छिद्रं सम्पद्यते। पच्यते वेति । अथवा पच्यते पाकं याति । तच्छिद्रैः आन्त्रच्छिद्रैः भिन्नपक्वान्त्रच्छिद्रैः भेदोत्पन्नैः पाकतो वा आम एव अपरिपक्व एव बहिः स्रवन् रसः अल्पाल्पं सविड् गुदादेत्यायाति । इन्दुरपि–"तच्छिद्रैः भिन्नपक्वान्त्रच्छिद्रैः स्रवन्" इत्याह । अन्ये विड्रस इत्याहुः । तुल्यः सदृशः । कुणपगन्धेन शवगन्धेन । तथा पिच्छिलः पीतलोहितो वर्णेन । शेषश्च रसो गुदान्नागच्छति । स जठरमापूर्य पूरयित्वा तिष्ठन् घोरं कष्टतरं जठरं जठराख्यं व्याधिं कुर्यात् । तदुदरमधो नाभेर्वर्धयेत् वृद्धिं गच्छेत् । वृद्धिश्चुरादिः । वर्धत इति वा पाठः । तथा आशु शीघ्रमेव जलात्मतां जलोदरत्वमेति । उद्रिक्तदोषरूपश्च । उद्रिक्तमधिकं दोषाणां वातपित्तकफानां रूपमाकृतिर्यस्य तदेवम् । वातादिदोषान्वयेन यानि रूपाणि तान्युद्रिक्तानि भवन्तीत्यर्थः । तथा श्वासादिभिः व्याप्तम् अतिशयेन युक्तमिदं छिद्रोदरं प्राहुराचार्याः । अपरे त्वचार्याः परिस्रावीत्याहुः । छिद्रोदरस्यैव परिस्रावीति नाम ॥

अथ उदकोदरमाह—

**प्रवृत्तस्नेहपानादेः सहसामाम्बुपायिनः ॥ ३६ ॥**
**अत्यम्बुपानान्मन्दाग्नेः क्षीणस्यातिकृशस्य वा ।**
**रुद्ध्वाम्बुमार्गाननिलः कफश्च जलमूर्च्छितः ॥ ३७ ॥**
**वर्धयेतां तदेवाम्बु तत्स्थानादुदराश्रितौ ।**
**ततः स्यादुदरं तृष्णागुदस्रुतिरुजायुतम् ॥ ३८ ॥**
**कासश्वासारुचियुतं नानावर्णसिराततम् ।**
**तोयपूर्णदृतिस्पर्शशब्दप्रक्षोभवेपथु ॥ ३९ ॥**
**दकोदरं महत्स्निग्धं स्थिरमावृत्तनाभि तत् ।**

प्रवृत्तेत्यादि । प्रवृत्तमारब्धं स्नेहपानादि यस्य । आदिग्रहणाद् वमनादिकं कर्म पञ्चविधं गृह्यते । तस्य तथाभूतस्य नरस्य सहसा आमाम्बुपायिनः सहसैवापक्वजलपायिनः । तथा मन्दाग्नेः अत्यम्बुपानात् । तथा क्षीणस्य विशिष्टव्याध्याक्रान्ततया धात्वपचयतः । तथातिकृशस्य वा अनशनादिना क्षीणमेदोमांसस्य पुरुषस्य अत्यम्बुपानाद् अनिलः कफश्च । किम्भूतः । जलमूर्च्छितः तोयमिश्रितः । तावुभौ वातकफौ जलमूर्च्छितावुदराश्रितौ अम्बुमार्गान् तोयवाहीनि स्रोतांसि रुद्ध्वा तदेवाम्बु जठराश्रितं तत्स्थानाद् उदकस्थानात् क्लोम्नो वर्धयेताम् । ततोऽनन्तरम् उदरं स्यात् तृष्णादियुतम् । तथा नानावर्णाभिः सिराभिस्ततं व्याप्तम् । तथा तोयपूर्णदृतिवत् स्पर्शादयो यस्मिन् उदरे तदेवम् । शब्दस्य प्रक्षोभः शब्दप्रक्षोभः । वेपथुः कम्पः । स्पर्शश्च शब्दप्रक्षोभश्च वेपथुश्चेति द्वन्द्वः । तद्दकोदरं जलोदरं स्यात् । तदन्येभ्य उदरेभ्यो महद् विस्तीर्णं तथा स्थिरमचलं तथा आवृत्तनाभि आसमन्ताद् वृत्ता वर्तुला नाभिर्यस्य तदेवम् ॥

अथ सर्वोदरेष्वन्ते जलसम्भवहेतुमाह—

**उपेक्षया च सर्वेषु दोषाः स्वस्थानतश्च्युताः ॥ ४० ॥**
**पाकाद् द्रवा द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि ।**
**स्वेदश्च बाह्यस्रोतःसु विहतस्तिर्यगास्थितः ॥ ४१ ॥**

**तदेवोदकमाध्माप्य पिच्छां कुर्युस्तदा भवेत् ।**
**गुरूदरं स्थिरं वृत्तमाहतं च न शब्दवत् ॥ ४२ ॥**
**मृदु व्यपेतराजीकं नाभ्यां स्पृष्टं च सर्पति ।**
**तदनूदकजन्मास्मिन् कुक्षिवृद्धिस्ततोऽधिकम् ॥ ४३ ॥**
**सिरान्तर्धानमुदकजठरोक्तं च लक्षणम् ।**

उपेक्षयेत्यादि । उपेक्षया अचिकित्सनाद् दोषाः वातपित्तकफाः स्वस्थानतः आत्मीयस्थानात् च्युताः स्थानान्तरं गताः तथा पाकाद्धेतोः ते दोषाः स्वयं द्रवाः अधिकद्रवाः द्रवीकुर्युः । सन्धिस्रोतोमुखान्यपि सन्धयश्च स्रोतोमुखानि च द्वाराणि सन्धिस्रोतोमुखानि । न केवलं स्वयं दोषाः द्रवत्वं गताः यावत् सन्धिस्रोतोमुखान्यपि द्रवीकुर्युरित्यपिशब्दस्यार्थः । स्वेदश्च बाह्यस्रोतःसु संवृतेषु विहतो निरुद्धः तिर्यगास्थितः तिर्यक् प्रवृत्तः तदेवोदकं कुक्षौ वृद्धिं गतमाप्याय्य वृद्धिं गमयित्वा पिच्छां कुर्यात् । तदा उदरं गुरु भवेत् । स्थिरमचलम् । वृत्तं वर्तुलम् । तथाहतं च पाण्यादिना न शब्दवत् न शब्दयुतम् । तथा मृदु अकठिनम् । तथा व्यपेता राज्यो यस्मात् तद् व्यपेतराजीकं स्यात् । नाभ्यां च स्पृष्टं सत् सर्पति प्रसारि सम्पद्यते । तदनु तदनन्तरं अस्मिन्नुदराख्ये व्याधौ उदकजन्म जलसम्भवः । ततोऽनन्तरम् अधिकं कृत्वा कुक्षिवृद्धिर्भवेत् । तथा सिरान्तर्धानमुक्तानां यथास्वं सिराणामदर्शनं च । किमेतावदेव लक्षणं, नेत्याह—उदकजठरोक्तं च लक्षणं स्यात् । न केवलमेतावदेवोक्तं लक्षणं यावज्जलोदरोक्तं चेति चशब्दस्यार्थः ॥

इदानीमुदराणां सुखसाध्यत्वाभावात् कृच्छ्रसाध्यासाध्यत्वे वेदयति—

**वातपित्तकफप्लीहसन्निपातोदकोदरम् ॥ ४४ ॥**
**कृच्छ्रं यथोत्तरं पक्षात् परं प्रायोऽपरे हतः ।**

वातेत्यादि । वाताद्युद्भवमुदरं यथोत्तरं कृच्छ्रं कृच्छ्रसाध्यम् । तेन वातोदरात्पित्तोदरं कृच्छ्रं, ततः कफोदरं, ततः प्लीहोदरं, ततः सन्निपातोदरं, ततः कृच्छ्रमुदकोदरमिति यथोत्तरार्थः । वातोदरादिभ्योऽपरे द्वे बद्धक्षतोदरे पक्षात्परं पक्षादनन्तरं हतो मारयतः । प्रायोग्रहणं पक्षादर्वागपि मारयतः (?) इति प्रतिपत्त्यर्थम् ।

इन्दुरपि—"अपरे बद्धच्छिद्रोदरे प्रायः पक्षादूर्ध्वं हतो मारयतः। प्रायोग्रहणं पक्षादधरेऽपीति प्रतिपत्त्यर्थम्" इत्याह। अरुणदत्तस्त्वाह—"प्रायोग्रहणात् कदाचिन्नियतायुष्युत्पन्ने नैव मारयतः" इति॥

**सर्वं च जातसलिलं रिष्टोक्तोपद्रवान्वितम्॥ ४५॥**

सर्वं च जातसलिलमिति। किलोपेक्षया सर्वेषूदरेष्वन्ते सलिलसम्भव इत्युक्तम्। सर्वं जठरं जातोदकं यद्वातादिसमुत्थं कृच्छ्रमुक्तं तदपि हन्त्येव। अत्रापि प्रायोग्रहणमनुवर्तनीयम्। कदाचिज्जातोदकमपि न मारयति अपि तु यापयत्येव। तथा रिष्टोक्तोपद्रवान्वितं रिष्टाध्यायोक्तैरुपद्रवैर्युतं जठरं हन्ति। "दुर्बलं शूनाक्षं कुटिलोपस्थम्" इत्यादिभिश्च तदपि हन्ति। इन्दुरपि—"सर्वमुदरं जातसलिलत्वादियुक्तं हन्ति" इत्याह॥

दुश्चिकित्स्यताज्ञापनार्थमिदमाह—

**जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम्।**
**बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम्॥ ४६॥**

जन्मनैवेत्यादि। जन्मना जात्या सम्प्राप्त्यैव सर्वमुदरं प्रायो विशेषेणात्यर्थं वातव्याध्यादिभ्यः कृच्छ्रतरेभ्यः कृच्छ्रतमं दुःखतमं मतं व्याधिस्वभावादिति। वातविकारादयस्तु प्रतीकारासम्भवे बद्धमूलाः कृच्छ्रतमत्वं प्रतिपद्यन्ते। इदं तु जन्ममात्रेणैव चिरकालसमुत्पन्नत्वात्। उदरं हि मन्दाग्नेः क्षीणसर्वधातोः क्षीणबलमांसस्य ऊर्ध्वाधःस्रोतःसंदुष्टौ सत्यां मन्दमन्दं चिरेण बद्धमूलमाध्मानादिभिः आत्ययिकीं पीडामावहदात्मानं लभते। प्रायोग्रहणात् किञ्चिदुदरं कृच्छ्रमेव भवति न कृच्छ्रतमम्। अत एवाह—बलिन इत्यादि। तदुदरं बलिनो बलवतः पुरुषस्य उत्थितमजाताम्बु अजातोदकं नवोत्थितं सत् यत्नसाध्यं कृच्छ्रसाध्यमेव भवेत्। न तु कृच्छ्रतमम्। औषधसहिष्णुताबलं चात्र बलमभिप्रेतम्। सर्वोदराणां पूर्वरूपावस्थायामेव बलक्षयाभिधानात्। अजाताम्बुत्वेनैव नवोत्थितत्वे लब्धे तद्ग्रहणं वातोदरादीनां विनाप्युदकेन चिरोत्थितत्वं सम्भवतीति॥

इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने द्वादशोऽध्यायः॥

---

# त्रयोदशोऽध्यायः ।

मांसाद्युपघातदोषकोपसादृश्यादुदरानन्तरं पाण्ड्वादिनिर्णयायाध्यायारम्भः ।
अथवा उदरवत् त्रिदोषजत्वात् पाण्ड्वादीनाह । अथवा—

त्रिदोषजत्वसामान्यात् पाण्डुमाह ततः परम् ।
उपद्रवत्वाच्छोफं च तत्सामान्याद्विसर्पकम् ॥

'शोफसामान्यात् पाण्डुरोगमाह' इति पाठ्ये ।

**अथातः पाण्डुरोगशोफविसर्पनिदानं व्याख्यास्यामः ।**

अथात इति ॥

**पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ।**
**तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितम् ॥ १ ॥**

**धमनीर्दश सम्प्राप्य व्याप्नुवत्सकलां तनुम् ।**
**श्लेष्मत्वग्रक्तमांसानि प्रदूष्यान्तरमाश्रितम् ॥ २ ॥**

**त्वङ्मांसयोस्तत् कुरुते त्वचि वर्णान् पृथग्विधान् ।**
**पाण्डुहारिद्रहरितान् पाण्डुत्वं तेषु चाधिकम् ॥ ३ ॥**

**यतोऽतः पाण्डुरित्युक्तः स रोगः,**

पित्तेत्यादि । मला वातादयः पित्तप्रधाना यथोक्तैः सर्वरोगनिदानोक्तैः कोपनैः कुपिताः पाण्डुरोगहेतवः स्युरिति शेषः । कथमित्याह—तत्रेत्यादि । तत्र तेषु तथाभूतेषु सत्सु बलिना बलवता वातेन क्षिप्तं पित्तं हृदि स्थितम् अनन्तरं तत्पित्तं धमनीर्दश हृदाश्रिताः सम्प्राप्याश्रित्य सकलां तनुं व्याप्नुवद् अश्नुवानम् । सकलशब्दोपादानं मूत्रपुरीषादीनामपि ग्रहणार्थम् । अत एवाख्यास्यति—

"रूक्षकृष्णारुणसिरानखविण्मूत्रनेत्रता ।"

इति । तथा श्लेष्मत्वग्रक्तमांसानि प्रदूष्य । किम्भूतं पित्तं, त्वङ्मांसयोरन्तरं मध्यमाश्रितम् । तत्पित्तं त्वचि वर्णान् पृथग्विधान् नानाप्रकारान् पाण्डुहारिद्र-हरितान् कुरुते । तेषु वर्णेषु मध्ये यतो यस्माद् अतिशयेन पाण्डुत्वमधिकम्

अतोऽस्मात् स रोगः पाण्डुरित्युक्तः कथितः । इन्दुना चोक्तम्-"मलां वातादयः सर्वे यथोक्तैः सतिक्तकटुकादिभिः कोपनैः कुपिताः पित्ताधिका यत्र भवन्ति इति यत्तदोर्नित्यसम्बन्धाद्विज्ञेयम् । तत्रेत्यादिना पाण्डुरोगस्य सम्प्राप्तिनिरुक्तिः । तदिति पित्तपरामर्शः" इति । ननु पित्तप्रधाना इति कथमुक्तम् । यावता वायोर्बलीयस्त्वाद्वातप्रधाना इति वक्तुं युक्तं स्यात् । बलीयस्त्वं चानन्तरमेव प्रतिपादितम् । "तत्रानिलेन बलिना क्षिप्त"मिति । असदेतत् । यतो नात्र बलीयस्त्वाबलीयस्त्वकृते प्राधान्याप्राधान्ये विवक्षिते । किं तर्हि पाण्डुरोगकरणं प्रति कर्तृत्वाकर्तृत्वे । पित्तस्य च पाण्डुरोगकरणं प्रति मुख्यकर्तृत्वम् । अतः पित्तप्रधाना इति युक्तमुक्तम् । ननु यदि त्रिदोषाः पाण्डुरोगहेतवः कथं तर्हि वक्ष्यति "स पञ्चधा पृथग्दोषैः समस्तैः" इति । उच्यते । सर्वे पाण्डुरोगाः त्रिदोषजा एव । किन्तु हेतुविशेषैः यो रूपभेदः तेन पञ्चात्मकः शोफवदिति न किञ्चिदत्रायुक्तम् ॥

**तेन गौरवम् ।**
**धातूनां स्याच्च शैथिल्यमोजसश्च गुणक्षयः ॥ ४ ॥**

**ततोऽल्परक्तमेदस्को निःसारः स्याच्छ्लथेन्द्रियः ।**
**मृद्यमानैरिवाङ्गैर्ना द्रवता हृदयेन च ॥ ५ ॥**

**शूनाक्षिकूटः सदनः कोपनः ष्ठीवनोऽल्पवाक् ।**
**अन्नद्विट् शिशिरद्वेषी शीर्णरोमा हतानलः ॥ ६ ॥**

**सन्नसक्थो ज्वरी श्वासी कर्णक्ष्वेडी भ्रमी श्रमी ।**

तेनेत्यादि । तेन पाण्डुरोगेण शरीरस्य गौरवं स्यात् । तथा धातूनां रसरुधिरादीनां शैथिल्यं च स्वरूपाद् हानिः स्यात् । अरुणदत्तस्तु-"धातूनां गौरवं शैथिल्यं च स्या"दित्याह । तथौजसो गुणक्षयश्च । ओजसो ये गुणाः मन्दमधुरशीतादयः तेषां क्षयो विनाशः । ततो धातुषु च शिथिलेषु ओजसि च क्षीणगुणे पाण्ड्वामयी ना पुरुषः अल्परक्तत्वादियुक्तः स्यात् । अरुणदत्तस्तु-"तत एवौजसः क्षयात्" इत्याह । अल्पे रक्तमेदसी यस्य स एवम् ।

---

१. 'लाः दुष्टा वा' मुद्रितपाठः ।

तथा निःसारो निर्बलः। तथा श्लथेन्द्रियः श्लथानि शिथिलानि इन्द्रियाणि यस्य स एवम्। इन्द्रियशब्देन कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थरूपाणां ग्रहणम्। तथा बुद्धीन्द्रियाणां चक्षुरादीनामधिष्ठानान्युपलक्ष्यन्ते। ननु 'पित्त-प्रधानाः कुपिताः' इति पित्तवृद्धिरुक्ता। पित्तवृद्ध्या च रक्तवृद्ध्या भवितव्यम्। तत्कथमुक्तमल्परक्त इति। अत्रोच्यते—दोषाणामन्योन्यदूषणाद् दूष्यस्य च दोषैर्दूषितत्वात् प्रसादपरम्परया अपुष्टौ सत्यां कीटबाहुल्यात् पित्ताधिक्यं, न रक्तस्य प्रसादात्मकस्येति पित्ताधिक्यमल्परक्तता चेत्युपपन्नम्। तथाङ्गैरवयवैः मृद्यमानैरिवासौ नर उपलक्षितः। तथा हृदयेन द्रवता च। तथा शूनावक्षि-कूटौ यस्य स एवम्। तथा सदनोऽङ्गे सादवान्। 'शूनाक्षिकूटवदनः' इति केचित् पठन्ति॥

**स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात्॥ ७॥**

स पाण्डुरोगः पञ्चधा स्यात्। कथम्। पृथग्दोषैः सन्निपातेन मृद्भक्षणाच्च। मृद् भक्षिता दोषमुखेन पाण्डुरोगकर्त्री। ननु मृत्तिकादनात् पृथक् पाण्डुरोगो न वाच्यः। पृथग् वातादिदोषजे पाण्डुरोगेऽन्तर्भूतत्वात्। मृदा हि वातादिप्रकोपो विधीयते तिक्तोषणादिभिरिव। वातादिप्रकोपश्च पाण्डुरोगकृत्। तस्मात् पृथङ् मृदो निर्देशो न युक्तः। अत्र ब्रूमः। मृदोऽन्ये ये वातादि-प्रकोपहेतवः पाण्डुरोगसम्पादनयोग्याः ते पाण्डुरोगं सम्पाद्य हेतुस्वरूपनिश्चये विनिवर्तन्ते। मृत्तिका तीक्ष्णैः संशोधनैर्विना पाण्डुरोगो यावत् कायेऽवतिष्ठत इत्ययं वातादिकोपहेतुभ्योऽन्येभ्यो मृदः पाण्डुरोगं प्रति विशेषः। तस्मान्मृदा पृथक् पाण्डुरोगो वक्तुं न्याय्यः॥

**प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि।**
**अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवह्निता॥ ८॥**
**सादः श्रमः,**

प्राग्रूपमस्येत्यादि। अस्य सर्वस्य पाण्डुरोगस्य हृदयस्पन्दनादि पूर्व-रूपम्॥

**अनिलात्तत्र गात्ररुक्तोदकम्पनम्।**
**कृष्णरूक्षारुणसिरानखविण्मूत्रनेत्रता॥ ९॥**

शोफानाहास्यवैरस्यविड्शोषाः पार्श्वमूर्धरुक् ।

अनिलात्तत्रेत्यादि । तत्र तेषु पाण्डुरोगेषु मध्ये वातात् पाण्डुरोगे गात्ररुगादयः स्युः ।

पित्ताद्धरितपीताभसिरादित्वं ज्वरस्तमः ॥ १० ॥
तृट्स्वेदमूर्च्छाशीतेच्छा दौर्गन्ध्यं कटुवक्त्रता ।
वर्चोभेदोऽम्लको दाहः,

पित्तात् पाण्डुरोगे हरितपीताभसिरादित्वादि लक्षणं स्यात् । आदिग्रहणेन नखविण्मूत्रनेत्राणां ग्रहणम् ॥

कफाच्छुक्लसिरादिता ॥ ११ ॥
तन्द्रा लवणवक्त्रत्वं रोमहर्षः स्वरक्षयः ।
कासश्छर्दिश्च,

कफात् पाण्डुरोगे शुक्लसिरादिच्छर्द्यन्तं लक्षणं स्यात् ।

निचयान्मिश्रलिङ्गोऽतिदुःसहः ॥ १२ ॥

निचयात् सन्निपातात् पाण्डुरोगो मिश्रलिङ्गः । स च अतिदुःसहः घोरतमः ॥

मृत् कषायानिलं पित्तमूषरा मधुरा कफम् ।
दूषयित्वा रसादींश्च रौक्ष्याद् भुक्तं विरूक्ष्य च ॥ १३ ॥
स्रोतांस्यपक्वैवापूर्य कुर्याद् रुध्वा च पूर्ववत् ।
पाण्डुरोगं ततः शूननाभिपादास्यमेहनः ॥ १४ ॥
पुरीषं कृमिमन्मुञ्चेद्भिन्नं सासृक्कफं नरः ।

मृदित्यादि । मृद् भक्षिता कषायरसा वातं दूषयित्वा पाण्डुरोगं कुर्यात् । ऊषरा सक्षारा मृत्तिका पित्तं दूषयित्वा पाण्डुरोगं कुर्यात् । तथा रसादींश्च धातून् दूषयित्वा । मृदो रसविशेषेण दोषविशेषकोपनत्वम् । रसादिदूषणं साधारणम् । रौक्ष्याच्च हेतोः भुक्तं विरूक्ष्य चेति । यत् स्वभावत एव मृत्तिका रूक्षा तस्माद् भुक्तं विरूक्षयति । स्रोतांसि चापूर्य रुध्वा च अपक्वैव सती । मृत्तिकाया दुष्पाकत्वात् पाकाभावः । अथवा नञीषदर्थे । किञ्चित्पक्वेत्यर्थः ।

पूर्ववदिति पाण्डुरोगसमानसम्प्राप्त्या तैरेव च लक्षणैः पाण्डुरोगं कुर्यात्। अत्र तु नाभिश्वयथ्वादि विशेषः। **अरुणदत्तो**ऽपि–'पूर्ववत् पित्तप्रधानाः कुपिताः इत्यादिना न्यायेन" इत्याह। ततः तेन पाण्डुरोगेण शूननाभ्यादिकः कृम्यादियुतं पुरीषं मुञ्चेत्॥

उक्तः पाण्डुरोगः। अथ तदङ्गभूता कामिलोच्यते—

**यः पाण्डुरोगी सेवेत पित्तलं तस्य कामिलाम्॥ १५॥**

**कोष्ठशाखाश्रयां पित्तं दग्ध्वासृङ्मांसमावहेत्।**

**हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तया॥ १६॥**

**दाहाविपाकतृष्णावान् भेकाभो दुर्बलेन्द्रियः।**

यः पाण्डुरोगीत्यादि। **अरुणदत्तस्तु**—"प्रतिज्ञावाक्ये अनुक्तामपि कामिलां तुल्यहेत्वादिकत्वात् प्रदर्शयती"त्याह। यो नरः पाण्डुरोगी सन् पित्तलं मरिचादिकं द्रव्यमत्यर्थं [1]सेवेत उपयुङ्क्ते। "पित्तलमाहारादिक"मिती**न्दुः**। तस्य पाण्डुरोगिणः पित्तं कर्तृ कामिलामावहेत्। कीदृशीम्। कोष्ठशाखाश्रयां कोष्ठो महास्रोतः शाखा रक्तादयः त्वक् च तदुभयमाश्रयो यस्यास्ताम्। किं कृत्वा। असृङ्मांसं दग्ध्वा। तया च कामिलया पुरुषो हारिद्रनेत्रादिकः स्यात्। अथवा हारिद्राणि नेत्रमूत्रादीनि यस्य तस्य भावस्तत्ता तया उपलक्षितः। तथा च दाहादिमान् भेकाभः मण्डूकच्छायः। दुर्बलानि स्वविषयग्रहणेष्वशक्तानीन्द्रियाणि यस्य स एवम्॥

**भवेत् पित्तोल्बणस्यासौ पाण्डुरोगादृतेऽपि च॥ १७॥**

असौ कामिला पाण्डुरोगाद्विनापि पित्तोल्बणस्य भवति॥

**उपेक्षया च शोफाढ्या सा कृच्छ्रा कुम्भकामिला।**

उपेक्षयेत्यादि। उपेक्षया अचिकित्सनात् सैव कामिला यदा शोफाढ्या श्वयथुबहुला स्यात् तदा कुम्भकामिलेत्युच्यते। कृच्छ्रा कृच्छ्रसाध्या॥

हलीमकं लक्षयति—

**हरितश्यावपीतत्वं पाण्डुरोगे यदा भवेत्॥ १८॥**

---

1. 'सेवते उ' ग.

**वातपित्ताद्भ्रमस्तृष्णा स्त्रीष्वहर्षो मृदुर्ज्वरः ।**
**तन्द्रा बलानलभ्रंशो लोढरं तं हलीमकम् ॥ १९ ॥**

**अलसं चेति शंसन्ति,**

हरितेत्यादि । पाण्डुरोगे सति यदा हरितादिरूपत्वं वातपित्ताधिक्याद् भवेद् भ्रमादयश्च तदा तं रोगं हलीमकं शंसन्ति मुनय इति शेषः । तमेव लोढरं तमेवालसं च शंसन्ति ॥

**तेषां पूर्वमुपद्रवाः ।**
**शोफप्रधानाः कथिताः स एवातो निगद्यते ॥ २० ॥**

तेषां पाण्डुरोगप्रकाराणां पूर्वमुपद्रवाः यतः शोफप्रधानाः कथिताः अतोऽस्माद्धेतोः पाण्डुरोगनिदानानन्तरं शोफ एव भण्यते । न विसर्पः । शोफः प्रधानः प्रथमो येषां त एवं, कथिताः । क । इहैव । यथोक्तं–'शूनाक्षिकूट' इत्यादि । तथा 'शूननाभिपादास्यमेहनः' इति च । इन्दुनाप्युक्तं–"तेषामिति प्रधानानां पाण्डुरोगाणां ग्रहणम् । पूर्वमिति विकृतिविज्ञानीये शोफप्रधाना उपद्रवाः कथिताः "पाण्डुरोगः श्वयथुमान्" इत्यादिना । अतः कारणादत्र शोफ एव निगद्यते" इति ॥

**पित्तरक्तकफान् वायुर्दुष्टो दुष्टान् बहिः सिराः ।**
**नीत्वा रुद्धगतिस्तैर्हि कुर्यात् त्वङ्मांससंश्रयम् ॥ २१ ॥**
**उत्सेधं संहतं शोफं तमाहुर्निचयादतः ।**
**सर्वं,**

स्वकारणेन दुष्टः कुपितो वायुः पित्तरक्तकफान् दुष्टान् तत्कोपनैः कुपितान् बहिः सिराः नीत्वा तैरेव पित्तादिभी रुद्धगतिः सन् त्वङ्मांससंश्रयं संहतरूपमुत्सेधं शोफं नाम्ना रोगं कुर्यादिति सम्बन्धः । बहिर्भूताः सिराः बाह्याः सिराः । नयतेर्द्विकर्मकत्वात् पित्तादयो बहिःसिराश्च कर्म । यथा अजां नयति ग्राममिति । तेनायमर्थोऽवतिष्ठते । बहिःसिरासु पित्तादीन् नीत्वेति । त्वक् च

---

१. 'ना तूक्तं' ग ।

मांसं च त्वङ्मांसे। ते संश्रय आश्रयो यस्य तमेवम्। तैर्हीति हिशब्दोऽवधारणे। तैरेव बहिःसिराः प्राप्तैः पित्तादिभी रुद्धगतिरत एव संहतं समन्ताद्धतं निश्चलमिव सम्पन्नमुत्सेधम्। यतश्चैवं वातपित्तकफैः शोफः संजायते अतोऽस्मात्कारणात् सर्वं तच्छोफं निचयाद्दोषत्रयादाहुः ॥

नन्वेवं सति इदं विरुध्यते दोषैः पृथक् सर्वैरित्यत आह—

**हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ॥ २२ ॥**

**दोषैः पृथग् द्वयैः सर्वैरभिघाताद्विषादपि ।**
**द्विधा वा निजमागन्तुं सर्वाङ्गैकाङ्गजं च तम् ॥ २३ ॥**

**पृथून्नतग्रथितताविशेषैश्च त्रिधा विदुः ।**

हेतुविशेषैस्त्वित्यादि। तुशब्दो विशेषार्थे। यद्यपि सर्वः त्रिदोषजः शोफः उक्तः तथापि हेतुविशेषैः यो रूपभेदः तस्मान्नवात्मकं शोफमाहुः। तथा हि योऽयं सन्निपातः शोफहेतुरेव कदाचित् समं कृत्वा कुप्यति एकदोषद्विदोषवृद्धिस्वरूपतया। एवं च वातादिहेतुविशेषैः यो रूपभेदो लक्षणभेदः तस्मान्नवप्रकारत्वं शोफस्य न्याय्यमेव। लक्षणभेदश्चैषां स्पष्ट एव। तथा च पृथग्दोषजे श्वयथावन्यलक्षणं द्वन्द्वजे चान्यत् सन्निपातजे चान्यद् अभिघातजे चान्यद् विषजे चान्यद् इत्येवं लक्षणविशेषान्नवात्मकत्वम्। उपलक्षणं चेदम्। चिकित्साविशेषादपि नवात्मक एव शोफः। (दोषैः) पृथग् द्वयैः संसृष्टैः सर्वैः सन्निपतितैश्चेति सप्त। अभिघाताद्विषादिति द्वौ। अथवा किं नवत्वेन। निजागन्तुभेदेन द्विधा द्विविधमेव शोफमाहुः। वातादियुक्तो निजः। शेष आगन्तुरिति। तथा अपरं च द्वैविध्यमाह—तं शोफं सर्वाङ्गजं सर्वशरीरजं एकाङ्गजं एकावयवजं चेति पुनः द्विप्रकारमाहुः। पृथ्वादिविशेषेण तस्यैव त्रिविधत्वमाह—पृथुश्च उन्नतश्च ग्रथितश्च तेषां भावः पृथून्नतग्रथितता तया विशेषैस्तैः त्रिधा त्रिप्रकारं शोफं विदुः। पृथुर्विस्तीर्णः ॥

सम्प्राप्तिं हेतुपुरस्सरमाह—

**सामान्यहेतुः शोफानां दोषजानां विशेषतः ॥ २४ ॥**

वक्ष्यमाणो गुर्वम्लस्निग्धशीतादिको वर्गः श्वयथूनां निजानामागन्तूनां च सामान्येन हेतुः उत्पत्तौ कारणम् । दोषजानां पुनरतिशयेन हेतुः न तथागन्तूनामिति विशेषशब्देन द्योतयति । इन्दुना तूक्तम्–"तत्र दोषजानधिकृत्याह सामान्यहेतुरित्यादि । वातादिजानां शोफानां हेतुः सामान्यः साधारणः सर्वरोगनिदानाद्युक्तः । व्याधीत्यादि तेषां विशेषतोऽतिशयेन हेतु"रिति ॥

व्याधिकर्मोपवासादिक्षीणस्य भजतो द्रुतम् ।
अतिमात्रमथान्यस्य गुर्वम्लस्निग्धशीतलम् ॥ २५ ॥
लवणक्षारतीक्ष्णोष्णं शाकाम्बु स्वप्नजागरम् ।
मृद्ग्राम्यमांसवल्लूरमजीर्णश्रममैथुनम् ॥ २६ ॥
पदातेर्मार्गगमनं यानेन क्षोभिणापि वा ।
श्वासकासातिसारार्शोजठरप्रदरज्वराः ॥ २७ ॥
विषूच्यलसकच्छर्दिगर्भवीसर्पपाण्डवः ।
अन्ये च मिथ्योपक्रान्तास्तैर्दोषा वक्षसि स्थिताः ॥ २८ ॥
ऊर्ध्वं शोफमधो वस्तौ मध्ये कुर्वन्ति मध्यगाः ।
सर्वाङ्गगाः सर्वगतं प्रत्यङ्गेषु तदाश्रयाः ॥ २९ ॥

व्याधीत्यादि । व्याध्यादिभिः क्षीणस्य व्याधिना ज्वरादिना क्षीणस्य कर्मणा वमनविरेचननिरूहानुवासननस्याख्येन, तथोपवासेन । आदिग्रहणेनान्येन च मार्गादिना क्षीणस्य द्रुतं कृत्वा सहसैव गुर्वादिकं भजतः । अथेति समुच्चये । व्याध्यादिक्षीणलक्षणेभ्यः सकाशादन्यस्य स्वस्थादेरप्यतिमात्रं मात्रामतिक्रम्य गुर्वादिकं भजतो दोषा वक्षसि स्थिताः ऊर्ध्वं शोफं कुर्वन्ति । इन्दुः पुनराह–"व्याध्यादिभिः क्षीणस्य द्रुतं झटिति गुर्वादि भजतः[1] । अथ व्याधिक्षीणत्वादिं विनैवान्यस्यातिमात्रं मात्राधिक्येन गुर्वादिकं भजतः" इति । स्वप्नोऽत्र अहःस्वप्नः । जागरश्च रात्रिजागरो बोध्यः । ग्राम्याणां च[2] कुक्कुटादीनां मांसं ग्राम्यमांसम् । वल्लूरं शुष्कमांसम् । 'शुष्कमत्स्य'मिति पाठे ।

१. 'तः । व्याधिक्षीणादिमत्त्वं विनै–' इति मुद्रिते । २. 'चटककुक्कुटा–' ख. ग. घ. ङ ।

अजीर्णे अध्वादिना श्रमम् । अजीर्णे एव च मैथुनं पदातेर्मार्गगमनं भजतः यानेन तुरगादिना क्षोभिणा शरीरसंरम्भजनकेनापि वा मार्गगमनं भजतः । श्वासादयः पाण्डुरोगपर्यन्ता रोगाः प्राधान्येन तथान्येऽपि कासश्वासादिव्यतिरिक्ता रोगा मिथ्योपक्रान्ताः[1] शोफहेतवः । प्रदरोऽतिरजः । तैः हेतुभिर्दुष्टाः दोषाः वक्षसि स्थिताः ऊर्ध्वं शरीरस्य पूर्वभागे शोफं कुर्वन्ति । वस्तौ स्थिता अधः शोफं कुर्वन्ति । मध्यगाः मध्ये कुर्वन्ति । सर्वाङ्गगाः सर्वगतं कुर्वन्ति । प्रत्यङ्गेषु तदाश्रयाः प्रत्यङ्गाश्रयाः दोषाः शोफं कुर्वन्ति ॥

सर्वशोफेषु पूर्वरूपं दर्शयति तदित्यादिना—

**तत्पूर्वरूपं दवथुः सिरायामोऽङ्गगौरवम् ।**

तस्य शोफस्य तेषां वा पूर्वरूपं तत्पूर्वरूपं दवथ्वादयः । चक्षुरादिषु इन्द्रियेषु दाहो दवथुः । तथा सिरायामः यत्र प्रदेशे श्वयथुरुग् बुभूषुस्तत्र सिराणां दैर्ध्यमिव ॥

क्रमेण नवानां शोफानां लक्षणमुच्यते—

**वाताच्छोफश्चलो रूक्षः खररोमारुणासितः ॥ ३० ॥**
**सङ्कोचस्पन्दहर्षार्तितोदभेदप्रसुप्तिमान् ।**
**क्षिप्रोत्थानशमः शीघ्रमुन्नमेत् पीडितस्तनुः ॥ ३१ ॥**
**स्निग्धोष्णमर्दनैः शाम्येद्रात्रावल्पो दिवा महान् ।**
**त्वक् च सर्षपलिप्तेव तस्मिंश्चिमिचिमायते ॥ ३२ ॥**

वातादित्यादि । वातात् शोफः चलादिलक्षणः । पीडितः करेणाक्रान्तः शीघ्रमुन्नमेत् ॥

**पीतरक्तासिताभासः पित्तादाताम्ररोमकृत् ।**
**शीघ्रानुसारप्रशमो मध्ये प्राग् जायते तनुः ॥ ३३ ॥**
**सतृड्दाहज्वरस्वेददवक्लेदमदभ्रमः ।**
**शीताभिलाषी विड्भेदी गन्धी स्पर्शासहो मृदुः ॥ ३४ ॥**

---

1. 'न्ताः मिथ्योपचरिता अयथाशास्त्रमुपक्रान्ताः शोफ–' ख, ग, घ, ङ ।

पित्ताच्छोफः पीतरक्तासिताभासादिलक्षणः। स च मध्ये मध्यप्रदेशे प्राक् पूर्वं जायते। प्राग्ग्रहणं पश्चात्सकलेऽपि देहदेशे स्यादिति द्योतयति॥

**कण्डूमान् पाण्डुरोमत्वक्कठिनः शीतलो गुरुः।**
**स्निग्धः श्लक्ष्णः स्थिरः स्त्यानो निद्राच्छर्द्यग्निसादकृत्॥ ३५॥**

**आक्रान्तो नोन्नमेत् कृच्छ्रशमजन्मा निशाबलः।**
**स्रवेन्नासृक् चिरात्पिच्छां कुशशस्त्रादिविक्षतः॥ ३६॥**
**स्पर्शोष्णकाङ्क्षी च कफात्,**

कफाच्छोफः कण्डूमानित्यादिलक्षणः। आक्रान्तः करपीडितः सन् वातिक इव नोन्नमेत्। कृच्छ्रे शमजन्मनी यस्य स एवम्। निशाबलो रात्रावधिकबलः। कुशशस्त्रादिविक्षतः सन् स शोफो न रक्तं स्रवेत्। किं तर्हि चिरेण पिच्छां लसीकापरपर्यायां स्रवेत्। तथा स्पर्शाभिलाषी उष्णाभिलाषी च स्यात्॥

**यथास्वं द्वन्द्वजास्त्रयः।**
**सङ्कराद्धेतुलिङ्गानाम्,**

द्वन्द्वजाः संसर्गजाः त्रयः शोफाः यथास्वं हेतूनां सङ्कराद्यथास्वं लिङ्गानां सङ्कराच्च स्युरिति शेषः॥

**निचयान्निचयात्मकः॥ ३७॥**

निचयात्मको दोषत्रयजः शोफो हेतुलिङ्गानां निचयात् स्यात्॥

**अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः।**
**हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः॥ ३८॥**

**रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्।**
**भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः॥ ३९॥**

शस्त्रादिच्छेदादिभिः अभिघातादिभिश्च यः शोफः स्यात् सोऽभिघातेन वेद्य इति शेषः। हिमेन हिमानिलेन च उदध्यनिलेन सागरेण वायुना च रसैः शूकैश्च भल्लातकपिकच्छुजैः संस्पर्शात्। स च विसर्पवान् भृशोष्णो लोहिताभासश्च

बाहुल्येन च पित्तलक्षणः स्यात्। पित्तशोफस्य लक्षणं पित्तशोफलक्षणमिव लक्षणं यस्य सः पित्तलक्षणः। 'सप्तम्युपमानपूर्वपदस्य' इति बहुव्रीहिरुत्तरपदलोपश्च। 'पैत्तलक्षणः' इति वा पाठः॥

**विषजः सविषप्राणिपरिसर्पणमूत्रणात्।**
**दंष्ट्रादन्तनखापातादविषप्राणिनामपि॥ ४०॥**
**विण्मूत्रशुक्रोपहतमलवद्वस्त्रसङ्करात्।**
**विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात्॥ ४१॥**
**मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः।**

विषज इत्यादिना नवमशोफलक्षणम्। विषजः शोफः सविषाणां प्राणिनां सर्पादीनामङ्गे परिसर्पणाद् गमनात् तथा तेषामेव मूत्रणात्। "परिसर्पणमङ्गस्पर्शः" इति हाटकः। अविषप्राणिनः सूकरादयः। ते किञ्चिद्विषाः। अविषप्राणिनामपि दंष्ट्रादन्तनखापातात् शोफः स्यात्। अपिशब्दान्न केवलं सविषप्राणिनां दंष्ट्रादिपातात्। दंष्ट्राः सूकरादीनां। दन्तनखं पुरुषादीनामपि। विण्मूत्रशुक्रैरुपहतं तत्स्पर्शदूषितमप्रशस्तं, विण्मूत्रशुक्रोपहतं च तत् मलवच्च विण्मूत्रशुक्रोपहतमलवत्। तथाविधं च तद्वस्त्रं च, तस्य सङ्करः स्पर्शः। तस्मादपि शोफः स्यात्। विषवृक्षाणामनिलस्तस्य स्पर्शात्। तथा गरयोगस्यावचूर्णनमवध्वंसनं तस्माच्च मृद्वादिगुणयुक्तः श्वयथुः स्यात्। गरो वक्ष्यमाणलक्षणः॥

साध्यशोफलक्षणमाह—

**नवोऽनुपद्रवः शोफः साध्योऽसाध्यः पुरेरितः॥ ४२॥**

नव इत्यादि। नवः अचिरोत्पन्नः तथा अनुपद्रवः उपद्रवरहितः शोफः साध्यः। 'मृदुरित्यादिना साध्यशोफलक्षणमुच्यते' इतीन्दुर्हाटकश्च[1]। असाध्यस्तु पुरा विकृतिविज्ञानीये ईरितोऽभिहितः।

अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम्।
नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि॥ इति॥

---

१. 'मृदुरित्यादि नवमशोफलक्षणम्। नव इत्यादिना साध्यशोफलक्षणम्' इति मुद्रितेन्दुव्याख्या।

उक्तः शोफः। अनन्तरं विसर्प उच्यते—

**स्याद्विसर्पोऽभिघातान्तैर्दोषैर्दूष्यैश्च शोफवत्।**

श्वयथुवद्दोषैः दूष्यैश्च यतो विसर्पो भवत्यतस्तन्निदानं प्रक्रम्यते- स्यादित्यादि। विसर्पः सर्व एव शोफवद्दोषैरभिघातान्तैः स्यात्। पृथग्दोषैः द्वयैः समस्तैश्च तथाभिघातादेवमभिघातान्तैर्दोषैः शोफवद्विसर्पसम्भवः। अभि- घातान्तैरित्युक्तत्वाद् विषवर्जमिति सिद्ध्यति। दूष्यैरपि शोफवदेव 'पित्तरक्त- कफान् वायु'रित्यादिरपि ग्रन्थोऽत्र योज्यः॥

**त्र्यधिष्ठानं च तं प्राहुर्बाह्यान्तरुभयाश्रयात्॥ ४३॥**
**यथोत्तरं च दुःसाधाः,**

तं च विसर्पं त्र्यधिष्ठानं प्राहुरात्रेयादय इति शेषः। बाह्यान्तरुभयाश्रयात् पूर्वार्जितकर्मवशात् कदाचिद् बाह्याश्रयो विसर्पो जायते। बाह्य आश्रयो यस्य स तथा। एवं कदाचिदन्तराश्रयः। कदाचिदुभयाश्रयः। ते च बाह्यान्तरुभयाश्रयाः विसर्पा यथोत्तरं दुःसाधाः। दुःखेन साध्यन्ते इति दुःसाधाः। बाह्यादान्तरो दुःसाधः। तत उभयाश्रय इति यथोत्तरार्थः।

**तत्र दोषा यथायथम्।**
**प्रकोपनैः प्रकुपिता विशेषेण विदाहिभिः॥ ४४॥**
**देहे शीघ्रं विसर्पन्ति तेऽन्तरन्तःस्थिता बहिः।**
**बहिःस्था द्वितये द्विस्थाः,**

तत्रेत्यादि। तत्र तस्मिन् विसर्पे दोषा यथायथं प्रकोपनैः तिक्तोष- णादिभिः प्रकुपिता विशेषेण पुनर्विदाहिभिरत्यर्थं कृत्वा कुपिता देहे शीघ्रमाश्वेव विसर्पन्ति। इन्दुस्त्वेवमाह—"विदाहिभिः विदाहसंयुक्तैः स्वहेतुभिः प्रकुपिताः देहे विसर्पन्ति" इति। तथा अन्तःस्थिताः अन्तः विसर्पन्ति। बहिःस्थाः दोषाः बहिः विसर्पन्ति। द्विस्थाः उभयस्थाः सन्तो द्वितये द्वये अन्तर्बहीरूपे विसर्पन्ति।

**विद्यात्तत्रान्तराश्रयम्॥ ४५॥**
**मर्मोपतापात् संमोहादयनानां विघट्टनात्।**
**तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात्॥ ४६॥**

**आशु चाग्निबलभ्रंशादतो बाह्यं विपर्ययात् ।**

तत्र तेषु त्रिषु विसर्पेषु अन्तराश्रयं विसर्पं मर्मोपतापादिभिः लक्षणैः विद्यात् । मर्मणां हृदयादीनाम् उपतापो दुःखम् । मोह एव सम्मोहः मूर्च्छा तदुद्भवात् । अयनानां कर्णनासादीनां स्रोतसां विघट्टनाद् विशेषेण चलनात् अन्तरतिशयेन परिस्फुरणात् । 'विघट्टनात् पीडनादि'तीन्दुः । तथा तृष्णाया अतियोगात् तथा वेगानां नानारूपाणां वेदनानां विषमं कृत्वा विच्छिद्य विच्छिद्य प्रवर्तनाद् आशु च शीघ्रमेव अग्निबलयोः भ्रंशाद् विनाशादान्तरं विसर्पं विद्यात् । अत आन्तरविसर्पलक्षणाद्विपर्ययात् बाह्यं बाह्याश्रयं विसर्पं विद्यात् ॥

तत्रेत्यादिना वातादिक्रमेणाष्टानां विसर्पाणां लक्षणमुच्यते—

**तत्र वातात् परीसर्पो वातज्वरसमव्यथः ॥ ४७ ॥**
**शोफस्फुरणनिस्तोदभेदायामार्तिहर्षवान् ।**

तत्र तेषु विसर्पेषु मध्ये वाताद् यो विसर्पः वातज्वरतुल्यव्यथः स्यात् शोफादियुतश्च ॥

**पित्ताद् द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ॥ ४८ ॥**

पित्ताद्विसर्पो द्रुतगतिः शीघ्रव्यापी तथा पित्तज्वरलिङ्गोऽतिलोहितश्च स्यात् । पित्तज्वरलिङ्गानीव लिङ्गानि यस्य स एवम् ॥

**कफात् कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ।**

कफाद्विसर्पः कण्डूमान् स्निग्धः कफज्वरतुल्यरुक् च । यथोक्तं–'तत्र तत्राङ्गे तास्तास्तुर्वेदनाश्चलाः ।' इत्यादि ॥

**स्वदोषलिङ्गैश्चीयन्ते सर्वे स्फोटैरुपेक्षिताः ॥ ४९ ॥**
**ते पक्वभिन्नाः स्वं स्वं च बिभ्रति व्रणलक्षणम् ।**

सर्वे च ते वातादिविसर्पाः उपेक्षिताः अनुपक्रान्ताः सन्तः स्वकारणदोषलक्षणैः स्फोटैश्चीयन्ते व्याप्यन्ते । ते च स्फोटाः पक्वभिन्नाः पूर्वं पक्वाः पश्चाद् भिन्नाः । "पूर्वकाल–" (पा० सू० २-१-४९) इत्यादिना समासः । स्वं स्वमात्मीयमात्मीयं यथादोषं व्रणलक्षणं वातादिव्रणलक्षणं बिभ्रति धारयन्ति । वातस्फोटा वातव्रणलक्षणाः एवमन्ययोरपि वाच्यम् । तत्र मारुतात् 'श्याव-

कृष्णारुणे'त्यादिग्रन्थनिर्दिष्टं वातव्रणलक्षणम्। पित्तेन 'क्षिप्ररुज' इत्यादिग्रन्थनिर्दिष्टम्, एवं कफादिलक्षणमपि बोध्यम्।

अधुना द्वन्द्वजं लक्षयति—

वातपित्ताज्ज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः ॥ ५० ॥
अस्थिभेदाग्निसदनतमकारोचकैर्युतः।
करोति सर्वमङ्गं च दीप्ताङ्गारावकीर्णवत् ॥ ५१ ॥
यं यं देशं विसर्पश्च विसर्पति भवेत् स सः।
शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते ॥ ५२ ॥
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद् द्रुतं च सः।
मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः ॥ ५३ ॥
व्यथेताङ्गं हरेत् संज्ञां निद्रां च श्वासमीरयेत्।
हिध्मां च स गतोऽवस्थामीदृशीं लभते न ना ॥ ५४ ॥
क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु।
चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम् ॥ ५५ ॥
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते।

वातपित्तेत्यादि। वातपित्ताद्विसर्पो ज्वरादिभिर्युतः सर्वमङ्गं च सकलं शरीरं दीप्ताङ्गारावकीर्णवद् दीप्तैः ज्वलितैः अङ्गारैः अवकीर्णं व्याप्तमिव करोति। स च विसर्पो यं यं देशं विसर्पति प्रसरति स स देशः शान्ताङ्गारवत् कृष्णो नीलो रक्तो वा भवति। शान्ताङ्गारः-കരിക്കട്ട। स च विसर्पो द्रागेवाग्निदग्ध इव स्फोटैश्चीयते व्याप्यते। तथा स विसर्पो वातपित्तकारणत्वेन शीघ्रत्वाद् द्रुतं झटिति मर्मानुसारी स्यात्। मर्माणि हृदयादीनि अनुसरन्ति। 'शीघ्रगत्वात् स्वभावादि'त्यरुणदत्तः। तत एव च वातोऽतिबलः बलीयानङ्गव्यथादिकं कुर्यात्। "ततो मर्मानुसरणादूर्ध्वमतिबलो वातोऽङ्गव्यथादिकं कुर्या"दितीन्दुः। अङ्गं शरीरं व्यथेत पीडयेत्। बाधते इति वा पाठः। संज्ञां संविदं हरेद् नाशयेत्। निद्रां च हरेत्। श्वासमीरयेत् कुर्यात्। तथा हिध्मां

च कुर्यात्। हाटकेनाप्युक्तम्–'स विसर्पो द्रुतं शीघ्रं हृदयादिमर्मानुसारी स्यात्। ततो मर्मानुसरणाद्धेतोः वातोऽतिबलोऽङ्गं व्यथेत। धियं निद्रां च हरेत्। श्वासं हिध्मां च कुर्यात्।" इति। स विसर्पी ना पुरुषः ईदृशीमवस्थां गतः प्राप्तश्चेतोनवस्थालक्षणया अरत्या ग्रस्तोऽभिभूतो भूमिशय्यासनादिषु न क्वचिच्च शर्म सुखं लभते। अरतिग्रस्त इति हेतौ प्रथमा। अरतिग्रस्तत्वादित्यर्थः। एवं क्वचिदपि सुखालाभाद् भूम्यादिषु चेष्टमानः परिलुठन् ततो मनसा कायेन च क्लिष्टः सन् मनोदेहश्रमोद्भवां निद्रामश्नुते। किंभूतः। दुष्प्रबोधो दुःखेन प्रबोधो निद्रापगमो यस्य स एवम्। अग्निवीसर्पस्यातिकष्टत्वात् कदाचिन्मरणमपि सम्भवेदिति सूचनार्थं दुष्प्रबोध इति छलेनोक्तम् इति केचित्। पाठ्यकारेणाप्युक्तं–"अग्निवीसर्पः संशये वर्तमानः तस्मादेवं मरणमुक्तवान्' इति। एष च अग्न्याख्यो विसर्प उच्यते ॥

> कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम् ॥ ५६ ॥
> रक्तं वा वृद्धरक्तस्य त्वक्सिरास्नावमांसगम्।
> दूषयित्वा च दीर्घाणुवृत्तस्थूलखरात्मनाम् ॥ ५७ ॥
> ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम्।
> श्वासकासातिसारास्यशोषहिध्मावमिभ्रमैः ॥ ५८ ॥
> मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम्।
> इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः ॥ ५९ ॥

वातकफाद् ग्रन्थिविसर्पाख्यो भवति। तस्यैव कफेनेत्यादिना संप्राप्तिर्लक्षणं चोच्यते। कफेन रुद्धः पवनः तमेव कफं बहुधा भित्त्वा ग्रन्थीनां मालां कुरुते। अथवा वृद्धरक्तस्य पुंसः पवनो रक्तं दूषयित्वा तथा रक्तं बहुधा भित्त्वा च खण्डशः कृत्वा ग्रन्थीनां मालां कुरुते। किम्भूतं रक्तम्। त्वक्सिरास्नायुमांसगम्। एषामपि दूषणमर्थाद् गम्यते। किम्भूतानां ग्रन्थीनाम्। उभयथा दीर्घाणुवृत्तस्थूलखरस्वभावानाम्। तथा रक्तवर्णानाम्। किम्भूतां मालाम्। तीव्ररुग्ज्वराम्। तीव्रौ रुग्ज्वरौ यस्यास्ताम्। तथा श्वासादिभिर्युताम्। इत्ययमनन्तरोक्तो ग्रन्थिविसर्प उच्यते। कफवातकोपजश्चायं वेद्यः ॥

कफपित्ताज्ज्वरः स्तम्भो निद्रातन्द्राशिरोरुजः ।
अङ्गावसादविक्षेपप्रलापारोचकभ्रमाः ॥ ६० ॥
मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ।
आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ ६१ ॥
प्रायेणामाशये गृह्णन्नेकदेशं न चातिरुक् ।
पिटकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ॥ ६२ ॥
मेचकाभोऽसितस्निग्धो मलिनः शोफवान् गुरुः ।
गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ॥ ६३ ॥
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुसिरागणः ।
शवगन्धिश्च वीसर्पं कर्दमाख्यमुशन्ति तम् ॥ ६४ ॥

कफेत्यादि । कफपित्ताद्विसर्पे ज्वरादयः स्युः । अङ्गानामवसादविक्षेपौ इन्द्रियाधिष्ठानस्य गौरवमुपचारादिन्द्रियगौरवमुच्यते । स च विसर्पः प्रायेण आमाशये नाभिस्तनान्तरमध्ये एकदेशं गृह्णन् आक्रमन् अनन्तरं देहं सर्पति व्याप्नोति । न चातिरुक् स्यात् । तथा पिटकैरवकीर्णो व्याप्तः स्यात् । किंभूतैः । अतिलोहितपीतपाण्डुरैः । तथा मेचकादिकः स्यात् । मेचको मयूरकण्ठतुल्यो वर्णः । 'मेचकः कृष्णकपिलः' इतीन्दुः । स्पष्टस्नायुसिरागणः मांसे शीर्णे स्पष्टाः स्नाय्वादयो यत्र स तथोक्तः । तं तादृशं विसर्पं कर्दमाख्यं कर्दमसंज्ञम् उशन्ति वदन्ति मुनय इति शेषः ॥

सर्वजो लक्षणैः सर्वैः सर्वधात्वभिसर्पणः ।

सर्वज इत्यादि । सर्वजः सन्निपातजो विसर्पः सर्वैः लक्षणैः उपलक्षितः सर्वधात्वभिसर्पणश्च सर्वधातुविसर्पणशीलः स्यात् । "सर्वधातूनतिशयेन सर्पतीति सर्वधात्वतिसर्पणः" इत्यरुणदत्तः पठति ॥

अभिघातविसर्पमाह—

बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन् ॥ ६५ ॥
विसर्पं मारुतः कुर्यात् कुलत्थसदृशैश्चितम् ।
स्फोटैः शोफज्वररुजादाहाढ्यं श्यावलोहितम् ॥ ६६ ॥

बाह्येत्यादि । मारुतः क्षताद् बाह्यहेतोः बाह्यकारणात् क्रुद्धः सन् विसर्पं कुर्यात् । किं कुर्वन् । पित्तं सह रक्तेन प्रेरयन् तथा कुलत्थसदृशैः स्फोटैः पिटकैश्चितं व्याप्तं तथा शोफादिभिराढ्यमतिशयेन युतं, श्यावलोहितं वर्णेन ॥

साध्यासाध्यलक्षणमाह—

**पृथग्दोषैस्त्रयः साध्या द्वन्द्वजाश्चानुपद्रवाः ।**
**असाध्यौ क्षतसर्वोत्थौ सर्वे चाक्रान्तमर्मकाः ॥ ६७ ॥**
**शीर्णस्नायुसिरामांसाः प्रक्लिन्नाः शवगन्धयः ।**

पृथगित्यादि । पृथग्दोषैः केवलैर्वातादिभिः त्रयो विसर्पाः साध्याः साधयितुं शक्याः । द्वन्द्वजाः संसर्गजाश्च त्रयोऽनुपद्रवाः उपद्रवरहिताः सन्तः साध्याः । उपद्रवाः शारीरोक्ताः कासवैवर्ण्यज्वरादयः । क्षतसर्वोत्थौ द्वौ विसर्पावसाध्यौ । तथा स्वभावत्वात् सर्वे च विसर्पाः आक्रान्तमर्मकाः असाध्याः । तथा शीर्णानि स्नाय्वादीनि यैस्तेऽप्यसाध्याः । तथा प्रकर्षेणातिशयेन क्लिन्नाः । तथा शवगन्धयः कुणपतुल्यगन्धाः असाध्याः । शवस्येव गन्धो येषामिति 'उपमानाच्च' (पा० सू० ५-४-१३७) इति इदन्तादेशः ॥

इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने त्रयोदशोऽध्यायः ॥

# चतुर्दशोऽध्यायः ।

धातूपघातत्वदोषसामान्याद्विसर्पानन्तरं कुष्ठादिनिर्णयायाध्यायारम्भः । 'तुल्यहेत्वादित्वादि'त्यरुणदत्तः । 'विसर्पणसामान्यादि'ति पाठ्ये ।

अथातः कुष्ठश्वित्रक्रिमिनिदानं व्याख्यास्यामः ।

मिथ्याहारविहारेण विशेषेण विरोधिना ।
साधुनिन्दावधान्यस्वहरणाद्यैश्च सेवितैः ॥ १ ॥
पाप्मभिः कर्मभिः सद्यः प्राक्तनैः प्रेरिता मलाः ।
सिराः प्रपद्य तिर्यग्गास्त्वग्लसीकासृगामिषम् ॥ २ ॥
दूषयन्ति श्लथीकृत्य निश्चरन्तस्ततो बहिः ।
त्वचः कुर्वन्ति वैवर्ण्यं दुष्टाः कुष्ठमुशन्ति तत् ॥ ३ ॥

अथात इति । सर्वकुष्ठानां मिथ्याहारादिकं सामान्येन हेतुः । सिराः प्रपद्येत्यादिना संप्राप्तिः । मिथ्याहारादिना तथा साधुनिन्दावधादिभिर्नानाविधैः पाप्मभिः कर्मभिः सद्यःसेवितैः अनुष्ठितैः प्राक्तनैः वा अन्यजन्माचरितैः । सेवितग्रहणेन सातत्यानुष्ठानं द्योतयति । तेन कदाचित्कारणत्वमेषां न कुष्ठहेतुत्वमिति गम्यते । तैस्तथाभूतैः कर्मभिः मिथ्याहारादिना चेरिता दुष्टा मला वातादयः सिरास्तिर्यग्गामिनीः प्रपद्याश्रित्य त्वगादिकं दूषयन्तः तदेव च त्वगादिकं शिथिलीकृत्य ततोऽनन्तरं बहिर्निश्चरन्तः बाह्यप्रदेशे प्रसरन्तः त्वचो वैवर्ण्यं कुर्वन्ति । तत् कुष्ठमुशन्ति मुनय इति शेषः ॥

कुतोऽस्य रोगस्य कुष्ठमिति संज्ञेत्याह—

कालेनोपेक्षितं यस्मात् सर्वं कुष्णाति तद्वपुः ।
प्रपद्य धातून् व्याप्यान्तः सर्वान् संक्लेद्य चावहेत् ॥ ४ ॥
सस्वेदक्लेदसंकोथान् क्रमीन् सूक्ष्मान् सुदारुणान् ।
रोमत्वक्स्नायुधमनीतरुणास्थीनि यैः क्रमात् ॥ ५ ॥
भक्षयेच्छ्वित्रमस्माच्च कुष्ठबाह्यमुदाहृतम् ।

कालेनेत्यादि । यस्माद्धेतोः उपेक्षितमनुपक्रान्तं सत् कालेन सर्वं वपुः शरीरं कुष्णाति तस्मात कुष्ठमित्युच्यते । 'कुष निष्कर्षे' इति धातुः । अनेन कुष्ठस्यान्वर्थत्वमुक्तम् । कालेनोपेक्षितमित्युत्तरत्रापि अनुवर्तते । तच्च कुष्ठमुपेक्षितं सत् कालेन सर्वधातून् प्रपद्य प्राप्यानन्तरमन्तर्व्याप्य प्रकृतत्वात् तेषामेवान्तरं व्याप्य तथा तानेव सर्वान् धातून् संक्लेद्य क्लेदयित्वा शरीरे कृमीनावहेत् । किंभूतान् । स्वेदादिभिर्युतान् । तथा सूक्ष्मान् सुदारुणान् दुश्चिकित्स्यान् यैः कृमिभिः कारणभूतैः तैः तत् कुष्ठं लोमादीनि क्रमाद् भक्षयेत् । भक्ष्यन्ते इति द्रमिलादयः पठन्ति । तरुणास्थीनि कर्णनासादिभवानि । श्वित्रस्य प्राग्रूपता न विद्यते या कुष्ठस्योक्ता । अस्माच्च कारणात् श्वित्रं कुष्ठबाह्यमुदाहृतम् । कुष्ठाद् बाह्यं त्वग्गतमात्रमेवोक्तमित्यर्थः । क्लेदकृम्याद्यभावात् सत्यपि त्वग्रोगत्वे कुष्ठशब्देन नोच्यत इत्यर्थः ॥

**कुष्ठानि सप्तधा दोषैः पृथङ्मिश्रैः समागतैः ॥ ६ ॥**

कुष्ठानि सप्तधा सप्तप्रकाराणि । पृथग्भूतैः दोषैः त्रयः, तैरेव च मिश्रैः संसृष्टैः त्रयः, तैरेव च दोषैः समागतैः सन्निपतितैरेक इति ॥

नन्वेवं सत्येकदोषजं द्विदोषजं कुष्ठं त्रिदोषजं स्यादित्याशङ्क्याह—

**सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः ।**

सर्वेष्वपि कुष्ठेषु सन्निपातजेष्वधिकत्वेन व्यपदेशः । सन्निपातस्य समविषमात्मकत्वात् ॥

वातेनेत्यादिना दोषक्रमेण सप्तविधस्य कुष्ठस्य नामान्युच्यन्ते यान्याश्रित्य लक्षणं विधीयते—

**वातेन कुष्ठं कापालं पित्तादौदुम्बरं कफात् ॥ ७ ॥**

**मण्डलाख्यं विचर्ची च ऋक्षाख्यं वातपित्तजम् ।**
**चर्मैककुष्ठकिटिभसिध्मालसविपादिकाः ॥ ८ ॥**

**वातश्लेष्मोद्भवा श्लेष्मपित्ताद्दद्रुशतारुषी ।**
**पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ॥ ९ ॥**

सर्वैः स्यात्काकनं पूर्वं त्रिकं दद्रु सकाकनम् ।
पुण्डरीकर्क्षजिह्वे च महाकुष्ठानि सप्त तु ॥ १० ॥

वातेन वातोल्बणेन सन्निपातेन कापालं नाम कुष्ठं भवति । पित्तात् पित्ताधिकात् सन्निपाताद् औदुम्बरं नाम कुष्ठं जायते । कफात् कफाधिकात् सन्निपातान्मण्डलाख्यं नाम कुष्ठं जायते । तथा विचर्ची च कफादेवेति चार्थः । ऋक्षाख्यं ऋक्षजिह्वं नाम कुष्ठं वातपित्तजं वातपित्तोल्बणात् सन्निपाताज्जातम् । एवमग्रेऽपि योज्यम् । चर्मादयः षड् वातश्लेष्मोद्भवाः दद्र्वादयः षट् श्लेष्मपित्ताज्जायन्ते । सर्वैः त्रिभिरेव दोषैः काकनं नाम कुष्ठमुत्पद्यते । एवमेतान्यष्टादश कुष्ठानि । एषां मध्ये पूर्वं त्रिकं कापालौदुम्बरमण्डलं ततो दद्रु काकनं पुण्डरीकमृक्षजिह्वा चेति सप्त महाकुष्ठानि उच्यन्ते । कपालमिति केचित् पठन्ति । काकणमिति च ॥

सर्वकुष्ठानां पूर्वरूपमाह—

अतिश्लक्ष्णखरस्पर्शखेदास्वेदविवर्णताः ।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः श्रमः ॥ ११ ॥
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोथनम् ॥ १२ ॥
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ।

अतिश्लक्ष्णेत्यादि । अतिश्लक्ष्णखरस्पर्शादिकम् अग्रजं कुष्ठलक्षणं प्राग्रूपमित्यर्थः । अस्वेदोऽत्यन्तस्वेदाभावः । त्वचि स्वापः स्पर्शाज्ञानम् । कोठा उत्सन्नानि मण्डलानि तेषामुन्नतिरुत्पत्तिः । व्रणानां भिन्नस्फोटभवानां कोथनम् । रूढानामपि व्रणानां पुनः ।

क्रमेणाष्टादशानां लक्षणमाह—

कृष्णारुणकपालाभं रूक्षं सुप्तं खरं तनु ॥ १३ ॥
विस्तृतासमपर्यन्तं दूषितैर्लोमभिश्चितम् ।
तोदाढ्यमल्पकण्डूकं कापालं शीघ्रसर्पि च ॥ १४ ॥

कृष्णारुणेत्यादि। कापालाख्यं कुष्ठं कृष्णारुणकपालाभमित्यादिलक्षणम्। कपालो घटकर्परः। सुप्तमचेतनम्। विस्तृतानि विस्तीर्णानि[1] असमानि ह्रस्वदीर्घाणि पर्यन्तानि यस्य तत्तथोक्तम्। शीघ्रसर्पि च शीघ्रव्यापि।

**पक्वोदुम्बरताम्रत्वग्रोम गौरसिराचितम्।**
**बहलं बहुलक्लेदं रक्तं दाहरुजाधिकम्॥ १५॥**
**आशूत्थानावदरणकृमि विद्यादुदम्बरम्।**

पक्वेत्यादि। उदुम्बरं नाम कुष्ठं पक्वोदुम्बरफलवत् ताम्रत्वग्रोमाणि यस्य तथोक्तम्। बहलं घनम्। आशूत्थानादि यस्य तदेवम्। अवदारणं कोथनम्।

**स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तमनाशुगम्॥ १६॥**
**अन्योन्यसक्तमुत्सन्नं बहुकण्डूस्रुतिक्रिमि।**
**श्लक्ष्णपीताभपर्यन्तं मण्डलं परिमण्डलम्॥ १७॥**

स्थिरमित्यादि। मण्डलं नाम कुष्ठं स्थिरादिलक्षणम्। बहुकण्ड्वादिकं यत्र तत्तथोक्तम्। परिमण्डलं वर्तुलम्॥

**सकण्डूपिटका श्यावा लसीकाढ्या विचर्चिका।**

सकण्ड्वित्यादि। विचर्चिका सकण्डूपिटका। लसीका जलप्राया॥

**परुषं तनु रक्तान्तमन्तःश्यावं समुन्नतम्॥ १८॥**
**सतोददाहरुक्क्लेदं कर्कशैः पिटकैश्चितम्।**
**ऋश्यजिह्वाकृति प्रोक्तमृश्यजिह्वं बहुक्रिमि॥ १९॥**

परुषमित्यादि। ऋश्यजिह्वं नाम कुष्ठं परुषादिगुणं रक्तान्तं रक्तपर्यन्तम्। अन्तर्मध्ये श्यावम्। ऋश्यजिह्वेव खरा आकृतिर्यस्य तद् ऋश्यजिह्वाकृति॥

**हस्तिचर्मखरस्पर्शं चर्म,**

चर्म नाम कुष्ठं हस्तिचर्मवत् खरस्पर्शम्॥

**एकाख्यं महाश्रयम्।**

**अस्वेदं मत्स्यशकलसन्निभम्,**

---

१. 'क्षिप्रव्यापि' ग। २. श्वेति मुद्रिते।

एकाख्यमित्यादि। एकाख्यमेकसंज्ञं तु कुष्ठं महाश्रयं विस्तीर्णाश्रयम्। तथा अस्वेदं तथा मत्स्यशकलसन्निभं मत्स्यत्वक्खण्डसदृशम्। **इन्दुना** तूक्तं - "महाश्रयं गम्भीरमूलं मत्स्यशकलसन्निभान्तं चे"ति। **सुश्रुते** त्वेककुष्ठस्य एवं लक्षणमभ्यधायि—

"कृत्स्नो देहो यस्य रक्तोऽरुणो वा तद्ध्येकाख्यं कुष्ठमाहुः सुकष्टम्।"

इति। **खरनादे** तूक्तं---

"महदस्वेदनं मत्स्यशकलाकारमेकजम्।" इति॥

**किटिभं पुनः॥ २०॥**

**रूक्षं किणखरस्पर्शं कण्डूमत्परुषासितम्।**

किटिभमित्यादि। किटिभं तु रूक्षम्। अङ्गे घर्षणाद् ग्रन्थिः किणं तद्वत् खरस्पर्शम्॥

**सिध्म रूक्षं बहिः स्निग्धमन्तर्घृष्टं रजः किरेत्॥ २१॥**

**श्लक्ष्णस्पर्शं तनु श्वेतताम्रं दौग्धिकपुष्पवत्।**

**प्रायेण चोर्ध्वकाये स्यात्,**

सिध्मेत्यादि। सिध्मनाम कुष्ठं बही रूक्षमन्तःस्निग्धम्। घृष्टं च सद् रजः किरेत् क्षिपेत्। तथा श्लक्ष्णस्पर्शम्। तथा तनु। तथा श्वेतताम्रम्। दौग्धिकपुष्पवद् अलाबुकुसुमवत्। श्वेतताम्रं वर्णेनेत्यर्थः। तच्च प्रायेण बाहुल्येन ऊर्ध्वकाये स्यात्। **खरनादे** तूक्तं—

"अलाबुपुष्पवत् सिध्म घृष्टं यच्चोद्वमेद्रजः।"

इति। सिध्म--[1]പൊങ്ങിനീര്॥

**गण्डैः कण्डूयुतैश्चितम्॥ २२॥**

**रक्तैरलसकम्,**

गण्डैरित्यादि। अलसकं नाम कुष्ठं रक्तवर्णैः गण्डैः कण्डूयुतैश्च चितं व्याप्तं भवेत्। **इन्दुना** तूक्तं--सिध्म गण्डैः कण्डूयुतैः चितमित्येवमन्तलक्षणम्। अलसकं रक्तैर्गण्डैर्भवतीति॥

---

१. പൊങ്ങിവീക്കം ख. घ. ङ।

पाणिपाददार्यो विपादिकाः ।
तीव्रार्त्यो मन्दकण्ड्वश्च सरागपिटकाचिताः ॥ २३ ॥

पाणीत्यादि। विपादिकाः पाणिपाददार्यः स्युः । तथा तीव्रार्त्योऽत्यन्तपीडायुताः तथा मन्दकण्ड्वोऽल्पकण्डूकाः तथा सरागपिटकाचिताश्च । पाणिपादौ दारयन्तीति कर्मण्यणन्तान्ङीप् । पाणिपाददार्यो विपादिका इति पाठे पाणिपादयोः दार्यो दारणानि विपादिकेत्युच्यते ॥

दीर्घप्रताना दूर्वावदतसीकुसुमच्छविः ।
उत्सन्नमण्डला दद्रुः कण्डूमत्यनुषङ्गिणी ॥ २४ ॥

दीर्घप्रतानेत्यादि । दूर्वावद्दीर्घप्रताना दद्रुः । दूर्वा शड्वलम् । तथा अतसीपुष्पाभा । तथोत्सन्नमण्डला च । उत्सन्नानि उन्नतानि मण्डलानि यस्याः सैवम् । तथा कण्डूमती । तथा अनुषङ्गिणी प्रसक्तानुप्रसक्त्या संश्लेषवती शरीरमनुधावती । **इन्दुः** पुनः–"अनुषङ्गिणी बहुकालस्थे"त्याह । **हाटको**ऽप्याह–"दूर्वावद्दीर्घप्रताना दद्रुः । अतसीपुष्पाभा उन्नतमण्डला च इति द्विधा । दद्रुकुष्ठस्य द्विविधावस्था मण्डलावस्था च" इति । **सौश्रुते** चोक्तम्–"अतसीपुष्पसदृशानि स्निग्धानि बहलानि मण्डलानि विसर्पीणि पिटकाचितानि दद्रुकुष्ठानी"ति[1] । अत एव केचित् सरागपिटकाचिता इति पठन्ति दद्रुविशेषणं वदन्तः । दद्रुः [2]തഴതണ്ണ? ॥

स्थूलमूलं सदाहार्ति रक्तश्यावं बहुव्रणम् ।
शतारुः क्लेदजन्त्वाढ्यं प्रायशः पर्वजन्म च ॥ २५ ॥

स्थूलमूलमित्यादि । शतारुर्नाम स्थूलमूलादिलक्षणम् । जन्तवः क्रिमयः । प्रायशः पर्वजन्म च पर्वसु अस्थिसन्धिषु जन्म यस्य शतारुषस्तदेवम् ॥

रक्तान्तमन्तरा पाण्डु कण्डूदाहरुजान्वितम् ।
सोत्सेधमाचितं रक्तैः पद्मपत्रमिवाम्बुभिः ॥ २६ ॥
घनभूरिलसीकासृक्प्रायमाशु विभेदि च ।
पुण्डरीकम्,

---

१. "ध्यवर्णानि ताम्राणि वा विसर्पीणि पिटकावन्ति च दद्रुकुष्ठानि" इति मुद्रिते ।

२. തഴതണ്ണം ख, തഴകർണം ङ ।

रक्तान्तमित्यादि । पुण्डरीकं नाम रक्तपर्यन्तं तथा अन्तरा मध्ये पाण्डु । "अन्तर्मध्ये आपाण्डु" इतीन्दुः । सोत्सेधमुन्नतियुक्तं, तथा रक्तैरंशुभिः सूक्ष्मरेखाभिः आचितं व्याप्तम् । "अंशुः सूत्रादिसूक्ष्मांशे" इति वैजयन्ती । पद्मपत्रमिव । इन्दुस्तु—"अंशवो रजांसि तैराचित"मित्याह । तथा घनभूरिलसीकास्रवस्रावमिति वा पाठः । पुण्डरीकं - കാൽച്ചുകണ്ണ് ॥

**तनुत्वग्भिश्चितं स्फोटैः सितारुणैः ॥ २७ ॥**

**विस्फोटम्,**

तन्वित्यादि । विस्फोटं नाम कुष्ठं तनुत्वग्भिः स्फोटैश्चितं व्याप्तम् । किंभूतैः, सितारुणैः श्वेतलोहितैः ॥

**पिटकाः पामा कण्डूक्लेदरुजाधिकाः ।**
**सूक्ष्माः श्यावारुणा बह्व्यः प्रायः स्फिक्पाणिकूर्परे ॥ २८ ॥**

पिटका इत्यादि । पिटकाः कण्डूक्लेदरुजाधिकाः पामा इत्युच्यते । किंभूताः, सूक्ष्माः श्यावारुणाः बह्व्यश्च प्रायो बाहुल्येन । सा च पामा स्फिजोः पाण्योः कूर्परयोश्च स्यात् । पामा - ചിരങ്ങ് ॥

**सस्फोटमस्पर्शसहं कण्डूषातोददाहवत् ।**
**रक्तं दलच्चर्मदलम्,**

सस्फोटमित्यादि । चर्मदलं नाम कुष्ठं स्फोटवत् तथा स्पर्शाक्षमं तथा कण्ड्वादियुतं तथा रक्तवर्णेन तथा दलवत् स्फुटत्स्यात् । चर्मतलमिति वा पाठः ।

**काकनं तीव्रदाहरुक् ॥ २९ ॥**

**पूर्वं रक्तं च कृष्णं च काकनन्दीफलोपमम् ।**
**कुष्ठलिङ्गैर्युतं सर्वैर्नैकवर्णं ततो भवेत् ॥ ३० ॥**

काकनमित्यादि । काकनं नाम कुष्ठं तीव्रदाहरुक् । तथा पूर्वं प्रथमं रक्तं च कृष्णं च अर्धे रक्तमर्धे कृष्णं च । काकनन्दीफलोपमं काकनन्दी गुञ्जा तत्फलम् अर्धे रक्तमर्धे कृष्णं च भवति । तत्सदृशं रक्तावस्थायां कृष्णावस्थायां च गुञ्जाफलसदृशमित्यर्थः । ततोऽनन्तरं सर्वैः कुष्ठलिङ्गैर्युतं नैकवर्णं च भवेत् । अपि तु श्वेतपीतादिवर्णमपि स्यादित्यर्थः । काकनं सर्वदोषोद्भवत्वात् सर्वलिङ्ग-

मनेकवर्णं च भवेदिति । सुश्रुते तु मण्डलशतारुविपादिकालसकचर्मदलविस्फोट-काख्यानि नोदितानि । स्थूलारुष्कमहाकुष्ठपरिसर्प(विसर्प)रकशारुणाख्यानि तत्रोदितानि । एषां च लक्षणं—स्थूलमूलानि अरूंषि सन्धिषूग्राणि तत् स्थूलारुष्कम् ।

उत्पद्यन्ते सर्वदेहे महाख्ये त्वक्सङ्कोचस्वापभेदाङ्गसादाः ।
यस्मिन् मन्दाः स्फोटिकाः स्राववत्यः संसर्पेयुस्तं परीसर्पमाहुः ॥
तुल्यः सर्पेद् यो विसर्पेण शीघ्रं त्वग्रक्तादीन् प्राप्य स स्याद्विसर्पः ।
कृत्स्ने देहे स्फोटिकाः स्रावहीनाः कण्डूप्राया राकशाख्ताः प्रदिष्टाः ॥

अरुणान्युरूणि विसर्पीणि तापयुतान्यरुणानि इति । तदेतेषु कुष्ठभेदेषु यथा नामविपर्ययः तथा लक्षणविपर्ययोऽपि । किन्त्वेतेऽपि कुष्ठभेदा दृश्यन्त एवेत्येतदपि लक्षणमादरणीयमेवेति मन्यामहे ॥

कुष्ठेष्वित्यादिना कुष्ठेषु त्रिदोषजेषु सत्सु इदं वाताधिकं कुष्ठम् इदं पित्ताधिकं कुष्ठम् इदं कफाधिकं कुष्ठमित्यादि कथं ज्ञातव्यमित्याह—

**दोषभेदीयविहितैरादिशेल्लिङ्गकर्मभिः ।**

**कुष्ठेषु दोषोल्बणताम्,**

कुष्ठेषु दोषोल्बणतां दोषाधिक्यं दोषभेदीयविहितैर्यथायथं लिङ्गकर्मभि-रादिशेत् । लिङ्गानि च तानि कर्माणि च लिङ्गकर्माणि । यथा वायोः स्रंस-व्यासादीनि, पित्तस्य दाहादीनि, श्लेष्मणः स्नेहकाठिन्यादीनि । यथायथमात्मीयै-रेव कर्मभिर्यतस्ते लिङ्ग्यन्ते लक्ष्यन्ते ततस्तेषां दोषाणां कर्माण्येव लिङ्गान्यु-च्यन्ते । अत एव स्रंसादीनि कर्माणि दोषाणामुक्त्वानन्तरमिदमुवाच—

इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम् ।
दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेत् ॥

इत्यरुणदत्तः । इन्दोरुक्तिः पुनः—"लिङ्गानि च कर्माणि चेति द्वन्द्वः । एतेषु च कापालाद्येषु कुष्ठेषु प्रत्येकं वाताद्यन्यतमदोषोल्बणतां दोषभेदीयविहितैर्वाता-दीनां लिङ्गैः कर्मभिश्चादिशेत् । अस्मिन् कुष्ठविशेषे इयान् दोषकोप इति दोषाणां लिङ्गकर्मभिः स्रंसव्यासादिभिः परिपूर्णापरिपूर्णैः अध्यवस्ये"दिति ।

१. अर्थानुवादोऽयम् । २. रकसेति मुद्रितपाठः ।

सर्वदोषोल्बणं त्यजेत् ॥ ३१ ॥

रिष्टोक्तं यच्च यच्चास्थिमज्जशुक्रसमाश्रयम् ।

यत्र यस्मिन् सर्व एव दोषा उल्बणाः तत् सर्वदोषोल्बणं सन्निपातजं कुष्ठं त्यजेत् न चिकित्सेत् । यच्च रिष्टोक्तं विकृतिविज्ञानीये कथितं 'कुष्ठं विशीर्यमाणाङ्ग''मित्यादिना तच्च नोपक्रमेत् । यच्च कुष्ठमस्थिमज्जशुक्रसमाश्रयं तच्च त्यजेत् । अस्थ्याद्याश्रयस्यात्रैव लक्षणं वक्ष्यते । इत्येतत्सर्वमसाध्यम् ॥

याप्यं मेदोगतम्,

मेदोगतं कुष्ठं याप्यं पथ्यादिना यापयितुं शक्यम् ॥

कृच्छ्रं पित्तद्वन्द्वास्रमांसगम् ॥ ३२ ॥

कृच्छ्रमित्यादि । पित्तस्य द्वन्द्वं पित्तद्वन्द्वं, पित्तद्वन्द्वगं कुष्ठं कृच्छ्रसाध्यम् ॥

अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलं च यत् ।

कफवाताढ्यं कफवातजम् अकृच्छ्रं सुखसाध्यमित्यर्थः । तथा त्वक्स्थं त्वगाश्रयमकृच्छ्रं, तथा एकमलमेकदोषाधिकं कुष्ठं सुखसाध्यम् ॥

तत्रेत्यादिना त्वगाद्याश्रयविशेषेण कुष्ठलक्षणमुच्यते—

तत्र त्वचि स्थिते कुष्ठे तोदवैवर्ण्यरूक्षताः ॥ ३३ ॥

स्वेदस्वापश्वयथवः शोणिते, पिशिते पुनः ।

पाणिपादाश्रिताः स्फोटाः क्लेदः सन्धिषु चाधिकम् ॥ ३४ ॥

कौण्यं गतिक्षयोऽङ्गानां दलनं स्याच्च मेदसि ।

नासाभङ्गोऽस्थिमज्जस्थे नेत्ररागः स्वरक्षयः ॥ ३५ ॥

क्षते च कृमयः शुक्रे स्वदारापत्यबाधनम् ।

तत्र तेषु कुष्ठेषु मध्ये त्वचि स्थिते प्राप्ते कुष्ठे तोदादयः स्युः । रक्ते स्थिते कुष्ठे स्वेदादयः स्युः । मांसे स्थिते तु कुष्ठे पाणिपादाश्रिताः स्फोटाः स्युः । सन्धिषु च अतिशयेन क्लेदो भवति । मेदसि स्थिते कुष्ठे कौण्यादयः स्युः । कौण्यं कुणिता विकलपाणित्वम् । 'कुकरे कुणिः' इत्यमरः । अङ्गानां दलनं छेदनमिव च स्यात् । अस्थिमज्जस्थे अस्थिस्थे मज्जस्थे च नासायाः घ्राणस्य

भङ्गः। तथा नेत्रयो रागः स्वरस्य च क्षयः स्यात्। क्षते च कृमयः स्युः। शुक्रस्थे कुष्ठे स्वदाराणामपत्यानां च बाधनमुपद्रवैः स्वेदादिभिः पीडनं स्यात् "स्वदाराणामपत्यानां च बाधनं कुष्ठसम्भवः शुक्राश्रिते" इतीन्दुः। अत्राह— शुक्रं कुष्ठेन प्राप्तं चेत् कथमपत्यप्राप्तिः, "शुद्धे शुक्रार्तवे" इति पूर्वमुक्तं यतः। ब्रूमः—दोषैः कुणपादिसंज्ञितं बीजमेवाशुद्धमित्यङ्गीकृतम्। कुष्ठादिदुष्टस्य शुक्रस्याप्यशुद्धसंज्ञा विद्यत एव। तर्ह्यपि तस्य प्रजोत्पादनसामर्थ्यं विद्यत एव। कथमिति चेत् त्वङ्निर्माणबीजपरमाणोरेवोपतापो यतः यथा वलीबीजोपतापात् सहजमर्शो जायते तथात्रापि बोद्धव्यम्॥

उक्तलक्षणादधिकं च लक्षणं भवतीत्याह—

**यथापूर्वं च सर्वाणि स्युर्लिङ्गान्यसृगादिषु॥ ३६॥**

यथापूर्वमित्यादि। असृगादिषु स्थिते कुष्ठे यथापूर्वं सर्वाणि लिङ्गानि स्युः। यस्मिन् धातौ स्थितं तस्य यः पूर्वो धातुः तल्लिङ्गान्यपि तत्र भवन्तीत्यर्थः। तेन रक्ताश्रये त्वल्लिङ्गान्यपि भवन्ति। मांसाश्रये त्वग्रक्ताश्रयलिङ्गान्यपि। मेदोगे त्वग्रक्तमांसाश्रयलिङ्गान्यपि। एवं यावच्छुक्रम्। शुक्रगे सर्वाण्येव लिङ्गानि च भवन्तीति यथापूर्वशब्दस्यार्थः। इत्युक्तं कुष्ठम्॥

कुष्ठनिदानानन्तरं श्वित्रनिदानमुच्यते। कुष्ठश्वित्रयोरेककारणत्वात्। अत एवाह—

**कुष्ठैकसम्भवं श्वित्रं किलासं दारुणं च तत्।**
**निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम्॥ ३७॥**

कुष्ठैकसम्भवं श्वित्रमिति। श्वित्रं कुष्ठैकसम्भवं कुष्ठानामेकः समानः सम्भवो यस्य तदेवम्। तत् किलासं च दारुणं च निर्दिष्टं न केवलं श्वित्रमिति। तच्चापरिस्रावि कुष्ठवन्न स्रवति। त्रिधातूद्भवसंश्रयं च। उद्भवो जन्म संश्रय आश्रयः। उद्भवश्च संश्रयश्च उद्भवसंश्रयौ। धातुशब्देनोभयं परिगृह्यते। वातादयस्त्रयो दोषाः तथा रक्तादयस्त्रयो धातवः। धातवश्च धातवश्च धातवः, त्रयो धातवो यथाक्रममुद्भवसंश्रयौ यस्य तदेवम्। इन्दुना तूक्तं—"श्वित्रं कुष्ठैकसम्भवं कुष्ठेनैकः सदृशो दोषदूष्यसम्प्राप्त्यादिकः सम्भवो यस्य तत्तथोक्तम्।

तच्च श्वित्रं नाम्ना किलासमरुणमपरिस्त्रावि च निर्दिष्टमाचार्यैः। तथा त्रिधातूद्भवसंश्रयं त्रयो धातवो वातपित्तश्लेष्माण उद्भवः त्रयश्च धातवो रक्तमांसमेदोलक्षणा आश्रयो यस्य तत्तथोक्तम्। धातुशब्देन उभयमुद्भवश्च संश्रयश्च गृह्यते" इति॥

उद्भवधातुत्रयक्रमेण लक्षणमाह—

**वाताद्रूक्षारुणं, पित्तात्ताम्रं कमलपत्रवत्।**

**सदाहं रोमविध्वंसि, कफाच्छ्वेतं घनं गुरु॥ ३८॥**

**सकण्डु च, क्रमाद्रक्तमांसमेदःसु चादिशेत्।**

वातादित्यादि। वाताच्छ्वित्रं रूक्षारुणं स्यात्। पित्ताच्छ्वित्रं कमलपत्रमिव ताम्रं वर्णेन। तथा सदाहम्। तथा रोमविध्वंसि रोमशातनस्वभावम्। कफाच्छ्वित्रं श्वेतं घनं तथा गुरु अङ्गेनानुभूयते। तथा सकण्डु कण्डूसहितम्। क्रमाद्यथाक्रमं श्वित्रं रक्तमांसमेदःसु चादिशेत। वातोद्भवं रक्ताश्रयं पित्तोद्भवं मांसाश्रयं मेदोधात्वाश्रयं कफोद्भवमिति क्रमशब्दस्यार्थः॥

**वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम्॥ ३९॥**

वर्णेनैवेदृगुभयमिति। एवेति चार्थे। उभयं वाताद्युद्भवं रक्ताद्याश्रयं श्वित्रं वर्णेन चेदृगरुणं ताम्रं श्वेतं यथाक्रमम्। न पुनर्वाताद्युद्भवत्वादन्यवर्णं रक्तादिसंश्रयत्वादन्यवर्णमित्यर्थः। तच्च श्वित्रं वाताद्युद्भवं रक्तादिसंश्रयं च उत्तरोत्तरं कृच्छ्रसाध्यमादिशेदिति प्रकृतम्। तेन रक्ताश्रयं वातजं कृच्छ्रं ततो मांसाश्रयं पित्तजं कृच्छ्रतरम्। ततो मेदःसंश्रितं कफजं कृच्छ्रतमम्। इन्दुनाप्युक्तं—"वातादित्यादिनोद्भवधातुत्रयक्रमेण लक्षणमुच्यते। संश्रयधातुषु वर्णेनैवेदृक् क्रमेणादिशेत। तेन रूक्षारुणं वर्णेन रक्ताश्रितम्। ताम्रं मांसगम्। श्वेतं मेदोगतमिति। उभयं क्रमेण कृच्छ्रं तच्चोत्तरोत्तरम्। उभयं वाताद्युद्भवं रक्तादिसंश्रयं चोत्तरोत्तरं कृच्छ्रसाध्यम् तेन वातजं रक्ताश्रयं कृच्छ्रम्। ततोऽपि पित्तजं मांसाश्रितम्। ततोऽपि कफजं मेदोगम्" इति॥

अधुना साध्यासाध्यविभागमाह—

**अशुक्लरोमाबहलमसंसृष्टं मिथो नवम्।**

**अनग्निदग्धजं साध्यं श्वित्रं, वर्ज्यमतोऽन्यथा॥ ४०॥**

**गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् ।**

अशुक्लरोमेत्यादि । अशुक्लरोम यच्छ्वित्रं तत् साध्यम् । तथा अबहलम् अघनं तथा मिथः परस्परमसंसृष्टं अमिलितं तथा नवम् अनतिक्रान्तवत्सरं तथा अनग्निदग्धजं अग्निदग्धजं यन्न भवति तच्च साध्यम् । अतोऽन्यथा एतद्विपर्यये वर्ज्यम् । शुक्लरोम बहलं परस्परसंसृष्टं चिरकालोत्पन्नं अग्निदग्धजं च श्वित्रमसाध्यम् । गुह्यपाणितलौष्ठेषु जातमचिरन्तनमप्यचिन्त्यस्वभावत्वेन वर्ज्यम् ॥

प्रसङ्गेनाह—

**स्पर्शैकाहारशय्यादिसेवनात् प्रायशो गदाः ॥ ४१ ॥**
**सर्वे सञ्चारिणो नेत्रत्वग्विकारा विशेषतः ।**

स्पर्शेत्यादि । सर्वे रोगाः प्रायशो बाहुल्येन सञ्चारिणः सञ्चरणशीलाः । कुतः । एके च ते आहारशय्यादयश्च एकाहारशय्यादयः । आदिशब्देन आसनादीनां ग्रहणम् । स्पर्शः संश्लेषः । स्पर्शश्च एकाहारशय्यादयश्च तेषां सेवनं भजनं तस्मात् । नेत्रे च त्वक् च नेत्रत्वक् तत्र विकाराः गदाः ते विशेषेण सञ्चारिणः । इत्युक्तं श्वित्रम् ॥

अधुना क्रमप्राप्तान् क्रमीनाह—

**क्रमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ॥ ४२ ॥**

क्रमय इत्यादि । क्रमयो द्विधा प्रोक्ता मुनिभिरिति शेषः । तुरवधारणे । द्विधेति कथमित्याह—बाह्याभ्यन्तरभेदतः । एके बाह्याः ये केशवस्त्रादिजाः यूकालिक्षादयः । अन्ये आभ्यन्तराः आन्त्रादादयः ॥

जन्मभेदेन चतुर्विधाः कथमित्याह—

**बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ।**
**नामतो विंशतिविधाः,**

बहिरित्यादि । केचिद् बहिर्मलजन्मानः, केचित् कफजन्मानः, केचिदसृग्जन्मानः, केचिद् विड्जन्मानः इति भेदाच्चतुर्विधाः चतुष्प्रकाराः । बहिर्मलः शरीरबाह्यः केशवस्त्रादिमलः । तस्मादुत्पन्नाः । विट् पुरीषम् । पुनर्नामतो नामभेदात् सर्वे क्रमयो विंशतिप्रकाराः ॥

बाह्यास्तत्रामृजोद्भवाः ॥ ४३ ॥

तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ।
बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥ ४४ ॥
द्विधा ते कोठपिटिकाकण्डूगण्डान् प्रकुर्वते ।

बाह्या इत्यादि । तत्र तेषु बाह्यान्तरेषु कृमिषु मध्ये बाह्या बहिर्मलजाः अमृजोद्भवा अमृजाहेतुकाः । ते च तिलप्रमाणसंस्थानवर्णाः तिलानामिव प्रमाणादयो येषां त एवम् । तथा केशाम्बराश्रयाः केशाश्च वस्त्रं च आश्रयो येषां त एवम् । तथा बहुपादाः सूक्ष्माश्च । नामतो नाम्ना यूका इति लिक्षाश्चेति द्विप्रकाराः । यूका - പേൻ[1] । ते च कोठादीन् प्रकुर्वते विदधति ॥

कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजास्तेषु चाधिकम् ॥ ४५ ॥
मधुरान्नगुडक्षीरदधिसक्तुनवौदनैः ।

कुष्ठेत्यादि । अन्तर्जाः आन्तराः कफादिजन्मानः सर्वे कृमयः कुष्ठैकहेतवः कुष्ठेन सह एकः तुल्यो हेतुः निदानं मिथ्याहारादिकं येषां त एवम् । तेषु चाभ्यन्तरेषु कृमिषु मध्ये श्लेष्मजा अधिकमतिशयेन मधुराहारादिभिः स्युः ॥

रक्तजानां निदानविशेषो (न लक्ष्यते?वक्ष्यमाण) इति पुरीषोत्थांस्तावदाह—

शकृज्जा बहुविड्धान्यपर्णशाकोलकादिभिः ॥ ४६ ॥

शकृज्जाः शकृत उद्भूतास्ते कृमयः कुष्ठैकहेतुसामान्ये(भ्यो?भ्य)धिकं बहुविड्धान्यैः यवमाषादिभिः बहुविड्भिरेव पर्णशाकैः पालक्यादिभिः तथोलकादिभिः उलकं स्वेदपर्यायः । अपरे उलुकादिभिरिति जगुः । उलुकं हरितावस्थं शिम्बिधान्यमिति व्याचक्षते । इन्दुः पुनरोकुलादिभिरिति पठति ओकुलं कृतान्न उक्तमिति वदन् । "ओकुलं कोशस्थं स्विन्नं शिम्बिधान्यमि"ति हाटकः । बहुविड्धान्यं राजमाषादि । पर्णशाकं पर्णग्राहि शाकम् । ओकुलं आमयवकृतो भक्ष्यविशेष इति पाठ्ये । अथवा शाकोदकं ([3]ഓണക്കുളി?)।

---

१. 'ल. लिक्षा – ഈരുകൾ' ग । २. 'न वक्ष्यत' ग ।
३. 'അന്തനാക്കൊള്ളി' ख, 'അന്തനാക്കുളി' ग ।

रक्तजानां तु कुष्ठात्यन्तसमाननिदानत्वात् पृथङ् नाभिधानम्। **आगमश्चात्र**--"शोणितजानां तु कुष्ठैः समानं समुत्थानं, स्थानं रक्तवहा धमन्यः, संस्थानमणवो वृत्ता अपादाश्च, सूक्ष्मत्वाच्च ते न भवन्ति दृश्याः। आसां नामानि केशादाः लोमविध्वंसाः लोमद्वीपा सौरसा औदुम्बरा जन्तुमातरश्चेति। प्रभावः केशश्मश्रुलोमविध्वंसः, व्रणगतानां च हर्षकण्डूतोदसर्पणानी"ति॥

**कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः।**
**पृथुब्रध्ननिभाः केचित् केचिद् गण्डूपदोपमाः॥ ४७॥**
**रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाणवः।**
**श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते॥ ४८॥**
**आन्त्रादा उदरावेष्टा हृदयादा महारुहाः।**
**चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते॥ ४९॥**
**हृल्लासमास्यस्रवणमविपाकमरोचकम्।**
**मूर्च्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान्॥ ५०॥**

कफादित्यादि। तत्र कफजाः कृमयः आमाशये जाताः न पक्वाशये। तत्र हि पृथगध्येष्यते "पक्वाशये पुरीषोत्थाः" इति। ते च पश्चाद् वृद्धाः सन्तः सर्वतः सर्वस्मिन् जठरे सर्पन्ति। सर्वस्मिन् शरीरे सर्पन्तीत्यन्ये। सर्वत इति आद्यादित्वात्तसिः। पृथुब्रध्ननिभा इत्यादिना संस्थानकथनम्। श्वेता इत्यादिना वर्णकथनम्। नामतो नाम्ना ते सप्तधा सप्तप्रकाराः। तुश्चार्थे। तान्येव नामानि सप्ताह--आन्त्रादा इत्यादिना। आन्त्राणि अदन्ति इत्यान्त्रादाः इत्यादीन्यर्थानुगतानि। कानिचिद् यादृच्छिकानि नामानि चुरव इत्यादीनि। आन्त्रादः കടൽതിന്നി കൃമി। महारुहः പെരുമുള്ള കൃമി। चुरुः ചെറുമുള്ള കൃമി। (चु? कु)रवः इति केचित् पठन्ति। सुरव इत्यन्ये। दर्भकुसुमाः വെൺകൃമി। सुगन्धाः (നരം ? നാരുംകൃമി)। ते च कफजाः कृमयः आन्त्रादादयः हृल्लासादिकं कुर्वते॥

---

१. 'जन्ममातर' ख. घ. ङ। २. 'राविष्ठा' इति, ३. 'हाकुहा' इति, ४. 'कुरव' इति च मुद्रिते। ५. 'കി. उदरावेष्टं = വയറുചുറ്റി കൃമി (?) हृदयादम् = കരളുതിന്നി കൃമി महा' ग।

अधुना रक्तजानाह—

रक्तवाहिसिरोत्थाना: रक्तजा जन्तवोऽणवः ।
अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः ॥ ५१ ॥
केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः ।
षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥ ५२ ॥

रक्तवाहीत्यादि । रक्तजा जन्तवः क्रमयो रक्तवाहिसिरोत्थानाः स्युः । तेषां रक्तवाहिन्यः सिराः स्थानम् । अणवः सूक्ष्माः, तथा अपादाः वृत्ताः ताम्रवर्णाश्च । सौक्ष्म्यात् सूक्ष्मत्वात् कारणात् केचिददर्शनाः प्रत्यक्षप्रमाणा-समधिगम्याः कार्येणैवानुमीयन्ते । तेषां नामान्याह—केशादा इत्यादिना । ते च केशादादयश्चत्वारः । सौरसमातृभ्यां सह वर्तन्त इति सहसौरसमातरः इति द्वौ । एवं षडेते । कुष्ठेनैकं तुल्यं कर्म येषां त एवम् । तोदकण्ड्वादिकरा इत्यर्थः । केशादः കഴൽതിന്നി കൃമി । लोमविध्वंसः മയിർകൊഴിപ്പൻകൃമി । लोमद्वीपः മയിരതിന്നികൃമി । उदुम्बरं ചെറുനണൽ । माता കറത്തിന്നി നണൽ । सौरसः നണൽ । सोरसेति केचित् पठन्ति ।

पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः
वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखाः ॥ ५३ ॥
तदास्योद्गारनिःश्वासा विड्गन्धानुविधायिनः ।
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥ ५४ ॥
ते पञ्च नाम्ना क्रमयः ककेरुकमकेरुकाः ।
सौसुरादाः सलूनाख्या लेलिहा जनयन्ति च ॥ ५५ ॥
विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ।
रोमहर्षाग्निसदनगुदकण्डूविनिर्गमान् ।

पक्वेत्यादि । पुरीषोत्थाः क्रमयः पक्वाशये जायन्ते । ते वृद्धाः सन्तः अधोमुखाश्च स्युः । ते यदा वृद्धत्वादामाशयोन्मुखा भवन्ति तदा तस्मिन् काले

१. 'सिरास्थानाः' ग ।

अस्य पुरुषस्य उद्गारनिःश्वासाः उद्गाराश्च निःश्वासाश्च विड्गन्धानुविधायिनः पुरीषगन्धानुकारिणो भवेयुः। तथा ते पृथुवृत्ततनुस्थूलाः संस्थानेन, श्यावपीतसितासिता वर्णेन भवन्ति। तथा नाम्ना पञ्चसंख्याः। तान्येव नामान्याह—ककेरुकेत्यादि। ककेरुकः - കരിംകലപ്പാമ്പ്। ममेरुकः - വെങ്കലപ്പാമ്പ്। सौरसादः - പുളിഉണ്ണി[1]കലപ്പാമ്പ്[2]। लेलिहा - പീനക്കിക്കലപ്പാമ്പ്। ते च विड्भेदादीन् जनयन्ति। गुदविनिर्गमो गुदभ्रंशः। एवं विंशतिः क्रिमयः। द्वौ बहिर्मलजौ, सप्त कफजाः, षड् रक्तजाः, पञ्च पुरीषजा इति॥

इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने चतुर्दशोऽध्यायः॥



१. 'കൊലപ്പാമ്പ്' घ। २. 'മ്പ്'. शल्तं = പിതിന്നികൊലപ്പാമ്പ്' ख. ग।

# पञ्चदशोऽध्यायः ।

वातरोगाणां कुष्ठवद् बहुप्रकारत्वाद् विविधदुःखदायकत्वाच्च कुष्ठनिदानानन्तरं वातव्याधिनिदानमारभ्यते । महारोगत्वसामान्यादितीन्दुः ।

**अथातो वातव्याधिनिदानं व्याख्यास्यामः ।**

"वातनिमित्ता व्याधयो वातव्याधयः तेषां निदानम् । विसर्पणसामान्याद् वातव्याधिसंज्ञितं व्याधिमाह" इति पाठ्ये । सर्वव्याधिर्वातकोपपरिणतिविशेषाज्जायते । तस्माद् वायुमेवादौ प्रस्तौति ।

**सर्वार्थानर्थकरणे विश्वस्यास्यैककारणम् ।**
**अदुष्टदुष्टः पवनः शरीरस्य विशेषतः ॥ १ ॥**

सर्वार्थेत्यादि । पुरुषेण वातादुष्टौ सर्वथा यतितव्यम् । यतोऽस्य विश्वस्य जगतः सर्वार्थानर्थकरणे अर्थाः प्रयोजनानि अनर्था उपद्रवाः अर्थाश्चानर्थाश्च अर्थानर्थाः सर्वे च ते अर्थानर्थाः सर्वार्थानर्थाः तेषां कारणं निर्वृत्तिः तस्मिन् । सर्वप्रयोजनकरणे सर्वोपद्रवकरणे च यथाक्रमेण अदुष्टो दुष्टश्च पवनो वायुः एककारणं प्रधानकारणम् । सर्वानर्थकरणे जगद्विनाशलक्षणे दुष्टः पवनः प्रधानहेतुः । शरीरस्य पुनः विशेषतोऽतिशयेनार्थानर्थकरणे अदुष्टदुष्टः पवनः प्रधानं कारणम् । पञ्चधात्वं गतेन प्राणादितया शरीरजननाद्धारणाद्विनाशकरणाच्च । अतस्तददुष्टौ यतितव्यमिति सम्बन्धः । अब्धरणिधारणज्वलनोज्ज्वलनादित्यचन्द्रग्रहनक्षत्रगतिविधानादयः सर्वार्थाः वृक्षभञ्जनाकालवर्षदावाग्निप्रसारादयः सर्वानर्थाः प्रपञ्चमुद्दिश्य यत्क्रियते तदास्ताम् । शरीरस्य विशेषत इत्यनेन वाय्वायत्तमेव शरीरव्यापारमिति सूचयति ॥

कथं वायुः कारणमित्यवगम्यते इत्याह---

**स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः ।**
**स्रष्टा धाता विभुर्विष्णुः संहर्ता मृत्युरन्तकः ॥ २ ॥**

१. 'प्रसरा' ख. घ. ङ ।

**तददुष्टौ प्रयत्नेन यतितव्यमतः सदा ।**

"स विश्वकर्मेत्यादि पूर्वाचार्यानुरोधेन वायुस्तोत्र"मितीन्दुः। यतोऽसौ वायुः विश्वकर्मा विश्वानि शरीरजननवर्धनधारणभञ्जनशोषणादीन्यर्थानर्थकरणानि कर्माणि यस्य स विश्वकर्मा । शरीरस्य जन्मनः प्रभृति शुभकरणानामशुभकरणानां कर्तेत्यर्थः । कस्माद्विश्वकर्मेत्याह--विश्वात्मा । विश्वेषां शुभाशुभानामात्मा हेतुः । हेत्वर्थोऽत्र आत्मशब्दः । ननु विश्वात्मेति कथं ज्ञायत इत्याह-विश्वरूप इति । यतो विश्वं रूपं बाह्याध्यात्मिकाख्यं यस्य स एवम् । अन्येऽपि विश्वस्य गमनादिक्रियाविशेषस्यात्मा विश्वात्मेत्याहुः । तथा प्रजापतिः प्रजानां पालकः तथा स्रष्टा प्रकृतत्वाद्विश्वस्य । धाता विश्वस्य धारकः । तथाहि बाह्यो लोको वायुमण्डलेन धार्यते । सर्वलोकोऽपि प्राणापानादिभिः । कस्माद्विश्वरूपः यस्माद्विभुः, तदर्थानर्थकरणे विभुरित्यर्थः । कस्मात् प्रजापतिः यस्माद्विष्णुर्व्यापी सर्वजगतः । 'विषु व्याप्तौ' इत्यस्य औणादिके नुप्रत्यये विष्णुशब्दः । संहर्ता बाह्याध्यात्मिकसर्गसंहरणात् । मृत्युः यमभटः तत्कार्यकरणात् । अन्तको यमभट्टारक एव साक्षात् । "संहरणस्वभावान्मृत्युनान्तकेन च सदृश" इति हाटकः । यतश्चैवमतस्तददुष्टौ तस्याप्रकोपे सदा सर्वकालं यतितव्यम् ॥

**तस्योक्तं दोषविज्ञाने कर्म प्राकृतवैकृतम् ॥ २ ॥**

**समासाद् व्यासतो दोषभेदीये नाम धाम च ।**
**प्रत्येकं पञ्चधा चारो व्यापारश्च,**

तस्येत्यादि । तस्य पवनस्य प्राकृतवैकृतं कर्म दोषविज्ञाने दोषादिविज्ञानीयेऽध्याये समासात् संक्षेपेणोक्तम् । प्रकृतौ भवं प्राकृतं स्वाभाविकं कर्म उत्साहोच्छ्वासादिलक्षणम् । वैकृतं तु वृद्धिक्षयभेदात् कार्श्याङ्गसादादि, "वृद्धस्तु कुरुतेऽनिलः कार्श्यकार्ष्ण्ये"त्यादिग्रन्थनिर्दिष्टं, "लिङ्गं क्षीणेऽनिलेऽङ्गस्य सादोऽल्पं भाषतेऽहित"मित्यादिग्रन्थनिर्दिष्टं च । व्यासतो विस्तरेण पुनर्दोषभेदीये तस्य वायोः प्राकृतवैकृतं कर्मोक्तम् । प्रत्येकं पञ्च धाम नाम चोक्तमित्यनुवर्तनीयम् । पञ्चस्वपि भेदेषु प्राणादिभेदेन नामोक्तम् । प्रत्येकं पञ्चधा

१. 'सदा । इन्दुस्त्वेवमाह—स विश्व......स्तोत्रमिति । यतो' ग ।

धाम चोक्तम्। पञ्चस्वपि भेदेषु प्रत्येकं धाम च पञ्चधोक्तं मूर्धादिभेदेन। प्राणस्य मूर्धा स्थानं "प्राणोऽत्र मूर्धगः" इति वचनात्। तथा "उरः स्थानमुदानस्य" तथा "व्यानो हृदि स्थितः" इति। "समानोऽग्निसमीपस्थः" इति। तथा "अपानोऽपानगः" इति। तथा चारोऽपि प्रत्येकं पञ्चधोक्तः। चरणं चारो गतिः। तथा चोक्तम्-प्राणः उरःकण्ठचरः, उदानो नासानाभिगलांश्चरः, व्यानः कृत्स्नदेहचारी, समानः कोष्ठचरः, अपानो बस्तिमेढ्रोरुगोचरः इति। व्यापारोऽपि वायोः प्राणादिभेदेन प्रत्येकं पञ्चधा उक्तः। तथा प्राणस्य व्यापारो 'बुद्धिहृदयेन्द्रियचित्तधृग्' इत्यादिः। उदानस्य व्यापारो 'वाक्प्रवृत्ती'-त्यादिः। व्यानस्य व्यापारो गत्यपक्षेपणोत्क्षेपणादिकः। समानस्य व्यापारो अन्नग्रहणादिकः। अपानस्य व्यापारः शुक्रार्तवादिनिष्क्रामणरूपः। एवं विस्तरेण दोषभेदीये वायुः प्राणादिभेदेन पञ्चधा नामादिभिः उक्तः॥

**इह वैकृतम्॥ ४॥**

**तस्योच्यते विभागेन सनिदानं सलक्षणम्।**

इह तु अस्मिन्नध्याये तस्यैव वायोः रूपान्तरेण वैकृतं कर्म विभागेन पृथग्रूपतयोच्यते। किंभूतं सनिदानं सह निदानेन। तथा सह लक्षणेन सलक्षणम्॥

वायोः द्विविधः कोपः संभवति धातुक्षयादावरणाच्च। तमेव दर्शयन्नाह—

**धातुक्षयकरैर्वायुः कुप्यत्यतिनिषेवितैः॥ ५॥**
**चरन् स्रोतःसु रिक्तेषु भृशं तान्येव पूरयन्।**
**तेभ्योऽन्यदोषपूर्णेभ्यः प्राप्य वावरणं बली॥ ६॥**

धातुक्षयेत्यादि। धातुक्षयकरैराहारविहारादिभिः अतिनिषेवितैः अतिमात्रनिषेवितैः चिरकालसेवितैश्च पवनः कुप्यति कोपं याति। किं कुर्वन्— रिक्तेषु स्रोतःसु चरन्, धातुक्षयकरातिसेवनाद् यतस्तदानीं स्रोतसां शून्यता भवति तथाभूतेषु स्रोतःसु चरन्, प्रभञ्जनः तदन्तःप्रवेशात् तान्येव स्रोतांसि रिक्तानि भृशं पूरयन्। एवं धातुक्षयात् कुप्यति मरुत्। तथा तेभ्यः स्रोतोभ्योऽन्यदोषपूर्णेभ्यः आवरणं प्राप्य, बली वायुः एवं वा कुप्यति॥

क्रुद्धस्य स्थानविशेषेण कर्मविशेषं दर्शयति—

**तत्र पक्वाशये क्रुद्धः शूलानाहान्त्रकूजनम् ।**
**मलरोधाश्मवर्ध्मार्शस्त्रिकपृष्ठकटीग्रहम् ॥ ७ ॥**

**करोत्यधरकायेषु तांस्तान् कृच्छ्रानुपद्रवान् ।**

तत्रेत्यादि । तत्र तेषु वक्ष्यमाणेषु स्थानेषु एवमुभयथा वायुः पक्वाशये क्रुद्धः तत्र शूलानाहौ आन्त्रकूजनादीन् च करोति । हाटकस्तु —"एवं क्रुद्धः पक्वाशये स्थितः शूलादीन् करोति ।" इत्याह । तथा अधरकाये च शरीरस्याधस्तान्नानाविधानुपद्रवान् व्याधीन् कृच्छ्रान् कृच्छ्रसाध्यान् करोति । कायस्याधर इति "पूर्वापर--" (पा० सू० २-२-१) इत्यादिना समासः ॥

**आमाशये तृड्वमथुश्वासकासविषूचिकाः ॥ ८ ॥**
**कण्ठोपरोधमुद्गारान् व्याधीनूर्ध्वं च नाभितः ।**

आमाशये क्रुद्धः तृडादीन् तथा अन्यानप्युपद्रवान् नाभेरूर्ध्वकाये करोति ॥



**श्रोत्रादिष्विन्द्रियवधम्,**

श्रोत्रादिष्विन्द्रियाधारेषु क्रुद्धः इन्द्रियाणां वधं नाशं करोति । आदिग्रहणाद् नेत्ररसनादीनां ग्रहणम् ॥

**त्वचि स्फुटनरूक्षणे ॥ ९ ॥**

त्वचि क्रुद्धः तस्याः त्वचः स्फुटनं रूक्षणं रूक्षतां च करोति ॥

**रक्ते तीव्रा रुजः स्वापं तापं रागं विवर्णताम् ।**
**अरूंष्यन्नस्य विष्टम्भमरुचिं कृशतां भ्रमम् ॥ १० ॥**

रक्ते क्रुद्धः तीव्ररुजास्तथा स्वापादीन् करोति ॥

**मांसमेदोगतो ग्रन्थींस्तोदाढ्यान् कर्कशान् श्रमम् ।**
**गुर्वङ्गं चातिरुक् स्तब्धं मुष्टिदण्डहतोपमम् ॥ ११ ॥**

---

१. 'धं विनाशं' ख. घ. ङ ।

मांसमेदोगतः तत्रस्थः क्रुद्धो ग्रन्थीन् तोदादियुतांस्तथा श्रमादींश्च करोति। **सुश्रुते** चात्र विशेष उक्तः। तथा च तद्ग्रन्थः —

"कर्कशांस्तोदबहुलान् ग्रन्थीन् मांससमाश्रितः।
वायुर्मेदोगतः कुर्याद् ग्रन्थीन् मन्दरुजो नृणाम्॥"

इति।

**अस्थिस्थः सक्थिसन्ध्यस्थिशूलं तीव्रं बलक्षयम्।**

अस्थिस्थः क्रुद्धः सन्ध्यादिशूलं तीव्रं दारुणं बलक्षयं च करोति॥

**मज्जस्थोऽस्थिषु सौषिर्यमस्वप्नं स्तब्धतां रुजम्॥ १२॥**

मज्जस्थः अस्थिसौषिर्यादीन् करोति॥

**शुक्रस्य शीघ्रमुत्सर्गं सङ्गं विकृतिमेव च।**
**तद्वद् गर्भस्य शुक्रस्थः,**

शुक्रस्थः क्रुद्धः शुक्रस्य शीघ्रमुत्सर्गादीन् करोति। गर्भस्यापि तच्छुक्रसंभवस्य तद्वत् शुक्रवत् शीघ्रमुत्सर्गादीन् करोति॥

**सिरास्वाध्मानरिक्तते॥ १३॥**
**तत्स्थः,**

तत्स्थः सिरास्थः क्रुद्धः तास्वेव सिरासु आध्मानरिक्तते करोति॥

**स्नावस्थितः कुर्याद् गृध्रस्यायामकुब्जताः।**

स्नावस्थः क्रुद्धो गृध्रस्यादीन् करोति।

**वातपूर्णदृतिस्पर्शं शोफं सन्धिगतोऽनिलः॥ १४॥**
**प्रसारणाकुञ्चनयोः प्रवृत्तिं च सवेदनाम्।**

वातपूर्णादि सन्धिगतलिङ्गम्। सन्धिगतोऽनिलः क्रुद्धः शोफं कुर्यात्। किंभूतम्–वातपूर्णदृतितुल्यस्पर्शं तथा प्रसारणे आकुञ्चने च सवेदनां प्रवृत्तिं करोति॥

**सर्वाङ्गसंश्रयस्तोदभेदस्फुरणभञ्जनम्॥ १५॥**

**स्तम्भमाक्षेपणं स्वापं सन्ध्याकुञ्चनकम्पनम् ।**

सर्वाङ्गसंश्रयः तत्रस्थः क्रुद्धो वायुः तोदादीन् करोति ॥

**यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः ॥ १६ ॥**
**तदाङ्गमाक्षिपत्येष व्याधिराक्षेपकः स्मृतः ।**

यदा तु वायुः क्रुद्धः सन् सर्वा धमनीः मुहुर्मुहुरभ्येति पुनःपुनराभिमुख्येनागच्छति तदाङ्गं शरीरं आक्षिपत्याक्रामति । एष वातव्याधिराक्षेपकः स्मृतः । "आक्षिपति संकोचयति" इतीन्दुः ॥

अपतन्त्रकं लक्षयति—

**अधः प्रतिहतो वायुर्व्रजत्यूर्ध्वं हृदाश्रितः ॥ १७ ॥**
**नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन् ।**
**आक्षिपेत् परितो गात्रं धनुर्वच्चास्य नामयेत् ॥ १८ ॥**
**कृच्छ्रादुच्छ्वसिति स्तब्धस्रस्तमीलितदृक् ततः ।**
**कपोत इव कूजेत् स निःसंज्ञः सोऽपतन्त्रकः ॥ १९ ॥**
**स एव चापतानाख्यो मुक्ते तु मरुता हृदि ।**
**अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते ॥ २० ॥**

अध इत्यादि । अधः प्रतिहतो दोषान्तरेण ऊर्ध्वं व्रजन् मारुतो हृदाश्रिताः हृदयस्था नाडीरन्तः प्रविश्य हृदयं तथा शिरश्च शंखौ च पीडयन् आक्षिपेत् । परितो गात्रं समन्तात्कायम् आक्षिपेत् संहरेत् । तथा धनुर्वच्चास्य नामयेत् प्रकृतत्वाद् गात्रमेवास्यापतन्त्रकवतो नरस्य नामयेत् । तथा स पुमान् कृच्छ्रादुच्छ्वसिति कथंचिच्छ्वसिति । दृक् चक्षुरिन्द्रियाधिष्ठानं दृक्शब्देनेह गृह्यते । स्तब्धा स्रस्ता मीलिता च दृग् यस्यासौ स्तब्धस्रस्तमीलितदृक् । ततोऽनन्तरं कपोत इव कूजेद् अव्यक्तं शब्दं विदध्यात् । तथा निःसंज्ञो विचेतनः सम्पद्यते । स एवंरूपो वातव्याधिरपतन्त्रकाख्यो भण्यते । स एव चापतानसंज्ञो[1] निगद्यते । अत्र च हृदि हृदये मरुता वायुना मुक्ते क्षणं मुहुः स्वास्थ्यमश्नुवीत प्राप्नुयात् । आवृते च मरुता हृदि मुहुरस्वास्थ्यम् अश्नुवीत ॥

---

१. 'नाख्यो नि' ग ।

**गर्भपातसमुत्पन्नः शोणितातिस्रवोत्थितः ।**
**अभिघातसमुत्थश्च दुश्चिकित्स्यतमो हि सः ॥ २१ ॥**

स चापतन्त्रकः अकाले गर्भपातात् समनन्तरं योषितां प्रायो जायते । कदाचित् शोणितातिस्रवात् कदाचित् स्त्रीणां पुरुषाणां च अभिघातात् स्यात् । एवं सकलसमुत्पन्नः कृच्छ्रतमः । इन्दुरपि—"एष चापतन्त्रको गर्भपातादिना (नार्याः) समुत्पन्नः कृच्छ्रतमः" इत्याह । अथवा सोऽपतन्त्रको गर्भपातसमुत्पन्नो दुश्चिकित्स्यः । शोणितातिस्रवोत्थितो दुश्चिकित्स्यतरः । अभिघातसमुत्थो दुश्चिकित्स्यतमः ॥

अन्तरायामबहिरायामयोः लक्षणमाह—

**मन्ये संस्तभ्य वातोऽन्तरायच्छन् धमनीर्यदा ।**
**व्याप्नोति सकलं देहं जत्रुरायम्यते तदा ॥ २२ ॥**

**अन्तर्धनुरिवाङ्गं च वेगैः स्तम्भं च नेत्रयोः ।**
**करोति जृम्भां दशनं दशनानां कफोद्वमम् ॥ २३ ॥**

**पार्श्वयोर्वेदनां वाक्यहनुपृष्ठशिरोग्रहम् ।**
**अन्तरायाम इत्येषः,**

मन्ये इत्यादि । मन्ये द्वे ग्रीवाश्रिते नाड्यौ वायुः संस्तभ्य धमनीरन्तरायच्छन् वक्रीकुर्वन् यदा सकलं देहं शरीरं व्याप्नोति तदा जत्रुरायम्यते वक्रीक्रियते । जत्रुशब्दस्य पुंस्त्वं लोकाश्रयत्वाल्लिङ्गस्येति । तथान्तर्मुखतो भागादङ्गं शरीरं च धनुरिवायम्यते इति चार्थः । वेगैर्विच्छिद्य पुनरुद्भवैर्भज्यत इव तुद्यत इव नानाव्यथारूपैः तथा स्तम्भं च नेत्रयोः करोति । तथा जृम्भां, तथा दशनानां दन्तानां दशनं खादनम् । तथा कफस्य उद्गमं, तथा पार्श्वयोः वेदनां शूलं, तथा वाक्यादीनां ग्रहं स्तम्भम् । इत्येष वातव्याधिरन्तरायामसंज्ञोऽङ्गस्यान्तरायमनाद्वक्रीकरणादुच्यत इति शेषः ॥

**बाह्यायामश्च तद्विधः ॥ २४ ॥**

**देहस्य बहिरायामात् पृष्ठतो नीयते शिरः ।**
**उरश्चोत्क्षिप्यते तत्र कन्धरा चावमृद्यते ॥ २५ ॥**

**दन्तेष्वास्ये च वैवर्ण्यं प्रस्वेदः स्रस्तगात्रता ।**
**बाह्यायामं धनुष्कम्पं[1] ब्रुवते वेगिनं च तम् ॥ २६ ॥**

बाह्यायामश्च तद्विधः तादृशः । देहस्य बहिरायामाद् अङ्गस्य धनुर्वद् बहिर्वक्रीकरणाच्च बहिरायाम इत्युच्यत इति शेषः । तमेव प्रदर्शयितुमाह— पृष्ठत इत्यादि । अत्र बाह्यायामे शिरः पृष्ठतो ह्रियते[2] । अन्तरायामबहिरायामयोः साधारणं मन्यास्तम्भादि । विशेषतस्त्वन्तरायामे वक्षोभिमुखमाकुञ्चनं बहिरायामे पृष्ठाभिमुखमिति । तथा तत्र बाह्यायामे उरो वक्षः उत्क्षिप्यते उन्नतिं नीयते । तथा कन्धरा ग्रीवा चावमृद्यते क्षुद्यते । तथा दन्तेषु वक्त्रे च वैवर्ण्यं प्राकृताद्वर्णाद्वर्णान्तरापत्तिः । तथा प्रकर्षेण स्वेदः । तथा स्रस्तगात्रता श्लथाङ्गता । तं तथाभूतं वातव्याधिं बाह्यायामं धनुष्कम्पं च ब्रुवते । 'धनुस्तम्भ'मिति वा पाठः । तमेव केचिद् वेगिनमित्याचक्षते ॥

अधुना व्रणायाममाह—

**व्रणं मर्माश्रयं प्राप्य समीरणसमीरणात् ।**
**व्यायच्छन्ति तनुं दोषाः सर्वामापादमस्तकम् ॥ २७ ॥**
**तृष्यतः पाण्डुगात्रस्य व्रणायामः स वर्जितः ।**

व्रणमित्यादि । दोषाः व्रणं मर्माश्रयं प्राप्य अनन्तरं समीरणसमीरणात् समीरणस्य समीरणात् प्रेरणात् सर्वां तनुं सकलं देहं आपादतलमस्तकं व्यायच्छन्ति विशेषेणाक्रामन्ति वक्रीकुर्वन्ति । एष व्रणायामः तृष्यतस्तथा पाण्डुगात्रस्य नरस्य वर्जितोऽसाध्यत्वात् ॥

**गते वेगे भवेत् स्वास्थ्यं सर्वेष्वाक्षेपकेषु च ॥ २८ ॥**

गत इत्यादि । सर्वेषु चाक्षेपकेषु 'यदा तु धमनीः सर्वाः' इत्यादिग्रन्थनिर्दिष्टेषु व्रणायामपर्यन्तेषु वेगे गते सति वेगानां शान्तौ सत्यां स्वास्थ्यं भवेन्नान्यदा । इन्दुरपि—"एषु चानन्तरोक्तेषु आक्षेपकेषु वायुवेगे गते सति स्वास्थ्यं भवति" इत्याह ॥

---

१. 'ष्कम्भ'मिति मुद्रितपाठः । २. 'ते पृष्ठाभिमुखं नीयते । अ' ख, घ, ङ ।

हनुस्रंसं लक्षयति—

जिह्वानिर्लेखनात् शुष्कभक्षणादभिघाततः ।
कुपितो हनुमूलस्थः स्रंसयित्वानिलो हनू ॥ २९ ॥
करोति विवृतास्यत्वमथवा संवृतास्यताम् ।
हनुस्रंसः स तेन स्यात् कृच्छ्राच्चर्वणभाषणम् ॥ ३० ॥

जिह्वेत्यादि । जिह्वानिर्लेखनादिभिः कुपितो हन्वोर्मूले स्थितो वायुः हनू स्रंसयित्वा स्वस्थानात् चालयित्वा 'भ्रंशयित्वा' इतीन्दुः । विवृतास्यत्वं प्रसारितमुखत्वम्, अथवा संवृतास्यत्वं करोति । स्रंसः सन्धेर्भ्रंशः । एवम्भूतो हनुस्रंस उच्यते । तेन च हनुस्रंसेन कृच्छ्रात् कथञ्चित् चर्वणं भाषणं च स्यात् ॥

जिह्वास्तम्भं लक्षयति—

वाग्वाहिनीसिरासंस्थो जिह्वां स्तम्भयतेऽनिलः ।
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ॥ ३१ ॥

वाग्वाहिनीत्यादि । वाग्वाहिनीसिरासु स्थितो वायुः जिह्वां स्तम्भयते । स एवंविधो जिह्वास्तम्भ उच्यते । तेन जिह्वास्तम्भेन अन्नपानवाक्येषु अनीशता असमर्थता भवति ॥

अथ अर्दितलक्षणमाह—

शिरसा भारहरणादतिहास्यप्रभाषणात् ।
उत्त्रासवक्त्रक्षवथुखरकार्मुककर्षणात् ॥ ३२ ॥
विषमादुपधानाच्च कठिनानां च चर्वणात् ।
वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्ध्वमास्थितः ॥ ३३ ॥
वक्रीकरोति वक्त्रार्धमुक्तं हसितमीक्षितम् ।
ततोऽस्य कम्पते मूर्धा वाक्सङ्गः स्तब्धनेत्रता ॥ ३४ ॥
दन्तचालः स्वरभ्रंशः श्रुतिहानिः क्षवग्रहः ।
गन्धाज्ञानं स्मृतेर्मोहस्त्रासः सुप्तस्य जायते ॥ ३५ ॥

१. 'ह्वातिलेख' इति मुद्रितपाठः ।

**निष्ठीवः पार्श्वतो यायादेकस्याक्ष्णो निमीलनम् ।**
**जत्रोरूर्ध्वं रुजा तीव्रा शरीरार्धेऽधरेऽपि वा ॥ ३६ ॥**
**तमाहुरर्दितं केचिदेकायाममथापरे ।**

शिरसेत्यादि । शिरसा भारभरणाद् अतिहास्यादिभिः तथा तैस्तैश्च वातलैः सर्वरोगनिदानोक्तैः वायुः विवृद्धः ऊर्ध्वकायमाश्रितः सन् वक्त्रार्धं वक्रीकरोति । तथा उक्तं हसितमीक्षितं च वक्रीकरोति । ततोऽनन्तरमस्य नरस्य मूर्धा कम्पते । अस्य रोगस्य इति केचित् । तथा वाक्सङ्गः तथा स्तब्धनेत्रतादयश्च भवन्ति । स्मृतेर्मोक्षो नाशः । तथा निष्ठीवो निष्ठीवनं पार्श्वेन गच्छेत् । एकस्य चाक्ष्णो निमीलनं स्यात् । जत्रोरूर्ध्वं तीव्रा रुजा पीडा च भवति । शरीरार्धेऽधरेऽपि अधस्ताद्वातमीदृशं वातव्याधिं केचिदर्दितमाहुः । अथापरे एकायाममाहुः । अस्यैव रोगस्य केचिदाचार्याः एकायाम इति नाम कुर्वन्तीत्यर्थः ॥

सिराग्रहं लक्षयति—

**रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः सिराः ॥ ३७ ॥**
**रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्यात्सिराग्रहः ।**

रक्तमित्यादि । पवनो वायुः रक्तमाश्रित्य श्रयित्वा मूर्धाश्रिताः सिराः रूक्षादिगुंणयुक्ताः कुर्यात् । स सिराग्रह इत्युच्यते । स चासाध्यः ॥

पक्षवधमाह—

**गृहीत्वार्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च ॥ ३८ ॥**
**पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोचयन् ।**
**कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ॥ ३९ ॥**
**एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ।**

गृहीत्वेत्यादि । वायुः तनोः शरीरस्यार्धं गृहीत्वा सिराः स्नायूश्च विशोष्य ततोऽन्यतरं वामं वा दक्षिणं वा पक्षं हन्ति । किं कुर्वन् । सन्धीनां बन्धान् विमोचयन् विघट्टयन् । तस्यैवंविधव्याधिमतः कृत्स्नः सर्वोऽर्धकायोऽकर्मण्यः

१. 'गुणाः कु' ग । २. 'क्ष' इति मुद्रिते ।

क्रियायामशक्तो विचेतनश्च स्यात्। तमीदृशं वातव्याधिं केचिद् एकाङ्गरोगं वदन्ति। अन्ये पक्षवधमाहुः। अर्धकाय इति 'अर्धं नपुंसकम्' (पा० सू० २-२-२) इति समासः ॥

**सर्वाङ्गरोगं तद्वच्च सर्वकायाश्रिते[1]ऽनिले ॥ ४० ॥**

सर्वकायाश्रये उभयपक्षावग्रहे वायौ तद्वद् एकाङ्गरोगतुल्यलक्षणं सर्वाङ्गरोगमाहुः ॥

**शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः।**
**कृच्छ्रस्त्वन्येन संयुक्तो विवर्ज्यः क्षयहेतुकः ॥ ४१ ॥**

शुद्धवातहतः शुद्धवातेन हतः पक्षः एकाङ्गरोगः कृच्छ्रसाध्यतमः अतिशयेन कृच्छ्रसाध्यो मतः। अन्येन संयुक्तो वातः याप्यः कृच्छ्रसाध्यः। "कृच्छ्रस्त्वन्येन संसृष्टः" इति वा पाठः। तुरवधारणे। क्षयहेतुकः पक्षो विवर्ज्यः। नोपक्रम्योऽसाध्यत्वात्। इन्दुनाप्युक्तं-"शुद्धेन वायुना पक्षवधोऽतिकृच्छ्रसाध्यः। दोषान्तरयुक्तेन[2] कृच्छ्रसाध्य एव। क्षयहेतुकः पक्षवधोऽचिकित्स्यः" इति ॥

दण्डकाख्यमाह—

**आमबद्धायनः कुर्यात् संस्तभ्याङ्गं कफान्वितः।**
**असाध्यं हतसर्वेहं दण्डवद् दण्डकं मरुत् ॥ ४२ ॥**

आमेत्यादि। आमेन बद्धानि स्थगितानि अयनानि द्वाराणि, प्रकृतत्वात्स्रोतसां, येन स आमबद्धायनः। कफान्वितो मारुतोऽङ्गं संस्तभ्य स्तम्भयित्वा दण्डवद् दण्डकाख्यं वातव्याधिं कुर्यात्। किंभूतम्। असाध्यं हतसर्वेहम् ॥

अपबाहुकं लक्षयति—

**अंसमूलस्थितो वायुः सिराः संकोच्य तत्रगाः।**
**बाहुप्रस्पन्दितहरं जनयत्यपबाहुकम् ॥ ४३ ॥**

अंसमूलेत्यादि। अंसमूलस्थितो वायुः अंसमूलगाः सिराः संकोच्य अपबाहुकं जनयति। किंभूतम्। बाहुप्रस्पन्दितं हरतीति बाहुप्रस्पन्दितहरम्। 'हरतेरनुद्यमनेऽच्' (पा० सू० ३-२-९) इत्यच् ॥

---

१. 'श्रिते'; २. 'न वायुना तु कृ' मुद्रितपाठः।

विश्वभीं दर्शयति—

**तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः ।**
**बाहुचेष्टाप्रहरणी विश्वभी नाम सा स्मृता ॥ ४४ ॥**

तलमित्यादि । 'पार्ष्णिं प्रत्यङ्गुलीनां या कण्डरा मारुतार्दिते'ति वक्ष्यमाणं मारुतार्दितेति पदमत्रापि योज्यम् अनागतापेक्षणाख्यया तन्त्रयुक्त्या । अङ्गुलीनां संबन्धिनी या कण्डरा सिरास्नायुसंघातः तलं प्रति प्राणितलाभिमुख्येन वर्तते सा कण्डरा बाहुपृष्ठतो गता यदा मारुतार्दिता वातपीडिता सती बाहुचेष्टां भुजव्यापारमपहरति तदा सा विश्वभीति नाम्ना स्मृता, मुनिभिरिति शेषः । बाहुचेष्टापहारणीति कर्तरि ल्युट् स्त्रीत्वं च । विश्वभी - കൊറങ്ങുവള്ളി[२] കോച്ചുക ॥

खञ्जं लक्षयति—

**वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा ।**
**तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोरपि ॥ ४५ ॥**

वायुरित्यादि । कट्यां स्थितो वायुः यदा सक्थ्नः सम्बन्धिनीं कण्डरामाक्षिपेत् तदा प्राणी खञ्जो भवेत् । द्वयोरपि सक्थ्नोः सम्बन्धिनीं कण्डरां यदा आक्षिपेत् तदा पङ्गुः स्यात् । एकसक्थ्याक्षेपेण खञ्जत्वं द्वयोः सक्थ्नोः आक्षेपेण पङ्गुत्वम् । खञ्जः - ഒരുകാൽ മൊടവൻ । पङ्गुः - ഇരുകാൽമൊടവൻ ॥

कळायखञ्जं लक्षयति—

**कम्पते गमनारम्भे खञ्जन्निव च याति यः ।**
**कळायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ४६ ॥**

कम्पत इत्यादि । यस्तु वातवशाद् गमनारम्भे कम्पते वेपते खञ्जन्निव च याति तं कळायखञ्जं विद्यात् । किंभूतम् । मुक्तसन्धिप्रबन्धनम् । मुक्तं सन्धि (प्र)बन्धनं यस्य तम् । **अरुणदत्तो**ऽपि—"तमेवंभूतं कळायखञ्जाख्यं व्याधिं विद्याद्" इत्याह । कळायखञ्जं - മുയലിവിറയൽ ॥

---

१. 'विश्वाची'ति मुद्रिते । २. 'വള്ളി' ।

.शीतोष्णेत्यादिनोरुस्तम्भस्य निदानं सम्प्राप्तिश्चोच्यते--

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ।
जीर्णाजीर्णे तथायाससंक्षोभस्वप्नजागरैः ॥ ४७ ॥

सश्लेष्ममेदःपवनमाममत्यर्थसंचितम् ।
अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते ॥ ४८ ॥

सक्थ्यस्थीनि प्रपूर्यान्तः श्लेष्मणा स्तिमितेन तत् ।
तदा स्कभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ ४९ ॥

परकीयाविव गुरू स्यातामतिभृशव्यथौ ।
ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः ॥ ५० ॥

संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः ।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ५१ ॥

जीर्णेन सहितमजीर्णं जीर्णाजीर्णम् । पक्वामाहारकदम्बकं केनचिन्निमित्तेन जठराग्निसंयोगादाहारस्य कश्चिद् भागः पक्वः कश्चिद्विदग्धः इति जीर्णाजीर्णम् । इन्दुरपि--"किञ्चिज्जीर्णं किञ्चिदजीर्णमिति जीर्णाजीर्ण"मित्याह । तस्मिन् सति शीतोष्णादिभिः तथायाससंक्षोभादिभिर्निषेवितैः चिरमभ्यस्तैः आममत्यर्थं संचितं बहु सम्भृतं ऊरू यदि प्रतिपद्यते उभावाश्रित्यास्ते तदा तस्मिन् काले तेन यथोक्तेन हेतुना तावूरू स्कभ्नाति स्तम्भयति । किम्भूतमामम् । सह श्लेष्मणा मेदसा पवनेन च वर्तत इति सश्लेष्ममेदःपवनं, न तु केवलमेव । तथेतरं दोषं वातश्लेष्मापेक्षया पित्ताख्यमभिभूयाक्रम्य, न वातं कफं वा । तेन हि तयोः अभिभवो न युक्तः । (तस्मिन्निःतन्नि)वर्तनत्वादभिभूय इत्यनेनेतरदोषस्य प्रकोपोऽपि इति गम्यते । तथा तेन सह वर्तमानेनापि श्लेष्मणा स्तिमितेन स्त्यानेन सक्थिसम्बन्धीन्यस्थीनि अन्तःप्रपूर्य तानि निर्भराणि कृत्वा तदाममूरू स्कभ्नातीति योज्यम् । तेन हेतुना तदा तस्मिन् काले तावूरू स्तब्धौ निश्चलौ तथा स्पर्शतः शीतौ तथा अचेतनौ सूचीभिस्तुद्यमानावपि पीडां न वेदयेताम् । अत एव परकीयाविव गुरू स्याताम् । अतिभृशव्यथावत्यन्तशूलान्वितौ । परकीयाविति 'कुग् जनपदस्य च' (ग० सू०)इति ईयः कुगागमश्च ।

तथा ध्यानादिभिः संयुतौ। ध्यानं चिन्ता दौर्मनस्यमित्यर्थः। तथा पादसदनादिभिः संयुक्तौ। 'संयुक्त' इति वा पाठः। तमेवंलक्षणं व्याधिविशेषम् ऊरुस्तम्भमाहुः। तन्त्रकृत इति शेषः। अपरे आचार्याः आढ्यवातं तमाहुः। तस्यैव आढ्य इति नामेत्यर्थः। आमशब्दस्य नपुंसकत्वं लोकाश्रयत्वाल्लिङ्गस्येति बोध्यम्। अपरे त्वामशब्दस्य नपुंसकत्वं कथमिति संचिन्त्य "सश्लेष्ममेदाः पवनः साममत्यर्थसञ्चित"मिति पठन्ति। साममन्नम्। ऊरुस्तम्भम् = ഉടവാതം॥

क्रोष्टुकशीर्षमाह—

**वातशोणितजः शोफो जानुमध्ये महारुजः।**
**ज्ञेयः क्रोष्टुकशीर्षश्च स्थूलः क्रोष्टुकशीर्षवत्॥ ५२॥**

वातशोणितज इत्यादि। जानुमध्ये महारुजः शोफो वातशोणिताज्जातः क्रोष्टुकशीर्षाख्यो वातव्याधिविशेषः। स च स्थूलः क्रोष्टुकशीर्षं जम्बुकशिरः तत्सदृशो भवति। क्रोष्टुकशीर्षम् - നരിത്തലവാതം॥



वातकण्टकं लक्षयति—

**रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा।**
**वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम्॥ ५३॥**

रुगित्यादि। पादे चरणे विषमन्यस्ते सति अथवा श्रमाद्वा श्रमेण यदा गुल्फमाश्रित्य वातेन रुग् जायते तं वातकण्टकं वातकण्टकाख्यं वातव्याधिमाहुः। वातकण्टकं - ഞെരിഞ്ഞവാതം॥

गृध्रसीमाह—

**पार्ष्णिं प्रत्यङ्गुलीनां या कण्डरा मारुतार्दिता।**
**सक्थ्युत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते॥ ५४॥**

पार्ष्णिमित्यादि। विश्वचीवद् गृध्रसी व्याख्येया। विश्वच्यां तु बाहुपृष्ठत इत्युक्तम्। अत्र तु पादपृष्ठत इति वक्तव्यम् अतीतावेक्षणाख्यया तन्त्रयुक्त्या। अङ्गुलीनां सम्बन्धिनी या कण्डरा पार्ष्णिं प्रति पार्ष्णिं लक्षीकृत्य पार्ष्ण्यभिमुखं पादपृष्ठतो वर्तते सा कण्डरा यदा मारुतेन वायुनार्दिता व्यथिता सती चरणो-

द्धरणावसरे यः सक्थ्युत्क्षेपः ऊर्ध्वप्रेरणं तं निगृह्णाति अवगृह्णाति[1] सक्थ्नोः निश्चलत्वमिवोत्पादयति तां कण्डरां व्याधिविशेषसंज्ञां गृध्रसीं प्रचक्षते।

**विश्वची गृध्रसी चोक्ता खल्ली तीव्ररुजान्विता।**

गृध्रसी - കോച്ചുവല്ലികെട്ടുക। विश्वची पूर्वमुक्ता गृध्रसी च अधुनैवोक्ता। ते द्वे तीव्ररुजान्विते सत्यौ खल्लीति भण्येते। "विश्वचीगृध्रस्योः संयोगात् तीव्ररुजान्विता खल्लीत्युच्यते" इतीन्दुः।

पादहर्षं लक्षयति---

**हृष्येते चरणौ यस्य भवेतां च प्रसुप्तवत्॥ ५५॥**

**पादहर्षः स विज्ञेयः कफमारुतकोपजः।**

हृष्येते इत्यादि। यस्य पुंसश्चरणौ हृष्येते प्रसुप्ताविव च स्यातां स एवंभूतो वातव्याधिः पादहर्षः पादहर्षाख्यः। स च वातश्लेष्मकोपजो वेद्यः। पादहर्षः - (പാദം)തരിക്ക॥

पाददाहं दर्शयति---

**पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः॥ ५६॥**

**विशेषतश्चङ्क्रमिते पाददाहं तमादिशेत्[2]।**

अनिलः पित्तासृक्सहितः पादयोः दाहं कुरुते। विशेषेण तु चङ्क्रमिते सति। तमेवंभूतं पाददाहमादिशेत्।

इत्यष्टाङ्गहृदयव्याख्यायां हृदयबोधिकायां
निदानस्थाने पञ्चदशोऽध्यायः॥

---

१ 'अवमृद्नाति' ग। २ 'शेद् ब्रूयात्' ख. घ. ङ।

# षोडशोऽध्यायः।

"वातशोणितनिदानं वातव्याधिनिदानात् पृथगारभ्यते बहुवक्तव्यत्वात्। अन्यथा वातव्याधिविशेष एव वातशोणिताख्यो व्याधिरिति तत्रैव वक्तुं युक्तः स्यात्। तस्माद्वातशोणितनिदानं प्रक्रम्यते" इत्यरुणदत्तः। "वातहेतुत्वसामान्याद्वातशोणितनिर्णयः" इतीन्दुः। "संसृष्टस्य कोपः प्रस्तुत एव तस्माद्वातशोणितमाह" इति पाठ्ये।

अथातो वातशोणितनिदानं व्याख्यास्यामः।

असृजा रुद्धो वायुः वातशोणितम्। कथमित्याह—

**विदाह्यन्नं विरुद्धं च तत्तच्चासृक्प्रदूषणम्।**
**भजतां विधिहीनं च स्वप्नजागरमैथुनम्॥ १॥**

**प्रायेण सुकुमाराणामचङ्क्रमणशीलिनाम्।**
**अभिघातादशुद्धेश्च नृणामसृजि दूषिते॥ २॥**

**वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः।**
**तादृशेनासृजा रुद्धः प्राक् तदेव प्रदूषयेत्॥ ३॥**

**आढ्यरोगं खुडं वातबलासं वातशोणितम्।**
**तदाहुर्नामभिस्तच्च पूर्वं पादौ प्रधावति॥ ४॥**

**विशेषाद्यानयानाद्यैः प्रलम्बौ,**

विदाहीत्यादि। व्रीहिकुलत्थदधितक्रमद्यनिष्पावादिकं विदाह्यन्नं, तथा विरुद्धमन्नं संयोगमात्रादिवशाद् यथा 'आनूपमामिषं माषक्षीरे'त्यादिकं प्रागुक्तं, तत्तच्चासृक्प्रदूषणम् अन्यदप्याहारविहारजातं यत तत्रतत्रोक्तं तद् भजतां शीलयतां नृणां पुरुषाणां तथा विधिहीनम् अयथाशास्त्रं स्वप्नजागरमैथुनं भजतां प्रायेण सुकुमाराणाम्। प्रायोग्रहणादन्येषामपि रक्तोपचयहेत्वाहारसेविनाम् अचङ्क्रमणशीलिनां अत्यन्तमास्यादिसुखसेविनां अभिघातादनेकविधात् तथा अशुद्धेरशोधनान्मला-

निर्हरणात् तेषामसृजि दूषिते तद्दूषणहेतुभिः यथोक्तैः दुष्टे सम्पन्ने ततो वातलैः तिक्तोषणादिभिः सर्वरोगनिदानोक्तैः तथातिशयेन शीतलैः वायुः वृद्धोऽत्यन्तमुपचयं प्राप्य पश्चात् क्रुद्धः कुपितोऽत एव च विमार्गगो विशेषेणोन्मार्गगामी तादृशेन तथाभूतेनैव असृजा क्रुद्धेन रुद्धो विहतगतिः कृतात्यन्तसंश्लेषात्तदेव शोणितं प्राक् पूर्वं प्रदूषयेत् । प्राग्ग्रहणेनानन्तरं क्रमात् सर्वधातून् मांसादीनपि प्रदूषयेदिति प्रतिपादयति । इन्दुरपि---"प्राग्ग्रहणेन क्रमाद् धात्वन्तरमपि" इत्याह । तच्च तथाविधं रक्तमत्युपचितं दुष्टमाढ्यरोगं खुडं वातबलासं वातशोणितमिति नामभिराचार्या आहुः । तच्च वातशोणितं रोगस्वभावात् पूर्वं प्रथमं पादौ प्रधावति तत्र समुत्पद्यते । यः विशेषादतिशयेन प्रधावति । यानेन हस्त्यश्वादिना यानं गमनम् । आदिग्रहणादन्यैरपि पाद(प्रालागादि? प्रलम्बितापादकैर्गजतुरगादि)सदृशैः ॥

तस्य लक्षणम् ।

**भविष्यतः कुष्ठसमं तथा सादः श्लथाङ्गता ॥ ५ ॥**
**जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।**
**कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः ॥ ६ ॥**
**भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च ।**

तस्य च वातशोणितस्य भविष्यतो भाविनो लक्षणं प्राग्रूपं कुष्ठसमं कुष्ठेन तुल्यम् । कुष्ठस्य यत् प्राग्रूपं "अतिश्लक्ष्णखरस्पर्शे"त्यादि कुष्ठनिदानोक्तं तदत्रापि । न केवलमेतदेव यावत्तथा सादः श्लथाङ्गतेत्यादि च यावन्मुहुर्मुहुराविर्भवन्ति चेत्येतदपि भविष्यतो लक्षणम् ॥

**पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥ ७ ॥**
**आखोरिव विषं क्रुद्धं कृत्स्नं देहं विधावति ।**

तच्च वातशोणितं पादयोः मूलमास्थाय तत्र पूर्वं स्थितिं कृत्वा कदाचिद्धस्तयोरपि मूलमास्थाय अनन्तरं कृत्स्नं देहं विधावति विशेषेण प्रसरति । आखोर्मूषिकस्य सम्बन्धि यथा विषं क्रुद्धं देहैकदेशे पूर्वं स्थितिं कृत्वा अनन्तरं कृत्स्नं देहं प्रधावति तद्वदिति ॥

तच्च वातशोणितमुत्तानगम्भीरभेदेन द्विधा स्यादित्याह—

**त्वङ्मांसाश्रयमुत्तानं तत्पूर्वं जायते ततः ॥ ८ ॥**

**कालान्तरेण गम्भीरं सर्वान् धातूनभिद्रवत् ।**

त्वगित्यादि । त्वक् च मांसं च ते आश्रयो यस्य वातरक्तस्य तदेवं-भूतम् । तद्वातशोणितमुत्तानं पूर्वं प्राग् जायते । पूर्वमेव यावत् त्वङ्मांसाश्रयं तावदुत्तानमुच्यते । ततः पश्चात् कालान्तरेण क्रमात् सर्वान् धातून् अपरानपि मेदःप्रभृतीनभिद्रवदभिगच्छद् गम्भीरं जायते गम्भीराख्यां लभते ।

उत्तानस्य लक्षणमाह—

**कण्ड्वादिसंयुतोत्ताने त्वक् ताम्रश्यावलोहिता ॥ ९ ॥**

**सायामा भृशदाहोषा,**

कण्ड्वादीत्यादि । उत्ताने वातशोणिते त्वक् कण्ड्वादिसंयुता तथा ताम्र-श्यावलोहिता व्यामिश्रवर्णा भवति । तथा सायामा आयामसहिता तथा भृशदाहोषा ॥



गम्भीरलक्षणमाह—

**गम्भीरेऽधिकपूर्वरुक् ।**

**श्वयथुर्ग्रथितः पाकी वायुः सन्ध्यस्थिमज्जसु ॥ १० ॥**

**छिन्दन्निव चरत्यन्तर्वक्रीकुर्वंश्च वेगवान् ।**

**करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन् ॥ ११ ॥**

गम्भीर इत्यादि । गम्भीरे वातशोणिते अधिकपूर्वरुक् श्वयथुः स्यात् । गम्भीरे श्वयथुरुत्तानश्च श्वयथोरधिकरुग् भवति । तथा ग्रथितः कठिनः तथा पाकी पाकयुक्तः श्वयथुः स्यात् । तथा गम्भीरे वायुः वेगवान् बलवान् सन्ध्यस्थि-मज्जसु भिन्दन्निवान्तश्चरति गच्छति । तथा वायुः सर्वतः शरीरे चरन् गच्छन् वक्रीकुर्वंश्च सामर्थ्यात् तदा शरीरं खञ्जं पङ्गुं वा तद्रोगिणं करोति । खञ्जो विकलैकपादः । पङ्गुः उभयपादविकलः ॥

यथादोषं लक्षणमाह—

**वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम् ।**
**शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः ॥ १२ ॥**

**धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।**
**शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥ १३ ॥**

वात इत्यादि । तत्र वातशोणिते वातेऽधिकेऽधिकं शूलस्फुरणतोदनं भवति । शूलं सन्तता रुक् । तोदनं चिरविच्छिन्ना रुक् प्रतोदेनेव । तथा शोफस्य रौक्ष्यादयः स्युः, वातस्य चलस्वभावत्वात् । तथा च धमनीनां सिराविशेषाणां अङ्गुलिसन्धीनां च सङ्कोचः स्यात् । तथाङ्गग्रहोऽङ्गान्यवष्टब्धानीव स्युः । तथातिरुक् शीतद्वेषानुपशयौ भवतः । शीतद्वेषः शीतासहिष्णुत्वम् । तथानुपशयोऽसुखानुबन्धः । केनानुपशयः प्रकृतत्वात् शीतेन । तथा स्तम्भादयः स्युः । स्तम्भ इव स्तम्भो देहस्तब्धता । वेपथुः कम्पनम् । देहस्य सुप्तिरज्ञानामचैतन्यम् ॥

एवं वातोत्तरस्य लक्षणमुक्त्वा रक्तोत्तरं[1] वक्तुमाह—

**रक्ते शोफोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ।**
**स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥ १४ ॥**

रक्त इत्यादि । अधिक इत्यत्रानुवर्तते । रक्तेऽधिके शोफोऽतिरुक्तोद इति । वातेऽप्यधिके शोफः सरुग् भवति । किन्तु रक्तेऽधिकेऽतिरुक्तोदः शोफः स्यादिति विशेषः । तथा ताम्रो वर्णेन । चिमिचिमामिवाचरति चिमिचिमायते । स्निग्धरूक्षैरसौ शोफः शमं नैति शमं नायाति कण्डूक्लेदयुक्तः सन् ॥

**पित्ते विदाहः सम्मोहः स्वेदो मूर्च्छा मदः सतृट् ।**
**स्पर्शाक्षमत्वं रुग्रागः शोफपाको भृशोष्मता ॥ १५ ॥**

पित्ते पित्ताधिके विदाहादयः स्युः ॥

**कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः ।**
**कण्डूर्मन्दा च रुक्,**

१. 'रलक्षणमाह' ग पाठः ।

कफेऽधिके स्तैमित्यादयः स्युः। अरुणदत्तस्तु-"पित्ते पित्तानुबन्धे वातशोणिते" इत्याह ॥

**द्वन्द्वसर्वलिङ्गं च सङ्करे ॥ १६ ॥**

द्वन्द्वेत्यादि। "सङ्करे संसर्गे सन्निपाते च यथासङ्ख्येन द्वन्द्वलिङ्गं यथास्वं च भवति" इतीन्दुः। अरुणदत्तः पुनराह—"द्वन्द्वशब्देन वातपित्त-कफानां द्वौ द्वाविति प्रायेणेह गृह्यते। सर्वशब्देन वातपित्तकफा गृह्यन्ते। द्वन्द्वं च सर्वं च द्वन्द्वसर्वे। तयोर्लिङ्गं द्वन्द्वसर्वलिङ्गं सङ्करे भवति। कस्य सङ्करे प्रकृतत्वाद् वातपित्त[3]कफानाम्। द्वन्द्वसङ्करे द्वन्द्वलिङ्गं वातशोणितं भवति। सर्वसङ्करे[4] सर्वलिङ्गम्" इति ॥

**एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम्।**
**त्रिदोषजं त्यजेत्स्रावि स्तब्धमर्बुदकारि च ॥ १७ ॥**

एकेत्यादि। तच्च वातशोणितम् एकदोषानुगं नवं सत् साध्यं साधयितुं शक्यम्। द्विदोषजं याप्यम्। त्रिदोषजं वातशोणितं त्यजेद् असाध्यत्वान्नो-पक्रमेत्। स्रावित्वादियुक्तं च त्यजेत्। अर्बुदकारि अर्बुदं स्थिरं घनं सव्रण-मधिकमांसं तत्सदृशं च त्यजेत् ॥

**रक्तमार्गं निहत्याशु शाखासन्धिषु मारुतः।**
**निविश्यान्योन्यमावार्य वेदनाभिर्हरत्यसून् ॥ १८ ॥**

रक्तेत्यादि। मारुतो वायुः शाखासन्धिषु निविश्य तत्र स्थितिं कृत्वा तथा रक्तस्य मार्गमाशु शीघ्रं निहत्यानन्तरम् अन्योन्यमावार्य प्रकृतत्वाद् रक्तं कर्तृ वातमावार्य, वातोऽपि रक्तम्। तथा वेदनाभिः वातरक्तोचिताभिः पीडाभिः पुरुषस्यासून् हरति। "रक्तमार्गं निहन्ती"ति वा पाठः। इन्दुरप्याह–"वायुः शाखासन्धिषु निविश्य रक्तस्य मार्गमाशु निहन्ति। ते च वायुरक्ते परस्परमा-वार्य वेदनाभी रुजाभिः पुरुषस्यासून् हरत" इति। न केवलमेषैवावरणविधा यावद्वक्ष्यमाणेन प्रकारेणानेकधापि संभवति। तां च प्रदर्शयितुं प्रथमं पञ्चसु

१. 'नुविद्धे' इति मुद्रितपाठः। २. 'त्तकफरक्ता' इति ग। ३. 'त्तरक्तक' इति मुद्रितगपाठौ। ४. 'रे सर्वेषां वातादीनां सङ्करे सर्वं' मुद्रितपाठः।

वायुविशेषेषु निदानं लक्षणं चोच्यते। सैव च 'वायौ पञ्चात्मके' इत्यादिना प्रदर्श्यते—

वायौ पञ्चात्मके प्राणो रौक्ष्यव्यायामलङ्घनैः।
अत्याहाराभिघाताध्ववेगोदीरणधारणैः ॥ १९ ॥
कुपितश्चक्षुरादीनामुपघातं प्रवर्तयेत्।
पीनसार्दिततृट्कासश्वासादींश्चामयान् बहून् ॥ २० ॥

वायोः सवेगत्वादावरणं सिद्धम्। तच्च वायौ पञ्चात्मके प्राणादिभेदात् पञ्चस्वभावे वाते सति। प्राणो नाम वातो रौक्ष्यादिभिः कुपितश्चक्षुरादीनामुपघातं प्रवर्तयेद्विदधाति। तथा पीनसादींश्च यथाकोपं बहूनुपद्रवान् रोगान् कुर्यात्। "रूक्षव्यायामलङ्घनै"रिति वा पाठः। आदिशब्देन हिध्मादयो गृह्यन्ते॥

उदानः क्षवथूद्गारच्छर्दिनिद्राविधारणैः।
गुरुभारातिरुदितहास्याद्यैर्विकृतो गदान् ॥ २१ ॥
कण्ठरोधमनोभ्रंशच्छर्द्यरोचकपीनसान्।
कुर्याच्च गलगण्डादींस्तांस्तान् जत्रूर्ध्वसंश्रयान् ॥ २२ ॥

उदानः क्षवथुधारणादिभिर्विकृतः कुपितः कण्ठरोधादीन् गदान् कुर्यात्। चशब्दोऽत्र भिन्नक्रमः। गलगण्डादींश्च तांस्ताननेकविधान् जत्रूर्ध्वजान् यथाकोपं गदान् कुर्यात् ॥

व्यानोऽतिगमनध्यानक्रीडाविषमचेष्टितैः।
विरोधिरूक्षभीहर्षविषादाद्यैश्च दूषितः ॥ २३ ॥
पुंस्त्वोत्साहबलभ्रंशशोफचित्तोत्प्लवज्वरान्।
सर्वाङ्गरोगनिस्तोदरोमहर्षाङ्गसुप्तताः ॥ २४ ॥
कुष्ठं विसर्पमन्यांश्च कुर्यात्सर्वाङ्गगान् गदान्।

व्यानोऽतिगमनध्यानादिभिर्दूषितो दुष्टिं प्राप्तः पुंस्त्वभ्रंशादीन् अपरानपि सर्वाङ्गगान् गदान् कुर्यात्। सर्वाङ्गरोग उभयपक्षवधः ॥

---

१. 'शादिकान् गदान् कुर्यात्। सर्वाङ्ग' ख पाठः।

समानो विषमाजीर्णशीतसङ्कीर्णभोजनैः ॥ २५ ॥

करोत्यकालशयनजागराद्यैश्च दूषितः ।
शूलगुल्मग्रहण्यादीन् पक्वामाशयजान् गदान् ॥ २६ ॥

समानो विषमभोजनादिभिः अकालशयनादिभिश्च दूषितः शूलादीन् पक्वामाशयजान् गदान् करोति ।

"अकाले बहु वाल्पं वा भुक्तं तु विषमाशनम् ॥"

अपानो रूक्षगुर्वन्नवेगघातातिवाहनैः ।
यानयानासनस्थानचङ्क्रमैश्चातिसेवितैः ॥ २७ ॥

कुपितः कुरुते रोगान् कृच्छ्रान् पक्वाशयाश्रयान् ।
मूत्रशुक्रप्रदोषार्शोगुदभ्रंशादिकान् बहून् ॥ २८ ॥

अपानो रूक्षादिभिरतिसेवितैः वेगघातादिभिश्च अतिसेवितैः कुपितः कृच्छ्रान् दारुणान् पक्वाशयाश्रयान् मूलदोषादीन् बहून् गदान् करोति । सर्वत्र चादिग्रहणानि आगमाविरुद्धेनानुमानेन यथासम्भवं व्याख्येयानि ॥

सर्वं च मारुतं सामं तन्द्रास्तैमित्यगौरवैः ।
स्निग्धत्वारोचकालस्यशैत्यशोफाग्निहानिभिः ॥ २९ ॥

कटुरूक्षाभिलाषेण तद्विधोपशयेन च ।
युक्तं विद्यान्निरामं तु तन्द्रादीनां विपर्ययात् ॥ ३० ॥

सर्वञ्चेत्यादि । सर्वमपि प्राणादिकं मारुतं तन्द्रादिभिः लक्षणैः युक्तं सामं विद्यात् । तन्द्रादिलक्षणवैपरीत्येन तु निरामं विद्यात् । (मारुतस्य सामत्वे उक्तेऽपि पित्तश्लेष्मणोरपि सामत्वं वेद्यम् । तयोः कार्यदर्शनात् श्लैष्मिकाणि किं तर्हि आमज्वरः सशोषस्य कार्याणि न वेद्यम् । तस्मात् स्थितमेतत्[१] ॥ )

वायोरावरणं चातो बहुभेदं प्रवक्ष्यते ।

---

१. 'नाद् वेद्यतेऽन्यद् यथादर्शनं हेतुः उक्तानि तन्द्रादीनि कफकार्याणि तस्माय-त्किञ्चिदेतदुच्यते तानि श्ले' ख पाठः ।

वायोरित्यादि। "अतः सामादिलक्षणादनन्तरं वायोः पित्तादिविशेषाद् बहुभेदमनेकप्रकारम् आवरणं प्रकर्षेण वक्ष्यते। किल नास्याम एवावरणम् अपि त्वन्यदप्यस्तीति द्योतयति।" इत्यरुणदत्तः॥

**लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमस्तमः॥ ३१॥**
**कट्वोष्णाम्ललवणैर्विदाहः शीतकामता।**

पित्तेनावृते रुद्धमार्गे वायौ दाहादिकं लिङ्गम्। शीतकामता च॥

**शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम्॥ ३२॥**
**लङ्घनायासरूक्षोष्णकामता च कफावृते।**

कफावृते शैत्यादिकं लिङ्गम्। लङ्घनकामता च॥

**रक्तावृते सदाहार्तिस्त्वङ्मांसान्तरजा भृशम्॥ ३३॥**
**भवेच्च रागी श्वयथुः जायन्ते मण्डलानि च।**

रक्तावृते सदाहा दाहयुक्ता अर्तिः पीडा तथा रागवान् श्वयथुः स्यात्। मण्डलानि च जायन्ते॥

**मांसेन कठिनः शोफो विवर्णः पिटिकास्तथा॥ ३४॥**
**हर्षः पिपीलिकानां च संचार इव जायते।**

मांसेनावृते वायौ कठिनो विवर्णश्च शोफः स्यात्। तथा पिटकाः स्युः हर्षश्च। तथा पिपीलिकानां गात्रे सञ्चार इव जायते॥

**चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः॥ ३५॥**
**आढ्यवात इति ज्ञेयः सकृच्छ्रो मेदसावृते।**

चल इत्यादि। मेदसा आवृते वायौ अङ्गेषु चलत्वादियुक्तः शोफः स्यात्। तथा अरोचकः। स एवंविधः आढ्यवातनामा वेद्यः। स च कृच्छ्रः कृच्छ्रसाध्यः॥

**स्पर्शमस्थ्यावृतेऽत्युष्णं पीडनं चाभिनन्दति॥ ३६॥**
**सूच्येव तुद्यतेऽत्यर्थमङ्गं सीदति शूल्यते।**

अस्थ्यावृते वायौ अत्युष्णं स्पर्शं पीडनं चाभिनन्दति अभिलषति। तथाङ्गमतिशयेन सूच्येव तुद्यते। तथा सीदति शूल्यते च।

**मज्जावृते विनमनं जृम्भणं परिवेष्टनम् ॥ ३७ ॥**
**शूलं च पीड्यमानेन पाणिभ्यां लभते सुखम्।**

मज्जावृते वायौ विनमनमङ्गानाम्। पाणिभ्यां पीड्यमानेन प्रकृतत्वादङ्गेन सुखं लभते ॥

**शुक्रावृतेऽतिवेगो वा न वा निष्फलतापि वा ॥ ३८ ॥**

शुक्रावृते वायौ अतिवेगो वा प्रकृतत्वाच्छुक्रस्य न वा वेगो निष्फलता वा स्यात्। शुक्रस्य फलं गर्भः ॥

**भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्यन्नावृतेऽनिले।**

अन्नावृते वायौ भुक्ते सति रुजा कुक्षौ भवति। जीर्णेऽन्ने सति रुजा शाम्यति ॥

**मूत्राप्रवृत्तिराध्मानं वस्तौ मूत्रावृते भवेत् ॥ ३९ ॥**

मूत्रावृते वायौ मूत्रस्याप्रवृत्तिः। आध्मानं वस्तेः स्यात् ॥

**विडावृते विबन्धोऽधः स्वस्थाने परिकृन्तति।**
**व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ॥ ४० ॥**
**शकृत् पीडितमन्नेन दुःखं शुष्कं चिरात्सृजेत्।**

विडावृते वायौ स्वस्थानेऽपानाख्येऽधो विबन्धो जायते। विबद्धः सन् परिकृन्तति। स्नेहश्चाशु जरां याति। भुक्ते च सति नर आनह्यते आध्माप्यते। शकृद् अन्नेन पीडितं चिरेण शुष्कं दुःखं कृच्छ्रेण सृजेत् ॥

**सर्वधात्वावृते वायौ श्रोणीवंक्षणपृष्ठरुक् ॥ ४१ ॥**
**विलोमो मारुतोऽस्वस्थं हृदयं पीड्यतेऽति च।**

सर्वधात्वावृते वायौ सति यौगपद्येन सर्वधात्वावृते श्रोण्यादिरुक् स्यात्। पवनो विगुणो भवति। हृदयं च व्याकुलं पीड्यते ॥

इति सामान्येन वायोरावरणमुक्त्वा प्राणादिभेदेनोच्यते—

**भ्रमो मूर्च्छा रुजा दाहः पित्तेन प्राण आवृते ॥ ४२ ॥**
**विदग्धेऽन्ने च वमनं,**

भ्रम इत्यादि । प्राणे पित्तेनावृते भ्रमादयः स्युः । अन्ने च विदग्धे विदाहावस्थां प्राप्ते सति वमनं स्यात् ॥

**उदानेऽपि भ्रमादयः ।**
**दाहोऽन्तरूर्जाभ्रंशश्च,**

उदानेऽपि भ्रमादय इति । उदाने पित्तेनावृते पूर्वोक्ता भ्रमादयः स्युः । तथान्तर्दाहः ऊर्जायाः बलस्य च विनाशः । इन्दुः पुनराह—"पित्तेन उदान आवृते विभ्रमान्तर्दाहादयः स्युः । विभ्रमो मोहप्रायः" इति ॥

**दाहो व्याने च सर्वगः ॥ ४३ ॥**
**क्लमोऽङ्गचेष्टासङ्गश्च ससन्तापः सवेदनः ।**

व्याने तु पित्तेनावृते सर्वतोऽन्तर्बहिश्च दाहः क्लमादयश्च स्युः । "सर्वगः सर्वाङ्गीणो दाहः" इतीन्दुः ॥

**समान ऊष्मोपहतिरतिस्वेदोऽरतिः सतृट् ॥ ४४ ॥**
**दाहश्च स्याद्,**

समाने पित्तेनावृते ऊष्मणोऽग्नेः उपहतिरुपघातः दाहश्च स्यात् ॥

**अपाने तु मले हारिद्रवर्णता ।**
**रुजोऽतिवृद्धिस्तापश्च योनिमेहनपायुषु ॥ ४५ ॥**

अपाने पुनः पित्तेनावृते सति मले पुरीषादौ हारिद्रवर्णता स्यात् । योन्यादिषु रुजः पीडायाः अतिवृद्धिः तापश्च स्यात् ॥

**श्लेष्मणा त्वावृते प्राणे सादस्तन्द्रारुचिर्वमिः ।**
**ष्ठीवनक्षवथूद्गारनिःश्वासोच्छ्वाससंग्रहाः ॥ ४६ ॥**

श्लेष्मणेत्यादि । पित्तवत् क्रमेणोच्यते । श्लेष्मणा त्वावृते प्राणे सादादयः स्युः । ष्ठीवनादीनां संग्रहः ॥

**उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः ।**
**बलवर्णप्रणाशश्च,**

उदाने श्लेष्मणावृते गुरुगात्रत्वादयः स्युः ॥

**व्याने पर्वास्थिवाग्ग्रहः ॥ ४७ ॥**
**गुरुताङ्गेषु सर्वेषु स्खलितं च गतौ भृशम् ।**

व्याने श्लेष्मणावृते पर्वग्रहादयः स्युः ॥

**समानेऽतिहिमाङ्गत्वमस्वेदो मन्दवह्निता ॥ ४८ ॥**

समाने कफावृते अतिशीताङ्गत्वादयः ॥

**अपाने सकफं मूत्रशकृतः स्यात् प्रवर्तनम् ।**

अपाने कफावृते मूत्रशकृतोः प्रवर्तनं सकफं स्यात् ।

**इति द्वाविंशतिविधं वायोरावरणं विदुः ॥ ४९ ॥**

इति अनेन प्रकारेण वायोरावरणं द्वाविंशतिविधं द्वाविंशतिप्रकारं जानन्ति तन्त्रकृत इति शेषः । संख्याग्रहणं सुखग्रहणार्थम् । अपि च अनेकप्रकारेष्वावरणेषु द्वाविंशतिरेव प्रधाना इति सूचनार्थं च । एवं द्वाभ्यां दोषाभ्यां रक्तादिभिः षड्भिरन्नेन मूत्रेण विशा सर्वधातुभिरिति द्वादश, पुनः पित्तेन प्राणादीनां पञ्च, पुनः श्लेष्मणा प्राणादीनां पञ्चेति द्वाविंशतिप्रकारं वायोरावरणमुक्तम् ॥

प्राणादय इत्यादिना पुनरावरणप्रकारमाह—

**प्राणादयस्तथान्योन्यमावृण्वन्ति यथाक्रमम् ।**
**सर्वेऽपि विंशतिविधं विद्यादावरणं च तत् ॥ ५० ॥**

सर्वेऽपि प्राणादयः पञ्च वायवोऽन्योन्यं परस्परमावृण्वन्ति यथाक्रमं रुन्धन्ति । यथाक्रमं यथासंख्यम् । तथा तेनोक्तप्रकारेण । यथा पित्तकफाभ्यां प्राणादय आवृताः तथा प्राणादयोऽन्योन्यमावृण्वन्ति इति तथाशब्दार्थः । प्राण उदानादींश्चतुर आवृणोति । उदानादयश्चत्वारः प्राणमावृण्वन्ति । इत्यष्टौ भेदाः । एवमुदानो व्यानादींस्त्रीनावृणोति व्यानादयस्त्रय उदानमावृण्वन्ति इति षड् भेदाः । तथा व्यानः समानापानौ आवृणोति । समानापानौ व्यानमावृणुत

इति चत्वारो भेदाः। तथा समानोऽपानमावृणोति, अपानः समानमिति द्वौ भेदौ। एवं च सर्वेऽपि यतः परस्परमावृण्वन्ति ततस्तदावरणं विंशतिविधं विद्यात्। एकद्व्यादिक्रमेणाप्येवमावरणं निरूप्यम्। इन्दुनाप्युक्तं—"तच्चान्यो-न्यावरणं विंशतिविधं विद्यात्। प्राणादीनामन्यतमः शेषाणां चतुर्णां क्रमेणा-वरको भवति। एवं पञ्च प्राणादयो यतः प्रत्येकं चतुरो भेदान् यान्ति अतो विंशतिविध"मिति। ननु पित्तादिभिः प्राणादीनामावरणं युक्तम्। परस्परं प्राणादीनां यदावरणं तदमूर्तत्वादनुपपन्नमिव मन्यामहे। ब्रूमः। द्वयोर्वा तयो-रन्योन्यमुपसर्पतोः बलवता दुर्बलस्य अभिघातेन गतिभङ्गात् स एवावृतमार्ग इत्युच्यते। तस्माद्वातादीनामपि परस्परमावरणं युक्तमेव॥

अथास्यावरणस्य लिङ्गमाह निःश्वासेत्यादिना—

**निःश्वासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः।**
**हृद्रोगो मुखशोषश्च प्राणेनोदान आवृते ॥ ५१ ॥**

प्राणादीनामन्योन्यावृतौ दिङ्मात्रदर्शनम्। प्राणेनोदाने आवृते निःश्वाससंरोधादयः स्युः॥

**उदानेनावृते प्राणे वर्णौजोबलसंक्षयः।**

उदानेन प्राणे आवृते वर्णादिक्षयः स्यात्॥

**दिशानया च विभजेत् सर्वमावरणं भिषक् ॥ ५२ ॥**
**स्थानान्यवेक्ष्य वातानां वृद्धिं हानिं च कर्मणाम्।**

दिशेत्यादि। अनया च दिशा दिङ्मात्रदर्शनेन सर्वमनुक्तमावरणं स्वबुद्ध्या शास्त्रसंस्कारवशाद् वैद्यो विभजेत्। ग्रन्थकृता ग्रन्थगौरवभयान्नोक्तम्। कथं विभजेदित्यत्र युक्तिमाह—स्थानानीत्यादि। वातानां प्राणादीनां दोष-भेदीयोक्तेन प्रकारेण स्थानान्यवेक्ष्य ज्ञात्वा तथा तत्कर्मणां हानिं चावेक्ष्य ज्ञात्वा विभजेदित्यर्थः। अस्य वायोरयं प्रदेशस्तत्रस्थस्य चेदं कर्माम्नातं तच्च संप्रत्यनेन रूपेण वृद्धं हीनं वा दृश्यतेऽतोऽनुमीयतेऽनेनावृत इति। यथा उच्छ्वास-निःश्वासचेष्टादीनि कर्माणि प्राणसम्बन्धीनि यदा हीनानि दृश्यन्ते उदानादीनां

कर्माणि वाक्प्रवृत्त्यादीनि वृद्धानि तदैवं ज्ञातव्यम्। यथा प्राण उदानादीनामेकेन द्वाभ्यां त्रिभिश्चतुर्भिर्वा आवृत इति। एवमुदानादिष्वपि प्राणादिभिरावरणं विभागीकार्यम् ॥

न केवलमेतदेवावरणं यावदेतस्मादन्यदप्यस्तीत्याह—

**प्राणादीनां च पञ्चानां मिश्रमावरणं मिथः ॥ ५३ ॥**
**पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रितैश्च तैः ।**

प्राणादीनां चेत्यादि। अनेनावरणस्यासंख्यतां ब्रूते। प्राणादीनां पञ्चानां वायूनां परस्परमावार्यावरकत्वेन स्थितानां मिश्रं द्वयेन त्रयेण चतुष्टयेन च संयुक्तं मिथः परस्परमावरणं विद्यते। तदावरणमवेक्ष्य यात्यावृतिरसंख्यतामिति सम्बन्धः। कथमिति। प्राणोदानयोर्मिश्रयोः व्यानेनावरणं, व्यानस्य प्राणोदानाभ्यां मिश्राभ्यामित्यादि। प्राणोदानयोर्मिश्रयोः समानापानाभ्यां मिश्राभ्यामावरणमित्यादि शेषेष्वपि द्रष्टव्यम्। इन्दुनाप्युक्तं—"प्राणादयो द्व्यादिसंयोगेन मिश्राः कदाचिदावार्या भवन्ति। कदाचिदावारका इत्यावृतिरसंख्येयतां यातीति सम्बन्धः" इति। तथा पित्तादिभिः सर्वधात्ववसानैः द्वादशभिः मिश्राणां प्राणादीनां मिथो मिश्रमावरणम्। अवेक्ष्य यात्यावृतिरसंख्यतामिति योज्यम्। पित्तादयः पित्तश्लेष्मरक्तादिषड्धात्वन्नशकृन्मूत्रसर्वधातवः। अत्र चेयमुदाहरणदिग् द्रष्टव्या। प्राणेन द्वादशविधेन पित्तादिभिर्मिश्रितत्वात् चतुर्णामुदानादीनामावरणम्। तथा चतुर्भिरुदानादिभिः पित्तस्यावरणं प्रत्येकं द्वादशविधैः एकस्य प्राणस्य आवरणमिति। मिश्रितैश्च तैरिति। तैरित्यनेन प्राणादयः परामृश्यन्ते। तैः पित्ताद्यावरणमिश्रितैः प्राणादिभिः। पित्ताद्यावरणमिश्रितैः प्राणादिभिः पित्ताद्यावरणमिश्रितस्यान्योन्यस्यावरणमवेक्ष्य यात्यावृतिरसंख्यतामिति योज्यम्। चः समुच्चये ॥

**मिश्रैः पित्तादिभिस्तद्वन्मिश्रणाभिरनेकधा ॥ ५४ ॥**
**तारतम्यविकल्पाच्च यात्यावृतिरसंख्यताम् ।**
**तां लक्षयेदवहितो यथास्वं लक्षणोदयात् ॥ ५५ ॥**
**शनैःशनैश्चोपशयाद् गूढामपि मुहुर्मुहुः ।**

मिश्रैरित्यादि । तैस्तुल्यं तद्वत् । यथा प्राणादीनां पित्तादिभिः द्वादशभिः मिश्राणां मिश्रमावरणं मिथः तथैव मिश्रैः संयुक्तैः एतैः पित्तादिभिर्न केवलैः, प्राणादीनां मिश्रमावरणं मिथः । एतदुक्तं भवति – ब्यादिसंयुक्तैः पित्तादिभिः मिश्राणां प्राणादीनाम् असंयुक्तैः प्राणादिभिरावरणम् । तथा पित्तादिभिः ब्यादिसंयुक्तैः प्राणादिभिः असंयुक्तानां प्राणादीनामावरणम् । तथा पित्तादिद्व्यादिसंयुक्तानां पित्तादिद्व्यादिसंयुक्तैः आवरणमिति । एवमनेकधा मिश्रणाभिः प्राणादिमिश्रणाभिः बहुभिः संयोजनैः यात्यावृतिरसंख्यताम् । "एकेन मिश्रितस्य द्वाभ्यामावरणम्, एकस्य दशभिरावरणं, चतुर्णां त्रिभिरावरणमित्यादिभिः बहुभिः संयोजनैः यात्यावृतिरसंख्यतामि"ति **पाठ्ये** । तथा तारतम्यविकल्पनाच्च प्राणादीनां सर्वेषु संयोगेषु किञ्चिदधिकं किञ्चिदधिकतरं किञ्चिदधिकतममिति । एवमनेकधा विकल्पनाच्च आवृतिरसंख्यतां याति संख्यामतिक्रम्य गच्छति । **पाठ्यकारो**ऽप्याह–तारतम्यविकल्पनाच्च आवार्यावरकाणां तरतमताव्याप्तिरनेकधा मिश्रं पित्तं मिश्रतरं पित्तम् मिश्रतमं पित्तम् आवरकपित्तेनावृतः प्राणः, आवृततरः प्राणः, आवृततमः प्राण इति विद्यते यतस्तस्मादावृतिरसंख्यतां यातीति । तां चानेकविधानां प्राणादीनामावृतिं गूढां दुर्लक्ष्यामप्यवहितः तज्ज्ञानाय तत्परो लक्षयेद् जानीयात् । कथं, यथास्वं लक्षणोदयात् । आत्मीयादात्मीयालिङ्गोद्भवात् । शनैःशनैः, न झटित्येव । तथा मुहुर्मुहुः क्षणेक्षणे लक्षयेत् । न तु सकृदेव प्राणादीनां यथास्वं लक्षणोदयाज्जानीयादिति न केवलं केवलाद् यथास्वं लक्षणोदयात् प्राणादीनामावृतिं लक्षयेत् । यावदुपशयाच्च द्रव्याणां गूढामपि आवृतिं लक्षयेत् । **हाटको**ऽप्याह–"तां प्राणादीनामावृतिं दुर्लक्ष्यामप्यात्मीयालिङ्गोदयादुपशयाच्च मुहुर्मुहुः शनैःशनैः लक्षयेदि"ति । **इन्दुः** पुनराह–"तां चानेकविधामावृतिं यथास्वं लक्षणैः दोषाणां लक्षयेत् । गूढां तु शनैःशनैः मुहुर्मुहुश्चोपशयेन लक्षयेदि"ति ॥

**विशेषाज्जीवितं प्राण उदानो बलमुच्यते ॥ ५६ ॥**
**स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च ।**

विशेषादित्यादि । प्राणादयः सर्वे एव वाताः जीवितम् । विशेषेण तु प्राणाख्यो वायुः जीवितमुच्यते । तथोदानाख्यो वायुर्विशेषेण बलमुच्यते ।

यतश्चैवमतस्तयोः प्राणोदानयोः पीडनात् क्षोभणाद् यथास्वमायुषो बलस्य च हानिर्भवेत्। तस्मादुभौ प्राणोदानौ आहारविहारादिना यत्नेन भिषजा रक्ष्यौ। तथा च वक्ष्यति—

"प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थितिः"।

इति ॥

**आवृता वायवोऽज्ञाता ज्ञाता वा वत्सरं स्थिताः ॥ ५७ ॥**
**प्रयत्नेनापि दुःसाध्या भवेयुर्वानुपक्रमाः।**

आवृता इत्यादि। वातादीनामन्यतमेनावृता इत्येवमज्ञाता अलब्धबलत्वेन असंपूर्णलक्षणत्वाच्च सम्यङ्निश्चिताः सामान्येनोपक्रम्यमाणाः स्थिताः वर्षोषिताः प्रयत्नेनापि दुःसाध्याः कृच्छ्रसाध्या भवेयुः। ज्ञाता वा वातेनावृताः पित्तेनावृताः इति यथावद् ज्ञाताः उपक्रम्यमाणा अपि वर्धमाना वत्सरं स्थिता अनुपक्रमा एव भवेयुः। 'भवेयुर्वा' इत्यत्र वाशब्दः एवशब्दार्थे। ततो वाता आवृताः प्रयत्नेन रक्षणीयाः। इन्दुना तूक्तं–"आवृताश्च वायवः अनुपलक्षिता उपलक्षिता वाप्युपेक्षिताः अतीतसंवत्सराः सन्तः प्रयत्नेनाप्युपचर्यमाणाः दुःसाधा असाध्या एव वा भवेयुः। अतोऽवश्यमुपलक्षयेद्" इति ॥

**विद्रधिप्लीहहृद्रोगगुल्माग्निसदनादयः।**
**भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात् ॥ ५८ ॥**

विद्रधीत्यादि। तेषां वायूनामावृतानामुपेक्षणादचिकित्सनाद् विद्रध्यादयः उपद्रवा जायन्ते। अतो नोपेक्षेत। उपक्रमे यतितव्यमित्यर्थः ॥

[1]इति हृदयबोधिकायामष्टाङ्गहृदयदीपिकायां
निदानस्थाने षोडशोऽध्यायः ॥
(समाप्तं चेदं निदानस्थानम्।)

१. 'इति निदाने षोडशोऽध्यायः' ख. घ. ङ. पाठः।

# Appendix I (A)

## अष्टाङ्गहृदयशारीरस्थानश्लोकार्धानुक्रमणी ।


| श्लोकार्धानि | पृष्टम् |
|---|---|
| अंसयोः फलके | १६३ |
| अंसांसफलकावर्त | १७५ |
| अकल्याणमपि स्वप्नं | २४२ |
| अकस्मादनुधावच्च | २१५ |
| अकस्माद्युगपद् गात्रे | १८९ |
| अकस्माद्वर्णगन्धादेः | २१७ |
| अकालजागरस्वप्न | १९ |
| अक्षामं सक्तवचनं | २०५ |
| अग्निना शोषितं | १०६ |
| अग्निपूर्णानि पात्राणि | २३२ |
| अङ्गुष्ठाङ्गुलिमध्यस्थं | १५६ |
| अचूर्णकीर्णः कीर्णाभो | २१५ |
| अत एव च शुक्रस्य | १५ |
| अतिप्रवृत्तिः सङ्गो वा | १०० |
| अतिमात्रममत्राणि | २१८ |
| अतिरक्तासितस्निग्ध | २०८ |
| अतिव्यवायमायासं | १९ |
| अतीसारो यकृत्पिण्ड | २०७ |
| अतोऽन्यथा वा यस्य | १८६ |
| अथ बालोपचारेण | ३३ |
| अथवा यष्टिमधुक | [illegible]७ |
| अथ सम्पीडिते | २८ |
| अथापतन्तीमजरां | ५२ |
| अथापृच्छ्येश्वरं | ४७ |
| अथोपस्थितगर्भां तां | २५ |
| अद्यश्वःप्रसवे | २५ |
| अधन्या मत्सराध्माता | १३५ |
| अधस्तात् कर्णयोः | १६५ |
| अधिका विंशतिः | ८४ |
| अधोऽसकूटयोर्विंद्यात् | १६१ |
| अधोगुरुत्वमरुचिः | २५ |
| अधो नाभेर्विमृद्गीयात् | २६ |
| अनन्ता सारिवा | ५६ |
| अनुकर्णं ललाटान्ते | १६६ |
| अनुत्सेकमदैन्यं च | १५३ |
| अनुलोम्य समाकर्षेत् | ४८ |
| अनेकव्याधितं | २२२ |
| अनेकोपद्रवयुतः | २०९ |
| अनेत्ररोगश्चन्द्रं च | १९१ |
| अन्तरेण तपस्तीव्रं | १९५ |
| अन्तर्गलस्थितौ | १६५ |
| अन्तर्वक्त्राः किणाभाश्च | २१४ |
| अन्नं कालेऽभ्यवहृतं | १०५ |
| अन्नभौतिकधात्वग्नि | १२७ |
| अन्नस्य पक्ता | १०२ |
| अन्नस्य पक्ता सर्वेषां | १२७ |
| अन्येष्वपि च भावेषु | १८४ |
| अपस्तम्भाख्ययोरेकां | ९० |
| अपस्तम्भावपाङ्गौ | १७२ |
| अपस्तम्भावुरःपार्श्वे | १६० |
| अपस्वरं भाषमाणं | १९६ |
| अपानवस्तिहृन्नाभि | १७६ |
| अपालापौ स्थपन्युर्व्यः | १७१ |
| अपूपशष्कुलीर्जग्ध्वा | २३७ |
| अभिन्नशिरसं | ४९ |
| अमङ्गलाढ्यं क्रूर | २२२ |
| अमूर्तमिव मूर्तं च | १९१ |
| अम्लेष्टता स्तनौ | २० |

| श्लोकार्धानि | पृष्ठम् | श्लोकार्धानि | पृष्ठम् |
|---|---|---|---|
| अयुग्माश्च मृगाः | २३१ | आप्या जिह्वा | ६२ |
| अरतिः स्रस्तनेत्रत्वं | ४६ | आप्लुतानाप्लुते काये | १८९ |
| अरिष्टं नास्ति मरणं | १८२ | आभुग्नसक्थि | २६ |
| अरिष्टे रिष्टविज्ञानं | १८२ | आमान्वये च | ३९ |
| अरोगः संशयं प्राप्य | २४० | आयामज्ञानविज्ञान | १४९ |
| अरोमशासितस्थूल | १४६ | आयामाक्षेपकस्तम्भा | १७२ |
| अर्शांसि पाणिपत्नाभि | २०७ | आयुरारोग्यवीर्यौजो | १०३ |
| अल्पपित्तबल | १३५ | आयुरैश्वर्यमिष्टाश्च | १५० |
| अल्पव्याहारक्रोध | १४० | आयुर्वेदफलं कृत्स्नं | २१९ |
| अवन्ध्य एवं | १६ | आरोहेद् गोऽश्वयानं च | २४३ |
| अवस्थितं लोहितं | ५७ | आरोहेत् स्त्री तु | १७ |
| अवेध्यास्तत्र | ९३ | आर्द्रेषु सर्वगात्रेषु | १८९ |
| अव्यक्तः प्रथमे | १७ | आवासः पलिततरङ्ग | १३७ |
| अशस्तचिन्तावचने | २२३ | आविश्य जठरं | २७ |
| अशुभं सर्वथोलूक | २३१ | आवीनामनुजन्मातः | २५ |
| अश्मन्तकः कृष्णतिलाः | ५६ | आव्यो हि त्वरयन्ति | २८ |
| अश्मरी शूनवृषणं | २०८ | आसन्ने लक्ष्यते छाया | २०० |
| अश्वगन्धावरी | ५४ | आहारश्च विहारश्च | ९९ |
| अश्वघ्नपत्रसिद्धेन | २२ | इच्छन्ती भर्तृसदृशं | १४ |
| अष्टौ कूर्चशिरोगुल्फ | १७५ | इच्छेतां यादृशं | १६ |
| अष्टौ च मातृकाः | १७३ | इति भूतमयो देहः | ६७ |
| असमग्राभिघाताच्च | १७८ | इति सक्थ्नोस्तथा | १५८ |
| असम्पूर्णत्रिमासायाः | ३९ | इति सर्वगुणोपेते | १५० |
| अस्थ्नो मज्जा | १११ | इत्यत्र जन्ममरणं | २४५ |
| अस्थ्न्यष्टौ स्नावमर्माणि | १७० | इत्यवेध्यविभागार्थं | ९३ |
| अहास्यहासी संमुह्यन् | २०२ | इत्युक्तं दूतशाकुनं | २३५ |
| आच्छनोत्पीड | ४८ | इष्टानि मर्माण्यन्येषां | १७७ |
| आतपादर्शतोयादौ | १९७ | ईषत्कृष्णं विगन्धं | १२ |
| आतुरस्य गृहे यस्य | २१८ | उच्छूना स्फुटिता | १८५ |
| आत्मपाणितलोन्मानाः | १७६ | उपचारः प्रियहितैः | १९ |
| आदौ षड्रसमप्यन्नं | १०६ | उपद्रवाश्च येऽन्ये | ५२ |
| आननं हस्तपादं च | २१० | उपवासो घनोशीर | ३९ |
| आनूपो विपरीतोऽस्मात् | १३० | उपविष्टकमाहुः | ४१ |
| आन्तरो मस्तकस्योर्ध्वं | १६७ | उपाध्यायोऽथ | १६ |

| श्लोकार्धानि | पृष्ठम् |
|---|---|
| उपानद्युगनाशश्च | २३८ |
| उपवासाश्च | १९ |
| उरस्यूष्मा भवेत् | १० |
| उर्व्यूरुमध्ये | १५७ |
| उष्णद्वेषी च शीतार्तः | १९० |
| उत्क्षेपौ स्थपनी त्रीणि | १७४ |
| उत्तरोत्तरसुक्षेत्रे | १४९ |
| उत्तरोष्ठं परिलिहन् | २०२ |
| उत्तान एव स्वपिति | २०२ |
| उत्तानशयनं | १९ |
| उत्ताना तन्मना | १७ |
| उत्थाप्यमानः संमुह्येत् | २०२ |
| उत्पद्याशु विनश्यन्ति | २१४ |
| उत्सिक्तं मेहनं यस्य | १८६ |
| उदरं दक्षिणावर्तं | १४७ |
| उदरं वृद्धमन्यत्र | ४९ |
| उदावर्तं तु गर्भिण्याः | ४५ |
| उद्धृत्य शल्यं | १०१ |
| उद्भ्रान्तदर्शने हीन | १८५ |
| उन्नताग्रा महोच्छ्वासा | १४७ |
| उन्नते दक्षिणे | २४ |
| उन्मादने जले | २३७ |
| उन्मीलितानीव | १२५ |
| ऊरुमूले लोहिताक्षं | १५७ |
| ऊर्ध्वं चतुर्भ्यो | ५३ |
| ऊर्ध्वं द्वितीयः स्यातां | १८६ |
| ऊर्ध्वश्वासं गतोष्माणं | २१७ |
| ऊर्ध्वाधोऽस्रकफापूर्णं | १६० |
| ऋजुर्विपश्चित् | १४० |
| ऋतावतीते योनिः | १२ |
| ऋतुस्तु द्वादश | १५ |
| ऋतेऽश्मरीव्रणात् | १५९ |
| एकादशी च | १५ |

| श्लोकार्धानि | पृष्ठम् |
|---|---|
| एकाधोवदनो मध्ये | १५९ |
| एकैकां पृथक् | ९२ |
| एभिर्गर्भः स्रवेत् | २० |
| एवं च मासात् | ३५ |
| एवं निर्हृतशल्यां | ५२ |
| ओजोशनत्वादथवा | ५७ |
| ओजोऽष्टमे | २२ |
| ओषधीर्जीवनीयाश्च | १२ |
| ओष्ठौ रक्तावनुद्वृत्तौ | १४७ |
| औदर्योऽग्निर्यथा | १०५ |
| कक्षोरस्तालुचिबुके | ४९ |
| कक्ष्याक्षमध्ये | १५९ |
| कटीतरुणसीमन्त | १७४ |
| कटीमाकोटयेत् | २१ |
| कटीसक्तस्य तद्वच्च | ५० |
| कटुकातिविषा | ५२ |
| कण्ठनालीमुभयतः | १६४ |
| कण्ठनालीमुभयतो जिह्वा | १६४ |
| कण्ठोऽस्रं हृदयं | ७७ |
| कण्डूं विदाहं | २२ |
| कथयन्नेष पृष्टोऽपि | २१९ |
| कन्यां कुमारकान् | २४३ |
| कपाले सन्धयः पञ्च | १६७ |
| कपित्थबिल्व | ५७ |
| कपोताभे अलाताभे | १८५ |
| कफः पित्तं मलः | ११७ |
| कफजो न च पूयाय | २१५ |
| कफामपित्तपक्वानां | ७३ |
| करुणाशुद्धसन्तानो | २३२ |
| कर्णौ नीचोन्नतौ | १४७ |
| कर्बुरः प्रस्रवन् धातून् | २०८ |
| कर्मान्ते च पुमान् | १७ |
| कानने रक्तकुसुमे | २३८ |

| श्लोकार्धानि | पृष्टम् | श्लोकार्धानि | पृष्टम् |
| --- | --- | --- | --- |
| कामिलाक्ष्णोर्मुखं | २१४ | क्वथिताः सलिले | ३९ |
| कारणानुविधायित्वात् | ५ | क्षवकासादिषु तथा | १८९ |
| कार्पासबुससीसास्थि | २२५ | क्षामता गरिमा | २० |
| कार्यमेतत् तथा | २९ | क्षामप्रसन्नवदनां | १२ |
| कालानुसार्या | ५४ | क्षिप्रापालापबृहती | १७४ |
| कालान्तरप्राणहरा | १७४ | क्षिप्यमाणः खवैगुण्यात् | १२६ |
| काषायिणामसौम्यानां | २३८ | क्षीणस्यायस्य मन्ये वा | २१२ |
| कासपीनसहृल्लास | २०९ | क्षीरपेया च | २२ |
| कासश्वासौ ज्वरच्छर्दि | २०७ | क्षीरेण श्वेतबृहती | १८ |
| किट्टं सारश्च तत्पक्वं | ११० | क्षुत्तृड्दुःखक्लेश | १३९ |
| कुर्याद् वातादिभिः | ९ | क्षैरेयं यावकं | १३ |
| कुर्वन् वंक्षणयोः शूलं | २१२ | खगा वा मूर्ध्नि लीयन्ते | १८८ |
| कुशला पाणिना | ३२ | खरोष्ट्रमहिषारूढं | २२३ |
| कुष्ठं विशीर्यमाणाङ्गं | २११ | खादीनां पञ्च पञ्चानां | १९८ |
| कुष्ठतालीसकल्कं | ३० | खानिलाग्न्यब्भुवां | ६१ |
| कूर्चकूर्चशिरोपाङ्ग | १७० | गतसूताभिधाना | ३५ |
| कूर्चशृङ्गाटमन्याश्च | १७६ | गतासोर्बन्धुमित्राणां | २१९ |
| कूर्परं जानुवत् कौर्प्यं | १५८ | गन्धः सुसुरभिर्वर्णः | २३२ |
| कृकाटिके शिरोग्रीवा | १६५ | गर्भं जडा भूतहृतं | ५७ |
| कृच्छ्राण्येतानि | ९ | गर्भः पुंसवनानि | १७ |
| कृत्वाग्निवर्णं | १८ | गर्भः प्रयात्यवाग् | २७ |
| कृत्वास्यशोषाटोपान्त्र | १२८ | गर्भः सम्पद्यते | २ |
| कृष्णधान्यगुडोदश्वित् | २२९ | गर्भकोष्ठविशुद्ध्यर्थं | ४० |
| कृष्णा पापाननाचरा | २३९. | गर्भवृद्धिप्रसव | ३५ |
| केचित्तु तद् द्विधेत्याहुः | १८३ | गर्भस्य नाभौ | २१ |
| केचिदाहुरहोरात्रात् | १२० | गर्भस्य हि गतिं | ५१ |
| केशरोम निरभ्यङ्गं | १८४ | गर्भाकृतित्वात् | ५७ |
| केशान्ते शङ्खयोः | १६६ | गर्भाशयोऽष्टमः | ७३ |
| कोष्ठाङ्गानि स्थितान्येषु | ७३ | गर्भास्पन्दो भ्रमः | ४६ |
| क्रमात् सप्तसु | ५६ | गर्भिण्याः परिहार्याणां | ३६ |
| क्रोधेन मद्येन | १३७ | गर्भेणोत्पीडिता | २१ |
| क्लीबं तत्सङ्करे | २५ | गर्भेऽतिदोषोपचयात् | ४६ |
| क्लीबक्रूरश्वपाकानां | २२९ | गर्भे निपतिते | ४० |

